राजस्थानविश्वविद्यालयभारतीयदर्शनाध्ययनमालायां चतुर्थं पुष्पम्

पण्डितखड्गनाथमिश्रः

# सिद्धान्तल[illegible]तत्त्वालोक[illegible]शः

धर्मदत्तशर्मणस्तत्त्वालो[illegible]

दर्शनविभागः

राजस्थानविश्वविद्यालयः

## ग्रन्थपरिचयः

व्याप्तिसम्बन्धस्य लोके सर्वेषु शास्त्रेषु चोपादेयत्वं सर्वैः शास्त्रविद्भिः स्वीक्रियते। अस्य स्वरूपनिरूपणपरकविचारो यथा नव्यन्यायशास्त्र उपलभ्यते, न तथान्यत्र। अनुमानचिन्तामणौ व्याप्तिवादे गङ्गेशोपाध्यायै-र्व्याप्तिसिद्धान्तलक्षणं प्रस्तुतम्। तदुपरि रघुनाथशिरोमणिना दीधितिः, तदुपरि जगदीशतर्कालङ्कारेण जागदीशी, तदुपरि धर्मदत्त(बच्चाझा)शर्मणा तत्त्वालोकश्चेति विवेचितम्। अत्रायं परिष्कारसङ्ग्रहात्मकस्तत्त्वालोको नव्यन्याय-विचारपद्धतेर्दुर्गमत्वात् प्रौढशास्त्रीयव्याख्यानमपेक्षते। अतस्तदभिनवसरलविस्तृतव्याख्यानमावश्यकमित्यभिज्ञाय पण्डितखड्गनाथमिश्रेण प्रस्तुतोऽयं प्रकाशः। तस्य प्रथमो भागः प्रकाशितः वर्तते। द्वितीयभागोऽयमिदानीं प्रकाशतां लभते। तृतीयभागोऽपि सम्वत्सरात् पूर्वं प्रकाशतां लप्स्यते। तत्त्वालोकस्य खण्डशः विभजनपूर्वकं तदनुसारि-प्रकाशव्याख्यानञ्चात्र प्रस्तुतम्।

## ग्रन्थकारपरिचयः

धर्मदत्तसूरिशिष्यपण्डितषष्ठीनाथमिश्रस्य पुत्रः शिष्यश्च ग्रन्थकारः श्रोत्रियकुलावतंसः मैथिलपण्डितखड्गनाथमिश्रः बिहारप्रान्तस्य मधुबनीमण्डले लालगञ्जग्रामे 15.10.1921 खीष्टाब्दे जनिमलभत। धर्मदत्तसूरिस्थापिते शारदाभवन-संस्कृतमहाविद्यालये न्यायव्याकरणवेदान्तशास्त्रेषु कृतभूरि-परिश्रमः। राजस्थाने उदयपुरस्य राजकीयमहाराणा-संस्कृतमहाविद्यालये जयपुरस्य राजकीयमहाराजसंस्कृत-महाविद्यालये च प्राचार्यपदम्, राजस्थानविश्वविद्यालयस्य संस्कृतसङ्काये अधिष्ठातृपदम्, दर्शनविभागे च 'शास्त्री' पदमलङ्कृतवान्। एषां 'शाब्दबोधादिवादपञ्चकप्रकाशः' इति ग्रन्थोऽपि भागद्वये विरचितो वर्तते। अधुना चाऽयं मनीषी जयपुरे चकास्तीति अस्माकं सौभाग्यम्।

ISBN 81-86027-05-x द्वितीयो भागः

मूल्यम् : 400.00

# सिद्धान्तलक्षणतत्त्वालोकप्रकाशः

धर्मदत्तशर्मणस्तत्त्वालोकसंवलितः

द्वितीयो भागः

पण्डितखड्गनाथमिश्रविरचितः

श्रीकृष्णशर्मणा सम्पादितः

दर्शनविभागः
राजस्थानविश्वविद्यालयः, जयपुरम्

१९९७

राजस्थानविश्वविद्यालयभारतीयदर्शनाध्ययनमाला : ४
प्रधानसम्पादक: विश्वम्भरपाहिः
समन्वयक: दर्शनविभागीयविशेषसहायताकार्यक्रमस्य

विश्वविद्यालयानुदानायोगस्य राजस्थानसर्वकारस्य च विशेषसहायताकार्यक्रमपरियोजनायां राजस्थानविश्वविद्यालयदर्शनविभागेन १९९७ तम ईशवीयेऽब्दे प्रकाशितो ग्रन्थः।



ISBN 81-86027-03-3 सम्पूर्णग्रन्थः
81-86027-05-x द्वितीयो भागः

मूल्यम्– ४०० रुप्यकाणि

राजस्थानविश्वविद्यालयदर्शनविभागस्य
सङ्गणकयन्त्रेण श्रीशङ्करलालशर्मणा टङ्कितः

जयपुरस्थपॉपुलरप्रिन्टर्सद्वारां मुद्रितः

UNIVERSITY OF RAJASTHAN STUDIES IN INDIAN PHILOSOPHY: 4

# SIDDHĀNTALAKṢAṆATATTVĀLOKA-PRAKĀŚAḤ

with Tattvāloka of Dharmadatta Śarmā

VOLUME - II

By PAṆḌITA KHAḌGANĀTHA MIŚRA

Edited by ŚRĪKṚṢṆA ŚARMĀ

DEPARTMENT OF PHILOSOPHY
UNIVERSITY OF RAJASTHAN, JAIPUR
1997

University of Rajasthan Studies in Indian Philosophy : 4
General Editor : Biswambhar Pahi
Co-ordinator, Special Assistance Programme

Published in 1997 by the Department of Philosophy, University of Rajasthan, Jaipur- 302 004, India, under the Special Assistance Programme of the University Grants Commission and the Government of Rajasthan State-Plan.



ISBN 81-86027-03-3 (Set)
81-86027-05-x (Vol. II)

Price : Rs. 400/-

Phototype set by : Shankar Lal Sharma, Computer Operator
Department of Philosophy, University of Rajasthan, Jaipur.

Printed by : Popular Printers, Jaipur.

# सम्पादकीयम्

नमो गुरुभ्यो गुरुपादुकाभ्यः। अस्मद्गुरुचरणानां राष्ट्रपतिपुरस्कारेण सम्मानितानां पण्डितखड्गनाथमिश्राणां 'सिद्धान्तलक्षणतत्त्वालोकप्रकाशः' इति प्रौढ-नव्यन्यायग्रन्थस्य प्रथमभागः पूर्वं प्रकाशितोऽधुनाऽयं द्वितीयभागोऽपि विदुषां करकमलेषु भगवदनुकम्पयाऽनतिचिरमेव प्रस्तूयत इति महान् प्रमोदश्चेतस्यनुभूयते।

प्रथमभागे सहैव तत्त्वालोकप्रकाशाभ्यां प्रासङ्गिकव्याप्तिसिद्धान्तलक्षणस्य चिन्तामणि-दीधिति-जागदीशीग्रन्था अपि अधुनोपलब्धसंस्करणानुसारेण सम्पाद्य प्रकाशिता इति विदन्त्येव तर्करसिका विद्वांसः। प्रथमभागे व्याप्तिसिद्धान्तलक्षणस्यार्थ-कथनविषयकतत्त्वालोकस्याधिकतरो भागः १२० खण्डेषु विवृत आसीत्। अस्मिंश्च द्वितीयभागे "द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये वा तत्तद्वह्निव्याप्य-त्वस्य वारणार्थं विशिष्य लक्ष्यं निर्दिशति 'तद्रूपविशिष्टस्ये'"त्यादिजागदीशीविवेचना-मारभ्य 'वृक्षत्वाद्यवच्छेदेन तत्तत्संयोगव्यक्तीनामसत्त्वेऽपि संयोगसामान्यस्यावच्छेदक-त्वसम्भवादित्यभिप्रायकोऽयं ('यथा चे'त्याददीधिति)ग्रन्थ इति केचिदाहुरि'त्यन्त-जागदीश्याः विवेचनापरकस्तत्त्वालोकः प्रकाशश्च १२१ खण्डतः २१६ संख्यकखण्ड-पर्यन्तेषु सप्तनवति(९७)खण्डेषु प्रस्तुतौ। अतः परमग्रिमे तृतीये भागे प्रस्तोष्येते। ग्रन्थसम्पादनमस्माभिर्यावच्छक्यं सावहितैर्विहितम्, तथा हि—

(क) मुद्रितप्राचीनपुस्तकस्थगूढार्थतत्त्वालोकपाठापेक्षया प्रकाशकृतोट्टङ्कित-मातृकायामधिकः पाठो यत्र क्वचनोपलभ्यते, स कोष्ठके ( ) अङ्कितः, यथा— १२५ तमे तत्त्वालोकखण्डे त्रयोदशतमे पृष्ठेऽवलोकनीयम् "येन रूपेणे'त्यादि (विशिष्ट-साध्यतावच्छेदकस्थलेऽपीति)" इत्येवं प्रकारेण। एवमन्यत्रापि ४२, ५५, ७०, १४०, ३५२ प्रभृतिपृष्ठाङ्कितततत्त्वालोकपाठस्थलेषु द्रष्टव्यम्।

(ख) यत्र प्रकाशकृता प्राचीनमुद्रितपुस्तकस्थतत्त्वालोकमूले संशोधनमकारि तत्र टिप्पण्यामस्माभिः प्राचीनोपलब्धपाठोऽपि यथावदुपन्यस्तो येन विदुषां समक्षम् वस्तुस्थितिर्विज्ञापिता भवेत्। तथा हि— १४५ पृष्ठाङ्कित-तत्त्वालोकखण्डे 'स्वनिष्ठानु-योगितानिरूपितत्वे'त्यादिप्राचीनमुद्रितपाठापेक्षया 'स्वनिष्ठानुयोगित्वानिरूपितत्वे'-त्यादिपाठः प्रकाशकृतोपन्यस्तः, अस्माभिस्सम्पादनवेलायां प्राचीनमुद्रितपाठोऽपि टिप्पण्यां प्रदत्तः। एवमन्यत्रापि ३१, ४२, ४९, ७१, ९९, १०६, १४१, १४५, १७९, १८६, २२९ प्रभृतिपृष्ठाङ्कितेषु तत्त्वालोकखण्डेषु विज्ञेयम्।

(ग) जागदीशीपाठान्तरं तत्त्वालोकनिर्माणकालेऽप्यासीदिति प्रकृतग्रन्थे ३२३, ३७० प्रभृतिपृष्ठाङ्किततत्त्वालोकभागैः तत्त्वालोककृदुल्लेखेनैव सम्यग् ज्ञायते, प्रकाशकृता-प्यनेकत्र पृष्ठसंख्या ४, १५ प्रभृतिस्थलेषु सङ्केतितम्। अतस्तत्त्वालोकेऽप्यनेकत्र यो

जागदीशीप्रतीकत्वेन पाठोऽङ्गीकृतः, सोऽप्यधुनोपलब्धसंस्करणेषु परिवर्तितपाठ-रूपेणोपलभ्यते। एतादृशी स्थितिरपि सम्पादनवेलायामस्माभिः टिप्पण्यां स्पष्टीकृता। द्रष्टव्यम्– १३ तमे पृष्ठे तत्त्वालोके, १०७ तमे पृष्ठे प्रकाशग्रन्थे च। एवमन्यत्रापि बोध्यम्। यश्च जागदीशीपाठोऽस्माभिस्सम्पादनकाले उपलब्धः, प्रकाशकृता च नोपलब्ध आसीत्, तादृशी वस्तुस्थितिरपि टिप्पण्यामस्माभिः स्पष्टीकृता। द्रष्टव्यम् १५ तमे पृष्ठे प्रकाशग्रन्थे। एवमन्यत्रापि अवगन्तव्यम्।

(घ) प्रकाशकृतां यथास्थितः पाठोऽविकलरूपेणास्माभिः प्रस्तुतः, यत्र क्वचन अनवधानतयैव पाठो लेखनावसरे विस्मृतस्त्रुटितो वा जातस्तत्र सम्पादकेन [ ] कोष्ठके पाठः संयोजितोऽथवा टिप्पण्यां सङ्केतो व्यधायि, तथा हि– ३७, ४०, ५१, ५२, ५३, ६५, ७२, ७३, ८२, ८५, १००, १०३, १०४, १४४, १७०, १९८, २००, २४७, २५३, २६०, २७८, २९०, २९२, ३०१, ३२४, ३३४, ३६३, ३६५, ३७८, ३८६, ३९१ प्रभृतिपृष्ठाङ्कितप्रकाशग्रन्थे द्रष्टव्यम्। एवमन्यत्रापि ज्ञेयम्।

(ङ) सम्पादनवेलायामस्माभिस्तत्त्वालोकस्थ - चिन्तामणि - दीधिति-जागदीशी-गादाधरीप्रभृतिमूलग्रन्थानाम् प्रतीकानि अन्विष्य टिप्पणीषु सङ्केतितानि, पाठकसौकर्याय च यथामति टिप्पण्यः प्रस्तुताः। तदेवम् सम्पादनकर्मणि व्यापृतेनाल्पधिया मयका शोधप्रविधिमनुसृत्य सम्पादितोऽयं ग्रन्थस्तथापि मानव-सहजातभ्रमप्रमादादिदोषा अप्यवश्यं भवेयुरिति मत्वा तदशेषदोषाणां क्षमां गुणैकपक्ष-पातिनो विपश्चितोऽभ्यर्थयेऽग्रिमखण्डसम्पादनाय चाशीर्वचः कामये।

ग्रन्थस्यास्य साफल्येन प्रकाशनतत्परेभ्यो दर्शनशास्त्रविभागीयविशेषसहायता-कार्यक्रमस्य समन्वयकेभ्यो विश्वम्भरपाहिमहोदयेभ्यो हार्दिकीं कृतज्ञतां विनिवेदयामि। ग्रन्थस्यास्य पूर्वरूपसंशोधनकर्मणि प्रकाशकृतामात्मजेन जयपुरस्थ-राजकीयमहाराज-संस्कृतमहाविद्यालयीयदर्शनप्राध्यापक-गोपालमिश्रेण, जोधपुरस्थ-राजस्थानप्राच्य-विद्याप्रतिष्ठाने गवेषकपदमधिष्ठित-गोविन्दरामचरौरामहोदयेन चैताभ्यां मत्प्रिय-शिष्याभ्याम् यत्साहाय्यं व्यधायि, तदर्थमनयोरभ्युदयाय भवानीपतिं शिवं प्रार्थये। मुद्रणकर्मण्यत्यन्तं सावहिताय दर्शनविभागीयसङ्गणकयन्त्रेण टङ्कणकर्त्रे श्रीशङ्करलालशर्मणे च हार्दिकमङ्गलानि कामये।

सम्पादकः
श्रीकृष्णशर्मा
संस्कृतविभागाध्यक्षः
जयनारायणव्यासविश्वविद्यालयः
जोधपुरम् (राजस्थानम्)

## सिद्धान्तलक्षणतत्त्वालोकप्रकाशगर्भित-विषयानुक्रमणिका

---

# सिद्धान्तलक्षणतत्त्वालोकप्रकाशः

## द्वितीयो भागः

तत्त्वालोकः – ''द्रव्यत्वादिरूपेणे''त्यादि[१]। अत्र तृतीयाया अवच्छिन्नत्वमर्थः, 'धूमे' इति सप्तम्यन्तस्य च धूमनिष्ठलिङ्गत्वम्, वह्निव्याप्यत्वञ्च वह्निविधेयताकानुमितिजनकतायां विषयितयाऽच्छेदकीभूतो धर्मः, तदेकदेशेऽनुमितौ द्रव्यत्वावच्छिन्नधूमनिष्ठलिङ्गकत्वस्यान्वयः, धूमत्वावच्छिन्नलिङ्गताकत्वं 'धूमसामान्ये' इति सप्तम्यन्तार्थः, तस्य तत्तद्वह्निव्याप्यत्वशब्दार्थीभूततत्तद्वह्निविधेयताकानुमितिजनकतावच्छेदकघटकानुमितावन्वयः, उक्तावच्छेदकद्वयोश्चेतरभेदानुमित्युद्देश्यतावच्छेदकाभावसम्पादनरूपप्रकृतवारणशब्दार्थाभावे आधेयतासम्बन्धेनान्वयः, चतुर्थ्या इच्छाधीनत्वमर्थः, 'विशिष्ये'त्यस्य विशिष्टमित्यर्थः, क्त्वाप्रत्ययार्थस्याविवक्षिततत्वात्, विशिष्टता च साध्यतावच्छेदकावच्छिन्नविधेयत्वहेतुतावच्छेदकावच्छिन्नलिङ्गताकत्वघटितत्वम्, लक्ष्यम् = इतरभेदानुमित्युद्देश्यम्, निर्दिशति = बोधयतीत्यर्थः।

अयमाशयः तद्धर्माश्रयनिष्ठलिङ्गताकतद्धर्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदकम्पक्षीकृत्य तद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मावच्छिन्नसामानाधिकरण्येन हेतुनेतरभेदसाधने धूमत्वाश्रयनिष्ठलिङ्गतात्वस्य द्रव्यत्वावच्छिन्नलिङ्गतायां वह्नित्वाश्रयविधेयतात्वस्य तत्तद्वह्नित्वावच्छिन्नविधेयतायां सत्त्वेनोद्देश्यतावच्छेदकस्य द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके धूमत्वावच्छिन्नलिङ्गताकतत्तद्वह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके च सत्त्वात् तत्र चोक्तावच्छेदकद्वये धूमत्वावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यविरहाद्भागासिद्धिस्स्याद्विशिष्य लक्ष्यनिर्देशे चोद्देश्यतावच्छेदकस्य तत्रासत्त्वेन न भागासिद्ध्यवकाशः।[१२१]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ३

*प्रकाशः* – 'प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरि'त्यस्य चिन्तामणेर्व्याख्या दीधितिकृता शिरोमणिना 'प्रतियोग्यसमानाधिकरण-यद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः'[१] इत्युलिख्य कृता। उक्तदीधितिवाक्यमितरभेदानुमितौ हेतुबोधकपूर्वभागघटितन्तथा इतरभेदानुमितौ पक्षबोधकोत्तरभागघटितञ्च, तत्र उत्तरभागेऽपि भागद्वयम्, प्रथमो भागस्तत्र विशेषणबोधको द्वितीयो विशेष्यबोधकः। तद्दीधितिघटकोत्तरभागं 'तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरि'ति व्याख्यातुं दीधितेर्व्याख्याकृता जगदीशतर्कालङ्कारेण "द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये वा तत्तद्वह्निव्याप्यत्वस्य वारणार्थं विशिष्य लक्ष्यं निर्दिशति 'तद्रूपविशिष्टस्ये'त्यादिना" इति[२] विलिखितम्। एतज्जागदीशीं व्याख्यातुं तत्त्वालोककृता प्रतीकरूपेण "द्रव्यत्वादिरूपेणे"त्यादि परिगृहीतम्।

दीधितिकृता अतिसंक्षिप्ततया सूत्रात्मकं चिन्तामणिवाक्यम् स्वेतरभेदानुमितौ हेतुपक्षबोधकभागद्वयघटितवाक्यं विलिख्य संक्षिप्तमेव व्याख्यातम्, तर्कालङ्कारेण च दीधितिवाक्यं तद्घटकोत्तरभागोल्लेखप्रयोजनबुबोधयिषया 'द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य वारणार्थं धूमसामान्ये च तत्तद्वह्निव्याप्यत्ववारणार्थमि'त्येवं वाक्यद्वयगर्भितवाक्यमुल्लिखता "विशिष्य लक्ष्यं निर्दिशति 'तद्रूपविशिष्टस्ये'त्यादिने"त्यन्तेन व्याख्यातम्। उपर्युक्तां तर्कालङ्कारोक्तिं व्याख्यातुं "द्रव्यत्वादिरूपेणेत्यादि" इत्यादितत्त्वालोकस्योपक्रमः। तत्र जगदीशतर्कालङ्कारवाक्यघटकतत्तत्पदविवक्षितार्थं पूर्वं सन्दर्श्य तद्घटितवाक्यस्याभिप्रेतमर्थं स्पष्टयितुमिष्यति तत्त्वालोककृत्। तदन्तर्गत-'द्रव्यत्वादिरूपेण' इत्येतद्घटकतृतीयाविभक्तेर्लक्षणया अवच्छिन्नत्वमर्थो विवक्षितः, 'धूमे' इति सप्तम्यन्तस्य च धूमनिष्ठलिङ्गत्वमर्थः। 'वह्निव्याप्यत्वस्ये'ति षष्ठीप्रकृत्यर्थवह्निव्याप्यत्वं वह्निविधेयताकानुमितिजनकतायां विषयितया अवच्छेदकीभूतो धर्मः, यज्ज्ञानं वह्निविधेयताकानुमितेर्जनकं तत्र ज्ञाने वह्निव्याप्यत्वं विषयितासम्बन्धेनावश्यं भासते, यतो हि 'वह्निव्याप्यधूमवान् पर्वत' इत्येवं परामर्शात्मकज्ञानस्यैव वह्न्यनुमितिजनकतया तत्र ज्ञाने वह्निव्याप्यत्वस्य विषयतयाऽवश्यमवगाहनात्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. २

२. तत्रैव, जागदीशीमूलम्, पृ. ३

'धूमे' इत्येतत्सप्तम्यन्तार्थे धूमनिष्ठलिङ्गत्वे 'द्रव्यत्वेने'ति तृतीयार्थस्य द्रव्यत्वावच्छिन्नत्वस्यान्वयोऽभिप्रेतस्तस्य द्रव्यत्वावच्छिन्नत्वविशेषितधूमनिष्ठ-लिङ्गत्वस्यान्वयस्तु वह्निव्याप्यत्वशब्दार्थस्य वह्निविधेयताकानुमितिजनकतावच्छेदक-धर्मात्मकस्यैकदेशेऽनुमितावभिप्रेतः। अत्र धूमनिष्ठलिङ्गत्वं = धूमनिष्ठलिङ्गताकत्वं = धूमलिङ्गकत्वमिति अभिन्नार्थकं मन्तव्यमतस्तत्त्वालोके पूर्वं 'धूमनिष्ठलिङ्गत्वमि'त्येवं पश्चाच्च 'धूमनिष्ठलिङ्गकत्वस्यान्वयः' इत्येवं पाठेऽपि नार्थभेदो मन्तव्यः, लिङ्गतया धूमविषयके ज्ञाने धूमनिष्ठलिङ्गत्वस्य विषयतया प्रवेशसद्भावात्।

अत्र किञ्चिदग्रे गत्वा बोधनीयमिदं वर्तते यद् द्रव्यत्वावच्छिन्नधूमनिष्ठलिङ्गत्वे वह्नित्वावच्छिन्नविधेयताकानुमितिजनकताया विषयतावच्छेदकत्वन्न भवतीति। अर्थाद् वह्नित्वावच्छिन्नविधेयकानुमितिजनकतावच्छेदकं पक्षीकृत्य धूमत्वावच्छिन्न-समानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न-सामानाधिकरण्येन हेतुना स्वेतरभेदरूपसाध्यसाधने उद्देश्यतावच्छेदकरूपं पक्षत्वं द्रव्यत्वावच्छिन्नधूमनिष्ठलिङ्गत्वे नास्ति। एतदेव 'द्रव्यत्वादिरूपेण धूमे वह्निव्याप्य-त्वस्य वारणाय विशिष्य लक्ष्यं निर्दिशती'त्यनेन वाक्यद्वयगर्भितवाक्यघटकेन प्रथमवाक्येन जगदीशेन सूचितम्।

जगदीशवाक्यघटकस्य 'धूमसामान्ये' इत्येतत्सप्तम्यन्तस्य विवक्षितार्थो धूमत्वावच्छिन्नलिङ्गताकत्वम्। तस्य 'धूमसामान्ये' इत्येतत्सप्तम्यन्तार्थस्य 'तत्तद्वह्नि-व्याप्यत्वस्ये'ति षष्ठीप्रकृतिशब्दार्थीभूतो यस्तत्तद्वह्निविधेयताकानुमितिजनकता-वच्छेदकरूपोऽर्थस्तद्घटकानुमितावन्वयः।

उक्तावच्छेदकयोः =द्रव्यत्वावच्छिन्नधूमनिष्ठलिङ्गत्व,-धूमत्वावच्छिन्नलिङ्गता-कत्वयोः अन्वयः, यो 'वारणाये'ति चतुर्थीप्रकृतिवारणशब्दार्थः = इतरभेदानुमिते-रुद्देश्यतावच्छेदकाभावसम्पादनात्मकः, तदेकदेशो योऽभावस्तत्राभावे आधेयता-सम्बन्धेन, अर्थादितरभेदानुमित्युद्देश्यतावच्छेदकाभावे आधेयतासम्बन्धेन द्रव्यत्वा-वच्छिन्नधूमनिष्ठलिङ्गत्वावच्छेदकः धूमत्वावच्छिन्नलिङ्गताकत्वरूपावच्छेदकश्च वर्तेते, तस्मादिदमायातं यदुक्तावच्छेदकद्वयमितरभेदानुमित्युद्देश्यतावच्छेदकवन्न भवतीति।

वाक्यद्वयगर्भितजगदीशोक्तवाक्यघटकद्वितीयवाक्येन 'धूमसामान्ये तत्तद्वह्नि-व्याप्यत्वस्य वारणाय विशिष्य लक्ष्यन्निर्दिशती'त्यनेन धूमत्वावच्छिन्नलिङ्गताकत्वे इतरभेदानुमितेरुद्देश्यतावच्छेदकाभावः सूचितः।

तदानीमुपलब्धपुस्तके 'वारणाये'ति चतुर्थ्यन्तबुद्ध्या 'चतुर्थ्या इच्छाधीनत्वमर्थ' इति तत्त्वालोककृदुक्तिः, किन्तु इदानीमुपलब्धपुस्तके 'वारणार्थमि'त्येव पाठोऽस्ति। तस्य चतुर्थ्यर्थेच्छाधीनत्वस्य 'निर्दिशति'पदविवक्षितार्थबोधयत्यर्थे बोधनेऽन्वयः। 'विशिष्ये'त्यत्र 'क्त्वा'प्रत्ययार्थस्याविवक्षया 'विशिष्ये'त्यस्य 'विशिष्टमि'त्यर्थो विवक्षितः, तत्र विशिष्टत्वं साध्यतावच्छेदकावच्छिन्नविधेयत्व (साध्यतावच्छेदकावच्छिन्नविधेयताकत्व)हेतुतावच्छेदकावच्छिन्नलिङ्गताकत्व-घटितम्। 'लक्ष्यमि'त्यस्य 'इतरभेदानुमितावुद्देश्यमि'त्यर्थो विवक्षितः। 'निर्दिशती'-त्यस्य 'बोधयती'त्यर्थः कृतः। दीधितिघटकस्य 'व्याप्तिरि'त्यस्य 'तद्धर्मावच्छिन्नहेतुक-तद्धर्मावच्छिन्नविधेयकानुमितेर्जनकताया विषयविधयाऽवच्छेदिका' इत्यर्थो विवक्षितार्थतया जगदीशेन दर्शितः।

ततश्च 'धूमत्वावच्छिन्नधूमनिष्ठलिङ्गताका तथा वह्नित्वावच्छिन्नवह्निनिष्ठ-विधेयताका या अनुमितिस्तादृशानुमितेर्या जनकता, तस्या विषयविधया या अवच्छेदिका, सा स्वेतरभिन्ना, धूमत्वावच्छिन्नसमानाधिकरणप्रतियोग्यसमाना-धिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यादि'त्ये-वमनुमानाकारः फलितः। तत्राभेदः सम्बन्धो हेतुतावच्छेदकः।

एतदेव 'अयमाशयः' इत्यादि 'न भागासिद्ध्यवकाशः' इत्यन्तेन तत्त्वालोक-कृता स्पष्टीक्रियते। तद्धर्मावच्छिन्ननिष्ठलिङ्गताक(धूमत्वावच्छिन्ननिष्ठलिङ्गताक)स्थाने तद्धर्माश्रयनिष्ठ = धूमत्वधर्माश्रयनिष्ठलिङ्गताकघटित,- तथा तद्धर्मावच्छिन्ननिष्ठविधेय-ताक(वह्नित्वावच्छिन्ननिष्ठविधेयताक)स्थाने वह्नित्वाश्रयनिष्ठविधेयताकघटितानुमिति-जनकतायां विषयविधया अवच्छेदकं पक्षीकृत्य तद्धर्मावच्छिन्न(धूमत्वावच्छिन्न)-समानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताःभावप्रतियोगितानवच्छेदकतद्धर्मावच्छिन्न-(वह्नित्वावच्छिन्न)सामानाधिकरण्येन हेतुना इतरभेदसाधने धूमत्वाश्रयनिष्ठलिङ्गता-त्वस्य धूमत्वावच्छिन्नलिङ्गतायामिव द्रव्यत्वावच्छिन्नलिङ्गतायामपि सत्त्वेन एवं वह्नित्वाश्रयनिष्ठविधेयतात्वस्य वह्नित्वावच्छिन्नविधेयतायामिव तद्वह्नित्वावच्छिन्न-विधेयतायामपि सत्त्वेन उद्देश्यतावच्छेदकस्य = इतरभेदानुमितेरुद्देश्यतावच्छेदकस्य द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके तथा धूमत्वावच्छिन्नलिङ्गताकतद्वह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके च सत्त्वेन इतरभेदानुमितेरुद्देश्यतावच्छेदकवतोश्च तयोर्द्वयोरवच्छेदकयोर्धूमत्वावच्छिन्न-समानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न-सामानाधिकरण्यरूपानुमापकहेतोर्विरहेण हेत्वभावस्य पक्षे सत्त्वाद्भागासिद्धिर-

भविष्यत्। उक्तप्रकारेण विशिष्टपक्षस्य सत्त्वे तूद्देश्यतावच्छेदकस्यापि तत्रासत्त्वेन तत्र हेतोरसत्त्वेऽपि न भागासिद्धिदोषावसर इति भावः।[१२१]

तत्त्वालोकः— **अथ द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्याप्रसिद्धतया कथं तदन्तर्भावेण भागासिद्धिः, धूमवदनुयोगिकसंयोगरूपप्रकृतहेतुतावच्छेदकसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नलिङ्गताकानुमितिजनकतावच्छेदकस्य प्रसिद्धत्वेऽपि तस्योक्तसामानाधिकरण्याभिन्नत्वेन भागासिद्ध्यसम्भव एवेति चेन्न।**

**भ्रमप्रमासाधारण्यानुरोधेन हि विषयितासम्बन्धेन व्याप्तिविशिष्टनिश्चयत्वेन कारणत्वम्परित्यज्य निरूप्यनिरूपकभावापन्नविषयताकनिश्चयत्वेन कारणत्वं वाच्यम्, "विषयविधये"त्यादि[१]ग्रन्थस्त्वापाततो विषयविशिष्टनिश्चयत्वेन कारणत्वपक्षीयः।**

**वस्तुतो 'व्याप्तिरि'[२]त्यस्योक्तजनकतानतिरिक्तवृत्तिविषयितानिरूपक इत्यर्थः, अनतिरिक्तवृत्तित्वञ्च स्वव्यापकतत्कत्वम्, तथा च यादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकविषयिताव्यापिकोक्तजनकता, तादृशरूपमुक्तजनकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्पर्य्यवसायि पक्षीकृत्योक्तसामानाधिकरण्यत्वगतसमुदायत्वहेतुकानुमाने तादृशजनकत्वपक्षकोक्तसामानाधिकरण्यत्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नत्वहेतुकानुमाने वा विशिष्य लक्ष्यानिवेशे भागासिद्धौ तात्पर्य्यमिति।[१२२]**

*प्रकाशः*—उक्तोपपादनोपरि 'अथे'त्यादितत्त्वालोकेन पूर्वपक्षमुपस्थापयति यद् द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकं नास्ति प्रसिद्धम्, धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्यैव सत्त्वात्तर्हि कथमप्रसिद्धे द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके भागासिद्धिवारणाय विशिष्य लक्ष्यनिर्देशौचित्यमिति।

अत्रेदं समाधीयते यद् 'द्रव्यत्वावच्छिन्नसमानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यवद्द्रव्यमि'त्या-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ३

२. तत्रैव, दीधितिमूलम्, पृ. २

कारकभ्रमात्मकज्ञानतोऽपि वह्नित्वावच्छिन्नविधेयताकानुमितेरुत्पत्त्या भ्रमप्रमा-साधारणव्याप्तिविषयताकनिश्चयस्यानुमितिजनकत्वोपपत्त्यर्थं व्याप्तिविशिष्टनिश्चय-त्वेनानुमितिजनकत्वमनङ्गीकृत्य निरूप्यनिरूपकभावापन्नविषयताकनिश्चयत्वेनैव व्याप्तिविषयकनिश्चयस्यानुमितिजनकत्वस्वीकारेण व्याप्तिविशिष्टनिश्चयविषयद्रव्य-त्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्याप्रसिद्ध-त्वेऽपि भ्रमप्रमासाधारणनिरूप्यनिरूपकभावापन्नविषयताकनिश्चयीयद्रव्यत्वावच्छिन्न-लिङ्गत्वविषयतानिरूपितवह्नित्वावच्छिन्नविधेयत्वाख्यविषयताकानुमितिजनकता-वच्छेदकरूपविषयतायाः प्रसिद्धत्वेन विशिष्य लक्ष्यानिर्देशे तत्रैव भागासिद्धिदोषे पूर्वोपपादनस्य तात्पर्य्यादिति।

यद्यपि व्याप्तिविशिष्टनिश्चयत्वेन कारणत्वविरहे "तद्धर्मावच्छिन्नहेतुकतद्धर्मा-वच्छिन्नविधेयकानुमितेर्जनकताया विषयविधयाऽवच्छेदिकेति तदर्थः, तेन 'व्याप्ति'-पदेनापि तादृशसामानाधिकरण्योक्त्या न पौनरुक्त्यमि"ति[१] जागदीशीग्रन्थघटकस्य 'विषयविधये'त्यस्यासङ्गतिर्भवति, तथापि 'विषयविधये'ति घटितोक्तजागदीशी-ग्रन्थस्य आपाततो भविष्यदनुपपत्तिमनवधार्यैव विषयविशिष्टनिश्चयत्वेनानुमिति-कारणत्वपक्षीयत्वेनासैद्धान्तिकतया तद्विरोधस्याकिञ्चित्करत्वात्।

भ्रमप्रमासाधारण्यानुरोधेन निरूप्यनिरूपकभावापन्नविषयताकनिश्चयत्वेन कारणत्वाङ्गीकारस्यायमभिप्रायो यद् विशिष्टवैशिष्ट्यावगाहिबोधम्प्रति विशेषणता-वच्छेदकप्रकारकज्ञानस्य कारणता मन्तव्या भवति, दण्डत्वप्रकारकज्ञानमन्तरा दण्डत्वविशिष्टदण्डवैशिष्ट्यावगाहिनो 'दण्डी पुरुष' इत्येवंविधज्ञानानुदयात्, तत्रापि यज्ज्ञानं वस्तुतो न दण्डत्ववद्दण्डविशेष्यकमपि तु दण्डत्वेन दण्डेतरविशेष्यकमेव भ्रमात्मकम्, तादृशज्ञानतोऽपि 'दण्डी'त्याकारकभ्रमात्मकविशिष्टवैशिष्ट्यावगाहि-ज्ञानोत्पत्त्या दण्डत्वनिष्ठप्रकारताख्यविषयतानिरूपितविशेष्यत्वाख्यविषयताशालि-निश्चयत्वेनैव यथा तत्र कारणता, तथैव यत्र वस्तुतो वह्नेरव्याप्तिमेव वह्निव्याप्तित्वेना-वगत्य एवं वस्तुतो वह्निनिरूपितव्याप्तिरहितमेव वह्निनिरूपितव्याप्तिमत्तया विज्ञाय पक्षविशेष्यकनिरूप्यनिरूपकभावापन्नविषयताकनिश्चयस्तत्रापि पक्षे वह्न्यनुमिति-र्जायत एव, अतो निरूप्यनिरूपकभावापन्नविषयताकनिश्चयत्वेन भ्रमप्रमासाधारण्ये-नास्ति कारणत्वस्यावश्यकतेति।

वस्तुतो दीधितिघटक'व्याप्तिरि'त्यस्य जगदीशेन "तद्धर्मावच्छिन्नहेतुक-तद्धर्मावच्छिन्नविधेयकानुमितेर्जनकताया 'विषयविधया अवच्छेदिके"ति योऽर्थो

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ३

निर्दिष्टस्तस्य तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नविधेयकानुमितिजनकतानतिरिक्तवृत्ति-विषयितानिरूपकरूपार्थे एव तात्पर्यम्, तेन द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वा-वच्छिन्नविधेयताकानुमितिजनकताया विषयविधया अवच्छेदकस्य प्रसिद्धिविरहेऽपि न क्षतिः, उक्तानुमितिजनकतानतिरिक्तवृत्तिविषयितानिरूपकस्य तत्रापि प्रसिद्धत्वात्, विषयस्येव निरूप्यनिरूपकभावापन्नविषयताया अपि उक्तानुमितिजनकतानतिरिक्त-वृत्तिविषयितानिरूपकत्वसत्त्वात्।

एवंस्थितौ नोक्तदिशा उक्तानुमितिजनकताया विषयविधया अवच्छेदकं पक्षीकृत्य उक्तसामानाधिकरण्येन हेतुना इतरभेदः साध्यते, किन्तूक्तानुमितिजनकता-नतिरिक्तवृत्तिविषयितानिरूपकरूपव्याप्तिपदविवक्षितार्थघटकविषयितायामुक्तानुमिति-जनकतानतिरिक्तवृत्तित्वं स्व(विषयिता)व्यापकं तत्(जनकता)यस्य तत्कत्वार्थकस्व-व्यापकतत्कत्वरूपम्, ततश्च यादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकता-कनिरूपकताकविषयिताव्यापिका उक्तानुमितिजनकता भवति, तादृशरूपमेव स्वेतर-भेदानुमितौ पक्षः, तादृशञ्च रूपमुक्तजनकतावृत्तिर्योऽभावः, उक्तरूपावच्छिन्नानुयोगि-ताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकस्वावच्छेदकविषयिताव्यापकत्वरूपः, स्वा-वच्छेदकविषयितासमानाधिकरणात्यन्ताभावप्रतियोगित्वाभावरूपः, तादृशाभावीय-प्रतियोगितानिरूपितपरम्परावच्छेदकरूपं पर्य्यवसितं भवति। उक्तरूपस्य इतरभेदा-नुमितौ पक्षत्वे इतरभेदानुमापकहेतुत्वेन उक्तसामानाधिकरण्यत्वगतमपेक्षाबुद्धिविशेष-विषयत्वरूपं समुदायत्वमेव विवक्षितम्।

तद्धर्मावच्छिन्न(धूमत्वावच्छिन्न)हेतुकतद्धर्मावच्छिन्न(वह्नित्वावच्छिन्न)-विधेयकानुमितिजनकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकताप्रतियोगिक-पर्य्याप्त्यनुयोगितावच्छेदकीभूतरूपं पक्षीकृत्य धूमत्वावच्छिन्नसमानाधिकरण-प्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामाना-धिकरण्यत्वगतापेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वेन हेतुना इतरभेदः साध्यते इति फलितार्थः।

विशिष्य लक्ष्यनिर्देशस्थितौ यदेव रूपमुक्तानुमितिजनकतानतिरिक्तवृत्ति-विषयितानिरूपकतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकम्, तदेव रूपं तद्धर्मावच्छिन्नसमानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक-वह्नित्वावच्छिन्नसामानाधिकरण्यत्वगतसमुदायात्मकं भवति, हेतुतावच्छेदक-स्सम्बन्धस्तत्राभेद एवाभिप्रेतः, ततश्च न भागासिद्धिदोषावसरः।

विशिष्य लक्ष्यानिर्देशे तु, अर्थाद् हेतुतावच्छेदकावच्छिन्नलिङ्गताकत्वसाध्य-तावच्छेदकावच्छिन्नविधेयताकत्व(धूमत्वावच्छिन्नलिङ्गताकत्ववह्नित्वावच्छिन्न-

विधेयताकत्व)रूपविशिष्टत्वस्य पक्षभागे प्रवेशराहित्यावस्थायाम्, द्रव्यत्वावच्छिन्न-लिङ्गताकत्वादिरूपेतरपदार्थघटितगततादृशनिरूपकतावच्छेदकताप्रतियोगिकपर्य्याप्त्य-नुयोगितावच्छेदकरूपस्यापि पक्षान्तर्गतत्वापत्त्या तत्रोक्तहेतोरसत्त्वेन भागासिद्धिस्स्या-दित्याशयः।

अथवा लाघवात् तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नविधेयकानुमितिजनकता एव इतरभेदानुमितौ पक्षः, उक्तसामानाधिकरण्यत्वावच्छिन्ननिरूपितविषयित्वावच्छिन्न-त्वञ्च तत्र हेतुः, विशिष्य लक्ष्यनिर्देशस्थितौ तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्न-विधेयकानुमितिजनकतायामुक्तसामानाधिकरण्यत्वावच्छिन्ननिरूपितविषयित्वा-वच्छिन्नत्वहेतोः सद्भावात्। विशिष्य लक्ष्यानिर्देशे तु द्रव्यत्वावच्छिन्नहेतुकवह्नित्वा-वच्छिन्नविधेयकानुमितिजनकताया अपि पक्षान्तर्गतत्वापत्त्या तत्रोक्तहेत्वभावाद्भागा-सिद्धिस्स्यादिति भावः।[१२२]

**तत्त्वालोकः – परे तु — व्याप्यत्वस्य व्याप्यत्वव्यहारस्येत्यर्थः, लक्ष्य-मितरभेदानुमित्युद्देश्यरूपव्याप्यत्वपदार्थम्, अयम्भावः तत्तद्धर्म्मावच्छिन्न-हेतुसाध्यबोधकपदसमभिव्याहृतव्याप्यत्वपदार्थस्तद्धर्म्मघटित एव, तत्र व्याप्यत्वं यदि तद्धर्माश्रयलिङ्गताकतद्धर्माश्रयनिष्ठविधेयताकानुमितिजनकता-वच्छेदकरूपम्, तदा 'द्रव्यम्वह्निव्याप्यमि'ति व्यवहारापत्तिस्स्यात्, तत्प्रयोज-कस्य द्रव्यत्वाश्रयनिष्ठलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितजनकता-वच्छेदकस्य धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमिति-जनकतावच्छेदकधूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगिता-नवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपविषयस्य सत्त्वाद्, विशिष्य लक्ष्यनिर्देशे तु द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमिति-जनकतावच्छेदकरूपविषयस्याप्रसिद्धेर्न्नापत्तिरिति — प्राहुः।[१२३]**

*प्रकाशः* – "द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये तत्तद्वह्नि-व्याप्यत्वस्य वारणाय विशिष्य लक्ष्यं निर्दिशति 'तद्रूपविशिष्टस्य तद्धर्मावच्छिन्ने-त्यादी''ति[१] जागदीशीभागस्य प्रकारान्तरेण सङ्गतिकर्तॄणां परेषाम्मतमुपस्थापयति तत्त्वालोककृत् 'परे तु' इत्यादिना 'प्राहुरि'त्यन्तेन।

परे कथयन्ति यदुक्तजागदीशीघटक'वह्निव्याप्यत्वस्ये'त्येतद्घटक'व्याप्यत्व'-शब्दः 'तत्तद्वह्निव्याप्यत्वस्ये'त्येतद्घटक'व्याप्यत्व'शब्दश्च व्याप्यत्वव्यवहारपरक-तयैव विवक्षितस्तथा तज्जागदीशीघटकं 'लक्ष्यमि'त्येतद् इतरभेदानुमित्युद्देश्यरूप-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ३

व्याप्यत्वपदार्थपरकं विवक्षितम्। तत्र तत्तद्धर्मावच्छिन्नहेतुसाध्यबोधकपदसमभिव्याहृतव्याप्यत्वपदार्थस्तत्तद्धर्मघटित एव, अर्थाद् धूमत्वावच्छिन्नहेतुबोधकपदवह्नित्वावच्छिन्नसाध्यबोधकपदसमभिव्याहृतव्याप्यत्वपदार्थो धूमत्ववह्नित्वधर्मघटित एव भवति। तत्र व्याप्यत्वं तद्धर्माश्रयलिङ्गताकतद्धर्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदकरूपमेव यदि भवेत्तर्हि 'द्रव्यं वह्निव्याप्यमि'त्येवं व्यवहारापत्तिः प्रसज्येत, यतो हि धूमत्वाश्रये धूमे 'धूमो वह्निव्याप्य' इत्येतद् व्यवहारप्रयोजकधूमत्वाश्रयनिष्ठलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनके धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपो विषयो यथा, तथैव 'द्रव्यं वह्निव्याप्यमि'त्येतद्व्यवहारप्रयोजकस्यापि द्रव्यत्वाश्रयनिष्ठलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकधूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपविषयस्य विद्यमानत्वात्।

अतो व्याप्यत्वं नो तद्धर्माश्रयनिष्ठलिङ्गताकतद्धर्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदकरूपमपि तु तद्धर्मावच्छिन्नलिङ्गताकतद्धर्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकमेवेति विशिष्य व्याप्यत्वरूपेतरभेदानुमित्युद्देश्यबोधनेन बोधितं जातम्। ततश्च तद्धर्मावच्छिन्नलिङ्गताकतद्धर्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकस्यैव, न तु तद्धर्माश्रयनिष्ठलिङ्गताकतद्धर्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदकस्य, व्याप्यत्वेन धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकरूपविषयस्य धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य धूमे सत्त्वेन 'धूमो वह्निव्याप्य' इत्येवं व्यवहार उपपद्यते। द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नानुमितिजनकतावच्छेदकरूपव्याप्यत्वात्मकविषयस्तु नैव प्रसिद्धोऽतो 'द्रव्यं वह्निव्याप्यमि'त्येवं व्यवहारापत्तेर्नावसर इत्याशयः।[१२३]

तत्त्वालोकः— केचित्तु— 'व्याप्यत्वस्ये'त्यनन्तरम् 'उक्तसामानाधिकरण्यरूपताया' इति पूरणीयन्तथा च 'व्याप्तिरि'त्येतावदुक्तौ अविशेषात्तद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मावच्छिन्नसामानाधिकरण्यस्य तद्धर्मावच्छिन्नलिङ्गताकतद्धर्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकत्वस्येव धर्मान्तरावच्छिन्नलिङ्गताकतद्धर्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकत्वस्य प्रसङ्गेन तादृशव्याप्तिज्ञानविरहदशायान्तत्तद्धर्म्मावच्छिन्नलिङ्गताकतत्तद्धर्मावच्छिन्नविधेयताकानुमित्यनुपपत्तिः, 'तद्रूपविशिष्टे'त्यनुक्तौ च धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगि-

तानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्याज्ञाने द्रव्यत्वावच्छिन्नलिङ्गता-दिकानुमित्यनुपपत्तिर्दोषः।

'तद्रूपविशिष्टस्ये'त्याद्युक्तौ चान्यधर्मावच्छिन्नलिङ्गतादिकानुमिति-जनकतावच्छेदकस्य तद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगिता-नवच्छेदकतद्धर्म्मावच्छिन्नसामानाधिकरण्यरूपताविरहान्न परामर्शानुमित्योः कार्यकारणभावे व्यभिचारसम्भव — इति वदन्ति।

''सामान्यरूपतालाभाये''ति।[1] वह्नित्वाश्रयनिखिलव्यक्तिगमकता-प्रयोजकतालाभायेत्यर्थः, यत्किञ्चिद्व्यक्तिसामानाधिकरण्ये यावत्प्रतियोगिक-त्वविरहाद्यावदित्यादेर्य्यथाश्रुतार्थकताव्यवच्छेदाय लक्षणयोक्तार्थबोधकत्वं सूचयितुं 'लाभाये'ति।[१२४]

*प्रकाशः* – 'द्रव्यत्वादिरूपेणे'त्यादि 'व्याप्तिरित्यर्थ' इत्यन्तस्योक्तजागदीशी-ग्रन्थस्य व्याख्यां केचिदपरथैव कुर्वन्ति। ते कथयन्ति यदुक्तजागदीशीघटक'व्याप्यत्व-स्य' इत्यस्य अनन्तरम् 'उक्तसामानाधिकरण्यरूपतायाः' इत्यवशिष्टं योजनीयम्। ततश्च तत्र ''द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य उक्तसामानाधिकरण्यरूपताया (धूमत्वा-वच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामाना-धिकरण्यरूपताया) धूमसामान्ये वा तत्तद्वह्निव्याप्यत्वस्य उक्तसामानाधिकरण्यरूपताया (धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न-सामानाधिकरण्यरूपताया) वारणाय विशिष्य लक्ष्यं निर्दिशति 'तद्रूपविशिष्टस्ये-त्यादिने''ति उक्तजागदीश्या अविकलं स्वरूपं भवति।

विशिष्टलक्ष्यनिर्देशेनेदं विज्ञापितं जातं यद्धूमत्वावच्छिन्नसमानाधिकरणा-त्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यं धूमत्वावच्छिन्न-लिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकमेव व्याप्त्यभिन्नं व्याप्य-त्वम्, तादृशसामानाधिकरण्यात्मव्याप्तिज्ञानस्यैव तादृशानुमितौ हेतुत्वात्, न तु धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न-सामानाधिकरण्यं धूमत्वेतरद्रव्यत्वादिधर्मावच्छिन्नलिङ्गताकवह्नित्वेतरतद्वह्नित्वादिधर्मा-वच्छिन्नविधेयताकानुमितिजनकतावच्छेदकमपि, व्याप्यत्वात्मकम्, अन्यधर्मा-वच्छिन्नलिङ्गताकान्यधर्मावच्छिन्नविधेयताकानुमितौ उक्तसामानाधिकरण्यस्य व्याप्य-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ३

त्वविरहात्। अन्यधर्मावच्छिन्नलिङ्गताकान्यधर्मावच्छिन्नविधेयताकानुमितौ उक्त-सामानाधिकरण्यरूपव्याप्यत्वभिन्नव्याप्तिविषयकज्ञानस्याहेतुत्वात्।

अयम्भावः — व्याप्तिरित्येतावदुक्तौ अविशेषाद् व्यावर्तकस्य विशेषस्या-सत्त्वात् तद्धर्मावच्छिन्न(धूमत्वधर्मावच्छिन्न)समानाधिकरणात्यन्ताभावप्रतियोगितान-वच्छेदकतद्धर्मावच्छिन्न(वह्नित्वधर्मावच्छिन्न)सामानाधिकरण्यस्य तद्धर्मावच्छिन्न-(धूमत्वधर्मावच्छिन्न)लिङ्गताकतद्धर्मावच्छिन्न(वह्नित्वधर्मावच्छिन्न)विधेयताका-नुमितिजनकतावच्छेदकत्वस्येव (व्याप्यत्वस्येव = व्याप्तेरिव) धर्मान्तरावच्छिन्न-(धूमत्वेतरधर्मावच्छिन्न)लिङ्गताकधर्मान्तरावच्छिन्न(वह्नित्वेतरधर्मावच्छिन्न)विधेयता-कानुमितिजनकतावच्छेदकत्वस्यापि प्रसक्त्या तादृशव्याप्तिज्ञानविरहदशायाम् प्रसक्त-धर्मान्तरावच्छिन्नलिङ्गताकधर्मान्तरावच्छिन्नविधेयताकानुमितिजनकतावच्छेदिकाया व्याप्तेर्ज्ञानविरहदशायां तत्तद्धर्मावच्छिन्नलिङ्गताक(धूमत्वेतरधर्मावच्छिन्नलिङ्गताक)-तत्तद्धर्मावच्छिन्नवह्नित्वेतरधर्मावच्छिन्नविधेयताकानुमितेरनुपपत्तिः स्यात्।

अर्थाद् विशेषानुक्तौ व्याप्तिरित्येतावत एवोक्तौ उक्तसामानाधिकरण्यस्य धूमत्वावच्छिन्नसमानाधिकरणादि-वह्नित्वावच्छिन्नसामानाधिकरण्यान्तस्य धूमत्वेतर-द्रव्यत्वादिधर्मावच्छिन्नलिङ्गताकवह्नित्वेतरतद्वह्नित्वादिधर्मावच्छिन्नविधेयताकानुमिति-जनकतावच्छेदकत्वप्राप्त्या धूमत्वावच्छिन्नसमानाधिकरणघटिताया उक्तसामाना-धिकरण्यरूपाया व्याप्तेरज्ञानकाले धूमत्वेतरद्रव्यत्वादिधर्मावच्छिन्नलिङ्गताकवह्नित्वेतर-तद्वह्नित्वादिधर्मावच्छिन्नविधेयताकानुमितिर्न स्यादिति तदाशयः।

'व्याप्तिरित्येतावदुक्तावविशेषादि'त्यादिना तत्त्वालोककृता यदापादितं तदेव पुनर्दार्ढ्याय 'तद्रूपविशिष्टेत्यनुक्तौ च' इत्यादिना वाक्यान्तरेण आपाद्यते — तद्रूप-विशिष्टेत्यनुक्तौ, अर्थाद् व्यावर्तकविशेषानुक्तौ व्याप्तिरित्येतावदेवोक्तौ, धूमत्वेतरद्रव्य-त्वादिधर्मावच्छिन्नलिङ्गतादिकाद्यनुमितिजनकतावच्छेदकत्वस्यापि उक्तसामाना-धिकरण्ये धूमत्वावच्छिन्नसमानाधिकरणादिघटिते प्रसक्त्या 'धूमत्वावच्छिन्नसमाना-धिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्याज्ञाने द्रव्यत्वा-वच्छिन्नलिङ्गतादिकानुमित्यनुपपत्तिर्दोष' इत्यन्तेन।

अनन्तरम् विशेषणबोधकविशेष्यबोधकोभयविधपदघटितपूर्णवाक्यसत्त्वा-वस्थायां यथा न दोषस्तथोपपादयति 'तद्रूपविशिष्टस्येत्याद्युक्तौ च अन्यधर्मावच्छिन्न-(धूमत्वेतरधर्मावच्छिन्न)लिङ्गतादिकानुमितिजनकतावच्छेदकस्य तद्धर्मावच्छिन्न-(धूमत्वधर्मावच्छिन्न)समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मावच्छिन्न-(वह्नित्वावच्छिन्न)सामानाधिकरण्यरूपताविरहाद् नोक्तदोष' इति। 'तद्रूपविशिष्टस्ये'-

त्यादि 'व्याप्तिरि'त्यन्तेन उपपादितसिद्धान्ते धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्न-विधेयताकानुमितिजनकतावच्छेदकमेव धूमत्वावच्छिन्नसमानाधिकरणघटितमुक्त-सामानाधिकरण्यं व्याप्यत्वम्। तस्मात्तद्धर्मत्वावच्छिन्नसमानाधिकरणघटितोक्तसामाना-धिकरण्यरूपव्याप्तिघटितपरामर्शस्य धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेय-ताकानुमितिम्प्रत्येव कारणत्वात् परामर्शानुमित्योः कार्य्यकारणभावे व्यभिचारदोषो नापतति। धूमत्वावच्छिन्नसमानाधिकरणघटितोक्तसामानाधिकरण्यस्य धूमत्वेतर-द्रव्यत्वादिलिङ्गतादिकानुमितेरपि जनकतावच्छेदकत्वे तु अन्यधर्मावच्छिन्नलिङ्गक-परामर्शतोऽद्रव्यत्वावच्छिन्नलिङ्गतादिकानुमितेरुत्पत्त्या तल्लिङ्गकपरामर्शतल्लिङ्गका-नुमित्योः कार्यकारणभावे व्यभिचारः स्यादित्याशयः।

'तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरि'ति दीधितिघटकं 'यावत्'पदं व्याख्यातुं जगदीशेन 'व्याप्तेः सामान्यरूपतालाभाय यावदिती'त्युक्तम्। तत्र 'व्याप्तेः सामान्यरूपतालाभाये'त्यस्य विवक्षितार्थः 'वह्नित्वाश्रयनिखिलव्यक्ति-गमकताप्रयोजकतालाभाये'ति तत्त्वालोककृता स्पष्टीकृतः।

उक्तदीधितिवाक्ये 'तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरि'त्यत्र यावत्पदासत्त्वे धूमत्वविशिष्टस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक-वह्नित्वावच्छिन्नेन येन केनापि समं धूमत्वरूपविशिष्टे सामानाधिकरण्यस्य वह्नित्वाश्रय-निखिलव्यक्तिगमकताप्रयोजकतालाभो न स्यात्, ततो 'यावदि'ति उक्तदीधितौ निर्दिष्टमिति जगदीशस्याशयः। तत्र जगदीशेन 'व्याप्तेः सामान्यरूपतार्थं यावदिति' इत्येवमनुक्त्वा तत्र 'लाभाये'ति कथमित्येवं जिज्ञासाशान्त्यै तत्त्वालोककृता स्पष्टी-क्रियते यद् यत्किञ्चिद्व्यक्तिसामानाधिकरण्यस्य अर्थाद् वह्नित्वावच्छिन्नेन महानसीया-दिना येन केनापि वह्निना सामानाधिकरण्ये यावद्वह्निप्रतियोगिकत्वविरहाद् यावदि-त्यादेर्यथाश्रुतार्थकत्वासम्भवाद् यथाश्रुतार्थकताव्यवच्छेदाय लक्षणयोक्तार्थकत्वं सूचयितुं 'लाभाये'ति जगदीशेन प्रयुक्तम्।

अयमाशयः दीधितिकृदुक्ते तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नसाध्यका-नुमितिजनकतावच्छेदकव्याप्यत्वस्य स्वरूपात्मकलक्षणबोधकवाक्ये 'येन केनापि' पदसत्त्वाद् धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वा-वच्छिन्नेन येन केनापि समं धूमत्वविशिष्टे सामानाधिकरण्यस्य प्रातिस्विक्या एव तत्तद्धर्मतत्तद्वह्निनिरूपितव्याप्तेः (अनुमितिजनकतावच्छेदिकाया व्याप्तेः) लक्षणत्वं मा प्रतीयताम्, 'येन केनापि समं सामानाधिकरण्या'न्तमुक्तलक्षणं धूमसामान्ये वह्नि-सामान्यस्यैव व्याप्तेर्लक्षणमिति बोधनाय एव व्याप्तेः प्रातिस्विकत्वभ्रमनिराकरण-

पूर्वकं सामान्यरूपत्वबोधनाय एव, तद्धर्मावच्छिन्नहेतुकतद्धर्मावच्छिन्नसाध्यकानुमिति-जनकतावच्छेदकात्मकलक्ष्यीभूतव्याप्तिबोधकदीधितिवाक्ये 'यावदि'त्यस्योल्लेखः। तत्र यावत्पदं यथाश्रुतार्थकं भवितुं न शक्नोति, लक्षणबोधकदीधितिकृदुक्तवाक्यघटक-पदानां 'तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यमि'त्येषां शक्त्या वह्नित्वाश्रयनिखिलव्यक्तिनिरूपितव्याप्त्यर्थकत्वासम्भवात्। अतो लक्षणघटकं 'तद्धर्मावच्छिन्नेन (येन) केनापि समं सामानाधिकरण्यमि'त्यादिवह्नित्वाश्रयनिखिल-वह्निव्यक्तिनिरूपिताया धूमत्वावच्छिन्ने विषयविधया अनुमितिजनकतावच्छेदिकायाः सामान्यव्याप्तेर्लक्षणयैव बोधकमिति सूचयितुमेव तत्र 'लाभाये'त्युक्ति-रित्याशयः।[१२४]

तत्त्वालोकः – "निरवच्छिन्नमेवे"ति।[१] किञ्चित्सम्बन्धावच्छिन्ना-वच्छेदकत्वानिरूपितमेवेत्यर्थः, अवच्छेदकतामात्रस्य सम्बन्धावच्छिन्नत्वेन निरवच्छिन्नावच्छेदकत्वाप्रसिद्धेस्सम्बन्धावच्छिन्नेति।

ननु विशिष्टसाध्यतावच्छेदकस्थलेऽवच्छेदकतायान्निरवच्छिन्नत्व-विवक्षया पटसमवेतत्वविशिष्टजातिमदभावमादाय यद्यप्यव्याप्तिवारणं सम्भवति तथापि दण्डिमान्द्रव्यत्वादित्यत्र दण्डस्य निरवच्छिन्नावच्छेदकता-विरहेणातिव्याप्तिस्स्यादित्यत आह "येन रूपेणे"त्यादि (विशिष्टसाध्यता-वच्छेदकस्थलेऽपीति)[२]। साध्यतावच्छेदकतावच्छेदकताविशिष्टान्यावच्छेद-कतानिरूपितत्वसाध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वो-भयाभाववदित्यर्थः। वैशिष्ट्यञ्च प्राग्वत्, एवञ्च प्रमेयस्य साध्यतावच्छेदका-वच्छेदकत्वे तदितराप्रसिद्धावपि न क्षतिः।

अत्र "उभयानवच्छिन्ने"ति[३] सम्पातायातमुक्तविशिष्टान्यावच्छेदकत्वा-निरूपितत्वमात्रम्विवक्षितं लाघवात्कथमन्यथा जातिमद्वान्घटत्वादित्यत्रा-व्याप्तिवारणायोक्तविशेषणमुपादीयेत पटसमवेतत्वविशिष्टवदभावमादाया-व्याप्तेस्तदवस्थानात्, कथम्वा तद्व्यक्तिमदभावन्तत्ताविशिष्टदण्डत्वविशिष्ट-

---

१. 'निरवच्छिन्नमिवे'ति पाठान्तरमधुनोपलभ्यते।
– प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

२. (क) तत्रैव, जागदीशीमूलम्, पृ. ४
(ख) कोष्ठकान्तर्गतः पाठः प्राचीनतत्त्वालोकमूले नास्ति।

३. तत्रैव, जागदीशीमूलम्, पृ. ४

वदभावञ्चादाय दण्डिमान्दण्डिसंयोगादित्यत्राव्याप्तिसद्भावे तत्राव्याप्त्यभाव-प्रतिपादकं "यदि चे"[१]त्यादिकमन्यथोच्येत।

यत्तु वह्नित्वविशिष्टस्य विषयितया साध्यतायान्तज्ज्ञानत्वे सद्धेतौ वह्न्यभावमादायाव्याप्तिरत उभयानवच्छिन्नत्वमेव विवक्षितन्तथा सति तादृशावच्छेदकतायां सावच्छिन्नत्वविशेषणेन वह्न्यभाववारणम्, न च साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नावच्छेदकतायां सावच्छिन्नत्वम्विवक्षितुं शक्यम्, वह्नित्वाश्रयवान् धूमादित्यत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितानिरूपिततादृशावच्छेदकत्वाप्रसिद्ध्या अव्याप्त्यापत्तेरिति। तत्तुच्छम्, उक्तग्रन्थासङ्गतेर्लाघवाच्चोभयानवच्छिन्नत्वस्याविवक्षणीयत्वात्।[१२५]

*प्रकाशः–* 'तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः' एतद्ग्रन्थानन्तरं दीधितिकृता 'दण्डयादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिरि'ति[२] निर्दिष्टमस्ति। तस्य व्याख्यार्थं जगदीशेन तस्यावतरणरूपेणादौ 'ननु दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिः, चालनीन्यायेन (तत्तद्दण्डयधिकरणेऽपरतत्तद्दण्डयभावसत्त्वेन) दण्डमात्रस्यैव हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकत्वाद्' इत्युल्लिख्य अनन्तरमुक्तदीधितिघटकस्य 'आदि'पदस्य प्रयोजनं दर्शयितुं 'न च प्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वं शुद्धसाध्यता-वच्छेदकस्थले निरवच्छिन्नमिव विशिष्टसाध्यतावच्छेदकस्थलेऽपि साध्यतावच्छेदक-तावच्छेदकतदितरोभयानवच्छिन्नमेव ग्राह्यमि'त्युल्लिखितम्[३]।

तस्यायमभिप्रायो यत् शुद्धसाध्यतावच्छेदकस्थले यदि निरवच्छिन्नमेवावच्छेद-कत्वं ग्राह्यन्न स्यात्तर्हि वह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्वजातिमदभावं पर्वतादिवर्तिनमादाय वह्नित्वात्मकसाध्यतावच्छेदकस्य लक्षणघटकाभावप्रतियोगिता-वच्छेदकत्वादव्याप्तिः स्यात्। निरवच्छिन्नावच्छेदकत्वस्यैव तत्र ग्राह्यत्वे तु उक्ताभाव-प्रतियोगिताया निरवच्छिन्नावच्छेदकत्वस्य वह्नित्वे विरहान्नाव्याप्तिः। विशिष्टसाध्यता-वच्छेदकस्थले साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नावच्छेदकत्वस्य ग्राह्यत्वविरहे जातिमद्वान् घटत्वादित्यत्र घटवर्तिनं पटसमवेतत्वविशिष्टजातिमदभाव-मादायाव्याप्तिः स्यात्, साध्यतावच्छेदकीभूतजातौ उक्ताभावप्रतियोगितावच्छेदकत्व-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

२. तत्रैव, दीधितिमूलम्, पृ. ३

३. तत्रैव, जागदीशीमूलम्, पृ. ४

सत्त्वात्, तत्र साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नाया एव अवच्छेदकताया ग्राह्यत्वे तु जातौ उक्ताभावप्रतियोगितावच्छेदकत्वस्य तादृशत्वविरहान्नाव्याप्तिः।

इत्थं स्थितौ दण्डिमान् दण्डिसंयोगादित्यस्य विशिष्टसाध्यतावच्छेदकस्थलत्वेन तत्तद्दण्डद्यधिकरणे अपर-तत्तद्दण्डद्यभावमादायाव्याप्तिर्भवितुं न शक्नोति, साध्यतावच्छेदकीभूते दण्डे उक्ताभावप्रतियोगितावच्छेदकताया साध्यतावच्छेदकतावच्छेदकदण्डत्व-तदितरतत्तोभयावच्छिन्नत्वेन विवक्षितोक्तोभयानवच्छिन्नत्वविरहादिति जगदीशकथनस्याशयः।

उपर्युक्ततत्त्वालोके 'निरवच्छिन्नमेवे'ति तथा तत्रैव किञ्चिदग्रे गत्वा 'निरवच्छिन्नावच्छेदकताविरहेणातिव्याप्तिस्स्यादित्यत आह येन रूपेणेत्यादि' इत्येवं जागदीशीप्रतीकधारणाभ्यां परिलक्ष्यते यत्तदानीमिदानीमुपलब्धजागदीश्यामस्ति पाठभेदः। इदानीमुपलब्धजागदीश्यां पूर्वं 'निरवच्छिन्नमिव' इत्येवं पाठः, न तु 'निरवच्छिन्नमेव' इति, एवं परत्र इदानीमुपलब्धजागदीश्यां 'विशिष्टसाध्यतावच्छेदकस्थलेऽपि' इत्येवं पाठः, न तु 'येन रूपेण' इत्यादि।[१] अस्तु जागदीश्यामांशिकः पाठभेदः, प्रतिपाद्यार्थे तु न भेदस्तथापि वस्तुस्थितिर्विज्ञापिता।

'निरवच्छिन्नमेवे'ति प्रतीकम् गृहीत्वा तस्य विवक्षितार्थस्तत्त्वालोककृता 'किञ्चित्सम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितमेवे'ति दर्शितः। तत्र हेतुः, अवच्छेदकतामात्रस्य सम्बन्धावच्छिन्नत्वनियमात् सम्बन्धेनापि अनवच्छिन्नाया अवच्छेदकतायाः सम्भवविरहेण शुद्धसाध्यतावच्छेदकस्थले निरवच्छिन्नावच्छेदकताया ग्राह्यत्वोक्तेरसङ्गतिः।

अनन्तरं प्रासङ्गिकं विषयं स्पष्टयितुमिदमुच्यते यत् शुद्धसाध्यतावच्छेदकस्थल इवैव विशिष्टसाध्यतावच्छेदकस्थलेऽपि सद्धेतौ किञ्चित्सम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितरूपनिरवच्छिन्नावच्छेदकतानिवेशेनैव यद्यपि अव्याप्तिवारणं सम्भवति, जातिमद्वान् घटत्वादित्यत्र पूर्वं दर्शिते विशिष्टसाध्यतावच्छेदकसद्धेतुस्थले घटे पटसमवेतत्वविशिष्टजातिमान् नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितावच्छेदकताया साध्यतावच्छेदकीभूतायां जातौ सत्त्वेऽपि तस्याः किञ्चित्सम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितत्वविरहात्, तथापि दण्डिमान् द्रव्यत्वादित्यत्र संयोगेन दण्डिसाध्यकसंयोगेन द्रव्ये, विशिष्टसाध्यतावच्छेदके असद्धेतौ दण्डात्मके साध्यतावच्छेदके किञ्चि-

---

१. 'येन रूपेणे'त्यादिपाठस्तूपलभ्यते।
द्रष्टव्यम्– प्रकृतग्रन्थस्य प्रथमभागे जागदीशीमूलम्, पृ.४

त्सम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितरूपनिरवच्छिन्नावच्छेदकताया अभावादतिव्याप्तिः स्यादतः शुद्धसाध्यतावच्छेदककस्थलवद्विशिष्टसाध्यतावच्छेदककस्थले निरवच्छिन्नावच्छेदकतानिवेशासम्भवाद् विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकताव[illegible]दक-तदितरोभयानवच्छिन्नत्वविवक्षैव अन्यादृशी अपेक्षितास्तीत्याशयः।

विशिष्टसाध्यतावच्छेदकस्थले लक्षणघटकावच्छेदकतायां विवक्षितस्य साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नत्वस्य परिष्कृतार्थः प्रागुदर्शितैः स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्वरूपैः प्रसिद्धैश्चतुर्भिः सम्बन्धैः साध्यतावच्छेदकतावच्छेदकताविशिष्टा या अवच्छेदकता, तदन्यावच्छेदकतानिरूपितत्व-साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वोभयाभाववत्त्वम्।

उक्तस्योक्तपरिष्काराकरणे प्रमेयवद्वान् वाच्यत्वादित्यादिसद्धेतौ साध्यतावच्छेदकतावच्छेदकप्रमेयेतराप्रसिद्ध्याऽव्याप्तिः स्यात्, तस्योक्तपरिष्कृतार्थकत्वे तु प्रमेयसाध्यतावच्छेदकतावच्छेदकस्थले साध्यतावच्छेदकतावच्छेदकप्रमेयेतराप्रसिद्धावपि प्रमेयनिष्ठा प्रमेयत्वावच्छिन्ना या साध्यतावच्छेदकतावच्छेदकताविशिष्टा अवच्छेदकता, तदन्यावच्छेदकताया घटत्वादिनिष्ठायाः प्रसिद्ध्याऽव्याप्त्यसम्भवात्।

तत्त्वालोककृताऽत्रायं विशेष उच्यते यदत्र विशिष्टसाध्यतावच्छेदकस्थलेऽवच्छेदकतायां साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नत्वं सम्पातायातम्, अर्थाद् वह्निमान् धूमादित्यादौ महानसीयवह्न्यभावादि(क)मादाय प्रसक्ताव्याप्तिवारणाय लक्षणघटकप्रतियोगितायां साध्यतावच्छेदक-तदितरोभयानवच्छिन्नत्वनिवेशोक्तिप्रसङ्गादेव आयातम्, न तु आवश्यकतावशादपि, आवश्यकतायाः पूर्तिस्त्वत्र साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वमात्रस्य साध्यतावच्छेदकतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वात्मकस्य विवक्षैव केवलम्, तस्मादत्र प्रयोजनसम्पत्त्या लाघवाच्च साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वमात्रमुक्तदिशा परिष्कृतस्वरूपकं विवक्षितम्, न तु साध्यतावच्छेदकतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वघटितोक्तोभयाभावो विवक्षितः।

उक्तविशेषकथने प्रमाणतया प्रासङ्गिकमुत्तरजागदीशीग्रन्थमपि प्रस्तौति तत्त्वालोककृत्। जगदीशेन हि दण्डिमान् दण्डिसंयोगादित्यत्र साध्यतावच्छेदके दण्डे तद्दण्डी नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वसत्त्वेऽपि साध्यतावच्छेदकदण्डत्व-तदितर-तत्तोभयानवच्छिन्नावच्छे[illegible]वेशेन अव्याप्तिविरहं 'यदि च

(दण्डिमति) तत्ताविनिर्मुक्तशुद्धदण्डव्यक्तेरवच्छेदकत्वावगाहिप्रत्ययान्तरासत्त्वात् तद्दण्डी नास्तीति प्रतीत्या तत्ताविशिष्टदण्डव्यक्तेरेवावच्छेदकत्वं युक्तमि'त्यादिना[१] उपपाद्य रूपत्वन्यूनवृत्तिजातिमद्वान् रूपादित्यत्राव्याप्तिः 'दण्डयादौ साध्ये परम्परा-सम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमि'ति दीधितौ 'आदि' पदद्वयोपादान-मुक्ताशयेनैवेत्यपि अभिहितम्।

तत्, विशिष्टसाध्यतावच्छेदकस्थले साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नत्वस्य अवच्छेदकतायां विवक्षितत्वे, सङ्गतं न स्यात्, तद्दण्डी नास्तीति प्रतीतिसिद्धाभावमादाय उक्तदिशा अव्याप्तिवारणेऽपि तद्व्यक्तिमान् नास्तीति प्रतीतिसिद्धं तद्व्यक्तिमदभावं तत्ताविशिष्टदण्डत्वविशिष्टवान् नास्तीति प्रतीतिसिद्धं तत्ताविशिष्टदण्डत्वविशिष्टवदभावञ्चादाय दण्डिमान् दण्डिसंयोगादित्यत्रापि अव्याप्ते-र्भावात्, तद्व्यक्तिमदभावप्रतियोगितावच्छेदकताया साध्यतावच्छेदकीभूतदण्डविशेष-निष्ठाया तद्व्यक्तित्वमात्रावच्छिन्नतया दण्डत्वानवच्छिन्नत्वेन साध्यतावच्छेदकता-वच्छेदकदण्डत्व-तदितरोभयानवच्छिन्नत्वात्, एवं तत्ताविशिष्टदण्डत्वविशिष्टवदभाव-प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकदण्डनिष्ठायाः साध्यतावच्छेदकतावच्छेद-कदण्डत्वमात्रावच्छिन्नतया तदितरावच्छिन्नत्वविरहेणोक्तोभयानवच्छिन्नत्वस्य तत्र सत्त्वात्। साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वमात्रस्य तत्र विवक्षितत्वे तु नोक्ताभावद्वयमादाय दण्डिमान् दण्डिसंयोगादित्यत्र अव्याप्तिः सम्भवति, साध्यता-वच्छेदकतावच्छेदकताविशिष्टान्यावच्छेदकतया प्रथमाभावस्थले तद्व्यक्तित्वनिष्ठया द्वितीयाभावस्थले तत्ताविशिष्टदण्डत्वनिष्ठया निरूपितत्वस्यैव तत्र सत्त्वेन विवक्षित-तदनिरूपितत्वविरहात्।

अत्र यस्य कस्यापीदं वक्तव्यमस्ति यद् विषयितासम्बन्धेन वह्नित्वविशिष्ट-साध्यकतज्ज्ञानत्वस्वरूपे सद्धेतौ वह्न्यभावमादाय प्रसक्ताव्याप्तिवारणाय लक्षण-घटकाभावीयप्रतियोगितावच्छेदकतायां सावच्छिन्नसाध्यतावच्छेदकस्थले साध्यता-वच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नत्वस्यैव निवेश आवश्यकः, अन्यथा उक्ते सद्धेतौ वह्न्यभावमादायाव्याप्तिः स्याद्, वह्न्यभावप्रतियोगितावच्छेदकतायां वह्नित्व-निष्ठायां निरवच्छिन्नायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वस्य सत्त्वात्। तत्र पक्षे तत्र प्रतियोगितावच्छेदकत्वे सावच्छिन्नत्वं निवेश्याव्याप्तिवारणन्तु नैव कर्तुं शक्यम्, तत्पक्षे तत्र सावच्छिन्नत्वनिवेशे वह्नित्वाश्रयवान् धूमादित्यत्र लक्षणघटका-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

भावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नायाः सावच्छिन्नायाः प्रसिद्धेरभावेनाव्याप्तिः स्यात्, सर्वासामेव लक्षणघटकघटपटाद्यभावीय-प्रतियोगितावच्छेदकतानां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नानां निरवच्छिन्न-त्वस्यैव सत्त्वेन तत्र सावच्छिन्नत्वासम्भवात्, घटत्वपटत्वादिमदभावीयप्रतियोगिता-वच्छेदकतायाः सावच्छिन्नत्वेऽपि साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वस्य तत्राभावात्, तत्र साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नत्वनिवेशपक्षे तु विषयितया वह्नित्वविशिष्टसाध्यकतज्ज्ञानत्वे उक्तसद्धेतौ वह्न्यभावमादाय प्रसक्ता-व्याप्तेः तत्र पक्षे लक्षणघटकाभावीयप्रतियोगितावच्छेदकतायां सावच्छिन्नत्वनिवेशेन शक्यवारणत्वात् तत्र पक्षे तत्र सावच्छिन्नत्वनिवेशे वह्नित्वाश्रयवान् धूमादित्यत्र लक्षणघटकघटत्वपटत्वादिमदभावीयप्रतियोगितावच्छेदकतासु घटत्वत्वपटत्वत्वादि-मात्रावच्छिन्नत्वेन साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नासु सावच्छिन्न-त्वप्रसिद्ध्या तदप्रसिद्धिनिबन्धनाव्याप्तेः सम्भवाभावादिति।

तत्तुच्छमेव। साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नत्वनिवेशे दर्शितोत्तरग्रन्थासङ्गतिदोषसत्त्वाद् गौरवाच्च, लाघवाद् ग्रन्थासङ्गत्यभावाच्च, तत्रो-भयानवच्छिन्नत्वमनिवेश्य साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशस्यैव युक्तत्वादिति भावः।[१२५]

तत्त्वालोकः – **साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वीय-स्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वाभावे विवक्षणीये सम्बन्धघटकावच्छेदक-तायां सावच्छिन्नत्वस्य विशेषणीयतया वह्न्यभावमादायाव्याप्तिवारण-सम्भवात्। एवञ्च रूपत्वन्यूनवृत्तिजातिपदेन नीलत्वत्वपीतत्वत्वाद्यन्यतम-विशिष्टजातिर्ग्राह्या नीलाद्यभावादेर्नीलत्वादिमदभावे तात्पर्य्यन्नातस्तदा दण्ड-व्यादावित्यादिपदेनेत्यादिग्रन्थविरोधः। प्रतियोगितावच्छेदकतायां साध्यता-वच्छेदकताघटकसम्बन्धावच्छिन्नत्वकल्पे साध्यतानिरूपितावच्छेदकताविशि-ष्टान्यसंसर्गतानिरूपितत्वसाध्यतावच्छेदकताव्यापकत्वोभयाभावरूपमुक्ता-वच्छिन्नत्वं वाच्यम्, तथा च वह्न्यभाववारणसम्भवो ग्रन्थासङ्गत्यभावश्चेति परमार्थः, वैशिष्ट्यञ्च स्वनिरूपितसंसर्गतानिरूपितावच्छेदकतावद्धर्मावच्छिन्न-त्वस्वसमानाधिकरणसावच्छिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन।**[१२६]

*प्रकाशः* – सावच्छिन्नसाध्यतावच्छेदकस्थले लक्षणघटकावच्छेदकत्वे उक्तो-भयानवच्छिन्नत्वमनिवेश्य साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशस्य युक्तत्वं दर्शयितुं 'साध्यतावच्छेदकताघटके'त्यादेरुपर्युक्ततत्त्वालोकस्योपक्रमः।

इदमत्रोच्यते यद् यद्यपि साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेश-पक्षे यत्तूपपादितदिशा वह्नित्वविशिष्टस्य विषयितया साध्यत्वे तज्ज्ञानत्वे सद्धेतौ वह्न्यभावमादायाव्याप्तिः प्रसज्यति, साध्यतावच्छेदकतावच्छेदक-तदितरोभया-नवच्छिन्नत्वनिवेशे उक्तदिशा 'दण्ड्यादौ साध्ये दण्डत्वादिकमेव परम्परया साध्यता-वच्छेदकमि'[१]त्युत्तरग्रन्थासङ्गतिरापतति। तथापि साध्यतावच्छेदकतावच्छेदकेतरा-नवच्छिन्नत्वनिवेश एवोचितः, यतो हि रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादाय प्रसक्ताव्याप्तिवारणाय साध्यतावच्छेदके साध्यतावच्छेदक-ताघटकसम्बन्धावच्छिन्ना या लक्षणघटकाभावीयप्रतियोगितावच्छेदकता, तादृशा-वच्छेदकताप्रतियोगिको यः स्वरूपसम्बन्धस्तत्सम्बन्धावच्छिन्नप्रतियोगिताको-ऽवच्छेदकत्वाभावो विवक्षणीयस्तथा सति रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावप्रतियोगितावच्छेदकत्वस्य सामान्येन स्वरूपसम्बन्धेन साध्यता-वच्छेदके रूपत्वे सत्त्वेऽपि साध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नावच्छेद-कताप्रतियोगिकत्वविशेषितेन स्वरूपसम्बन्धविशेषेण सत्त्वविरहादव्याप्तिर्न स्यात्। तदर्थमेवं विवक्षणे एवं निवेशे सम्बन्धघटकावच्छेदकता सावच्छिन्नत्वेन विवक्षणीया, अर्थात् साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना सावच्छिन्ना च या अवच्छेदकता, तादृशावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक एव लक्षणघटका-वच्छेदकत्वाभावः साध्यतावच्छेदके विवक्षणीयः।

सत्येवं रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावप्रतियोगिता-वच्छेदकत्वस्य साध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नसावच्छिन्नावच्छेद-कताप्रतियोगिकस्वरूपसम्बन्धेन साध्यतावच्छेदके रूपत्वे विरहान्नाव्याप्तिः, वह्नित्व-विशिष्टस्य विषयितया साध्यत्वे तज्ज्ञानत्वे सद्धेतावपि वह्न्यभावप्रतियोगितावच्छेद-कत्वस्य सावच्छिन्नत्वविशेषितसाध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्ना-वच्छेदकताप्रतियोगिकस्वरूपसम्बन्धेन सत्त्वविरहान्नाव्याप्तिसम्भवः। उत्तरग्रन्थासङ्गति-रपि न, यतो हि उत्तरग्रन्थस्थ-'आदि'पदद्वयेन रूपत्वन्यूनवृत्तिजातिमन्नैव विवक्षितम्, किन्तु नीलत्वत्व-पीतत्वत्वाद्यन्यतमविशिष्टजातिमदेव विवक्षितम्, तथा तद्ग्रन्थ-घटकनीलाद्यभावादिपदमपि नीलत्वादिमदभावपरकमेव। एवंसति रूपत्वन्यूनवृत्ति-जात्यात्मके साध्यतावच्छेदके नीलो नास्ति, पीतो नास्तीत्यादिप्रतीतिसिद्धाभाव-प्रतियोगितावच्छेदकसावच्छिन्नत्वविशेषितसाध्यतावच्छेदकताघटकसमवायसम्बन्धा-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ३

वच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धेन सत्त्वविरहेऽपि नीलत्वत्ववद्वान् नास्ति, पीतत्वत्ववद्वान् नास्तीत्यादिप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वस्य सावच्छिन्नत्वविशेषितसाध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नावच्छेदकता-प्रतियोगिकस्वरूपसम्बन्धेन विद्यमानत्वादव्याप्तिप्रसक्त्या तद्ग्रन्थासङ्गतेरभावात्।

यदा रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादाय प्रसक्ता-व्याप्तिवारणाय उक्तरीत्या निवेशमविधाय लक्षणघटकप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशो विधीयते, तदा साध्यतानिरूपि-तावच्छेदकतया स्वनिरूपितसंसर्गतानिरूपितावच्छेदकतावद्धर्मावच्छिन्नत्व, - स्व-समानाधिकरणसावच्छिन्नावच्छेदकतानिरूपितत्व, – एतदुभयसम्बन्धेन विशिष्टा या संसर्गता, तादृशसंसर्गतातो भिन्ना या संसर्गता, तादृशसंसर्गतानिरूपितत्व-साध्यतावच्छेदकता-व्यापकत्वोभयाभावरूपमेव साध्यतावच्छेदकताघटकसम्बन्धा-वच्छिन्नत्वं प्रतियोगितावच्छेदकतायां विवक्षितम्।

एवंसति उक्तसाध्यहेतुकस्थले वह्न्यभावमादाय नाव्याप्तिसम्भवः, वह्नित्व-निष्ठायां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायां सावच्छिन्नत्वविरहेण संसर्गतायां साध्यतानिरूपितावच्छेदकतावैशिष्ट्यनियामकोभयसम्बन्धान्तर्गतस्व-समानाधिकरणसावच्छिन्नावच्छेदकतानिरूपितत्वविरहेण साध्यतावच्छेदकता-विशिष्टान्यसमवायनिष्ठसंसर्गतानिरूपितत्वस्य साध्यतावच्छेदकताव्यापकत्वस्य च सत्त्वेन अपेक्षितस्य तदुभयाभावस्य विरहेण विवक्षितस्वरूपकस्य साध्यतावच्छेदक-ताघटकसम्बन्धावच्छिन्नत्वस्य विरहात्, उत्तरग्रन्थासङ्गतिरपि न, नीलत्वपीतत्वादि-मदभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकनिष्ठायां सावच्छिन्नायामुक्तोभया-भावात्मकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य सत्त्वात्।

तत्रोक्तोभयाभावात्मकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वञ्च स्व-निरूपकसमवायनिष्ठसंसर्गतायां निर्दिष्टसम्बन्धद्वयेन साध्यतानिरूपितावच्छेदकता-विशिष्टत्वस्यैव सत्त्वेन साध्यतावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्वस्य साध्यतावच्छेदकताव्यापकत्वस्य च विरहात्।

रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावप्रतियोगितावच्छेद-कतामादाय नाव्याप्तिसम्भवः, तत्र साध्यतानिरूपितावच्छेदकताविशिष्टान्यविषयित्व-निष्ठसंसर्गतानिरूपितत्वस्य साध्यतावच्छेदकताव्यापकत्वस्य च सत्त्वेन तदुभया-भावात्मकविवक्षितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य विरहात्।

वह्निमान् धूमादित्यत्र सुप्रसिद्धस्थले लक्षणघटकघटाद्यभावप्रतियोगितावच्छेदकतायां घटत्वादिनिष्ठायां साध्यतावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्वस्य साध्यतावच्छेदकताव्यापकत्वस्य च विरहेणोक्तोभयाभावात्मकसाध्यतावच्छेदकघटकसम्बन्धावच्छिन्नत्वस्य समन्वितत्वादतोऽव्याप्तेर्वारणसम्भवो ग्रन्थासङ्गत्यभावश्चेति परमार्थप्रदर्शने उक्ततत्त्वालोकस्य तात्पर्य्यम्।[१२६]

तत्त्वालोकः – **ये तु वह्न्यभावमादायाव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यमेव साध्यतावच्छेदकावच्छिन्नाधिकरणत्वप्रतियोगिताश्रयाधिकरणत्वोभयाभावरूपं वाच्यमिति वदन्ति, तेऽपि प्रतियोगिताश्रयनिष्ठनिरूपकताकाधिकरणत्वप्रवेशे प्रमेयावच्छिन्ननिरूपकतामादाय घटाभावस्यापि प्रतियोगिवैयधिकरण्यासम्भवः प्रतियोगित्वावच्छिन्नाधिकरणत्वप्रवेशे वह्निविषयकज्ञाने तद्विरहेण वह्न्यभावस्यापि प्रतियोगिवैयधिकरण्यसम्भवः प्रमेयत्वावच्छिन्नावच्छेदकताकनिरूपकतामादाय घटाभावस्यापि प्रतियोगिवैयधिकरण्यानुपपत्त्या प्रतियोगितावच्छेदकनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वनिवेशोऽपि हेय इति (ते) हेयाः।**

**केचित्तु साध्यतावच्छेदकतावच्छेदकातिरिक्तानवच्छिन्नावच्छेदकतायां निरवच्छिन्नत्वसाध्यतावच्छेदकताव्यापकत्वोभयाभावरूपसावच्छिन्नत्वनिवेशान्न वह्न्यभावमादायाव्याप्तिसम्भवो न वा वह्नित्वाश्रयवान्धूमादित्यत्राव्याप्तिप्रसङ्ग इति प्राहुः।[१२७]**

*प्रकाशः* –ये तु प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकातिरिक्तानवच्छिन्नत्वनिवेशपक्षे 'यत्तु' इत्युपक्रम्य विषयितया वह्नित्वाश्रयसाध्यकतज्ज्ञानत्वसद्धेतुकस्थले वह्न्यभावमादाय पूर्वोपपादिताव्याप्तिपरिहाराय लक्षणघटकप्रतियोगिवैयधिकरण्यं पारिभाषिकमित्थं वर्णयन्ति, येनोक्तस्थलविशेषेऽव्याप्त्यापादको वह्न्यभावः प्रतियोगिव्यधिकरणो न भवति, तच्च प्रतियोगिवैयधिकरण्यं हेत्वधिगतं साध्यतावच्छेदकावच्छिन्नाधिकरणत्वप्रतियोगित्वाश्रयाधिकरणत्वोभयाभावरूपम्। एवंसति उक्तस्थले वह्न्यभावः प्रतियोगिव्यधिकरणो न भवति, तत्र हेत्वधिकरणे तज्ज्ञाने साध्यतावच्छेदकावच्छिन्नाधिकरणत्वप्रतियोगित्वाश्रया(वह्न्यभावप्रतियोगित्वाश्रया)धिकरणत्वयोरुभयोः सत्त्वेन विवक्षितस्य तदुभयाभावस्य विरहादिति।

किन्त्वेवंवादिनो हेया एव, यतो हि विवक्षितोभयाभावप्रतियोगितयोक्तं प्रतियोगित्वाश्रयाधिकरणत्वं प्रतियोगित्वाश्रयनिष्ठनिरूपकताकाधिकरणत्वरूपं यद्यभिप्रेतम्, तदा प्रसिद्धस्थले घटाभावादिर्लक्षणघटकाभावतया प्रसिद्धो न स्यात्, तस्य

विवक्षितोभयाभाववद्धेत्वधिकरणवृत्तित्वविरहेण प्रतियोगिव्यधिकरणत्वासम्भवात्। प्रमेयवद्वान् पर्वतादिरित्याकारकप्रतीतिविषयाया अधिकरणतानिरूपकताया घटाद्यभावप्रतियोगित्वाश्रयेऽपि सत्त्वेन प्रमेयावच्छिन्ननिरूपकतामादाय घटाद्यभावप्रतियोगित्वाश्रयनिरूपकताकाधिकरणत्वस्य साध्यतावच्छेदकावच्छिन्नाधिकरणत्वस्य च हेत्वधिकरणे पर्वतादौ सत्त्वेन तदुभयाभावस्य तत्र विरहात्।

प्रतियोगित्वाश्रयाधिकरणत्वपदेन प्रतियोगित्वाश्रयनिष्ठनिरूपकताकाधिकरणत्वं नाभिप्रेतम्, किन्तु प्रतियोगित्वावच्छिन्ननिरूपकताकाधिकरणत्वमेवाभिप्रेतम्, तदा विषयितया वह्नित्वाश्रयसाध्यकतज्ज्ञानत्वहेतुकस्थलेऽव्याप्त्यापादको वह्न्यभावः प्रतियोगिव्यधिकरणः स्यादेव, वह्निविषयकज्ञाने तज्ज्ञानत्वहेत्वधिकरणे वह्न्यभावप्रतियोगित्वावच्छिन्ननिरूपकताकाधिकरणत्वविरहात्, वह्न्यभावप्रतियोगित्वेन रूपेण वह्नेस्तत्र ज्ञाने सत्त्वाभावादिति यावत्, यदि पुनः प्रतियोगित्वाश्रयाधिकरणत्वपदेन अनुपदमुक्तं द्वितीयमपि नाभिप्रेतम्, किन्तु प्रतियोगितावच्छेदकावच्छेदकनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वमेवाभिप्रेतम्, तदा प्रथमपक्ष इवैव प्रसिद्धस्थले घटाभावादिः प्रतियोगिव्यधिकरणः प्रसिद्धो न स्यात्, प्रमेयनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्य प्रमेयवद्वान् पर्वतादिरित्यादिप्रतीतिविषयस्य प्रमेयात्मघटत्वादिनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्य हेत्वधिकरणे पर्वतादौ सत्त्वात्।

केचित् प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशपक्षे तद्घटकसाध्यतावच्छेदकतावच्छेदकेतरावच्छेदकतायां पारिभाषिकं = निरवच्छिन्नत्वसाध्यतावच्छेदकताव्यापकत्वोभयाभावरूपमेव सावच्छिन्नत्वं निवेशयन्ति। तेन वह्नित्वाश्रयस्य विषयितया साध्यतायां तज्ज्ञानत्वस्य हेतुतायां वह्न्यभावमादायाव्याप्तिर्न स्यात्, तदीयप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वसाध्यतावच्छेदकताव्यापकत्वयोरुभयोः सत्त्वेन तदुभयाभावरूपविवक्षितपारिभाषिकसावच्छिन्नत्वविरहात्। तथा वह्नित्वाश्रयवान् धूमादित्यत्र लक्षणघटकाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नायां घटत्वादिनिष्ठायां सावच्छिन्नत्वाप्रसिद्ध्याऽव्याप्तिरपि न स्यात्, तत्र निरवच्छिन्नत्वस्य सत्त्वेऽपि साध्यतावच्छेदकताव्यापकत्वस्य विरहेण तदुभयाभावरूपविवक्षितसावच्छिन्नत्वस्य सत्त्वादिति भावः।[१२७]

**तत्त्वालोकः**— **अथात्र विशिष्टसाध्यतावच्छेदकस्थले शुद्धसाध्यतावच्छेदकस्थले च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितत्वमेव वाच्यम्, तावतैव**

महानसीयवृत्तिजातिमदभावस्य पटसमवेतत्वविशिष्टजातिमदभावस्य च वारणसम्भवात्।

न चैवमपि तत्ताविशिष्टदण्डत्वविशिष्टवदभावस्य न वारणमिति वाच्यम्, स्वानवच्छेदकानवच्छिन्नत्वस्य स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपस्य वाच्यत्वात्। एवञ्च निरवच्छिन्नसाध्यतावच्छेदकतायास्स्वावच्छेदकाप्रसिद्धावपि न क्षतिः। वैशिष्ट्यञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन।[१२८]

*प्रकाशः –* विशेषिताविशेषितसाध्यतावच्छेदकस्थलयोरुभयत्र एकविधनिवेशेनैवापत्त्यनुपपत्त्यभावं शङ्कितुमुपक्रमते 'अथे'त्यादिना तत्त्वालोककृत्। अत्रेदं शङ्कते यद् वह्निमान् धूमादित्यादौ शुद्धसाध्यतावच्छेदकस्थले महानसीयवृत्तिजातिमदभावमादाय प्राप्ताव्याप्तिवारणाय लक्षणघटकावच्छेदकतायां निरवच्छिन्नत्वनिवेशं तथा सावच्छिन्नसाध्यतावच्छेदकस्थले जातिमद्वान् घटत्वादित्यादौ पटसमवेतत्वविशिष्टजातिमदभावमादाय प्रसक्ताव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनिवेशञ्च विहाय उक्तोभयप्रकारकस्थलसाधारणं लक्षणघटकावच्छेदकतानिरूपकप्रतियोगितायां स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन साध्यतावच्छेदकताविशिष्टतो भिन्नां या साध्यतावच्छेदकनिष्ठा अवच्छेदकता, तदनिरूपितत्वमेव निवेश्यम्। तथासति वह्निमान् धूमादित्यत्र महानसीयवृत्तिजातिमदभावीयप्रतियोगितायाः साध्यतावच्छेदकतया स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन विशिष्टतो भिन्ना या महानसीयवृत्तित्वविशेषितजातिस्वरूपस्वावच्छेदकात्मकसाध्यतावच्छेदकनिष्ठावच्छेदकता, तन्निरूपितत्वस्यैव सत्त्वेन तदनिरूपितत्वविरहान्न तदवच्छेदकत्वमादायाव्याप्तिसम्भवः। स्वावच्छेदकीभूतमहानसीयवृत्तित्वविशेषितजातिनिष्ठावच्छेदकतायाः साध्यतावच्छेदकताविशिष्टभिन्नता च स्वानवच्छेदकमहानसीयवृत्तित्वेनावच्छिन्नतया स्वानवच्छेदकानवच्छिन्नत्वविरहात्।

एवं विशिष्टसाध्यतावच्छेदकस्थले जातिमद्वान् घटत्वादित्यत्रापि पटसमवेतत्वविशिष्टजातिमदभावमादाय नाव्याप्तिसम्भवः, तदीयप्रतियोगितावच्छेदकतायां जातिनिष्ठायां पटसमवेतत्ववैशिष्ट्यावच्छिन्नायां साध्यतावच्छेदकतायाः स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धविरहेण साध्यतावच्छेदकताविशिष्टत्वविरहात्। साध्यतावच्छेदकताविशिष्टभिन्नेन जातिनिष्ठेन तादृशावच्छेदकत्वेन निरूपितत्वस्यैवोक्ताभावप्रतियोगितायां सत्त्वेन तदनिरूपितत्वस्यापेक्षितस्य तत्र विरहात्।

एवमपि यद्यपि दण्डिमान् दण्डिसंयोगादित्यत्र तत्ताविशिष्टदण्डत्वविशिष्टवद-भावमादायाव्याप्तिस्स्यादेव, तदीयप्रतियोगितावच्छेदकतायां दण्डत्ववद्दण्डनिष्ठायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नायां साध्यतावच्छेदकतावैशिष्ट्यनियामक-स्वानवच्छेदकावच्छिन्नत्वसम्बन्धस्य सत्त्वात्। साध्यतावच्छेदकताविशिष्टान्यत्व-विरहात् साध्यतावच्छेदकताविशिष्टभिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपित-त्वस्य उक्ताभावप्रतियोगितायां सत्त्वेन तादृशावच्छेदकत्वस्यैव साध्यतावच्छेदके दण्डे स्थित्या तदनवच्छेदकत्वस्य तत्र विरहात्।

किन्तु साध्यतावच्छेदकतावैशिष्ट्यनियामकतयोक्तस्वानवच्छेदकानवच्छिन्न-त्वस्य स्व(साध्यतावच्छेदकता)निरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपित-त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाव(साध्यतावच्छेदकत्वाभाव)वत्त्वरूपस्य पारिभाषिकस्य विवक्षणेनोक्तस्थलाव्याप्तेरपि वारणाद् निर्दिष्टपारिभाषिकस्वाभाववत्त्व-रूपस्वानवच्छेदकानवच्छिन्नत्वघटकस्वनिरूपितावच्छेदकतावैशिष्ट्यं स्वानवच्छेदका-नवच्छिन्नत्वसम्बन्धेन विवक्षितमस्ति। स्वाभाववत्त्वरूपस्य तस्य सत्त्वे तत्ताविशिष्ट-दण्डत्वविशिष्टवदभावप्रतियोगितावच्छेदकतायां तत्ताविशिष्टदण्डत्वविशिष्टनिष्ठायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वसत्त्वेऽपि साध्यतावच्छेदकानिरूपिता-वच्छेदकताविशिष्टान्यावच्छेदकता(तत्तानिष्ठावच्छेदकता)निरूपितत्वसम्बन्धेन स्वस्यैव(साध्यतावच्छेदकतावत्त्वस्यैव) सत्त्वेन निरूपितत्वान्त-तादृशसम्बन्धा-वच्छिन्नप्रतियोगिताकस्वाभाववत्त्वरूपस्वानवच्छेदकानवच्छिन्नत्वविरहेण साध्यता-वच्छेदकताविशिष्टान्यसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वस्यैव सद्भावात्तद-निरूपितत्वविरहान्नाव्याप्तिः। एवञ्च निर्दिष्टस्वाभाववत्त्वरूपस्यैव स्वानवच्छेदकान-वच्छिन्नत्वस्योपादाने सति वह्निमान् धूमादित्यादौ निरवच्छिन्नसाध्यतावच्छेदकता-यास्स्वावच्छेदकाप्रसिद्धावपि न क्षतिः। स्वावच्छेदकभिन्नावच्छिन्नत्वाभावरूपस्य तस्य सत्त्वे उक्तस्थले स्वावच्छेदकाप्रसिद्ध्या दोषः स्यादिति भावः।[१२८]

तत्त्वालोकः— **अथ निरवच्छिन्नसाध्यतावच्छेदकतास्थले स्वनिरूपिता-वच्छेदकत्वाप्रसिद्ध्या निरवच्छिन्नसाध्यतावच्छेदकतावच्छेदकतास्थले स्व-निरूपितावच्छेदकतायास्स्वावच्छेदकाप्रसिद्ध्या चोक्तसम्बन्धस्य साध्यता-वच्छेदकताव्यधिकरणत्वेन तत्सम्बन्धावच्छिन्नस्वाभाववत्त्वेन सर्वस्य साध्य-तावच्छेदकताविशिष्टत्वादव्याप्तिः।**

**प्रमेयस्य साध्यतावच्छेदकतावच्छेदकतायामवच्छेदकत्वे प्रमेया-वच्छिन्नावच्छेदकतायास्स्वानवच्छेदकाप्रसिद्ध्या तत्सम्बन्धावच्छिन्नस्वा-भावस्य केवलान्वयित्वात्साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वाप्रसिद्धिः।**

निरवच्छिन्नसाध्यतावच्छेदकतावच्छेदकतास्थले प्रमेयावच्छिन्नसाध्यतावच्छेदकतावच्छेदकतास्थले च तद्दोषवारणाय स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वनिरूपितत्वसम्बन्धावच्छिन्नस्वाभाववत्त्वोपादानेऽनवस्थापीति चेदत्र स्ववृत्तित्वस्य स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धावच्छिन्नस्वाभाववत्त्वसम्बन्धावच्छिन्नस्य स्वानवच्छेदकानवच्छिन्नत्वपदेन वाच्यत्वाददोष इति वयं ब्रूमः। अवृत्तित्वघटकवृत्तित्वञ्च स्वनिरूपितावच्छेदकतासामानाधिकरण्येन वाच्यम्, निरूपितत्वञ्च साक्षात्परम्परासाधारणं ग्राह्यम्। वह्नित्वाश्रयवान् तज्ज्ञानत्वादित्यत्र वह्न्यभावमादायाव्याप्तेर्व्वारणाय स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धावच्छिन्नस्वाभाववत्त्वमपि वैशिष्ट्यनियामकतयोपादेयम्, स्ववृत्तित्वस्वानवच्छेदकानवच्छिन्नत्वयोस्सर्वत्रैवायमेव निष्कर्षो बोध्यः।[१२९]

*प्रकाशः* – विशेषिताविशेषितसाध्यतावच्छेदकस्थलद्वयसाधारण्येन निर्दिष्टसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वरूपपारिभाषिकस्वानवच्छेदकानवच्छिन्नत्वघटितोक्तनिवेशप्रकारे दोषं तद्वारणप्रकारञ्च दर्शयितुम् 'अथे'त्यादितत्त्वालोकोपक्रमः। अत्रेदं शङ्क्यते यद्दर्शितस्य स्वाभाववत्त्वरूपस्य पारिभाषिकस्वानवच्छेदकानवच्छिन्नत्वस्य विवक्षणेऽपि न दोषतो मुक्तिः, वह्निमान् धूमादित्यादिनिरवच्छिन्नसाध्यतावच्छेदकतास्थले स्वाभाववत्त्वप्रतियोगितावच्छेदकसम्बन्धघटकस्व(साध्यतावच्छेदकता)निरूपितावच्छेदकत्वस्य प्रसिद्धिविरहेण तथा वह्नित्वाश्रयवान् धूमादित्यादिनिरवच्छिन्नसाध्यतावच्छेदकतावच्छेदकतास्थले स्व(साध्यतावच्छेदकता)निरूपितावच्छेदकतावैशिष्ट्यनियामकसम्बन्धतयोक्तस्वानवच्छेदकानवच्छिन्नत्व [स्वा (साध्यतावच्छेदकतानिरूपितावच्छेदकताऽ)वच्छेदकातिरिक्तावच्छेद्यत्वाभावरूप]घटकस्वावच्छेदकाप्रसिद्ध्या च विवक्षितप्रतियोगितावच्छेदकसम्बन्धस्य साध्यतावच्छेदकतारूपस्य अभावप्रतियोगिनः स्वस्य व्यधिकरणसम्बन्धत्वेन व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य सर्वत्रैव सत्त्वेन सर्वस्यैव स्वाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकताविशिष्टत्वात् साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकतानिष्ठावच्छेदकत्वाप्रसिद्ध्या अव्याप्तिः स्यात्।

तथा यत्र सद्धेतुविशेषस्थले साध्यतावच्छेदकतावच्छेदकताया अवच्छेदकं प्रमेयमर्थात् साध्यतायास्तृतीयावच्छेदकं प्रमेयन्तत्राप्यव्याप्तिः स्याद्, यतो हि तत्र साध्यतावच्छेदकतानिरूपितावच्छेदकतायाः सर्वं प्रमेयमवच्छेदकमेव, स्वानवच्छेदकं न किञ्चिदपि, अतः स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन स्व(साध्यतावच्छेदकता) निरूपितावच्छेदकताविशिष्टघटितस्य तादृशावच्छेदकताविशिष्टान्यावच्छेदकता-

निरूपितत्वरूपस्वाभावप्रतियोगितावच्छेदकसम्बन्धस्य साध्यतावच्छेदकतात्मकं यत् स्वम्, तत्प्रतियोगिकस्य कुत्राप्यभावात्। तत्र तादृशप्रतियोगितावच्छेदकसम्बन्धा-वच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य केवलान्वयित्वात्, सर्वत्रैव सत्त्वात्, स्वाभाव-वत्त्वरूपस्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन सर्वस्यैव साध्यतावच्छेदकताविशिष्ट-त्वात् साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वाप्रसिद्ध्या प्रसज्यत्येवाव्याप्तिः।

यदि तु वह्नित्वाश्रयवान् धूमादित्यादिनिरवच्छिन्नसाध्यतावच्छेदकतास्थले तथा साध्यतावच्छेदकतावच्छेदकताया अवच्छेदकं यत्र प्रमेयत्वेनाखिलं प्रमेयम्, तत्र च प्रसक्ताव्याप्तिवारणाय विवक्षितस्वाभाववत्त्वरूपपारिभाषिकस्वानवच्छेदकानवच्छिन्न-त्वघटकस्वनिरूपितावच्छेदकतावैशिष्ट्यनियामकतयोक्तं स्वानवच्छेदकानवच्छिन्नत्व-मपि न स्वावच्छेदकातिरिक्तावच्छेद्यत्वाभावरूपं विवक्षितम्, किन्तु स्वनिरूपिता-वच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाव-वत्त्वरूपमेव विवक्षितमुच्येत, तदा यत्र साध्यतायास्तृतीयमवच्छेदकं निरवच्छिन्नं तादृशसद्धेतुस्थलाय तथा यत्र साध्यतायाश्चतुर्थावच्छेदकं प्रमेयत्वेनाखिलं प्रमेयं तादृशसद्धेतुस्थलाय द्वितीयकोटिकस्वाभाववत्त्वरूपपारिभाषिकस्वानवच्छेदका-नवच्छिन्नत्वस्य वाच्यतावदेव द्वितीयकोटिकस्वाभाववत्त्वघटकस्वानवच्छेदका-नवच्छिन्नत्वस्यापि स्वाभाववत्त्वरूपपारिभाषिकस्यैव विवक्षणीयत्वापत्तिः, तदग्रेऽपि तथैव वाच्यत्वापत्त्या अनवस्थापत्तिः स्यात्।

अत्र तत्त्वालोककृता स्वयं समाधीयते यत्साध्यतावच्छेदकताविशिष्टान्य-साध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितत्वघटकसाध्यतावच्छेदकतावैशिष्ट्य-नियामकस्वानवच्छेदकानवच्छिन्नत्वस्य स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदक-तानिरूपितसम्बन्धावच्छिन्नस्वाभाववत्त्वं पूर्वोक्तत्वेनैव विवक्षितम्, येन दर्शिता दोषा दर्शितस्थलाव्याप्त्यनवस्थाः स्युः, किन्तु स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्व-सम्बन्धावच्छिन्नस्वाभाववत्त्वसम्बन्धावच्छिन्नं स्व(साध्यतावच्छेदकता)वृत्तित्वरूपमेव स्वानवच्छेदकानवच्छिन्नत्वस्य पारिभाषिकं रूपं विवक्षितम्।

अस्यायमर्थो यल्लक्षणघटकाभावीयप्रतियोगितानिरूपितया अवच्छेदकतया निर्दिष्टस्वाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकतावर्तिन्या एव भाव्यम्। वह्निमान् धूमादित्यत्र महानसीयवृत्तिजातिमदभावीयप्रतियोगितानिरूपिताऽवच्छेदकता उक्तेन स्वाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकतावर्तिनी न भवति, यतो हि स्व (उक्ता-भावीयप्रतियोगितानिरूपितावच्छेदकता)निरूपितकिञ्चिदवच्छेदकत्वावृत्तित्व(उक्ता-भावीयप्रतियोगितानिरूपितवह्नित्वनिष्ठावच्छेदकतानिरूपितमहानसीयवृत्तित्वनिष्ठा-

वच्छेदकत्वावृत्तित्व)रूपप्रतियोगितावच्छेदकसम्बन्धेन उक्ताभावप्रतियोगितावच्छेदकतात्मकः स्व एव वह्नित्वनिष्ठायां साध्यतावच्छेदकतायां तिष्ठति, अतस्तादृशवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावस्तत्र न तिष्ठति। तस्माद् विवक्षितस्वाभाववत्त्वरूपस्व (साध्यतावच्छेदकता) वृत्तित्वरूपस्वानवच्छेदकानवच्छिन्नत्वस्य उक्ताभावप्रतियोगितावच्छेदकतायां विरहेण तस्याः साध्यतावच्छेदकताविशिष्टान्यत्वात् तन्निरूपितत्वस्यैवोक्ताभावप्रतियोगितायां सत्त्वेन तदादाय तत्राव्याप्तेः सम्भवाभावात्। तत्र साध्यतावच्छेदकतायाः स्वावच्छेदकाप्रसिद्ध्याऽपि तत्र नाव्याप्तिसम्भवः, स्ववृत्तित्वरूपस्वानवच्छेदकानवच्छेदकानवच्छिन्नत्वस्यैव विवक्षितत्वेन तत्र तत्प्रसिद्धेरपेक्षाविरहात्।

उक्तस्वाभाववत्त्वप्रतियोगितावच्छेदकसम्बन्धात्मकतादृशावृत्तित्वघटकं स्वनिरूपितयत्किञ्चिदवच्छेदकत्ववृत्तित्वं स्वनिरूपितावच्छेदकतासामानाधिकरण्येन विवक्षितम्, अर्थात् स्वनिरूपितावच्छेदकताया (लक्षणघटकाभावप्रतियोगितावच्छेदकताया) स्वनिरूपितावच्छेदकतासम्बन्धेन यदधिकरणं भवेत् तत्रैवाधिकरणे यदि साध्यतावच्छेदकता स्वनिरूपितावच्छेदकतासम्बन्धेन विद्यमाना स्यात्, तदा प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावृत्तित्वं संघटेत इति वृत्तित्वसम्बन्धतया निर्दिष्टस्वनिरूपितावच्छेदकतासामानाधिकरण्यघटकावच्छेदकता साक्षात्-परम्परा-साधारणैव विवक्षिता, न तु साक्षादेवेत्याग्रहः।

तथा यथा साध्यतावच्छेदकतावैशिष्ट्यानुयोगिनि साध्यतावच्छेदकतायाः स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धो निर्दिष्टं स्ववृत्तित्वरूपम्, अर्थात् स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपं स्ववृत्तित्वम्, (तथैव)स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धावच्छिन्नस्वाभाववत्त्वमपि साध्यतावच्छेदकतावैशिष्ट्यनियामकं द्वितीयम्, प्रथमसन्निवेशितदर्शितपारिभाषिकस्वरूपस्वानवच्छेदकानवच्छिन्नत्वातिरिक्तं देयम्। तेन विषयितया वह्नित्वाश्रयसाध्यकतज्ज्ञानत्वसद्धेतुस्थले वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकवह्न्यभावमादाय प्रसक्ताव्याप्तेर्वारणम्। अन्यथा तत्र लक्षणघटकवह्न्यभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतायां स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावच्छिन्नसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्तया तदात्मक-स्व(साध्यतावच्छेदकता)वृत्तित्वरूपपारिभाषिकस्वानवच्छेदकानवच्छिन्नत्वसत्त्वेन साध्यतावच्छेदकताविशिष्टत्वस्यैव सत्त्वेन तदन्यत्वविरहादव्याप्तिः स्यात्। तदुपादाने तु साध्यतावच्छेदकतायाः वह्न्यभावप्रतियोगितावच्छेदकतायां स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धेन

स्ववत्त्वस्यैव सत्त्वेन तादृशावृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वविरहान्न तदादाय तत्राव्याप्तिसम्भावना।

यत्र यत्र स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्व-स्वानवच्छेदकानवच्छिन्नत्वयोः वैशिष्ट्यनियामकतया सन्निवेश आवश्यकत्वेन दर्शितो दर्शयिष्यते वा, तत्र सर्वत्रैव दर्शितस्वरूपं स्वाभाववत्त्वमेव तस्य निष्कृष्टार्थतयावधातव्यमिति भावः।[१२९]

तत्त्वालोकः– **न चैवं प्रमेयवद्वान्वाच्यत्वादित्यत्र प्रमेयत्वावच्छिन्नावच्छेदकत्वान्यावच्छेदकत्वमात्रस्य विशिष्टान्यत्वादव्याप्तिरिति वाच्यम्, विशिष्टान्यावच्छेदकतायां स्वसजातीयावच्छेदकतावत्त्वसम्बन्धेन स्वरूपसम्बन्धेन वा साध्यतावच्छेदकताव्यापकत्वस्य वैशिष्ट्यस्य च स्वावच्छेदकसम्बन्धावच्छिन्नत्वगर्भस्योक्तौ दोषाभावात्। सावच्छिन्नघटत्वादिनिष्ठावच्छेदकत्वस्यैव विषयित्वाद्यवच्छिन्नप्रमेयत्वावच्छिन्नावच्छेदकत्वस्यैव वा तादृशविशिष्टान्यावच्छेदकतात्वात्।**

**एवञ्च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वन्न स्वातन्त्र्येणोपादेयमिति चेत्।[१३०]**

*प्रकाशः*– 'न चे'त्यादिनोक्तसन्दर्भांशेनेदमुच्यते यद्वह्नित्वाश्रयवान् तज्ज्ञानत्वादित्यत्र वह्न्यभावमादाय प्रसक्ताव्याप्तिवारणाय स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धावच्छिन्नस्वाभाववत्त्वस्यापि साध्यतावच्छेदकतावैशिष्ट्यनियामकतयोपादानेन वह्नित्वाश्रयवान् तज्ज्ञानत्वादित्यत्रोपपादितदिशा अव्याप्तिस्तु विनिवृत्ता, किन्तु तदर्थं तथोपादाने सति प्रमेयवद्वान् वाच्यत्वादित्यत्राव्याप्तिः प्रसज्यति। यतो हि तत्र प्रमेयमात्रस्य साध्यतावच्छेदकत्वाद् घटपटाद्यभावप्रतियोगितावच्छेदकता घटत्वपटत्वादिनिष्ठा सर्वा साध्यतावच्छेदकनिष्ठैव, साध्यतावच्छेदकताविशिष्टान्या च घटत्वपटत्वादिरूपसाध्यतावच्छेदकनिष्ठावच्छेदकतायां साध्यतावच्छेदकताविशिष्टान्यता च साध्यतावच्छेदकतात्मकस्य स्वस्य स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वरूपप्रतियोगितावच्छेदकसम्बन्धेन घटत्वादिनिष्ठावच्छेदकतायां सत्त्वेन तादृशावृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वविरहात्। साध्यतावच्छेदकतानिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वञ्च तस्या घटत्वादिनिष्ठाया अभावप्रतियोगिताया साध्यतावच्छेदकतानिरूपितायां प्रमेयत्वनिष्ठावच्छेदकतायां स्वनिरूपितावच्छेदकतासामानाधिकरण्यविरहात् अर्थात् साध्यतावच्छेदकतावच्छेदकस्य प्रमेयत्वस्य प्रतियोगितावच्छेदकतावच्छेदकत्वविरहात्।

उक्तस्थले प्रमेयवद्वान् वाच्यत्वादित्यत्र साध्यतावच्छेदकताविशिष्टावच्छेदकता केवलं प्रमेयत्वावच्छिन्ना प्रमेयनिष्ठैव अवच्छेदकता, तस्यां साध्यतावच्छेदकतायाः स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व-रूपवैशिष्ट्यसद्भावात्, साध्यतावच्छेदकतायां प्रमेयत्वावच्छिन्नावच्छेदकताया अपि तादृशस्वाभाववत्त्वात्मकस्ववृत्तित्वसत्त्वात्।

ततश्च साध्यतावच्छेदकताविशिष्टा या प्रमेयत्वावच्छिन्नावच्छेदकता, तदन्य-त्वस्य घटाद्यभावीयनिरवच्छिन्नावच्छेदकतायां घटत्वादिमदभावीयसावच्छिन्नायाञ्च सर्वस्यां सत्त्वेन तादृशावच्छेदकत्वानिरूपितहेतुसमानाधिकरणाभावप्रतियोगिताया अप्रसिद्ध्या प्रमेयवद्वान् वाच्यत्वादित्यत्राव्याप्तिः स्यादेव।

अत्रोक्तस्थलाव्याप्तिः साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतायां स्व-सजातीयावच्छेदकतावत्त्वसम्बन्धेन स्वरूपसम्बन्धेन वा साध्यतावच्छेदकताव्यापक-त्वस्य सन्निवेशेन तथा साध्यतावच्छेदकतावैशिष्ट्यस्य स्वावच्छेदकसम्बन्धावच्छिन्न-त्वगर्भस्य सन्निवेशेन परिह्रियते।

सावच्छिन्नायां घटत्वादिमदभावीयघटत्वादिनिष्ठायामवच्छेदकतायां स्व-सजातीयावच्छेदकतावत्त्वसम्बन्धेन साध्यतावच्छेदकताव्यापकत्वसत्त्वात् सा साध्य-तावच्छेदकताविशिष्टान्यावच्छेदकता, न तु निरवच्छिन्ना, घटाद्यभावीयप्रतियोगिता-निरूपितावच्छेदकता सावच्छिन्नसाध्यतावच्छेदकतासजातीयसावच्छिन्नावच्छेदकता-वत्त्वसम्बन्धेन साध्यतावच्छेदकताधिकरणे सावच्छिन्नघटत्वादौ घटाद्यभावीय-प्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकताया स्वसजातीयावच्छेदकतासम्बन्धेन सत्त्वविरहात्। ततश्च साध्यतावच्छेदकताविशिष्टान्या स्वसजातीयावच्छेदकतावत्त्व-सम्बन्धेन साध्यतावच्छेदकताव्यापिका च या साध्यतावच्छेदकनिष्ठावच्छेदकता, तया अनिरूपितत्वस्य घटाद्यभावीयप्रतियोगितायां सत्त्वेनाव्याप्तेरभावात्। साध्यतावच्छेद-कतावैशिष्ट्यस्य साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वगर्भस्य विवक्षया साध्यतावच्छेदकतावच्छेदकस्वरूपसम्बन्धेतरविषयित्वादिसम्बन्धावच्छिन्ना या साध्यतावच्छेदकतावच्छेदकप्रमेयत्वावच्छिन्ना अवच्छेदकता, तस्याः साध्यता-वच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वविरहेण स्वसजातीयावच्छेदकतावत्त्वसम्बन्धेन स्वरूपसम्बन्धेन वा साध्यतावच्छेदकताव्यापकत्वेऽपि साध्यतावच्छेदकताविशिष्टत्व-विरहात् साध्यतावच्छेदकताविशिष्टान्यत्वम्, साध्यतावच्छेदकतावैशिष्ट्यस्य साध्य-तावच्छेदकताघटकसम्बन्धावच्छिन्नत्वगर्भितस्योपादाने प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य स्वतन्त्रतयोपादाने प्रयोजनाभावाद्

रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावीयरूपत्वनिष्ठावच्छेदकतया साध्यतावच्छेदकताविशिष्टभिन्नया स्वरूपसम्बन्धेन साध्यतावच्छेदकताव्यापिकया निरूपितत्वस्यैवोक्ताभावप्रतियोगितायां सत्त्वेन तदनिरूपितत्वविरहान्न तदादायाव्याप्ति-सम्भवः।

तत्र साध्यतावच्छेदकताविशिष्टभिन्नता च प्रतियोगितावच्छेदकस्य रूपत्वस्य उल्लिख्यमानतया रूपत्वत्वेनैव भानात् प्रतियोगितावच्छेदकतानिरूपितयत्किञ्चिद-वच्छेदकत्वावृत्तित्वस्य (रूपत्वत्वावृत्तित्वस्य) साध्यतावच्छेदकतायां सत्त्वेन तादृशा-वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वरूपस्य साध्यतावच्छेदकताकस्व-वृत्तित्वस्य विरहात्, तस्या विषयित्वसम्बन्धावच्छिन्नत्वेन साध्यतावच्छेदकताघटक-समवायसम्बन्धावच्छिन्नत्वगर्भवैशिष्ट्यविरहाच्चेति भावः।[१३०]

तत्त्वालोकः – अत्र केचित् उभयस्थले चैकस्य व्याप्तित्वे व्याप्तिज्ञान-रूपकारणभेदाभावात् सर्वदैव सावच्छिन्ननिरवच्छिन्नावच्छेदकताकविधेयत्व-निरूपकानुमित्योः प्रसङ्गः स्यादिति कारणभेदाय व्याप्तिद्वयनिर्वचनमिति वदन्ति, तदपरे न मन्यन्ते, भेदकसौलभ्यात्। तथा हि वह्नीतरावृत्तित्वेन वह्नित्वे व्यापकतावच्छेदकत्वग्रहे निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताका-नुमितिर्वह्नित्वत्वेन वह्नित्वे तद्ग्रहे च वह्नित्वत्वावच्छिन्नावच्छेदकताक-विधेयताकानुमितिरिति नियमे तत्तद्व्याप्तिज्ञानमेव भेदकम्।

न चैवमपि वह्निमानित्यनुमितेर्वह्नीतरावृत्तिमद्वानित्यनुमितेश्च न भेदक-सिद्धिः। व्याप्तिभेदपक्षे च निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताका-नुमितौ निरवच्छिन्नावच्छेदकत्वघटितव्याप्तिज्ञानस्य तत्तद्धर्म्मावच्छिन्ना-वच्छेदकताकविधेयताकानुमितिषु तत्तद्धर्मातिरिक्तधर्मानवच्छिन्नावच्छेदकता-कव्याप्तिज्ञानानां कारणत्वाद् भेदकसौलभ्यमिति वाच्यम्।

निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताकानुमितौ वह्नीतरा-वृत्तित्वावच्छिन्नविशेष्यकस्य व्यापकतावच्छेदकत्वज्ञानस्य वह्नित्वत्वा-वच्छिन्नावच्छेदकताकविधेयताकानुमितौ वह्नित्ववदितरावृत्तित्वावच्छिन्न-विशेष्यकव्यापकतावच्छेदकत्वज्ञानस्य, वह्नीतरावृत्तिवृत्तित्वावच्छिन्नावच्छेद-कताकविधेयताशाल्यनुमितौ वह्नीतरावृत्तिमदितरावृत्तित्वावच्छिन्ने व्यापकता-वच्छेदकत्वावगाहिज्ञानस्य कारणकल्पनया भेदकसौलभ्यात्।

व्याप्तिभेदपक्षेऽपि व्यापकतावच्छेदकत्वधर्मितावच्छेदकस्य तद्विशेषस्य चावश्यनिवेश्यत्वात्। अन्यथा व्यभिचारग्रहेऽपि तादृशानवच्छेदकत्वा-

वच्छिन्नग्रहसम्भवेन वह्न्यव्यापकत्वाद्यवच्छिन्ने[1] इन्धनव्यापकतावच्छेदकत्वस्य द्रव्यत्वादौ प्रमोत्पादेन चानिष्टप्रसक्तेः।

वह्नित्वत्वातिरिक्तधर्मानवच्छिन्नावच्छेदकत्वघटितव्यापकतावच्छेदकत्वस्य धूमजनकतावच्छेदकजातित्वावच्छिन्ने ग्रहाद् वह्नित्ववद्वानित्यनुमित्यापत्तेश्च।[१३१]

*प्रकाशः* – सावच्छिन्ननिरवच्छिन्नसाध्यतावच्छेदककोभयस्थलसाधारणायामेकस्यामेवोपपादितायां व्याप्तौ सत्यां केचिद् दोषमिममुपस्थापयन्ति, यत्, तथाव्याप्तौ सत्यां व्याप्तिज्ञानात्मककारणभेदविरहात् सदैव सावच्छिन्न(वह्नित्वावच्छिन्नवह्नित्वनिष्ठावच्छेदकताक)विधेयता(वह्निनिष्ठविधेयता)कानुमितेस्तथा निरवच्छिन्नावच्छेदकताकविधेयताकानुमितेः (अविशेषितवह्नित्वनिष्ठावच्छेदकताकवह्निनिष्ठविधेयताकानुमितेः) च प्रसङ्गरूपापत्तिः स्यादिति।

किन्तु कैश्चिदुक्तोऽयं दोषोऽपरैर्नाङ्गीक्रियते, यतो हि व्याप्तिभेदविरहेऽपि उक्तयोः सावच्छिन्ननिरवच्छिन्नावच्छेदकताकविधेयताकानुमित्योर्भेदको भवेदेव।

स चेत्थं वह्नीतरावृत्तित्वेन वह्नित्वविशेष्यकव्यापकतावच्छेदकत्वग्रहो निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताकानुमितौ कारणम्, वह्नित्वत्वेन वह्नित्वविशेष्यकव्यापकतावच्छेदकत्वग्रहो वह्नित्वत्वावच्छिन्नावच्छेदकताकविधेयताकानुमितौ कारणमिति नियमस्वीकारे एकविधव्याप्तिज्ञानस्यैव वह्नीतरावृत्तित्व, - वह्नित्वत्वरूपपरस्परविभिन्नविशेष्यतावच्छेदकविषयकत्वेन विभिन्नस्य तत्तदनुमितौ कारणस्य भेदकत्वं सम्भवत्येव।

न चोक्तदिशा व्याप्त्यैक्यपक्षे वह्निमान् वह्नित्ववद्वानित्यनुमित्योर्भेदकस्य सिद्धावपि वह्निमान् वह्नीतरावृत्तिमद्वानित्यनुमित्योर्भेदकस्य नैव सिद्धिः, व्याप्तिभेदपक्षे तु वह्निमान् वह्नीतरावृत्तिमद्वानित्यनयोरपि भेदको भवत्येव। निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताकानुमितिकारणान्निरवच्छिन्नावच्छेदकत्वघटितव्याप्तिज्ञानाद् वह्नीतरावृत्तित्ववह्नित्वत्वादितत्तद्धर्मावच्छिन्नावच्छेदकताकविधेयताकानुमितिकारणीभूतानां वह्नीतरावृत्तित्ववह्नित्वत्वादितत्तद्धर्मातिरिक्तधर्मानवच्छिन्नावच्छेदकत्वघटितव्याप्तिज्ञानानां भिन्नत्वादिति वाच्यम्।

---

१. 'वह्नित्वव्यापकत्वाद्यवच्छिन्ने' इति तु प्राचीनमुद्रितपुस्तके

व्याप्त्यैक्यपक्षेऽपि निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताकां वह्निमानित्यनुमितिम्प्रति वह्नीतरावृत्तित्वावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वविषयकज्ञानत्वेन तथा वह्नित्वत्वावच्छिन्नावच्छेदकताकविधेयताकां वह्नित्ववद्वानित्यनुमितिं प्रति वह्नित्ववदितरावृत्तित्वावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वविषयकज्ञानत्वेन एवं वह्नीतरावृत्तित्वावच्छिन्नावच्छेदकताकविधेयताकां वह्नीतरावृत्तिमद्वानित्यनुमितिम्प्रति वह्नीतरावृत्तिमदितरावृत्तित्वावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वविषयकज्ञानत्वेन कारणत्वकल्पनया प्रकारतया स्वविषयव्यापकतावच्छेदकत्वविशेष्यतावच्छेदकानां भेदेन एकस्या अपि व्याप्तेर्ज्ञानानां भिन्नत्वसम्पत्त्या व्याप्त्यैक्यपक्षेऽपि भेदकसौलभ्यसम्भवात्।

व्याप्तिभेदपक्षेऽपि व्यापकतावच्छेदकत्वनिष्ठप्रकारतानिरूपकविशेष्यतावच्छेदकीभूतस्य वह्नीतरावृत्तित्व, - वह्नित्ववदितरावृत्तित्व, - वह्नीतरावृत्तिमदितरावृत्तित्वादिस्वरूपस्य तत्तद्विशेषस्य अवश्यनिवेशनीयत्वात्।

अन्यथा व्याप्तिभेदपक्षे प्रकारीभूतव्यापकतावच्छेदकत्वविशेष्यतावच्छेदकविशेषस्य वह्नीतरावृत्तित्वादेः वह्निमानित्याद्यनुमितिकारणीभूतव्याप्तिज्ञाने प्रवेशविरहे विषयत्वानावश्यकत्वे निरवच्छिन्नवह्नित्वादिनिष्ठावच्छेदकताकानुमितौ केवलस्य निरवच्छिन्नावच्छेदकत्वघटितव्याप्तिज्ञानस्य तथा वह्नित्वत्वादितत्तद्धर्मावच्छिन्नावच्छेदकताकविधेयताकानुमितौ केवलस्य वह्नित्वत्वादितत्तद्धर्मातिरिक्तधर्मानवच्छिन्नावच्छेदकत्वघटितव्याप्तिज्ञानस्यापेक्षितत्वे निरवच्छिन्नविशेष्यकतादृशप्रतियोगितावच्छेदकत्वरूपव्यभिचारज्ञान, -निरवच्छिन्नविशेष्यकतादृशप्रतियोगितानवच्छेदकत्वज्ञानयोः परस्परं प्रतिबध्यप्रतिबन्धकत्वविरहेण अविशेषितसाध्यतावच्छेदकधर्मिकतादृशव्यभिचारग्रहकालेऽपि निरवच्छिन्नविशेष्यकतादृशानवच्छेदकत्वरूपव्याप्तिज्ञानादनुमित्यापत्तिः स्यात्।

अर्थादविशेषितधूमत्वधर्मिकप्रतियोगिव्यधिकरणवह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारग्रहदशायामविशेषितधूमत्वधर्मिकवह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वज्ञानादनुमित्यापत्तिः स्यादुभयोर्निरवच्छिन्नविशेष्यकत्वेन प्रतिबध्यप्रतिबन्धकभावविरहेण एककालसत्त्वसम्भवादनुमितिकारणव्याप्तिज्ञानस्य साध्यतावच्छेदकधर्मिकव्यापकतावच्छेदकत्वग्रहात्मकस्य सावच्छिन्नविशेष्यताकत्वानपेक्षणात्।

तथा यथा विशेष्यतावच्छेदकाविषयतादृशावच्छेदकत्वज्ञानात्मको व्यभिचारग्रहो विशेष्यतावच्छेदकाविषयकतादृशानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वज्ञानन्नैव

प्रतिबध्नाति, तथैव अभिन्नविशेष्यतावच्छेदकविषयकोऽपि भिन्ननिरूपकनिरूपित-व्यभिचारग्रहो भिन्ननिरूपकनिरूपितव्यापकतावच्छेदकत्वग्रहं नैव प्रतिबध्नात्यतो वह्न्यव्यापकत्वाद्यवच्छिन्ने द्रव्यत्वादौ इन्धनव्यापकतावच्छेदकत्वप्रमाजननसम्भवेन अर्थाद् द्रव्याव्याप्यगुणत्वाद्यव्यापकत्वावच्छिन्ने गुणत्वादिसमानाधिकरणप्रतियोगि-व्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वावच्छिन्नत्वरूपव्यभिचारावच्छिन्ने द्रव्य-त्वादौ इन्धनसमानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वा-वच्छिन्नत्वरूपव्यापकतावच्छेदकत्वप्रमोत्पत्त्या, ततो द्रव्यत्वत्वावच्छिन्नावच्छेदकता-कविधेयताकानुमितेः प्रसङ्गः स्यात्।

तत्तदनुमितिकारणीभूतव्याप्तिज्ञाने प्रकारीभूतव्यापकतावच्छेदकत्वविशेष्यता-वच्छेदकस्य तस्य तस्यापेक्षितत्वे च द्रव्यत्वत्वावच्छिन्नावच्छेदकताकविधेयताकानु-मितिम्प्रति द्रव्यत्वत्वावच्छिन्नधर्मिकस्यैव व्यापकत्वावच्छेदकग्रहस्य कारणत्वान्नोक्ता-निष्टप्रसङ्गसम्भवः। तदानीमन्यधर्मावच्छिन्नधर्मिकव्यापकतावच्छेदकत्वग्रहस्य सत्त्वेऽपि द्रव्यत्वत्वावच्छिन्नधर्मिकव्यापकतावच्छेदकत्वग्रहस्यासत्त्वाद् व्याख्येयं 'वह्न्य-व्यापकत्वाद्यवच्छिन्ने' इत्येवं तत्त्वालोकस्य पाठधिया, तथा तस्य 'वह्न्यव्यापकत्वा-वच्छिन्ने' इत्यस्य लक्षणया 'द्रव्याव्याप्यगुणत्वाव्यापकत्वावच्छिन्ने' इत्येतत्परकत्व-धिया, तदैव तदग्रिमेण 'द्रव्यत्वादौ प्रमोत्पादेन' इत्यस्य सङ्गतिः स्यादन्यथा तु संयोगेन द्रव्यस्य समवायेन द्रव्यत्वस्य च वस्तुतो वह्निव्यापकत्वेन 'वह्न्यव्यापकत्वा-द्यवच्छिन्ने द्रव्यत्वादौ इन्धनव्यापकतावच्छेदकत्वप्रमोत्पादेन' इत्यस्य सङ्गतिर्न स्यात्।

अत्र 'वह्न्यव्यापकत्वाद्यवच्छिन्ने' इत्येवं संशोधितः पाठोऽस्ति उपलब्ध-पुस्तके[१], पूर्वतः स्थितः पाठस्तु 'वह्नित्वव्यापकत्वाद्यवच्छिन्ने' इत्येवम्, तथाविधे पाठे तु समवायेन यत्र यत्र वह्नित्वं तत्र सर्वत्रैव समवायेन द्रव्यत्वस्य सत्त्वेन 'वह्नित्वव्यापकत्वाद्यवच्छिन्ने द्रव्यत्वादौ इन्धनव्यापकतावच्छेदकत्वप्रमोत्पादेन' इत्यस्य सारल्येनैव सङ्गतिर्भवति, तदा 'अनिष्टप्रसङ्गः स्यादि'त्यस्य सङ्गतिस्तु प्रकारीभूतव्यापकतावच्छेदकत्वविशेष्यतावच्छेदकविशेषस्य तत्र तत्र कारणीभूत-व्याप्तिज्ञाने विषयविधया घटकत्वानङ्गीकारे अन्यधर्मावच्छिन्नविशेष्यकव्यापकता-वच्छेदकत्वज्ञानादपि अन्यधर्मावच्छिन्नावच्छेदकताकविधेयताकानुमितिप्रसक्त्या भवत्येवेति प्रतीमः।

---

१. (क) सिद्धान्तलक्षणतत्त्वालोकः (जगदीशशर्मसम्पादितः), पृ. ५१

(ख) संशोधनमिदं पण्डितषष्ठीनाथमिश्रैर्विहितमस्ति।

तत्तद्धर्मनिष्ठावच्छेदकताकविधेयताकानुमितिम्प्रति तत्तद्विशेषधर्मावच्छिन्न-विशेष्यकस्यैव व्यापकतावच्छेदकत्वज्ञानस्य कारणत्वादेव धूमजनकावच्छेदकजाति-त्वावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वज्ञानाद् वह्नित्ववद्वानित्यनुमितेरापत्तिर्न भवति, तथाविधानुमितौ वह्नित्वत्वधर्मावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वज्ञान-स्यैव कारणत्वात् अन्यथा वह्नित्वत्वातिरिक्तधर्मानवच्छिन्नावच्छेदकघटितव्यापकता-वच्छेदकत्वज्ञानस्य धूमजनकजातित्वावच्छिन्नविशेष्यकस्य ज्ञानादपि वह्नित्ववद्वा-नित्यनुमितेरापत्तिः स्यादेवेति भावः।[१३१]

तत्त्वालोकः – अत्रोच्यते धूमादिलिङ्गिकाया निरवच्छिन्नवह्नित्वनिष्ठा-वच्छेदकताकविधेयताकानुमितेरभ्रान्तस्योत्पत्तयेऽवश्यं तादृशप्रतियोगिता-निरूपितविशिष्टावच्छेदकत्वाभावस्यैव व्याप्तिघटकत्वम्वाच्यम्, तज्ज्ञानस्यैव च कारणत्वं तत्रोक्तविशिष्टान्यावच्छेदकत्वानिरूपितत्वन्न विशेषणमुक्तफल-सम्पादकनिरवच्छिन्नविषयित्वस्य कारणतावच्छेदकघटकत्वापेक्षया तादृशा-निरूपितत्वविषयत्वस्य तत्त्वे गौरवादिति तद्घटितस्य विषयितया तादृशानु-मितिजनकतावच्छेदकत्वरूपशुद्धसाध्यतावच्छेदकस्थलीयव्याप्तित्वासम्भवः।

न च विशिष्टसाध्यतावच्छेदकस्थलीयव्याप्तित्वन्निरवच्छिन्नत्वघटितस्य, तद्विषयितायाः कारणतावच्छेदकत्वे लाघवसम्भवेऽपि दण्डादिविधेयता-वच्छेदककव्यभिचारिलिङ्गकानुमितेरभ्रान्ते उत्पत्तिप्रसङ्गरूपप्रतिकूलतर्कस्य सम्भवात्।[१३२]

*प्रकाशः* – निरवच्छिन्नसावच्छिन्नसाध्यतावच्छेदकस्थलभेदेन विभिन्नव्याप्त्य-नुसरणे 'अत्रोच्यते' इत्यादिना बीजं दर्श्यते तत्त्वालोककृता। अत्रेदमुच्यते यद् भ्रमरहिते पुरुषे धूमादिलिङ्गिका निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताकाऽनुमितिरुदेतु, तदर्थं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानिरूपित(तादृश-प्रतियोगितानिरूपित)विशिष्टावच्छेदकत्वाभावस्यैव, अर्थात् तादृशप्रतियोगिता-निरूपितकिञ्चित्सम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितत्वरूपनिरवच्छिन्नत्वविशिष्टा-वच्छेदकत्वाभावस्यैव, व्याप्तिघटकताऽभ्युपेया, तथा तादृशप्रतियोगितानिरूपितोक्त-स्वरूपनिरवच्छिन्नत्वविशिष्टावच्छेदकत्वाभावघटितव्याप्तिज्ञानस्यैव उक्तानुमितिम्प्रति कारणत्वमभ्युपेयम्।

अभ्रान्तपुरुषाधिकरणकधूमादिलिङ्गकनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताक-विधेयताकानुमितिकारणज्ञानविषयव्याप्तिघटकत्वं साध्यतावच्छेदकताविशिष्टान्या-

वच्छेदकत्वानिरूपितत्वस्य नो युक्तम्। उक्तफलसम्पादक(अभ्रान्तपुरुषे उक्तानुमिति-प्रयोजक)निरवच्छिन्नत्वविषयित्वस्य निरवच्छिन्नविषयत्वस्य वा विषयविधया कारण-तावच्छेदकीभूतव्याप्तिघटकत्वापेक्षया तादृशानिरूपितत्व(साध्यतावच्छेदकताविशि-ष्टान्यावच्छेदकत्वानिरूपितत्व)विषयत्वस्य तत्त्वे कारणतावच्छेदकघटत्वे गौरवादतो हेतोस्तद्धटितस्य = साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वघटितस्य, अभ्रान्तपुरुषसमवेतनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताकानुमितिम्प्रति विष-यितया जनकतावच्छेदकत्वरूपशुद्धसाध्यतावच्छेदकस्थलीयव्याप्तित्वं न युक्तियुक्तम्।

उक्तदिशा लाघवगौरवे यद्यपि जातिमद्वान् घटत्वादित्यादिसावच्छिन्नसाध्यता-वच्छेदकनिष्ठावच्छेदकताकविधेयताकानुमितिजनकतावच्छेदकव्याप्तिघटकयोरपि तादृशप्रतियोगितानिरूपितनिरवच्छिन्नत्वविशिष्टावच्छेदकत्वाभावसाध्यतावच्छेदकता-विशिष्टान्यावच्छेदकत्वानिरूपितावच्छेदकत्वाभावयोः सम्भवेतामेव, तथापि निरवच्छिन्नत्वघटितस्य नैव विशिष्टसाध्यतावच्छेदकस्थलीयव्याप्तित्वम्, तथासति अभ्रान्तपुरुषे दण्डिमान् द्रव्यत्वादित्यादिस्थले दण्डादिनिष्ठावच्छेदकताकविधेयताक-व्यभिचारिद्रव्यत्वादिलिङ्गकानुमितेरुत्पत्तिः प्रसज्येत, तत्र साध्यतावच्छेदके दण्डादौ निरवच्छिन्नावच्छेदकत्वविरहेण तादृशप्रतियोगितानिरूपितनिरवच्छिन्नत्वविशिष्टा-वच्छेदकत्वाभावघटिताया व्याप्तेर्ज्ञानस्य तत्र यथार्थत्वसम्पत्तेः। अतो निरवच्छिन्ना-वच्छेदकत्वाभावघटितव्याप्तिज्ञानं लघुभूतविषयकत्वाद् यदि सावच्छिन्नसाध्यतावच्छे-दकनिष्ठावच्छेदकताकविधेयताकानुमितौ कारणं स्यात्तदा अभ्रान्तपुरुषे दण्डादिनिष्ठ-सावच्छिन्नावच्छेदकताकविधेयताकाया द्रव्यत्वादिव्यभिचारिलिङ्गिकाया अनुमितेरु-त्पादः स्यादित्येवं प्रतिकूलतर्कपराहततया लाघवज्ञानं निरवच्छिन्नावच्छेदकत्वाभाव-घटितव्याप्तिज्ञानस्य विशिष्टसाध्यतावच्छेदकानुमितिजनकताग्राहकन्नैव भवितुं शक्नोति। अतस्तत्र विशिष्टसाध्यतावच्छेदकस्थले साध्यतावच्छेदकतावच्छेदकतदि-तरोभयानवच्छिन्नावच्छेदकत्वाभावघटितमथवा साध्यतावच्छेदकतावच्छेदकेतरान-वच्छिन्नावच्छेदकत्वाभावघटितमेव व्याप्तिज्ञानं गुरुभूतमपि कारणमिति भावः।[१३२]

तत्त्वालोकः – **अथ साध्यसाधनभेदेन कार्य्यकारणभावभेदे निरवच्छिन्ना-वच्छेदकताकविधेयताशाल्यनुमितौ लाघवेन निरवच्छिन्नावच्छेदकत्वघटितस्य सावच्छिन्नावच्छेदकत्वकविधेयताशाल्यनुमितौ तादृशानिरूपितत्वघटितस्य च वस्तुनो ज्ञानस्य यथा कारणत्वं तथा सल्लिङ्गकोक्तानुमितिद्वयस्य निरवच्छिन्नत्व-घटितव्याप्तिज्ञानस्यासल्लिङ्गिकायाञ्च निरवच्छिन्नविधेयतावच्छेदकताकानुमितौ निरवच्छिन्नत्वघटिताया व्याप्तेर्ज्ञानस्य कारणत्वं किन्न स्यादिति चेत्? न।**

एवं सति सल्लिङ्गकानुमितौ साध्यसामानाधिकरण्यज्ञानस्यासल्लिङ्गकानुमितौ व्यापकत्वघटितज्ञानस्य कारणत्वमित्येव किन्न रोचयेः।

हन्त! लाघवमन्विष्यतो मम महदिदमनिष्टमापादितन्देवानाम्प्रियेणेति चेत्, क्लृप्तमात्ररीतिम्विदुषो न चित्रमेतद्भवति कल्पनाप्रसरः सोऽप्यत्र साध्यैक-परतन्त्रो दृष्टानुसारी च।

तथा हि वह्निसामानाधिकरण्यस्य गमकताप्रयोजकत्वेऽविशेषाद्धूमस्येव रासभस्यापि तेन तत्त्वङ्कल्पयेन्न ह्येषा कल्पना धूमरासभयोः प्राणित्वाप्राणि-त्वादिरूपलिङ्गवैशिष्ट्यमपेक्षते। उभयोरपि गमकतासाम्ये धूमाद्वह्न्यनुमितौ समर्था प्रवृत्ती रासभेनानुमितौ चासमर्थेति किङ्कतो विशेषः स्यात्।

तत्तद्धेतोर्गमकतायान्तत्तद्धेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदका-वच्छिन्नसामानाधिकरण्यस्य प्रयोजकत्वेऽपि तस्य रासभ इव धूमेऽप्यसत्तया न विशेषकरत्वमिति निरवच्छिन्नत्वघटितस्य तथात्वम्वाच्यन्तस्यापि वह्न्यनु-मितिप्रयोजकत्व इव दण्डयनुमितिरपि प्रयोजकत्वेऽविशेषाद्दण्डिसंयोगस्यैव संयोगसामान्यस्यापि दण्डिगमकताम्वास्तविकीङ्कल्पयेद् दृष्टानुसारिणीत्वात् कल्पनायाः। दण्डिसंयोगस्य सल्लिङ्गत्वमसल्लिङ्गत्वञ्च संयोगसामान्यस्येति दण्डिसंयोगस्य निरवच्छिन्नत्वघटिताव्याप्तिर्गमकताप्रयोजिका, संयोगस्य तु दण्डत्वातिरिक्तधर्म्मानवच्छिन्नावच्छेदकत्वघटितेति तु स्वशिष्य एव प्रति-बोधनीये व्याप्तिस्वरूपावधारणात्प्राक् लिङ्गे सत्त्वासत्त्वयोर्दुर्न्निरूपत्वादित्यु-परम्यते।[१३३]

*प्रकाशः* – दण्डादिविधेयतावच्छेदककव्यभिचारिद्रव्यत्वसंयोगादिलिङ्गका-नुमितेरभ्रान्तपुरुषे उत्पत्तिप्रसक्त्या लाघवसद्भावेऽपि निरवच्छिन्नत्वघटितस्य न विशिष्टसाध्यतावच्छेदकस्थलीयव्याप्तित्वमिति पूर्वं यदुपपादितं तत्र 'नचे'त्यादिना उक्ततत्त्वालोकेन शङ्कते यद् यथा साध्यसाधनभेदेन कार्यकारणभावस्य भिन्नत्वाद् निरवच्छिन्नावच्छेदकताकविधेयताकानुमितिम्प्रति निरवच्छिन्नावच्छेदकत्वघटिताया एव व्याप्तेर्ज्ञानं कारणम्, सावच्छिन्नावच्छेदकताकविधेयताकानुमितौ तु तादृशानिरूपि-तत्व(साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व)घटितस्यैव व्याप्त्या-त्मकवस्तुनो ज्ञानं कारणम्, तथैव सल्लिङ्गकयोरेव निरवच्छिन्नावच्छेदकताकविधेयता-कानुमितिसावच्छिन्नावच्छेदकताकविधेयताकानुमित्योर्द्वयोरेव लाघवाद् निरवच्छिन्ना-वच्छेदकत्वघटिताया व्याप्तेर्ज्ञानं कारणम्, न तु असल्लिङ्गिकामपि सावच्छिन्ना-वच्छेदकताकविधेयताकानुमितिम्प्रत्यपि।

असल्लिङ्गिकां निरवच्छिन्नावच्छेदकताकविधेयताकानुमितिम्प्रति पुनः निरवच्छिन्नावच्छेदकत्वघटिताया एव व्याप्तेर्ज्ञानं कारणत्वेनाभ्युपेयम्। सावच्छिन्नावच्छेदकताकविधेयताका[या]मसल्लिङ्गिका[या]मनुमितौ तु उक्तानिरूपितत्व(साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व)घटितव्याप्तेरेव कारणत्वमतो न अभ्रान्तपुरुषे निरवच्छिन्नावच्छेदकताघटितव्याप्तिज्ञानतोऽसल्लिङ्गिकायाः सावच्छिन्नावच्छेदकताकविधेयताकाया अनुमितेः प्रसक्तिसम्भावना येन लाघवसद्भावेऽपि निरवच्छिन्नावच्छेदकत्वघटितव्याप्तेर्ज्ञानं सावच्छिन्नावच्छेदकताकविधेयताकसल्लिङ्गकानुमितिम्प्रति कारणं न स्यादिति पूर्वपक्षः।

अत्र समाधीयते 'न, एवं सती'त्यादिना। इदमत्रोक्तपूर्वपक्षस्य समाधानं यदुपर्युक्तरीत्या व्याप्तिज्ञानानुमित्योः कार्यकारणभावो यदि लाघवसद्भावतः सल्लिङ्गकासल्लिङ्गकानुमितिभेदेन कल्प्येत, अर्थात् सल्लिङ्गकनिरवच्छिन्नावच्छेदकताकविधेयताकसल्लिङ्गकसावच्छिन्नावच्छेदकताकविधेयताकोभयविधानुमितिम्प्रति निरवच्छिन्नावच्छेदकत्वघटितव्याप्तेर्ज्ञानस्य कारणत्वं लाघवादभ्युपेतं स्यात्, स्याच्चासल्लिङ्गकनिरवच्छिन्नावच्छेदकताकविधेयताकानुमितौ निरवच्छिन्नावच्छेदकत्वघटितव्याप्तिज्ञानं कारणं तथा सल्लिङ्गकसावच्छिन्नावच्छेदकताकविधेयताकानुमितिम्प्रति सावच्छिन्नावच्छेदकत्वघटितव्याप्तिज्ञानं कारणं येन दण्डिमान् द्रव्यत्वात् संयोगाद्वा इत्यादौ अभ्रान्ते निरवच्छिन्नावच्छेदकताकविधेयताकानुमितिर्न स्यात्, तदा ततोऽपि लाघवात्सल्लिङ्गकानुमितिम्प्रति साध्यसामानाधिकरण्यज्ञानस्यैव कारणत्वमसल्लिङ्गकानुमितौ तु व्यापकत्वघटितसाध्यसामानाधिकरण्यज्ञानस्य कारणत्वमित्येवं त्वत्कल्पनायां लाघवमन्विष्यतस्तव लाघवाधिक्यप्रयुक्तः प्रमोदः स्यात्, अभ्रान्तेऽसल्लिङ्गकानुमितेरापत्तिश्च न स्यात्।

अत्र यदि त्वयोच्येत लाघवमन्विष्यता मया साध्यसामानाधिकरण्यज्ञानस्य कारणत्वकल्पना कर्तुं शक्यैव, इष्टैवेयमापादिता भवतापत्तिः, नत्वियं वास्तविकी आपत्तिरिति, तथा च सल्लिङ्गकानुमितौ साध्यसामानाधिकरण्यज्ञानस्य मत्कर्तृककारणत्वकल्पनारूपापत्त्युपस्थापका सिद्धान्तिनो भवन्तो वस्तुतो 'देवानां प्रिया' एवेति।

अत्र सिद्धान्तिनः समादधति यदुक्तदिशा कल्पनाप्रसरस्तस्यैवाश्चर्यकरो न, यः खलु केवलां क्लृप्तां रीतिं वेत्ति, अर्थात् सल्लिङ्गकानुमितिं प्रति साध्यसामानाधिकरण्यज्ञानस्य कारणत्वकल्पना केवलां क्लृप्तां रीतिं विदुषा त्वयैव कर्तुं शक्या, न तु कल्पनाप्रसरस्यौचित्ये साध्यैकपरतन्त्रत्वं दृष्टानुसारित्वञ्च विदुषा अन्येनापि तथा कर्तुं शक्येति, यतो हि साध्यसामानाधिकरण्यपदाभिधेयस्य वह्निसामानाधिकरण्यस्य

साध्यगमकताप्रयोजकत्वे धूम इव रासभेऽपि वह्निसामानाधिकरण्यसत्त्वेन धूमेनेव रासभेन अपि तत्त्वं पर्वतादौ वह्निमत्त्वं जनः कल्पयेत्। तथासति जनो धूमेन पर्वतादौ तत्त्व = वह्निमत्त्व-कल्पनां करोति। रासभेन पुनर्न करोति। एतद्वैषम्यं लिङ्गगतप्राणित्वाप्राणित्ववैशिष्ट्यापेक्षमपि नैव, प्राणिनाऽपि बहुना बहुत्र सद्धेतुना तत्त्वकल्पनात्। ततश्च धूमरासभयोः वह्निसामानाधिकरण्येन गमकतायां समानायां धूमाद् वह्न्यनुमितौ सत्यां वह्न्यर्थिनस्तत्र तत्र पर्वतमहानसादौ जायमाना प्रवृत्तिः समर्था (सफला) भवति, रासभेन वह्न्यनुमितेरुत्तरं तत्र वह्न्यर्थिनः प्रवृत्तिः पुनरसमर्था, सफला न भवतीति किम्प्रयुक्तो विशेषः स्यात्।

धूमादिनिष्ठसाध्यसामानाधिकरण्यस्य गमकताप्रयोजकतां परित्यज्य धूमत्वादि-तत्तद्धेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य गमकता-प्रयोजकत्वेऽपि तस्य (निरवच्छिन्नावच्छेदकत्वाघटितस्य महानसीयवृत्तिजातिमदभाव-मादाय) रासभ इव धूमेऽप्यसत्तया विशेषकरत्वन्न स्यादिति हेतुना निरवच्छिन्नावच्छेद-कत्वघटितस्य धूमत्वादितत्तद्धेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदकावच्छिन्न-सामानाधिकरण्यस्य गमकताप्रयोजकत्वे तथाविधस्य तस्य वह्न्यनुमितिप्रयोजकत्वे दण्ड्यनुमितेरपि, अर्थाद् निरवच्छिन्नावच्छेदकताकविधेयताकानुमितेरिव सावच्छिन्ना-वच्छेदकताकविधेयताकानुमितेरपि, प्रयोजकत्वं स्यात्, तथासति अव्यभिचारिणो दण्डिसंयोगस्य इव व्यभिचारिणः संयोगसामान्यस्य द्रव्यत्वादेर्वा दण्डिगमकतां वास्तविकीं कल्पयेत्, तत्कल्पनाया दृष्टानुसारिणीत्वसम्भवात्।

दण्डिसंयोगस्य सल्लिङ्गता संयोगसामान्यस्य द्रव्यत्वादेर्वा असल्लिङ्गतेति तथा दण्डिसंयोगस्य गमकताप्रयोजिका व्याप्तिनिरवच्छिन्नावच्छेदकत्वघटिता संयोग-सामान्यस्य द्रव्यत्वादेर्वा गमकताप्रयोजिका व्याप्तिर्दण्डत्वातिरिक्तधर्मानवच्छिन्ना-वच्छेदकत्वघटितेति तु स्वशिष्यः केवलम् प्रतिबोधयितुं शक्यः, न त्वन्योऽपि, व्याप्तिस्वरूपावधारणे प्रवृत्तेन व्याप्तिस्वरूपावधारणात् प्राक् लिङ्गगतवास्तविकत्वा-वास्तविकत्वयोर्दुर्निरूपत्वादित्याशयः।[१३३]

**तत्त्वालोकः – अथ यादृशधर्मानवच्छिन्ना साध्यतावच्छेदकता तत्तद्धर्मा-वच्छिन्नावच्छेदकत्वानिरूपितत्वमुभयस्थलीयलक्षणे प्रतियोगिताविशेषण-मस्तु, भवति चैवमक्लेशेन विशिष्य बोधफलश्शब्दानुगमः।**

**न च यत्तत्त्वघटितत्वादननुगमः, अवच्छिन्नत्वसम्बन्धेन साध्यतावच्छेद-कत्वावृत्तित्वस्य विवक्षितत्वात्। निरवच्छिन्नसाध्यतावच्छेदकतानिरूपिता-वच्छिन्नत्वसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धावप्यवच्छिन्नत्वसम्बन्धावच्छिन्न-**

वृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभावस्य नाप्रसिद्धिः।

यत्तु प्रमेयावच्छिन्नसाध्यतावच्छेदकतायामवच्छिन्नत्वसम्बन्धेन वस्तुमात्रस्य वृत्तित्वाद्वृत्तित्वाभावाप्रसिद्धिरिति, तन्न, निरूपितत्वसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नसाध्यतावच्छेदकत्वनिरूपितवृत्तित्वाभाववदवच्छेदकतावद्धर्मानवच्छिन्नावच्छेदकतानिरूपितत्वस्य विवक्षितत्वात्।

यद्यपि दण्डिमान्द्रव्यत्वादित्यत्रातिव्याप्तिः, प्रतियोगितानिरूपितदण्डत्वनिष्ठावच्छेदकतायास्साध्यतावच्छेदकत्वावृत्तित्वेन तत्तद्धर्म्मानवच्छिन्नावच्छेदकतानिरूपितप्रतियोगितानवच्छेदकत्वात्साध्यतावच्छेदकस्य, तथापि स्वसामानाधिकरण्यस्वसाजात्योभयसम्बन्धेन स्वविशिष्टनिरूपितत्वस्य संसर्गत्वे न दोषः।

न च तथापि तादृशवृत्तित्वाभाववत्सावच्छिन्नदण्डत्वनिष्ठावच्छेदकतामादाय दोषतादवस्थ्यमिति वाच्यम्, तादृशवृत्तित्वाभाववदवच्छेदकताविशिष्टावच्छेदकत्वानिरूपितावच्छेदकतानिरूपितत्वस्य विवक्षितत्वात्। वैशिष्ट्यञ्च निरुक्तोभयसम्बन्धेन बोध्यम्।[१३४]

*प्रकाशः* – 'अथे'त्यादिना नवीनोऽयं पूर्वपक्ष उत्थाप्यते यन्निरवच्छिन्नसाध्यतावच्छेदककानुमितिप्रयोजकव्याप्तिलक्षणप्रतियोगितायां निरवच्छिन्नावच्छेदकत्वानिरूपितत्वस्य निवेशः, सावच्छिन्नसाध्यतावच्छेदककानुमितिप्रयोजकव्याप्तिलक्षणघटकप्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वनिवेशः, इत्थं निरवच्छिन्नसावच्छिन्नशब्दमाध्यमेन बुबोधयिषितार्थबोधने गौरवं भवति, अतोऽक्लेशेनाभिप्रेतबोधफलाय साध्यतावच्छेदकता यादृशयादृशधर्मानवच्छिन्ना भवति, तत्तद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वमुभयस्थलीयव्याप्तिलक्षणघटकप्रतियोगितायां विशेषणमित्थमेकेनैव यत्तद्धटितानुगतवाक्यात्मकशब्देन बुबोधयिषितार्थबोधनं कुतो न कृतं जगदीशेन? इति, वह्निमान् धूमादित्यत्र साध्यतावच्छेदकता महानसीयवृत्तित्वजातित्वादिधर्मानवच्छिन्ना भवति, महानसीयवृत्तिजातिमान् नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितायां महानसीयवृत्तित्वजातित्वधर्मावच्छिन्नावच्छेदकतानिरूपितत्वस्यैव सत्त्वे न तदादायाव्याप्तिः, एवं जातिमद्वान् घटत्वादित्यत्रापि पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगितामादायाव्याप्तिर्न स्यात्।

उक्तवाक्यात्मकशब्दस्य यत्तद्घटिततया यत्तदोऽनुगतरूपेण बुबोधयिषितार्थाबोधकत्वान्नानुगम इति चेत्। [न], अवच्छिन्नत्वसम्बन्धेन साध्यतावच्छेदकत्वावृत्तित्वस्य विवक्षणेऽनुगमसम्भवात्। अवच्छिन्नत्वसम्बन्धेन यो यो धर्मः साध्यतावच्छेदकतायां न तिष्ठति, तत्तद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वमुभयस्थलीयप्रतियोगितायां विशेषणमिति तदर्थः। एवं सति प्रतियोगिताविशेषणतया विवक्षितानिरूपितत्वघटकधर्मस्य साध्यतावच्छेदकत्वावृत्तित्वेनानुगतीकृतत्वादनुगतयत्तदोः प्रवेशविरहादनुगमो भवत्येवेत्याशयः।

अवच्छिन्नत्वसम्बन्धेन साध्यतावच्छेदकत्वावृत्तित्वस्य अवच्छिन्नत्वसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः साध्यतावच्छेदकतानिरूपितवृत्तित्वाभाव एव विवक्षितार्थः। तस्यैवंविधविवक्षितार्थकत्वादेव निरवच्छिन्नसाध्यतावच्छेदकतास्थले निरवच्छिन्नसाध्यतावच्छेदकतानिरूपितस्य अवच्छिन्नत्वसम्बन्धावच्छिन्नवृत्तित्वस्य प्रसिद्धिविरहेऽपि अव्याप्तिर्न, तत्रावच्छिन्नत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वस्य प्रसिद्धिविरहेऽपि अवच्छिन्नत्वसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धस्य साध्यतावच्छेदकतानिरूपितवृत्तित्वस्य च खण्डशः प्रसिद्ध्या तत्र अवच्छिन्नत्वसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपस्य साध्यतावच्छेदकतानिरूपितवृत्तित्वस्य व्यधिकरणसम्बन्धत्वेन तादृशव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभावस्य प्रसिद्ध्या अव्याप्तेरभावात्।

अत्र प्रमेयावच्छिन्ना यत्र साध्यतावच्छेदकता तिष्ठति, तत्र प्रमेयवद्वान् वाच्यत्वादित्यत्र वस्तुमात्रस्य अवच्छिन्नत्वसम्बन्धेन साध्यतावच्छेदकतायां वृत्तित्वेन उक्तसम्बन्धावच्छिन्नप्रतियोगिताकस्य साध्यतावच्छेदकतानिरूपितवृत्तित्वाभावस्याप्रसिद्ध्या ये अव्याप्तिमुपस्थापयन्ति, तन्मुधैव, निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताको यः साध्यतावच्छेदकतानिरूपितवृत्तित्वाभावस्तादृशाभाववदवच्छेदकतावद्धर्मानवच्छिन्नावच्छेदकतानिरूपितत्वस्य लक्षणघटकप्रतियोगितायां विवक्षितत्वेनोक्तपरिहाराद् उक्तस्थले अवच्छिन्नत्वसम्बन्धेन वस्तुमात्रस्य साध्यतावच्छेदकतायां वृत्तित्वेऽपि साध्यतावच्छेदकतानिरूपितवृत्तित्वस्य निरूपितत्वसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन केवलायां प्रमेयत्वावच्छिन्नायामेवावच्छेदकतायां सत्त्वेन जगत्प्रसिद्धायां प्रमेयत्वेतरमहानसीयवृत्तित्वजातित्ववह्नित्वत्वादिधर्मावच्छिन्नायामवच्छेदकतायामसत्त्वेन उक्तसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकतावृत्तित्वाभाववदवच्छेदकतावद्धर्मानवच्छिन्नावच्छेदकतानिरूपितत्वस्य घटाद्यभावीयप्रतियोगितायां सत्त्वसम्पत्त्या नाप्रसिद्धिर्न वाऽव्याप्तिः।

पूर्वं विवक्षणीयसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभावो धर्मविशेषणतयोपात्त आसीत्तत्रापादितदोषस्य परस्ताद्दर्शिते विवक्षाप्रकारे साध्यतावच्छेदकतानिरूपित-वृत्तित्वाभावोऽवच्छेदकताविशेषणत्वेन निवेशितस्तथा पूर्वमवच्छिन्नत्वसम्बन्धस्तादृ-शवृत्तित्वाभावप्रतियोगितावच्छेदकसम्बन्धघटक आसीत्, पश्चान्निरूपितत्वसम्बन्ध एव तादृशवृत्तित्वाभावप्रतियोगितावच्छेदकसम्बन्धघटकत्वेन सन्निविष्ट इति पूर्वापरयोर्भेदोऽवधेयः।

यद्यपि उक्तविवक्षायां प्रमेयवद्वान् वाच्यत्वादित्यत्रोपपादितदिशाऽव्याप्तेर्वारणे-ऽपि दण्डिमान् द्रव्यत्वादित्यत्रातिव्याप्तिः स्यात्, दण्डी नास्तीति प्रतीतिसिद्धाभावीय-प्रतियोगिताया दण्डत्वनिष्ठयाऽपि अवच्छेदकतया दण्डनिष्ठावच्छेदकतामाध्यमेन निरूपितत्वाद् दण्डत्वनिष्ठावच्छेदकतायाश्च दण्डात्मकसाध्यतावच्छेदकनिष्ठसाध्यता-वच्छेदकत्वावृत्तित्वात्, तथा च निरूपितसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्व-रूपसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभाववती अव-च्छेदकता दण्डत्वनिष्ठाऽवच्छेदकता, तादृशावच्छेदकतावान् धर्मो दण्डत्वम्, तद्धर्मा-नवच्छिन्नावच्छेदकता दण्डद्यभावप्रतियोगितानिरूपिता दण्डनिष्ठावच्छेदकता न भवति, किन्तु तदन्या एव काचित्, ततश्च दण्डत्वानवच्छिन्नावच्छेदकतानिरूपित-प्रतियोगितानवच्छेदकत्वस्य दण्डात्मकसाध्यतावच्छेदके सत्त्वादतिव्याप्तिः प्रसज्यति।

अत्र स्वसामानाधिकरण्य-स्वसाजात्योभयसम्बन्धेन स्वविशिष्टनिरूपितत्वस्य संसर्गत्वं स्वीकृत्योक्तदोषो दूरीकृतः। अयमाशयः दण्डद्यभावीयप्रतियोगितानिरूपित-दण्डत्वनिष्ठपारम्परिकावच्छेदकतायाः साध्यतावच्छेदकत्वावृत्तित्वं सन्दर्श्य दोष उप-स्थापितः। तत्र दण्डत्वनिष्ठावच्छेदकता यथा परम्परया दण्डद्यभावीयप्रतियोगिता-निरूपिता, तथैव दण्डनिष्ठसाध्यतावच्छेदकताया अपि निरूपिता। एवं स्थितौ तस्या दण्डत्वनिष्ठावच्छेदकतायाः निरूपितत्वसम्बन्धेन दण्डनिष्ठसाध्यतावच्छेदकत्वावृत्तित्वं यद्यपि भवितुन्न शक्नोति, किन्तु निरूपकभेदाद् दण्डत्वनिष्ठायाः साध्यतावच्छेदकता-वच्छेदकताया दण्डत्वनिष्ठदण्डद्यभावप्रतियोगितानिरूपकावच्छेदकावच्छेदकतो भिन्नत्वधिया तस्याः साध्यतावच्छेदकत्वावृत्तित्वोक्तेः सङ्गतिः।

तद्दोषपरिहारायेदानीमिदमुच्यते यद् अवच्छेदकतायां विशेषणतया विवक्षितस्य साध्यतावच्छेदकत्वनिरूपितवृत्तित्वाभावस्य प्रतियोगितावच्छेदको न केवलनिरूपितत्वसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिस्वरूपसम्बन्धः, किन्तु स्वसामाना-धिकरण्य-स्वसाजात्योभयसम्बन्धेन स्व(अवच्छेदकता)विशिष्टनिरूपितत्वसम्बन्धा-वच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्ध एव। एवं स्थितौ दण्डत्वनिष्ठप्रतियोगिता-

निरूपकावच्छेदकतातः साध्यतावच्छेदकतानिरूपिकाया दण्डत्वनिष्ठावच्छेदकताया भिन्नत्वेऽपि स्वसामानाधिकरण्य-स्वसाजात्योभयसम्बन्धेन दण्डत्वनिष्ठप्रतियोगिता-वच्छेदकताविशिष्टत्वसत्त्वात्तन्निरूपितत्वस्यैव साध्यतावच्छेदकतायां सत्त्वेन दण्डत्व-निष्ठप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकत्वावृत्तित्वविरहाद्दोषाभावात्।

न च स्वसामानाधिकरण्य-स्वसाजात्योभयसम्बन्धेन स्वविशिष्टनिरूपितत्व-संसर्गत्वस्वीकारेऽपि साध्यतावच्छेदकत्ववृत्तित्वाभाववतीं तत्ताविशिष्टदण्डत्वविशिष्ट-दण्डवदभावीयप्रतियोगितानिरूपिकां दण्डत्वनिष्ठां सावच्छिन्नामवच्छेदकतामादाय उक्तस्थले दोषः स्यादेव, तादृशावच्छेदकतावैशिष्ट्यस्य निरवच्छिन्नायां साध्यतावच्छे-दकतानिरूपिकायां दण्डत्वनिष्ठावच्छेदकतायां स्वसामानाधिकरण्यसम्बन्धस्य सत्त्वेऽपि स्वसाजात्यसम्बन्धविरहेण विरहादिति वाच्यम्, तादृशवृत्तित्वाभाववदवच्छेदक-तया स्वसामानाधिकरण्य-स्वसाजात्योभयसम्बन्धेन विशिष्टं यदवच्छेदकत्वम्, तादृशावच्छेदकत्वानिरूपितावच्छेदकतानिरूपितत्वस्य विवक्षयोक्तदोषस्य वारणात्।

एवं विवक्षायां सत्यां तादृशवृत्तित्वाभाववत्या सावच्छिन्नया दण्डत्वनिष्ठया अवच्छेदकतया, विशिष्टा अवच्छेदकता, सैव दण्डत्वनिष्ठा सावच्छिन्ना अवच्छेद-कता, न तु निरवच्छिन्ना दण्डत्वनिष्ठावच्छेदकता, तत्र सावच्छिन्नदण्डत्वनिष्ठावच्छेद-कतायाः सावच्छिन्नत्वरूपसाजात्यविरहात्। तेन तादृशवृत्तित्वाभाववदवच्छेदकता-विशिष्टेन सावच्छिन्नदण्डत्वनिष्ठावच्छेदकत्वेन अनिरूपिता निरवच्छिन्नदण्डत्वनिष्ठा-वच्छेदकतानिरूपिता दण्डनिष्ठावच्छेदकता, तन्निरूपितत्वस्य दण्डाभावप्रतियोगितायां लक्षणघटिकायां सत्त्वात्तदवच्छेदकत्वस्यैव साध्यतावच्छेदके दण्डे सत्त्वादतिव्याप्ति-विरहादित्याशयः।[१३४]

तत्त्वालोकः – यत्तु (यत्) किञ्चिद्वृत्तित्वावच्छेदकतात्वगतद्वित्वे साध्यता-वच्छेदकतानिरूपितवृत्तितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितान-वच्छेदकत्वं तद्रूपविशिष्टावच्छिन्नाधिकरणधर्मानवच्छिन्नावच्छेदकतात्वम्वा विवक्षणीयम्, न च (यत्) किञ्चित्त्वनिवेशादननुगमः, धर्मवृत्तित्वावच्छेदकता-त्वगतसमुदायत्वत्वेन प्रवेशादिति।

तन्न, निरवच्छिन्नघटत्वनिष्ठावच्छेदकत्वस्य प्रमेयसाध्यतावच्छेदक-तावच्छेदकस्थले महानसीयवह्निवृत्तित्वविशिष्टजातित्वावच्छिन्नावच्छेदक-त्वस्य वह्नित्व[१]साध्यतावच्छेदकस्थलेऽवृत्तित्वस्य सम्पादनीयतया धर्म-

१. श्रीजगदीशशर्मसम्पादितप्राचीनतत्त्वालोकमूले 'वह्नि' इत्येव पाठः।

वृत्तित्वावच्छेदकतात्वमात्रगतत्वस्याप्रवेशनीयतया प्रतियोगितानिरूपितदण्डत्वनिष्ठावच्छेदकत्वेऽवृत्तित्वस्य दुर्व्वारत्वादिति।[१३५]

*प्रकाशः* – यतो हि तादृशवृत्तित्वाभाववतीं दण्डत्वनिष्ठामवच्छेदकतामादाय प्रसक्तदोषस्य परिहाराय किञ्चिद्वृत्तित्वाऽवच्छेदकतात्वद्वित्वे साध्यतावच्छेदकतानिरूपितवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकत्वं विवक्षति, अथवा तद्रूप(किञ्चिद्वृत्तित्वाऽवच्छेदकतात्वगतद्वित्व)विशिष्टावच्छिन्नाधिकरणधर्मानवच्छिन्नावच्छेदकतात्वं तादृशवृत्तित्वाभाववत्तयाऽभिप्रेतायामवच्छेदकतायां विवक्षति।

तस्यायमाशयो यत् प्रतियोगितानिरूपितदण्डत्वनिष्ठावच्छेदकतायाः साध्यतावच्छेदकतानिरूपितवृत्तित्वविरहेऽपि दण्डत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकतानिरूपितवृत्तित्ववत्यां यत्किञ्चिद्वृत्तित्वमवच्छेदकतात्वञ्च तदुभयगतं यद्द्वित्वं तत्र द्वित्वे साध्यतावच्छेदकतानिरूपितवृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव सत्त्वेन विवक्षिततादृशपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्यासत्त्वात् तत्र द्वित्वे तादृशपर्य्याप्त्यनुयोगितावच्छेदकत्वं तादृशद्वित्वाश्रयं यत्किञ्चिद्वृत्तित्वमवच्छेदकतात्वञ्च, तदाश्रयीभूतायामवच्छेदकतायां साध्यतावच्छेदकतानिरूपितवृत्तितायाः सत्त्वेन तादृशवृत्तितावच्छेदकताया अवच्छेदकतात्वे किञ्चिद्वृत्तित्वे च सत्त्वात्तदुभयगतद्वित्वस्य तादृशवृत्तितावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सङ्गतिः, अर्थात् किञ्चिद्वृत्तित्वावच्छेदकतात्वाभ्यां दण्डत्वनिष्ठावच्छेदकताद्वयस्य प्रतियोगितासाध्यतानिरूपितस्य एकीभावात्तन्निष्ठकिञ्चिद्वृत्तित्वावच्छेदकतात्वगतद्वित्वे साध्यतावच्छेदकतानिरूपिता वृत्तितावच्छेदकता पर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव सत्त्वमतस्तादृशद्वित्वाश्रयकिञ्चिद्वृत्तित्वावच्छेदकतात्वाश्रयीभूता दण्डत्वनिष्ठाप्रतियोगितावच्छेदकताऽपि साध्यतावच्छेदकता वृत्तित्वाभाववदवच्छेदकतात्वेन गृहीता न स्यादिति तदाशयः।

द्वितीये निर्दिष्टविवक्षाप्रकारे किञ्चिद्वृत्तित्वावच्छेदकतात्वगतं द्वित्वं यदि गृहीतमभविष्यत्तदा तादृशरूपविशिष्टत्वेन किञ्चिद्वृत्तित्वावच्छेदकतात्वे परिगृहीते स्याताम्, तदवच्छिन्नत्वेनावच्छेदकता परिगृहीता स्यात्, तदधिकरणधर्मत्वेन दण्डत्वं गृहीतं स्यात्, किन्तु अत्र किञ्चिद्वृत्तित्वावच्छेदकतात्वगतद्वित्वस्य तद्रूपपदेन परिग्रहाभावाद् दण्डत्वधर्मानवच्छिन्नत्वस्य तत्रानपेक्षणान्न दोषः। उक्तविवक्षाप्रकारे किञ्चित्त्वस्य प्रवेशादनुगमदोष उच्येत चेत्तदा किञ्चित्त्वमप्रवेश्य धर्मवृत्तित्वावच्छेदकतात्वगतसमुदायत्वत्वेन प्रवेशं विधाय तत्परिहारसम्भवादिति कथयति यत्तु।

तन्न चारु। तथासति पूर्वमुक्ते प्रमेयसाध्यतावच्छेदकतावच्छेदकस्थले निरवच्छिन्नाया घटत्वनिष्ठावच्छेदकतायास्तथा वह्नित्वसाध्यतावच्छेदकस्थले महानसीयवृत्तित्वविशिष्टजातित्वावच्छिन्नाया अवच्छेदकतायाः साध्यतावच्छेदकत्वा-वृत्तित्वेन सङ्ग्राह्यायाः सङ्ग्रहो न स्यात्। तस्मात्सङ्ग्राह्योक्तोभयसङ्ग्रहाय धर्मवृत्तित्वावच्छेदकतात्वमात्रगतत्वयोः प्रवेशपरित्यागे दण्डत्वगतावच्छेदकत्वे पूर्वोपपादितदिशा साध्यतावच्छेदकत्वावृत्तित्वं दुर्वारमेव स्यात्। अतः स्वसामाना-धिकरण्य-स्वसाजात्योभयसम्बन्धेन स्वविशिष्टनिरूपितत्वस्य संसर्गत्वं स्वीकृत्य तथा परस्तात् तादृशवृत्तित्वाभाववदवच्छेदकतया स्वसाजात्य-स्वसामानाधिकरण्योभय-सम्बन्धेन विशिष्टावच्छेदकत्वनिरूपितावच्छेदकतानिरूपितत्वस्य विवक्षा यदुक्ता, सैव समीचीना।

वह्नित्वसाध्यतावच्छेदकस्थले वह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्व-जातिमान् नास्तीति प्रतीतिसिद्धाभावप्रतियोगितामादायाव्याप्तिः प्रसज्यति, अतस्तादृ-शाभावप्रतियोगितावारणाय महानसीयवह्निवृत्तित्वविशिष्टजातित्वावच्छिन्नावच्छेदक-तायास्तादृशजातिनिष्ठायाः साध्यतावच्छेदकत्वावृत्तित्वमावश्यकं भवति। धर्मवृत्तित्व-अवच्छेदकतात्वमात्रगतत्वस्य 'यत्तू'क्तरीत्या प्रवेशे उक्तावच्छेदकतायाः साध्यता-वच्छेदकत्ववृत्तित्वमेव दर्शितदण्डत्वनिष्ठावच्छेदकताया इव स्यान्न त्ववृत्तित्वम्। तथा प्रमेयसाध्यतावच्छेदकतावच्छेदकस्थले प्रमेयवद्वान् वाच्यत्वादित्यत्र घटत्ववद-भावीयायाः सावच्छिन्नघटत्वनिष्ठावच्छेदकतायाः साध्यतावच्छेदकत्ववृत्तित्वस्य पूर्वमुपपादितत्वान्निरवच्छिन्नघटत्वनिष्ठावच्छेदकताया एव साध्यतावच्छेदकत्वा-वृत्तित्वमिष्टन्तदपि किञ्चिद्वृत्तित्वावच्छेदकतात्वगतसमुदायत्वत्वेन प्रवेशे नोपपन्नं स्यात्। दण्डत्वनिष्ठावच्छेदकताया इव तस्या अपि साध्यतावच्छेदकवृत्तित्वमेव स्यादिति भावः।[१३५]

**तत्त्वालोकः— एवमवच्छिन्नत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यतावच्छेदकत्ववृत्तिधर्मावच्छिन्नावच्छेद-कत्वानिरूपितत्वम्प्रतियोगिताविशेषणमुभयस्थलसाधारणमत्रापि अवच्छेद-कत्व एव निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन वृत्तित्वम्प्रमेयावच्छिन्नावच्छेदकत्वकसाध्यतास्थलेऽव्याप्तिवारणायोपादेयम्।**

**न च महानसीयवह्नित्ववतो विलक्षणप्रकारितासम्बन्धेन साध्यतायां महानसीयवह्निविषयकज्ञानमहानसीयवह्नित्वावच्छिन्नविषयकज्ञानान्यतरत्वेऽ-तिव्याप्तिः, वह्नित्वत्वस्य महानसीयत्वनिष्ठावच्छेदकतायां महानसीयत्वत्वस्य**

वह्नित्वनिष्ठावच्छेदकतायाम्वृत्तित्वादिति वाच्यम्, साध्यतावृत्तित्वस्यैव स्वनिरूपितावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनावच्छेदकत्वे विवक्षितत्वात्।

अत्रोभयस्थलसाधारणैकलक्षणद्वयेऽपि स्ववृत्तिभेदीयदण्डावच्छिन्नप्रतियोगितासम्बन्धेन घटसाध्यकदण्डित्वे सद्धेतौ दण्डावच्छिन्नाभावस्यैव लक्षणघटकतया प्रतिपन्नतया तदीयप्रतियोगितायामुक्तविशेषणविरहादव्याप्तिरिति केषाञ्चित्प्रलापोऽग्राह्यः, दण्डिनिष्ठतद्व्यक्तित्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव लक्षणघटकत्वात्।

यदि कथञ्चिद् यत्र सद्धेतौ सावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव लक्षणघटकत्वन्नान्यस्येत्येतादृशस्थले प्रसिद्धिर्भविष्यति, भवतान्तदा यत्र साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव सद्धेतौ लक्षणघटकत्वन्तादृशस्थलप्रसिद्धिः किन्न भविष्यत्यस्माकमिति तादृशस्थलकल्पनाद् उभाभ्यामप्युपरन्तव्यमेवेति चेद्, मैवम्, प्रागेव लक्षणैक्यस्य दूषितत्वादिति।[१३६]

*प्रकाशः—* निरवच्छिन्नसावच्छिन्नसाध्यतावच्छेदकस्थलद्वयसाधारणमपरप्रकारकं प्रतियोगिताविशेषणं दर्शयितुम् 'एवमवच्छिन्ने'त्याद्युपरिनिर्दिष्टतत्त्वालोकस्योपक्रमः।

वह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्वविशिष्टजातित्वावच्छिन्नाभावप्रतियोगितावारणाय तथा जातिमद्वान् घटत्वादित्यत्र पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगितायाश्च वारणाय अवच्छिन्नत्वसम्बन्धावच्छिन्नस्व(साध्यतावच्छेदकत्ववृत्तित्वेन विवक्षितधर्म)निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यतावच्छेदकत्ववृत्तिर्यो धर्मस्तादृशधर्मावच्छिन्ना या अवच्छेदकता, तया अवच्छेदकतया अनिरूपित्वमर्थात्तादृशावच्छेदकतानिरूपितत्वाभावो लक्षणघटकप्रतियोगिताविशेषणत्वेन निवेश्यः। वह्निमान् धूमादित्यत्र वह्नित्वनिष्ठायाः साध्यतावच्छेदकताया किञ्चिद्धर्मावच्छिन्नत्वविरहेण न कोऽपि धर्मस्तत्रावच्छिन्नत्वसम्बन्धेन तिष्ठतीत्यतस्तत्र महानसीयवह्निवृत्तित्वजातित्वस्यावच्छिन्नत्वसम्बन्धेन वृत्तित्वविरहात्तादृशधर्मवद्भेदस्य तत्र सत्त्वादवच्छिन्नत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन महानसीयवह्निवृत्तित्वजातित्वधर्मस्य साध्यतावच्छेदकत्वे सत्त्वात्तादृशधर्मावच्छिन्नावच्छेदकतानिरूपितत्वस्यैवोक्ताभावीयप्रतियोगितायां सत्त्वात्तदनिरूपितत्वविरहात्तस्या अपरिग्रहाद् घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताया घटो

नास्तीति प्रतीतिसिद्धाभावीयायास्तादृशघटत्वत्वादिधर्मावच्छिन्नावच्छेदकता-निरूपितत्वविरहात्परिग्रहः, जातिमद्वान् घटत्वादित्यत्र जातित्वमात्रावच्छिन्ने जातिनिष्ठे साध्यतावच्छेदकत्वे पटसमवेतत्ववैशिष्ट्यावच्छिन्नत्वविरहेण पटसमवेतत्व-वैशिष्ट्यात्मकधर्मस्य विवक्षितसम्बन्धेन साध्यतावच्छेदकत्ववृत्तितया तादृशधर्मा-वच्छिन्नावच्छेदकत्वनिरूपितत्वस्य उक्तापादकाभावीयप्रतियोगितायां सत्त्वेन तादृशा-वच्छेदकत्वानिरूपितत्वविरहादपरिग्रहेणापत्तेरभावात् पटत्वाद्यभावीयप्रतियोगिताया-स्तादृशत्वेन तत्र तादृशप्रतियोगिताप्रसिद्धिसम्भवात्।

अत्रेदमुच्यते यत्पूर्वोक्तप्रथमप्रकार इवात्रापि द्वितीये प्रकारे प्रमेयवद्वान् वाच्यत्वादित्यत्र प्रमेयसाध्यतावच्छेदकतावच्छेदकस्थले सर्वस्यैव धर्मस्य प्रमेया-न्तर्गतत्वेनावच्छिन्नत्वसम्बन्धेन साध्यतावच्छेदकत्वे वृत्तित्वसत्त्वादवच्छिन्नत्व-सम्बन्धेन स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यतावच्छेदकत्व-वृत्तिधर्माप्रसिद्ध्या अव्याप्तिः प्रसज्येत। अतोऽत्रापि पूर्ववदेव संशोधनं कार्य्यमर्थाद-वच्छिन्नत्वसम्बन्धघटितोक्तसम्बन्धेन धर्मे साध्यतावच्छेदकत्ववृत्तित्वमनिवेश्य निरूपितत्वसम्बन्धावच्छिन्नस्व(अवच्छेदकत्व)निष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेना-वच्छेदकत्वे एव साध्यतावच्छेदकत्ववृत्तित्वमुपादेयम्। एवंसति पूर्ववदेवात्रापि नोक्त-दोषसम्भावना, प्रमेयत्वावच्छिन्नाया एव प्रमेयनिष्ठावच्छेदकताया निरूपितत्वसम्बन्धेन साध्यतावच्छेदकत्वे सत्त्वेन घटत्वादिमदभावीयघटत्वत्वाद्यवच्छिन्नघटत्वादिनिष्ठा-वच्छेदकताया निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन साध्यतावच्छेदकत्ववृत्तित्वसम्भवात्।

अनन्तरमस्मिन् द्वितीये प्रकारे तत्रातिव्याप्तिमुपस्थापयति यत्र महानसीयवह्नि-त्ववतो विलक्षणप्रकारितासम्बन्धेन साध्यता महानसीयवह्निविषयकज्ञानमहानसीय-वह्नित्वविषयकज्ञानान्यतरत्वस्य हेतुता। अत्र साध्यतावच्छेदकसम्बन्धतया विलक्षण-प्रकारिताया निर्देशः, विलक्षणप्रकारिताऽत्र साध्यविषयकज्ञाननिष्ठा तादृशी विषयिता, यादृशविषयितानिरूपकवह्निनिष्ठविशेष्यत्वाख्यविषयतानिरूपिका महानसीयत्वनिष्ठा वह्नित्वनिष्ठा च प्रकारताख्या विषयता सावच्छिन्ना अर्थात् क्रमशः महानसीयत्वत्वेन वह्नित्वत्वेन च अवच्छिन्ना भवति, उक्तज्ञानान्यतरत्वहेतोस्तत्र स्वसाध्यव्यभिचारिता च हेत्वधिकरणं महानसीयवह्निविषयकज्ञानमादाय तत्र महानसीयवह्नित्ववत उक्त-विलक्षणप्रकारितासम्बन्धेन विरहात्।

अत्रोक्तद्वितीये प्रकारेऽतिव्याप्तिश्च वह्नित्वत्वधर्मस्य अवच्छिन्नत्वसम्बन्धेन तथा वह्नित्वत्वावच्छिन्नावच्छेदकताया निरूपित्वसम्बन्धेन महानसीयत्वनिष्ठ-

साध्यतावच्छेदकतायां वृत्तित्वविरहेण अवच्छिन्नसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन वह्नित्वत्वधर्मस्य उक्तसाध्यतावच्छेदकतावृत्तित्वादेवं वह्नित्वत्वावच्छिन्नावच्छेदकताया निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन उक्तसाध्यतावच्छेदकतावृत्तित्वात्, एवं महानसीयत्वत्वधर्मस्य महानसीयत्वत्वावच्छिन्नावच्छेदकतायाश्च वह्नित्वनिष्ठसाध्यतावच्छेदकतायां वृत्तित्वेन साध्याभावीयप्रतियोगितायां तादृशधर्मावच्छिन्नावच्छेदकत्वनिरूपितत्वस्यैव सत्त्वेन तादृशधर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वविरहात्परिग्रहासम्भवात्प्रतियोगितान्तरमादाय साध्यतावच्छेदके तदनवच्छेदकत्वेनातिव्याप्तिः स्यादत उक्तसम्बन्धेनावच्छेदकतायाः साध्यतावच्छेदकत्ववृत्तित्वमनिवेश्य साध्यतावृत्तित्वमेवावच्छेदकतायाः स्वनिरूपितावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन विवक्षणीयमेवं सति उक्तस्थलातिव्याप्तिपरिहारसम्भवात्। उक्तस्थले वह्नित्वत्वावच्छिन्नाया महानसीयत्वत्वावच्छिन्नायाश्च अवच्छेदकतायाः स्वनिरूपितावच्छेदकतानिरूपितत्वसम्बन्धेन साध्यतायां वृत्तित्वेन तादृशसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यतायां वृत्तित्वाभावादतिव्याप्तेरसम्भवात्।

अत्र केचन प्रवदन्ति पूर्वदर्शिते प्रथमप्रकारके उभयस्थलसाधारणैकलक्षणे द्वितीयप्रकारके च अधुनोक्ते उभयस्थलसाधारणैकलक्षणे च अर्थात् स्वसामानाधिकरण्य-स्वसाजात्योभयसम्बन्धेन स्वविशिष्टनिरूपितत्वसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकत्वनिरूपितवृत्तित्वाभाववदवच्छेदकतया स्वसामानाधिकरण्य-स्वसाजात्योभयसम्बन्धेन विशिष्टावच्छेदकत्वानिरूपितावच्छेदकतानिरूपितत्वस्य लक्षणघटकप्रतियोगितायां निवेशपक्षे तथा स्वनिरूपितावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यतावृत्त्यवच्छेदकत्वानिरूपितत्वस्य लक्षणघटकप्रतियोगितायां निवेशपक्षे च उभयस्थलसाधारणैकलक्षणद्वये यत्र स्ववृत्तिभेदीयप्रतियोगितासम्बन्धेन घटस्य साध्यता दण्डित्वस्य च हेतुता, तत्र सद्धेतौ लक्षणघटकतया सम्भवद्दण्डाभावप्रतियोगितायामुक्तविशेषणविरहादव्याप्तिः स्यादिति।

अत्र अतो हेतोर्दण्डावच्छिन्नाभावो लक्षणघटकः स्यात्तदतिरिक्तस्य सर्वस्यैवाभावस्य प्रतियोगिनो हेत्वधिकरणे दण्डिनि स्ववृत्तिभेदीयदण्डावच्छिन्नप्रतियोगितासम्बन्धेन स्थितिर्भवति, ततश्च तदतिरिक्ताभावस्य प्रतियोगिसामानाधिकरण्यस्यैव सत्त्वेन प्रतियोगिवैयधिकरण्यासम्भवात्। तत्र लक्षणघटकतया प्रसिद्धदण्डावच्छिन्न-

प्रतियोगिताकाभावप्रतियोगितायामुक्तविशेषणविरहश्च घटत्वनिष्ठायां साध्यतावच्छेदकतायां दण्डत्वनिष्ठावच्छेदकतानिरूपितत्वविरहाद् घटनिष्ठायां साध्यतायां दण्डत्वनिष्ठावच्छेदकतात्मकस्वनिरूपितावच्छेदकतानिरूपितत्वविरहाच्च, इति तेषां केषाञ्चित् प्रलापमात्रमेव। वस्तुत उक्तसद्धेतुस्थले दण्डिनिष्ठतद्व्यक्तित्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावो लक्षणघटकः सम्भवत्येव, तदीयप्रतियोगिनः स्ववृत्तिभेदीयदण्डावच्छिन्नप्रतियोगितासम्बन्धेन हेत्वधिकरणे विरहेण तस्य प्रतियोगिव्यधिकरणत्वात् तदीयप्रतियोगितायामुक्तविशेषणस्य सत्त्वाच्च, तदीयप्रतियोगितायामुक्तविशेषणविद्यमानता च तस्या दण्डिनिष्ठतद्व्यक्तित्वनिष्ठनिरवच्छिन्नावच्छेदकताकत्वेन दण्डत्वावच्छिन्नावच्छेदकतानिरूपितत्वविरहात्।

अत्र तैः कैश्चिदेवमुच्येत चेद् यद् यत्र सद्धेतुविशेषस्थले सावच्छिन्नावच्छेदकताकप्रतियोगिताक एवाभावो लक्षणघटकतया प्रसिद्धः स्यान्न तु प्रकृत एव निरवच्छिन्नावच्छेदकताकप्रतियोगिताकस्तत्र तदीयप्रतियोगितायामुपपादितदिशा विवक्षितोक्तविशेषणस्य सत्त्वन्न स्यादिति। तदाऽस्माभिरपि उभयसाधारणैकलक्षणद्वयविधायिभिरेवं वक्तुं शक्येत एव यन्निरवच्छिन्नसावच्छिन्नसाध्यतावच्छेदकभेदेन विभिन्नव्याप्तिलक्षणपक्षेऽपि यत्र सद्धेतुविशेषस्थले लक्षणघटकाभावः साध्यतावच्छेदकतावच्छेदक-तदितरोभयावच्छिन्नावच्छेदकताकप्रतियोगिताक एव प्रसिद्ध्येत, तत्र त्वन्मतेऽपि निरवच्छिन्नसावच्छिन्नसाध्यतावच्छेदकभेदेन व्याप्तिभेदस्थितौ लक्षणघटकप्रतियोगितावच्छेदकतायां विवक्षितविशेषणविरहः स्यादेव। अतस्तादृशस्थलकल्पनातो युष्माभिरस्माभिश्चोभाभ्यामुपरन्तव्यमेवेति चेद्, उभयसाधारणलक्षणैक्यपक्षस्य पूर्वमेव[१] सदोषत्वस्योपपादितत्वाद्दर्शितस्यापि उभयस्थलसाधारणैकलक्षणद्वयस्योक्तदोषग्रस्तत्वेनानुपादेयत्वादिति भावः।[१३६]

तत्त्वालोकः – एतेन स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नसाध्यत्वाभाववद्रूपावृत्तित्वं प्रतियोगितायामुभयस्थलसाधारण्यायास्तु विशेषणम्, वृत्तिता च स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, अत्रोक्तसम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वे च प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्ना या उक्तसम्बन्धावच्छिन्नसाध्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वनिष्ठप्रतियोगिता, तन्निरूपका-

---

१. प्रकृतग्रन्थे खण्डसंख्या १३२, १३३

भावो विवक्षणीय इत्युक्तिरेकत्वादेः पर्य्याप्त्यनभ्युपगमेन निरस्तापि निरस्ता वेद्येति दिक्।

अत एव यत्किञ्चित्साध्याधिकरणनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकतानवच्छेदकधर्मावच्छिन्ना[1]वच्छेदकत्वानिरूपितत्वादिकमेकलक्षणसम्पादकविशेषणमपि प्रत्युक्तम्।[१३७]

*प्रकाशः* – अपरस्याप्युभयस्थलसाधारणैकलक्षणस्य सम्भवं तस्य पूर्वोक्त[2]-दोषयुक्तत्वेन सम्भवतोऽप्यपरस्योभयस्थलसाधारणैकलक्षणस्यानुपादेयत्वञ्च दर्शयितुम् 'एतेने'त्यादेरुपर्य्युक्ततत्त्वालोकस्योपक्रमः। लक्षणघटकप्रतियोगितायां वक्ष्यमाणविवक्षितसम्बन्धविशेषावच्छिन्नप्रतियोगिताकसाध्यत्वाभाववद्रूपावृत्तित्वे विशेषणे प्रदत्ते सति निरवच्छिन्नसावच्छिन्नसाध्यतावच्छेदककोभयस्थलसाधारणमेकलक्षणं व्याप्तेर्भवितुं शक्नोति, दीयमानप्रतियोगिताविशेषणघटकसाध्यत्वाभावस्य प्रतियोगितावच्छेदकसम्बन्धतया स्व (साध्यत्व) स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वम्, प्रतियोगिताविशेषणतया विवक्षितसाध्यत्वाभाववद्रूपावृत्तित्वघटकवृत्तिता च स्वावच्छेदकता(प्रतियोगितावच्छेदकता)वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन विवक्षिता।

वह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावीयप्रतियोगिताया उक्तसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यत्वाभाववति महानसीयवह्निवृत्तित्वजातित्वोभयगतद्वित्वात्मके रूपे स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तित्वस्यैव सत्त्वेन तादृशरूपावृत्तित्वविरहान्न तदादायाव्याप्तिसम्भवः। एवं जातिमद्वान् घटत्वादित्यत्र पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगिताया अपरिग्रहः, साध्यत्वाभाववति पटसमवेतत्ववैशिष्ट्यजातित्वगते द्वित्वात्मकरूपे स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तित्वस्यैव सत्त्वेन विवक्षितस्य तादृशरूपावृत्तित्वस्य विरहात्। वह्निमान् धूमादित्यत्र धूमवान् वह्नेरित्यत्र च क्रमशो घटाभावीयप्रतियोगिताया धूमाभावीयप्रतियोगितायाश्च लक्षणघटकाभावीयायाः परिग्रहे न बाधः, तत्र साध्यतावच्छेदकतावच्छेदकताया विरहेण प्रतियोगितावच्छेदकतावच्छेदकतायाश्च विरहेण विवक्षितस्य साध्यत्वाभावप्रतियोगितावच्छेदकसम्बन्धस्य साध्यत्वस्य व्यधिकरण-

---

१. श्रीजगदीशशर्मसम्पादित-तत्त्वालोकमूले 'धर्मानवच्छिन्ना' इति पाठान्तरम्।

२. प्रकृतग्रन्थे १३२, १३३ खण्डोक्त-

सम्बन्धेन एवं विवक्षितस्य वृत्तित्वाभावप्रतियोगितावच्छेदकसम्बन्धस्य उक्ताभावप्रतियोगितयोर्व्यधिकरणसम्बन्धत्वेन तादृशरूपावृत्तित्वस्य तत्र प्रतियोगितयोः सुलभत्वात्।

वृत्तिताया अनियामकसम्बन्धस्य प्रतियोगितावच्छेदकसम्बन्धत्वास्वीकारपक्षे साध्यत्वाभावस्य प्रतियोगितावच्छेदकसम्बन्धो वृत्तिताया अनियामकत्वात् स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तमनुयोगितावच्छेदकत्वं यदि न भवितुं शक्नोतीत्युच्येत, तदा तत्र प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्ना या स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नसाध्यत्वनिष्ठप्रकारतानिरूपिता विशेष्यत्वनिष्ठा प्रतियोगिता, तादृशप्रतियोगितानिरूपकाभाव एव विवक्षणीयः।

यत्र वह्नित्वादिमतः साध्यतास्थले साध्यतावच्छेदकतावच्छेदकता प्रसिद्ध्यति स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यता वह्नित्वादिगतैकत्वादौ वस्तुतस्तिष्ठेत्, तत्रोक्तसम्बन्धावच्छिन्नसाध्यत्वनिष्ठप्रकारतानिरूपितप्रमीय(यथार्थज्ञानीय)विशेष्यता स्वरूपसम्बन्धेन तिष्ठेत्। उक्तसम्बन्धेन साध्यत्वानधिकरणे तु एकत्वद्वित्वादौ रूपे उक्तसम्बन्धावच्छिन्नसाध्यत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिष्ठप्रतियोगितानिरूपकाभाव एव यथार्थज्ञानीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्तिष्ठेत्। अत्र प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धस्य वृत्तिनियामकस्यैव साध्यत्वनिष्ठप्रकारतानिरूपितविशेष्यनिष्ठप्रतियोगितानिरूपकाभावप्रतियोगितावच्छेदकसम्बन्धतया प्रवेशाद्वृत्त्यनियामकस्य प्रतियोगितावचच्छेदकसम्बन्धत्वविरहेऽपि न क्षतिः। उक्तरीतिरियमेकत्वादेः पर्य्याप्त्यभ्युपगमाभावेन खण्डितैवास्ति। अथापि अत्र पूर्वोक्त[१]दोषस्यापि सत्त्वादपि निरस्ततरा वेदितव्या।

एवमुभयसाधारणैकलक्षणसम्पादकं लक्षणघटकप्रतियोगिताविशेषणं यद्यपि अपरमपरं सम्भवति यत्किञ्चित्साध्याधिकरणनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकतानवच्छेदकधर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वादिकम्, वह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगिताया यत्किञ्चित्साध्याधिकरणत्वेन महानसेतरपर्वतादिरूपसाध्याधिकरणमादाय तन्निरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकतानवच्छेदकमहानसीयवह्निवृत्तित्वधर्मावच्छिन्नावच्छेदकतानिरूपितत्वस्यैव सत्त्वेन तादृशधर्मावच्छिन्नावच्छेदकत्वा-

---

१. प्रकृतग्रन्थे १३२, १३३ खण्डोक्त-

निरूपितत्वविरहात्तत्परिग्रहासम्भवात्, एवमेव जातिमान् घटत्वादित्यत्रापि पट-समवेतत्वविशिष्टजातिमदभावप्रतियोगितायास्तादृशत्वविरहात्परिग्रहो न स्यात्, किन्तु पूर्वोक्त[१]दोषग्रस्तत्वात् सर्वमेव सम्भवदुभयस्थलसाधारणैकलक्षणसम्पाःकं प्रतियोगिताविशेषणं प्रत्युक्तं वेदितव्यमित्याशयः।[१३७]

तत्त्वालोकः – "महानसीयवह्निवृत्तिजाती"त्यादि[२]। 'वह्नि'पदमत्र महानसीयपरिचयार्थमेवोक्तम्, न त्वभावघटकमप्रयोजकत्वात्, तदभाव-प्रतियोगितायां साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपितत्वसाध्यता-वच्छेदकताविशिष्टान्यजातित्वावच्छिन्नावच्छेदकताकत्वद्वयसत्त्वेन तस्य तत एव वारणसम्भवाच्च।

यत्त्वत्र साध्यतावच्छेदकनिष्ठसाक्षादवच्छेदकतानिरूपितत्वमेवोभया-भावघटकं वाच्यमन्यथा नित्यज्ञानस्य विषयितया तादात्म्यविषयित्वान्यतर-सम्बन्धेन वा साध्यतायान्नित्यज्ञानत्वे नित्यज्ञानान्यत्वविशिष्टघटाभावमात्रस्य लक्षणघटकतया तत्प्रतियोगितायां साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपित-त्वस्य परम्परया सत्त्वेन तदभावस्य लक्षणाघटकतयाऽव्याप्तेः। न च तदुपादानेऽपि भेदविशिष्टघटस्य विषयितया साध्यतायान्नित्यज्ञानत्वे सद्धेतावव्याप्तिः, साध्यतावच्छेदकभेदस्य साक्षात्प्रतियोगितावच्छेदकत्वादिति वाच्यम्, साध्यतावच्छेदकताव्यापकावच्छेदकतायास्साक्षान्निरूपितत्वस्योपादेयत्वात्। एतस्य व्याप्यवृत्तिसाध्यकस्थलत्वेऽपि कालो महाकालान्यत्ववान् महाकाल-वान् वा महाकालत्वादित्यस्याव्याप्यवृत्तिसाध्यकत्वेन महाकालान्यत्व-विशिष्टघटाद्यभावमात्रस्य तत्र लक्षणघटकतया तत्प्रतियोगितायामुभयस्यैव सत्त्वादव्याप्तिवारणायैव साक्षान्निरूपितत्वमुपादेयम् तथा चोक्ताभावस्थले वह्नित्वस्यापरिचायकत्वेऽपि न क्षतिरिति।

तदेतन्नित्यज्ञानान्यत्वविशिष्टघटाद्यभावस्य नित्यज्ञानादावसत्त्वपक्षे न युज्यते इति परिचायकत्वमेवास्थेयम्।[१३८]

*प्रकाशः* – शुद्धसाध्यतावच्छेदकस्थले लक्षणघटकावच्छेदकत्वे निरवच्छिन्न-त्वविशेषणमावश्यकमन्यथा वह्निमान् धूमादित्यत्र शुद्धसाध्यतावच्छेदकस्थले महानसीयवह्निवृत्तित्व[विशिष्ट]जातिमदभावमादायाव्याप्तिः स्यादिति तर्कालङ्कारोक्तिं

---

१. प्रकृतग्रन्थे १३२, १३३ खण्डोक्त-

२. 'महानसीयवह्निवृत्तित्वविशिष्टजाती'त्यादिपाठान्तरमुपलभ्यतेऽधुना।

– तत्रैव, जागदीशीमूलम्, पृ. ४

परिगृह्य तत्त्वालोककृता उच्यते यदत्र महानसीयवह्निवृत्तित्व[विशिष्ट]जातिमान् नास्तीत्यत्र 'वह्नि'पदं महानसीयपरिचयार्थमेव, अर्थाद् 'महानसीय'पदेन विवक्षितार्थस्य परिचयार्थमेवोक्तन्न तु वह्नेरभावघटकत्वबोधनार्थमपि, अप्रयोजकत्वात्, अकिञ्चित्करत्वाद् वह्नेरभावघटकत्वप्रयोजनशून्यत्वाद् वह्न्यघटितमेव महानसीयवृत्तित्वविशिष्टजातिमदभावमादाय तत्राव्याप्तिसम्भवाद् वह्नित्वात्मकसाध्यतावच्छेदकस्य महानसीयवृत्तित्वविशिष्टजातित्वेनोक्ताभावप्रतियोगितावच्छेदकत्वात्।

तत्र 'वह्नि'पदस्य महानसीयपरिचायकतामात्रत्वे अर्थाद्वह्नेरभावाघटकत्वेऽपरं कारणं 'तदभावप्रतियोगितायामि'त्यादिना 'वारणसम्भवाच्चे'त्यन्तेन दर्श्यते। तत्र वह्नेरभावघटकत्वं यदि स्यात्तदा तत्र महानसीयवह्न्यभावप्रतियोगितावारणार्थमाश्रितोपायेनैव लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्व - स्वसामानाधिकरण्य - स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसाजात्यैः सम्बन्धैः साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वो[भया]भाववत्त्वरूपविशेषणात्मकेन एवं महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकताविशिष्टान्यजातित्वावच्छिन्नावच्छेदकतानिरूपितत्वयोर्द्वयोः सत्त्वेन तादृशप्रतियोगिताकस्य महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावस्य आपादकस्य वारणसम्भवात्तस्य शुद्धसाध्यतावच्छेदकस्थले लक्षणघटकावच्छेदकत्वे निरवच्छिन्नत्वनिवेशप्रयोजकतयोपन्यासौचित्यभङ्गप्रसङ्गः स्यादिति।

अत्र 'यत्तु' मतमिदमस्ति यत् प्रतियोगिताविशेषणतया विवक्षिते उक्तोभयाभावे प्रतियोगितया प्रविष्टं साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वं साक्षादेव विवक्षितन्न तु परम्परयापि। तत्र परम्परयापि साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वस्य प्रवेशे सति यत्र नित्यज्ञानस्य विषयितासम्बन्धेन तादात्म्यविषयित्वान्यतरसम्बन्धेन वा साध्यता, नित्यज्ञानत्वस्य च हेतुता, तत्र सद्धेतावव्याप्तिः स्यात्। तत्र हेत्वधिकरणे नित्यज्ञाने विषयितात्मकेन तादात्म्यविषयित्वान्यतरात्मकेन वा साध्यतावच्छेदकसम्बन्धेन शुद्धघटपटाद्यभावप्रतियोगिनः सत्त्वेन शुद्धघटाद्यभावस्य कस्यापि प्रतियोगिव्यधिकरणत्वासम्भवेन लक्षणघटकत्वासम्भवान्नित्यज्ञानान्यत्वविशिष्टघटाद्यभाव एव लक्षणघटको भवितुमर्हस्तदीयप्रतियोगितायां नित्यज्ञानत्वरूपसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वयोर्द्वयोः सत्त्वेन तत्प्रतियोगिताकाभावस्य परिग्रहासम्भवात्तादृशप्रतियोगिताकाभावाप्रसिद्ध्याऽव्याप्तिः स्यात्। साक्षादेव साध्यतावच्छेदकनिष्ठावच्छेद-

कतानिरूपितत्वस्योक्तोभयाभावघटकत्वे तु नित्यज्ञानान्यत्वविशिष्टघटाद्यभाव-प्रतियोगितायां नित्यज्ञानत्वात्मकसाध्यतावच्छेदकनिष्ठावच्छेदकतया साक्षान्निरूपित-त्वविरहान्नाव्याप्तिरिति।

अत्रेयं शङ्का जागर्ति यत् साध्यतावच्छेदकनिष्ठावच्छेदकतया साक्षान्निरूपित-त्वस्यैव तत्र प्रवेशेऽपि, यत्र भेदविशिष्टघटस्य विषयितासम्बन्धेन साध्यता नित्यज्ञानत्वस्य च हेतुता, तत्र सद्धेतावव्याप्तिः स्यादेव, यतो हि तत्रापि हेत्वधिकरणे नित्यज्ञाने विषयितात्मकसाध्यतावच्छेदकसम्बन्धेन शुद्धस्य सर्वस्यैव घटादेरभावस्य प्रतियोगिनः सत्त्वेन प्रतियोगिव्यधिकरणत्वासम्भवान्नित्यज्ञानान्यत्वविशिष्टपटाद्यभाव एव लक्षणघटको भवेत्, तदीयप्रतियोगितायां भेदात्मकसाध्यतावच्छेदकनिष्ठावच्छेद-कतया साक्षान्निरूपितत्वघटितोभयस्यैव सत्त्वेन परिग्रहासम्भवाद्, नित्यज्ञानान्यत्व-विशिष्टपटाभावप्रतियोगितायाः पटविशेषकं पटत्वं यथा साक्षादवच्छेदकं तथा पटविशेषकं नित्यज्ञानान्यत्वमपि साक्षादेवावच्छेदकमन्यत्वञ्च भेदानतिरिक्तं यः खलु भेदविशिष्टसाध्यकस्थले साध्यतावच्छेदक इति।

अत्र जागरिताया उक्तशङ्कायाः समाधानं साध्यतावच्छेदकताव्यापका-वच्छेदकतया साक्षान्निरूपितत्वमेव साध्यतावच्छेदकनिष्ठावच्छेदकतया साक्षान्नि-रूपितत्वस्थाने प्रवेश्य विधीयते।

नित्यज्ञानान्यत्वविशिष्टपटाद्यभावीयप्रतियोगितायां साध्यतावच्छेदकता-व्यापकावच्छेदकतया साक्षान्निरूपितत्वविरहादुक्तोभयाभावोपपत्तिः।

तत्र साध्यतावच्छेदकताव्यापकावच्छेदकतासाक्षान्निरूपितत्वविरहश्च भेदविशिष्टघटसाध्यकस्थले साध्यतावच्छेदकताया भेदे घटत्वे च सत्त्वेन तत्र भेदनिष्ठसाध्यतावच्छेदकतया साक्षान्निरूपितत्वस्य सत्त्वेऽपि घटत्वनिष्ठसाध्यतावच्छे-दकतासाक्षान्निरूपितत्वविरहात्।

अत्र पुनरिदमुच्यते यद् विषयितया तादात्म्यविषयित्वान्यतरसम्बन्धेन नित्यज्ञानसाध्यकं नित्यज्ञानत्वहेतुकमुक्तं प्रथमस्थलं तथा विषयितया भेदविशिष्टघट-साध्यकं नित्यज्ञानत्वहेतुकमुक्तद्वितीयस्थलञ्च यत्र साध्यतावच्छेदकनिष्ठावच्छेदक-तासाक्षान्निरूपितत्वनिवेशस्य साध्यतावच्छेदकताव्यापकावच्छेदकतासाक्षान्निरूपित-त्वनिवेशस्य [च] आवश्यकता दर्शिता, तत् स्थलद्वयं व्याप्यवृत्तिसाध्यकस्थलमेव, प्रतियोगिवैयधिकरण्यविशेषणन्तु अव्याप्यवृत्तिसाध्यकस्थलीयव्याप्तिलक्षणघटकमेव, न तु व्याप्यवृत्तिसाध्यकस्थलीयव्याप्तिलक्षणघटकमपि, अत उक्तस्थलद्वये साध्यता-

वच्छेदकनिष्ठावच्छेदकतायाः साध्यतावच्छेदकताव्यापकावच्छेदकताया वा साक्षान्निरूपितत्वनिवेशावश्यकाप्रदर्शनमनुचितमिति।

तर्हि अव्याप्यवृत्तिसाध्यके एवं कालो महाकालान्यत्ववान् महाकालवान् वा महाकालत्वादित्यत्र सद्धेतौ अव्याप्तिवारणाय साध्यतावच्छेदकनिष्ठावच्छेदकता-साक्षान्निरूपितत्वनिवेशस्य आवश्यकतासम्भवात्, खण्डकालावच्छेदेन कालेऽपि महाकालत्वाधिकरणे महाकालभेदस्य कालिकसम्बन्धेन सत्त्वेनोक्तसाध्यकोक्तहेतोः सद्धेतुता, तत्र हेत्वधिकरणे महाकाले सर्वस्यैव घटपटादिवस्तुनः साध्यतावच्छेदक-सम्बन्धेन सत्त्वेन शुद्धघटपटाद्यभावस्य प्रतियोगिव्यधिकरणत्वासम्भवात्, महाकाला-न्यत्वविशिष्टघटाद्यभाव एव लक्षणघटकतया प्रसिद्ध्यति, तदीयप्रतियोगितायां साध्यतावच्छेदकीभूतमहाकाल-महाकालत्वनिष्ठावच्छेदकतया परम्परानिरूपितत्वस्य सत्त्वेन तद्धटितोक्तोभयस्यैव सत्त्वात्तादृशप्रतियोगिताकाभावस्य परिग्रहासम्भवाद-प्रसिद्ध्या अव्याप्तिः स्यात्।

साक्षान्निरूपितत्वस्य तत्र निवेशे तु महाकालान्यत्वविशिष्टघटाभावप्रतियोगि-तायां महाकालात्मकसाध्यतावच्छेदकनिष्ठया महाकालत्वरूपसाध्यतावच्छेदकनिष्ठया वा अवच्छेदकतया साक्षान्निरूपितत्वविरहान्नानुपपत्तिः।

एवं स्थितौ, अर्थादुक्तोभयाभावप्रतियोगिघटकतया साध्यतावच्छेदकनिष्ठा-वच्छेदकतासाक्षान्निरूपितत्वस्य सत्त्वे महानसीयवह्निवृत्तित्वविशिष्टजातिमद-भावीयप्रतियोगितायां साध्यतावच्छेदकीभूतवह्नित्वनिष्ठावच्छेदकतया साक्षान्निरूपित-त्वविरहादुक्तोभयाभावसत्त्वसम्भवात्तत्र 'वह्नि'पदस्य परिचायकत्वविरहेऽपि अर्थाद-भावघटकत्वेऽपि न क्षतिः।

किन्तूक्तोभयाभावघटकतया साध्यतावच्छेदकत्वनिष्ठावच्छेदकतासाक्षान्निरू-पितत्वनिवेशविषयकमुक्तमतम्, नित्यज्ञानान्यत्वविशिष्टघटाभावस्य नित्यज्ञाने एवं महाकालान्यत्वविशिष्टघटाभावस्य महाकाले सत्त्वास्वीकारपक्षे, न युज्यते। अतो 'वह्नि'पदस्य तत्र परिचायकत्वमेवास्थेयम्, महाकालान्यत्वविशिष्टघटाभावस्य महाकालेऽसत्ता च 'इदानीं महाकालान्यत्वविशिष्टो घटः, कालोऽयं महाकालान्यत्व-विशिष्टघटवान् इत्यादिप्रतीत्या महाकालस्यापि तत्तत्कालोपाध्यवच्छेदेन महाकाला-न्यत्वविशिष्टघटवत्त्वादि'ति[१] जगदीशतर्कालङ्कारोक्तितः सुप्रतीतैवेति भावः।[१३८]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ३८

तत्त्वालोकः – "जातिमद्वान् घटत्वादित्यादावि"ति[1]। अत्र समवायेन जातिविशिष्टस्य समवायेन साध्यत्वम्बोध्यन्न तु तादात्म्येन, तथासति विशिष्ट-घटाद्यभावप्रतियोगितायामुभयानवच्छिन्नत्वविरहाद् घटाभावस्य प्रतियोगि-वैयधिकरण्यविरहाद् घटत्वे एवानवच्छेदकत्वसत्त्वेनाव्याप्तिर्न्न स्यात्।

"पटसमवेतत्वविशिष्टे"ति[2]। वैशिष्ट्यञ्च सामानाधिकरण्यरूपन्न तु स्वरूपसम्बन्धः, तथासति रूपत्वादीनामनवच्छेदकत्वापातात्। न च सामाना-धिकरण्यरूपवैशिष्ट्योपादाने घटपटगतद्वित्वसंयोगाद्यन्तर्भावेण द्वित्वत्व-संयोगत्वादीनां पटसमवेतत्वविशिष्टतया तदवच्छिन्नस्य हेत्वधिकरणे सत्त्वेन कथमुक्ताभावस्य प्रतियोगिवैयधिकरण्यमिति वाच्यम्, यद्घटव्यक्तौ पटेन सह संयोगो न जातः पटगतद्वित्वादिकञ्च (न जातम्)[3], तद्घटव्यक्तावुक्ताभावस्य प्रतियोगिवैयधिकरण्यसम्भवात्, पटसमवेतत्वपदस्य घटासमवेतत्वार्थकत्वा-द्वा। सामानाधिकरण्यमेवात्रापि वैशिष्ट्यमिति।

"तत्तोपलक्षिततदण्डव्यक्तिमात्रस्यैवे"ति[4]। 'मात्र'पदेन दण्डत्वस्या-वच्छेदकत्वव्यवच्छेदः, 'उपलक्षिते'त्यन्तेन तत्तायाः, 'व्यक्ती'त्युल्लेखात्तद्व्यक्तेः स्वरूपतोऽवच्छेदकत्वपक्षव्यक्तिस्तेनोक्तग्रन्थस्य नासङ्गतिरन्यथा दण्डत्व-स्यातिप्रसङ्गाद्यनापादकत्वविरहाज्जात्यखण्डोपाध्यतिरिक्तस्य स्वरूपतोऽवच्छे-दकत्वासम्भवात्तत्ताया अवच्छेदकत्वम्वाच्यम्, तथासति तदवच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वविरहादसङ्गतिः स्यादिति।

ननु लाघवात्साक्षात्सम्बन्धेन दण्डत्वस्यावच्छेदकत्वम्वाच्यमित्यत आह "हेतुमती"ति[5]। तथा च व्यभिचारेण लाघवमकिञ्चित्करमिति भावः।

"साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाया" इति[6]। अथ यद्यपि विषयितया रूपत्ववदभावस्य साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्व-निवेशेन यथाश्रुतेनैव वारणं सम्भवति, तथापि विषयित्वसमवायान्यतर-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४
२. तत्रैव, जागदीशीमूलम्, पृ. ४
३. कोष्ठकान्तर्गतः मूलपुस्तके नास्ति।
४. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४
५. तत्रैव, जागदीशीमूलम्, पृ. ४
६. तत्रैव, जागदीशीमूलम्, पृ. ४

सम्बन्धेन रूपत्वविशिष्टसाध्यकात्मघटान्यतरत्वे सद्धेतौ समवायेन रूपत्ववद-भावस्य विषयितया रूपत्ववदभावस्य च वारणाय साध्यतावच्छेदकता-निरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वस्य विषयितात्वसमवाय-त्वान्यतरवत्संसर्गेण रूपत्वविशिष्टसाध्यके चोक्ताभावद्वयस्य वारणाय साध्य-तावच्छेदकतानिरूपितसंसर्गतानिरूपितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-नुयोगितावच्छेदकत्ववद्रूपवृत्तिसंसर्गताकत्वस्य गुणवान्पृथिवीत्वादित्यत्र विषयित्वसमवायोभयसम्बन्धेन गुणत्वविशिष्टाभावमादायाव्याप्तिवारणाय स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तित्व-स्यावश्यमेव विवक्षा कार्या। एकत्वादेः पर्य्याप्त्यनभ्युपगमपक्षे च साध्यता-वच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वसमनियतसंसर्गताकत्वम्विवक्षणी-यम्। सामनैयत्यघटकसंसर्गतायास्संसर्गश्च स्वनिरूपितावच्छेदकतावत्त्वम्, तथा च रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टसाध्यके तादृशावच्छेदक-ताकप्रतियोगिताकतादृशाभावाप्रसिद्ध्याऽव्याप्तिरिति चेत्।[१३९]

*प्रकाशः* – विशिष्टसाध्यतावच्छेदकस्थले लक्षणघटकावच्छेदकत्वे साध्यता-वच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नत्वनिवेशविरहे जगदीशतर्कालङ्कारेण 'जातिमद्वान् घटत्वादि'[१]त्यत्राव्याप्तिः पटसमवेतत्वजातिमदभावमादायोक्ता, तत्र तत्त्वालोककृता स्पष्टीक्रियते यदत्राव्याप्तिस्थले समवायेन जातिविशिष्टस्य समवायेन साध्यता अभिप्रेता, न तु समवायेन जातिविशिष्टस्य तादात्म्येन साध्यता अभिमता, घटत्वहेत्वधिकरणे घटे समवायेन जातिमतो गुणस्य रूपस्पर्शाद्यात्मकस्य सत्ता भवत्येव।

यद्यपि समवायेन जातिविशिष्टस्य घटस्य तादात्म्येन साध्यत्वेऽपि घटत्वं सद्धेतुरेव, किन्तु समवायेन जातिविशिष्टस्य तादात्म्येन साध्यत्वे तत्राव्याप्त्यभिधानं सङ्गतं न स्यात्, समवायेन जातिविशिष्टस्य घटस्य तादात्म्येन हेत्वधिकरणे घटे सत्त्वेन तत्प्रतियोगिकाभावस्य प्रतियोगिवैयधिकरण्यविरहात्, तत्तादिविशिष्टघटस्य हेत्वधिकरणे अपरस्मिन् घटे सत्त्वविरहेण विशिष्टतादृशघटाभावप्रतियोगितायां साध्यतावच्छेदकघटत्व-तदितरतत्ताद्युभयावच्छिन्नत्वस्यैवसाध्यतावच्छेदक-तदितरो-भयानवच्छिन्नप्रतियोगिताकत्वरूपापेक्षिप्रतियोगिव्यधिकरणत्वासम्भवाद् घटत्वे प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वस्यैव सत्त्वे-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

नाव्याप्तिर्न स्यात्। समवायेन जातिविशिष्टस्य समवायेन साध्यतायान्तु घटे हेत्वधिकरणे समवायेन जातिमतः पटसमवेतत्वविशिष्टस्य पटीयरूपादेः समवायसम्बन्धावच्छिन्न-प्रतियोगिताकाभावस्य प्रतियोगिव्यधिकरणस्य सत्त्वेन जात्यात्मकसाध्यतावच्छेदके तादृशाभावप्रतियोगितावच्छेदकत्वस्यैव सत्त्वेन भवेदेवाव्याप्तिः।

अत्रेदमुच्यते यदत्र उक्तस्यापादकस्य अभावस्य प्रतियोगितावच्छेदकीभूतं पटसमवेतत्ववैशिष्ट्यं सामानाधिकरण्यरूपमेव विवक्षितन्न तु स्वरूपसम्बन्धात्मकम्, रूपत्वादिजातेः पटीयरूपादौ सत्त्वेन तत्र पटसमवेतत्वस्य सत्त्वेन सामानाधिकरण्यरूप-वैशिष्ट्यविवक्षणे रूपत्वादिजातीनां साध्यतावच्छेदकरूपाणां तादृशाभावप्रतियोगिता-काभावप्रतियोगितावच्छेदकत्वमुपपद्यते। स्वरूपात्मकसम्बन्धस्य वैशिष्ट्यत्वे तु रूपत्वादिजातौ पटसमवेतत्वस्य स्वरूपसम्बन्धेन सत्त्वविरहाद्रूपत्वादीनां तादृशाभाव-प्रतियोगितावच्छेदकत्वन्न स्यात्।

यद्यपि सामानाधिकरण्यरूपवैशिष्ट्यस्य विवक्षितत्वे पटसमवेतत्वविशिष्ट-जातिमदभावो घटे प्रतियोगिव्यधिकरणो न स्यात्, घटपटोभयगतद्वित्व,-संयोगगतद्वित्वत्व,-संयोगत्वादिजातीनां तादृशद्वित्वसंयोगादिमादाय पटसमवेतत्व-सामानाधिकरण्यरूपपटसमवेतत्वविशिष्टतया तदवच्छिन्नस्य द्वित्वसंयोगादेः घटे सत्त्वात्, तथापि यद्धटव्यक्तौ पटेन सह संयोगो न जातस्तथा पटगतद्वित्वादिकञ्च नोत्पन्नं तद्धटव्यक्तौ तादृशाभावस्य प्रतियोगिवैयधिकरण्यसम्भवात्तदादाय दोषः स्यादेव।

अथवा पटसमवेतत्वपदस्य तत्र घटासमवेततत्वपरत्वात् पटघटगतद्वित्व,-संयोगगतद्वित्वत्व,-संयोगत्वादीनां घटासमवेतत्वसामानाधिकरण्यविरहान्नानुपपत्तिः, घटासमवेतत्ववैशिष्ट्यस्यापि सामानाधिकरण्यरूपस्यैव ग्राह्यत्वात्।

'तत्तोपलक्षितदण्डव्यक्तिमात्रस्यैवेति जागदीशी पंक्तिः'[१]। 'दण्डयादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिरि'ति[२] दीधितिग्रन्थ-व्याख्यानाय जगदीशेन प्रथममवतरणरूपेण 'ननु दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिः, चालनीन्यायेन दण्डमात्रस्यैव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादि'-त्युक्तम्।[३] अनन्तरं विशिष्टसाध्यतावच्छेदकस्थले लक्षणघटकावच्छेदकत्वे साध्यता-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

२. तत्रैव, दीधितिमूलम्, पृ. ३

३. तत्रैव, जागदीशीमूलम्, पृ. ४

वच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशस्यावश्यकतां तथा तद्दण्डवान् नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकताञ्च तत्ताविशिष्टदण्डव्यक्तेरेवोपपाद्य अवतरणरूपेण स्वोपपादिताव्याप्तेरसङ्गतिः शङ्किता। तदनन्तरं पुनः शङ्किताव्याप्त्यसङ्गतिपरिहाराय 'प्रमेयदण्डवान् नास्तीत्यादौ प्रमेयत्वोपलक्षितस्येव, तद्दण्डवान् नास्तीत्यादावपि तत्तोपलक्षितदण्डव्यक्तिमात्रस्यैवावच्छेदकत्वकल्पनादि'त्युक्तम्[1], तद्घटक- 'तत्तोपलक्षितदण्डव्यक्तिमात्रस्यैवे'त्यंशं परिगृह्य तत्त्वालोककृतोच्यते यत्—

अत्र 'मात्र'पदेन दण्डत्वस्य तद्दण्डवान् नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वव्यवच्छेदो बोधितः। तथा 'उपलक्षिते'त्यन्तेन अर्थात्तत्तोपलक्षितेत्यनेन तत्ताया अवच्छेदकत्वव्यवच्छेदः सूचितः। उपलक्षितेत्यन्तेन 'तत्तायाः' इत्यस्य पूर्ववर्तिना 'अवच्छेदकत्वव्यवच्छेदः' इत्यनेन सम्बन्धः। 'व्यक्ती'त्युल्लेखात्तद्व्यक्तेः स्वरूपतोऽवच्छेदकत्वपक्षव्यक्तिः। ततश्च तद्दण्डवान् नास्तीति प्रतीतिसिद्धाभावस्थले न दण्डत्वमवच्छेदकम्, न वा तत्ताऽवच्छेदिका, किन्तु तद्व्यक्तिरेव स्वरूपतोऽवच्छेदिकेति निर्गलितम्, तेन दण्डिमान् दण्डिसंयोगादित्यत्र तद्दण्डवान् नास्तीति प्रतीतिसिद्धाभावमादाय दर्शिताव्याप्तेरसङ्गतिर्न, किन्तु दर्शिताव्याप्तेः सङ्गतिरेव, एवं व्याख्यायां नोक्तग्रन्थासङ्गतिः।

अन्यथा अर्थाद् 'व्यक्ती'त्युल्लेखात्तद्व्यक्तेः स्वरूपतोऽवच्छेदकत्वपक्षव्यक्तौ अस्वीकृतायाम् 'उपलक्षिते'त्यन्तेन तत्तायाः अवच्छेदकत्वव्यवच्छेदे चास्वीकृते जात्यखण्डोपाध्यतिरिक्तस्य तद्दण्डव्यक्तिरूपस्य स्वरूपतोऽवच्छेदकत्वासम्भवाद् अतिप्रसङ्गाद्यनापादकधर्मस्यैवावच्छेदकत्वाङ्गीकाराद् दण्डत्वस्यातिप्रसङ्गाद्यनापादकत्वविरहात्तत्रावच्छेदकत्वासम्भवेऽपि तत्तायास्तद्दण्डव्यक्तिगताया अपि तत्रावच्छेदकत्वस्वीकारप्रसङ्गः स्यात्तथासति तद्दण्डाभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वविरहात्तादृशाभावमादाय प्रदत्ताव्याप्तेरसङ्गतिः स्यात्।

दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्त्यभावाय तत्र परम्परासम्बन्धेन दण्डत्वस्यैव, न तु दण्डस्य, साध्यतावच्छेदकत्वोक्तौ सत्यां लाघवात्तत्र समवायेन लघुभूतेन साक्षात्सम्बन्धेन एव दण्डत्वस्य साध्यतावचछेदकत्वं कुतो नेत्युत्थितशङ्कायाः परिहाराय जगदीशेन 'हेतुमति दण्डसामान्याभावसत्त्वाद्दण्डत्वमपि (दण्ड इवैव दण्डत्वमपि)[2] तादृशावच्छेदकमेवे'त्युक्तम्[3]।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

२. कोष्ठकान्तर्गतो मूले नास्ति।

३. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

तत्तत्त्वालोककृता व्याख्यायते 'व्यभिचाराल्लाघवमकिञ्चित्करमि'ति। साक्षात्सम्बन्धेन समवायेन दण्डत्वस्य हेतुसमानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारग्रस्तत्वात्तस्य तत्र साध्यतावच्छेदकत्वासम्भवादिति तदर्थः। तथासति समवायेन साक्षात्सम्बन्धेन दण्डत्वस्य तादृशावच्छेदकत्वेऽपि स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन तादृशावच्छेदकत्वविरहाद्दोषासम्भवाद् रूपवान् पृथिवीत्वादित्यत्र विषयितासम्बन्धेन रूपत्ववदभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नस्यैवावच्छेदकत्वस्य लक्षणघटकत्वादिति तदाशयात्।

'साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाया एव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायाः प्रविष्टत्वादि'ति[1] इमां जागदीशीमाश्रित्य 'अथ यद्यपि' इत्यादिना विशेषविचार आरभ्यते। अत्रेदमुच्यते यद् यथाश्रुतेन प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशेन रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्ववदभावस्य अव्याप्त्यापादकस्य यद्यपि वारणं सम्भवति, तत्र तादृशाभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वविरहात्, किन्तु विषयित्वसमवायान्यतरसम्बन्धेन रूपत्वविशिष्टस्य यत्र साध्यता आत्मघटान्यतरत्वस्य च हेतुता, तत्र सद्धेतौ यथाश्रुतेन प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशेऽपि हेत्वधिकरणे आत्मनि समवायेन रूपत्वविशिष्टाभावमादाय तथा हेत्वधिकरणे घटे विषयितया रूपत्वविशिष्टाभावमादायाव्याप्तिः स्यादेव, तत्र साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वस्यैव साध्यतावच्छेदके रूपत्वे सत्त्वादतस्तत्रोक्ताभावद्वयस्य आपादकस्य वारणाय प्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वनिवेश आवश्यकः। तथासति तत्रोक्ताभावद्वयस्य व्यवच्छेदः स्यात्, तादृशाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकीभूतविषयित्व-समवायान्यतरत्वरूपधर्मावच्छिन्नसंसर्गताकत्वविरहात्।

किन्त्वेवं परिवर्तिते निवेशेऽपि यत्र विषयितात्वसमवायत्वान्यतरवत्संसर्गेण रूपत्वविशिष्टस्य साध्यता, आत्मघटान्यतरत्वस्य च हेतुता, तत्र सद्धेतौ हेत्वधिकरणे आत्मनि समवायेन रूपत्वविशिष्टाभावं हेत्वधिकरणे घटे विषयितया रूपत्वविशिष्टाभावञ्चादायाव्याप्तिः स्यादेव, उक्ताभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकस्यैव साध्यतावच्छेदके सत्त्वात्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

अत उक्तस्थले आपादकस्योक्तस्याभावद्वयस्य वारणाय साध्यतावच्छेदकतानिरूपिता या संसर्गता, तादृशसंसर्गतानिरूपिता या अवच्छेदकता, तादृशावच्छेदकतागतं यदवच्छेदकतात्वम्, तदवच्छिन्ना प्रतियोगिता यस्यास्तादृशी या पर्य्याप्तिस्तादृशपर्य्याप्तिरनुयोगितावच्छेदकीभूतं यद्रूपम्, तद्रूपवृत्तिसंसर्गताकत्वस्य लक्षणघटकप्रतियोगितावच्छेदकत्वे निवेश आवश्यकस्तथासति उक्तस्थले उक्ताभावद्वयमादाय दोषासम्भवात्, तत्र विषयितात्वसमवायत्वगतद्वित्वात्मकसाध्यतावच्छेदकतानिरूपितसंसर्गतानिरूपितावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकत्वविरहाद्, विषयितात्वगतैकत्वस्यैव तथा समवायत्वगतैकत्वस्यैव तत्र प्रतियोगितावच्छेदकतानिरूपितसंसर्गतानिरूपितावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपत्वात्।

साध्यतावच्छेदकतानिरूपितसंसर्गतानिरूपितावच्छेदकताप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य संसर्गतायां स्वावच्छेदकता(प्रतियोगितावच्छेदकतानिरूपितसंसर्गतानिरूपितावच्छेदकता) त्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन विवक्षाया आवश्यकत्वात्। अन्यथा गुणवान् पृथिवीत्वादित्यत्र विषयित्व-समवायोभयसम्बन्धेन गुणत्वविशिष्टस्य (ज्ञानस्य) अभावमादायाव्याप्तिः स्यात्, तथोक्तौ च नाव्याप्तिः, तादृशे समवायत्वगतैकत्वरूपे स्वावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदक(विषयितात्वसमवायत्वगतद्वित्व)त्वसम्बन्धेन प्रतियोगितावच्छेदकतानिरूपितसंसर्गताया वृत्तित्वविरहात्।

उक्तप्रकारकनिवेश एकत्वादिप्रतियोगिकपर्य्याप्त्यनभ्युपगमे न सम्भवदुक्तिकोऽतस्तत्पक्षे उक्त दोषवारणाय साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वसमनियतसंसर्गताकत्वविवक्षा प्रतियोगितावच्छेदकत्वे कर्त्तव्या, तत्र समनियतत्वघटकसंसर्गताया संसर्गः, अर्थात् समनियतत्वविशेषिता या संसर्गता तत्र साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वसमनियतत्वनियामकः सम्बन्धः, स्व(संसर्गता)-निरूपितावच्छेदकतावत्त्वरूपः।

अर्थाद् यत्र यत्र साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वं तिष्ठेत् तत्र सर्वत्रैव प्रतियोगितावच्छेदकतानिरूपितसंसर्गतायाः स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन सत्त्वमपेक्षितम् तथा स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन प्रतियोगितावच्छेदकतानिरूपिता संसर्गता यत्र यत्र तिष्ठेत्तत्र सर्वत्रैव साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वस्य सत्त्वमावश्यकम्, एवं सति नोक्तदोषस्य सम्भवः।

परन्तु एवं सत्युक्तदोषविरहेऽपि यत्र रूपत्वप्रतियोगिकत्वविशेषितसमवाय-सम्बन्धेन रूपत्वविशिष्टस्य साध्यता पृथिवीत्वघटत्वादेश्च हेतुता, तत्र सद्धेतावव्याप्तिः स्यात्, तत्र साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वसमनियतसंसर्गताका-वच्छेदकताकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणलक्षणघटकाभावस्याप्रसिद्धत्वाद्, रूपत्वप्रतियोगिकसमवायत्वगतावच्छेदकतायां साध्यतावच्छेदकतानिरूपितसंसर्गता-निरूपितावच्छेदकतात्वस्य केवलसमवायगतसमवायत्वगतावच्छेदकतायां ज्ञानत्व-विशिष्टज्ञानाद्यभावप्रतियोगितावच्छेदकतानिरूपितसंसर्गतायाः स्वनिरूपितावच्छेदक-तावत्त्वसम्बन्धेन सत्त्वादित्याशयः।[१३९]

तत्त्वालोकः – अत्र केचित् — साध्यतावच्छेदकताविशिष्टावच्छेदक-त्वानिरूपितत्वं तदर्थः, वैशिष्ट्यञ्च स्वानवच्छेदकसम्बन्धावच्छिन्नत्व,-स्वसामानाधिकरण्योभयसम्बन्धेन। तथा च घटत्वादिनिष्ठावच्छेदकतायां स्वसामानाधिकरण्यविरहेण विशिष्टत्वविरहाद्धटाभावस्यैव लक्षणघटकत्वान्ना-व्याप्तिः।

न च समवायेन धूमत्वविशिष्टत्वे सति कालिकेन धूमत्वविशिष्टस्य साध्यतायां व्यभिचारिण्यतिव्याप्तिः, समवायसम्बन्धावच्छिन्नधूमत्वनिष्ठा-वच्छेदकतायाः कालिकसम्बन्धावच्छिन्नावच्छेदकताविशिष्टत्वादिति वाच्यम्, साध्यतानिरूपितावच्छेदकताविशिष्टान्यत्वस्यापि विशिष्टावच्छेदकता-विशेषणत्वाद्। वैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्व,-स्वसामानाधिकरण्योभयसम्बन्धेन, समवायसम्बन्धावच्छिन्नावच्छेदकतायां विशिष्टान्यत्वविरहेणातिव्याप्तिविरहात्।

न चैवमपि प्रमेयत्वावच्छिन्नप्रतियोगिकसमवायसम्बन्धेन प्रमेयविशिष्ट-साध्यके तादृशावच्छेदकताकप्रतियोगिताकतादृशाभावाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्, स्वसामानाधिकरण्यम्विहाय स्वव्यापकत्वस्य संसर्गतया विवक्षित्वा-दिति — वदन्ति।

परे तु — साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व-साध्यतावच्छेदकनिष्ठत्वोभयाभाववत्त्वं विवक्षणीयम्। न च प्रमेयत्वावच्छिन्न-प्रतियोगिकतादात्म्येन प्रमेयविशिष्टसाध्यकेऽव्याप्तिरिति वाच्यम्, साध्यता-वच्छेदकताव्यापकत्वस्योभयाभावघटकतया विवक्षितत्वात्।

यत्तु जातिमद्वान् जाते[१]रित्यत्र विषयितया निखिलजातिविशिष्टाभावमादायाव्याप्तिः, साध्यतावच्छेदकताव्यापकत्वविरहेणोभयाभावस्य तदवच्छेदकतायां सत्त्वादिति। तत्तुच्छम्, तादृशस्थले दण्डद्यादिसाध्यके दण्डत्वस्येवं जातित्वस्यैव साध्यतावच्छेदकत्वात्, अन्यथा तादात्म्येन जातिमतस्तादात्म्येन साध्यतायां जातित्वे तादात्म्येन सत्तादिमदभावस्यापि लक्षणघटकतयाऽव्याप्तेर्दुरुद्धरत्वाद्, विषयितया जातिमतस्साध्यतायान्तज्ज्ञानत्वेऽपि सत्तादिमदभावस्य लक्षणघटकतया अव्याप्तेरशक्यपरिहारत्वादिति — प्राहुः।[१४०]

*प्रकाशः* – पूर्वोक्तामापत्तिं समाधातुमत्र केचिदित्थं परिवर्तयन्ति निवेशप्रकारम् — साध्यतावच्छेदकतया स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन विशिष्टा या ऽवच्छेदकता, तदनिरूपितत्वमेव लक्षणघटकप्रतियोगितायामपेक्षितम्, पूर्वोक्तस्य तत्रैव तात्पर्य्यात्, रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकत्वनिरूपितत्वस्यैव सत्त्वेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वविरहाद्दोषासम्भवात्।

रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टसाध्यकस्थले साध्यतावच्छेदकतया घटत्वनिष्ठावच्छेदकतायां स्वानवच्छेदकसमवायात्मकसम्बन्धावच्छिन्नत्वेन स्वानवच्छेदकसम्बन्धावच्छिन्नत्वरूपवैशिष्टचसत्त्वेऽपि स्वसामानाधिकरण्यविरहेण घटाभावस्य साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रतियोगिताकाभावत्वसम्भवान्न तादृशाभावाप्रसिद्धिप्रयुक्ताव्याप्तिसम्भावना।

न चोक्तनिवेशे सति रूपत्वप्रतियोगिकसमवायस्य साध्यतावच्छेदकताघटकसम्बन्धस्थले दोषपरिहारेऽपि समवायेन धूमत्वविशिष्टत्वे सति कालिकेन धूमत्वविशिष्टस्य यत्र साध्यता वह्नेश्च हेतुता, तत्र व्यभिचारिणि तत्र साध्याभावस्य लक्षणघटकत्वासम्भवादभावान्तरमादायातिव्याप्तिः स्यात्, साध्याभावप्रतियोगितायाः कालिकसम्बन्धावच्छिन्नधूमत्वनिष्ठसाध्यतावच्छेदकताविशिष्टया समवायसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकतया निरूपितत्वस्यैव सत्त्वेन तादृशावच्छेदकत्वानिरूपितत्वविरहादिति वाच्यम्।

---

१. 'जातिमत्त्वाज्जातेरि'ति तु मूलपुस्तके।

लक्षणघटकप्रतियोगिताया अनिरूपकत्वेनोक्तायां साध्यतावच्छेदकताविशिष्टायामवच्छेदकतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन साध्यतानिरूपितावच्छेदकताविशिष्टादन्यत्वस्य विशेषणतया विवक्षयोक्तदोषवारणसम्भवात्, उक्तायां समवायसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकतायां कालिकसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन समवायसम्बन्धावच्छिन्नधूमत्वावच्छेदकतया साध्यतानिरूपितावच्छेदकतात्मिकया विशिष्टत्वस्यैव सत्त्वेन साध्यतानिरूपितावच्छेदकताविशिष्टान्यत्वविरहात्।

साध्यतावच्छेदकताविशिष्टावच्छेदकतायामुक्तदिशा दर्शितसम्बन्धाभ्यां साध्यतानिरूपितावच्छेदकताविशिष्टान्यत्वविशेषणे दत्तेऽपि यत्र प्रमेयत्वावच्छिन्नप्रतियोगिकसमवायसम्बन्धेन प्रमेयविशिष्टस्य (प्रमेयत्वावच्छिन्नप्रतियोगिकसमवायेन गुणकर्मादौ जात्यात्मकप्रमेयस्य सत्त्वेन) गुणकर्मादिः समवायेन साध्यता द्रव्यत्वस्य च हेतुता, तत्र सद्धेतुस्थलेऽव्याप्तिः स्यात्, तत्र तादृशावच्छेदकताकप्रतियोगिताकाभावस्य प्रसिद्धिविरहात्, तत्र समवायेन जातिमद्रूपाद्यभावप्रतियोगितावच्छेदकतायां प्रमेयनिष्ठाया प्रमेयत्वावच्छिन्नप्रतियोगिकसमवायसम्बन्धावच्छिन्नाया साध्यतावच्छेदकतायाः स्वानवच्छेदकत्वसम्बन्धावच्छिन्नत्वरूपवैशिष्ट्यनियामकप्रथमसम्बन्धस्य स्वसामानाधिकरण्यरूपद्वितीयसम्बन्धस्य च सत्त्वेन साध्यतावच्छेदकताविशिष्टत्वस्य सत्त्वेन तादृशाभावप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वविरहात्।

तस्मात् साध्यतावच्छेदकतावैशिष्ट्यनियामकतयोक्तं स्वसामानाधिकरण्यात्मकं द्वितीयं सम्बन्धं परित्यज्य तत्स्थाने स्वव्यापकत्वरूपसम्बन्धनिवेशः कार्य्यस्तथा च स्वानवच्छेदकसम्बन्धावच्छिन्नत्व-स्वव्यापकत्वोभयसम्बन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वमेव लक्षणघटकाभावप्रतियोगितायां विवक्षितम्, एवं सति प्रमेयत्वावच्छिन्नप्रतियोगिकसमवायेन प्रमेयविशिष्टसाध्यकस्थलेऽप्रसिद्ध्यापादिताव्याप्तिर्न स्यात्। समवायेन जातिमदभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताव्यापकत्वविरहात्।

अत्र परेषां कथ्यमिदमस्ति। लक्षणघटकप्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववत्त्वे एवोक्तस्य तात्पर्य्यम्, रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टा-

भावप्रतियोगितावच्छेदकत्वे उक्तोभयस्यैव सत्त्वेन तदुभयाभावविरहान्न तदादाय तत्राव्याप्तिः।

यद्यप्येवं सति प्रमेयत्वावच्छिन्नप्रतियोगिकतादात्म्यसम्बन्धेन प्रमेयविशिष्टस्य यत्र तादात्म्येन स्वरूपेण वा साध्यता वाच्यत्वस्य हेतुता, तत्र सद्धेतौ तादृशावच्छेदकताकप्रतियोगिताको लक्षणघटकाभावः प्रसिद्धो न स्यात्, सर्वस्यैव घटपटाद्यभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकप्रमेयत्वावच्छिन्नप्रतियोगिकतादात्म्यसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदकघटत्वपटत्वादिरूपप्रमेयनिष्ठत्वस्य च उभयोः सत्त्वेन विवक्षितोभयाभावविरहादप्रसिद्ध्याव्याप्तिः स्यात्, तथापि उक्तोभयाभावप्रतियोगिनं साध्यतावच्छेदकनिष्ठत्वमपहाय तत्स्थाने साध्यतावच्छेदकताव्यापकत्वस्यैवोभयाभावघटकतया विवक्षितत्वे दोषासम्भवात्, घटपटाद्यभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताव्यापकत्वविरहात् सर्वत्रैव प्रमेये साध्यतावच्छेदकतायाः सत्त्वेन प्रतियोगितावच्छेदकताया घटत्वादिमात्रे सत्त्वात्।

साध्यतावच्छेदकताव्यापकत्वस्य विवक्षितोभयाभावप्रतियोगितया निवेशे यः कोऽपि यत्र समवायेन जातिमतस्तादात्म्येन साध्यता, जातेश्च समवायेन हेतुता, तत्र जातिमद्वान् जातेरित्यत्र विषयितया निखिलजातिविशिष्ट(ज्ञान)स्याभावं हेत्वधिकरणघटादिवर्तिनमादायाव्याप्तिमुद्भावयति, तादृशाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसमवायसम्बन्धातिरिक्तविषयित्वसम्बन्धावच्छिन्नत्वस्य सत्त्वेऽपि साध्यतावच्छेदकताव्यापकत्वविरहेण विवक्षितोभयाभावस्य सत्त्वात्, तत्र साध्यतावच्छेदकताव्यापकताविरहश्च समवायसम्बन्धेनोल्लिख्यमानजातेः जातित्वेन भानात्, साध्यतावच्छेदकतायाः जातित्वेऽपि सत्त्वेन तत्र विषयितया जातिविशिष्टाभावप्रतियोगितावच्छेदकताया विरहात् समवायातिरिक्तसम्बन्धेनोल्लिख्यमानाया अपि जातेः स्वरूपतो भानसिद्धान्तात्।

तत्तुच्छम्। यत्र समवायेन जातिमतस्तादात्म्येन साध्यता, जातेश्च समवायेन हेतुता, तत्र दण्डिमान् दण्डिसंयोगादित्यत्र यथा दण्डत्वस्य स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन साध्यतावच्छेदकत्वसिद्धान्तस्तथैव जातित्वस्यैव स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन साध्यतावच्छेदकत्वस्वीकाराद्दर्शिताभावप्रतियोगितावच्छेदकत्वस्य तत्र जातित्वात्मकसाध्यतावच्छेदके विरहेणाव्याप्तेरभावात्।

तादृशस्थले परम्परया जातित्वस्य साध्यतावच्छेदकत्वानङ्गीकारे यत्र तादात्म्येन जातिमतस्तादात्म्येन साध्यता जातित्वस्य च स्वरूपेण हेतुता, तत्र सद्धेतौ तादात्म्येन सत्तावतस्तादात्म्यसम्बन्धावच्छिन्नाभावमादाय साध्यतावच्छेदिकायाः सत्तात्मकजातेः

प्रतियोगितावच्छेदकत्वेनाव्याप्तिः स्यात्। तथा यत्र विषयिता[१] जातिमतः (ज्ञान-विशेषस्य) तादात्म्येन साध्यता, तज्ज्ञानत्वस्य च हेतुता, तत्र सद्धेतौ विषयिता-सम्बन्धेन सत्तावतस्तादात्म्यसम्बन्धावच्छिन्नाभावमादाय साध्यतावच्छेदकस्य सत्ता-जात्यात्मकस्य प्रतियोगितावच्छेदकत्वेनाव्याप्तिः स्यादेवातस्तादृशस्थलेषु परम्परया जातित्वस्यैव साध्यतावच्छेदकता, तथासति नोक्तस्थलेषु अव्याप्तीनां सम्भावनेति परेषां मतमित्याशयः।[१४०]

तत्त्वालोकः – **अन्ये तु साध्यतावच्छेदकव्यापकनिष्ठत्वघटितोभयाभाव-निवेशमिच्छन्ति। तन्नातिरमणीयम्, महाकालानुयोगिककालिकेन घटत्व-विशिष्टस्य तादात्म्येन साध्यतायां महाकालत्वे धर्ममात्रस्यैव साध्यतावच्छेद-कताघटकसम्बन्धेन साध्यतावच्छेदकव्यापकत्वादव्याप्तेः।**

**न च कालिकेन गगनस्यावृत्तित्वे विषयितया गगनवदभावमादाया-व्याप्तिवारणमिति वाच्यम्, स्ववृत्तिवाच्यत्ववत्तासम्बन्धेन घटत्वविशिष्ट-साध्यकसद्धेतावव्याप्तेर्दुरुद्धरत्वात्।**

**साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धेन व्याप-कत्वविवक्षाऽपि स्ववृत्तिवाच्यत्ववत्तासम्बन्धेन प्रमेयविशिष्टसाध्यकस्थला-व्याप्त्या हेया।[१४१]**

*प्रकाशः* – अन्ये पुनः प्रकृतविषये अन्यथैव निवेशमिच्छन्ति। लक्षणघटित-प्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व-साध्यतावच्छेदकव्यापकधर्मनिष्ठत्वोभयाभावन्निवेशयन्ति। तादात्म्येन जातिमतस्ता-दात्म्येन यत्र साध्यता, जातित्वस्य च हेतुता, तत्र तादात्म्येन सत्तावदभावमादाय तथा यत्र विषयितया जातिमतो विषयितया साध्यता, तज्ज्ञानत्वस्य हेतुता, तत्र विषयितया सत्तावतस्तादात्म्यसम्बन्धावच्छिन्नाभावमादाय प्रसक्ताव्याप्तिवारणं परम्परया तत्र जातित्वस्यैव साध्यतावच्छेदकत्वस्वीकारात्स्यात्।

रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभाववारणन्तु तत्र साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदक-व्यापकधर्मनिष्ठत्वस्य चोभयोः सत्त्वात्स्यादिति।

---

१. 'विषयितये'ति भाव्यम्।

तदेतदन्येषां मतन्नातिरमणीयम्, यत्र महाकालानुयोगिककालिकसम्बन्धेन घटत्वविशिष्टस्य (महाकालस्य) तादात्म्यसम्बन्धेन साध्यता, महाकालत्वस्य हेतुता, तत्र तादृशावच्छेदकताकप्रतियोगिताकलक्षणघटकाभावाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात्, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकघटपटाद्यभावप्रतियोगितावच्छेदकधर्ममात्रस्य साध्यतावच्छेदकताघटकमहाकालानुयोगिककालिकसम्बन्धेन साध्यतावच्छेदकीभूत-घटत्वव्यापकतया घटत्वपटत्वादिनिष्ठप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकता-घटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदकव्यापकधर्मनिष्ठत्वस्य चोभयोः सत्त्वेन विवक्षितोभयाभावस्य विरहात्।

कालिकेन गगनस्यावृत्तित्वस्वीकारपक्षे विषयितासम्बन्धेन गगनविशिष्टस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावो यदि तत्र प्रसिद्धो भवेत्, तदीयप्रतियोगि-तावच्छेदकतायां साध्यतावच्छेदकव्यापकधर्मनिष्ठत्वविरहेण विवक्षितोभयाभावस्य सत्त्वात्, तथापि[१] स्ववृत्तिवाच्यत्ववत्तासम्बन्धेन घटत्वविशिष्टसाध्यकसद्धेतुस्थले (स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन घटत्वविशिष्टस्य तादात्म्येन साध्यत्वे वाच्यत्वस्य हेतुत्वे) विषयितया गगनवदभावस्य तादृशत्वविरहादव्याप्तिर्दुरुद्धरा स्यात्, सर्वत्रैव लक्षणघटकाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धातिरिक्त-सम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकव्यापक-धर्मनिष्ठत्वस्य च उभयोः सत्त्वाद् विवक्षितोभयाभावासम्भवात्।

विवक्षितोभयाभावप्रतियोगिनः साध्यतावच्छेदकताघटकसम्बन्धेन साध्यता-वच्छेदकव्यापकनिष्ठत्वस्य स्थाने साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकता-घटकसम्बन्धेन साध्यतावच्छेदकव्यापकधर्मनिष्ठत्वस्य निवेशं कृत्वा यद्यपि उक्ता-व्याप्तिः परिहर्तुं शक्यते, साध्यतावच्छेदकघटत्वप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वेन अन्यस्य गगनादेः क्वापि सत्त्वविरहात्, अन्यस्य अन्यप्रतियोगिकत्वविशेषितसम्बन्धस्य व्यधिकरणसम्बन्धत्वात्, तथापि यत्र स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन प्रमेयविशिष्टस्य तादात्म्येन स्वरूपेण वा साध्यता, वाच्यत्वस्य च हेतुता, तत्र तादृशावच्छेदकताक-प्रतियोगिताकलक्षणघटकाभावस्य प्रसिद्धेरभावादव्याप्तिः स्यादेव, यतो हि तत्र प्रमेयमेव साध्यतावच्छेदकम्, साध्यतावच्छेदकताघटकसम्बन्धश्च स्ववृत्तिवाच्यत्ववत्त्वमेव। एवंसति साध्यतावच्छेदकप्रमेयप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वसम्बन्धस्य कस्यापि लक्षणघटकाभावप्रतियोगितावच्छेदकधर्मस्य व्यधिकरणसम्बन्धत्वाभावेन विवक्षितो-

१. 'तदापी'त्याशयः।

भयाभाववदवच्छेदकताकप्रतियोगिताकलक्षणघटकाभावाप्रसिद्ध्याऽव्याप्तिः स्यादेवेति भावः।[१४१]

तत्त्वालोकः – यत्तु प्रतियोगितावच्छेदकताघटकसम्बन्धेन यत्किञ्चित्साध्यावृत्तिधर्म्मनिष्ठसाध्यतावच्छेदकताव्यापकावच्छेदकत्वानिरूपितत्वमेव वाच्यमेतन्निवेशश्च।

प्रतियोगिताविशिष्टप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभवतीति, वैशिष्ट्यञ्च स्वतादात्म्य, -स्वावच्छेदकताघटकसम्बन्धावच्छिन्नयत्किञ्चित्साध्यनिरूपितवृत्तित्वाभाववद्धर्म्मनिष्ठसाध्यतावच्छेदकताव्यापकावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन। यत्किञ्चित्त्वनिवेशान्महानसीयवह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टाभावमादाय नाव्याप्तिः। साध्यतावच्छेदकताव्यापकत्वनिवेशात्प्रमेयसाध्यतावच्छेदकस्थले नाव्याप्तिरिति।

तन्न। समवायेन रूपत्वविशिष्टसाध्यकतज्ज्ञानत्वे रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टाभावमादायाव्याप्तेः।

साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकधर्मनिष्ठावच्छेदकत्वानिरूपितत्वविवक्षणे चावच्छेदकतायां प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमेव विवक्षणीयन्तथा च गुणवान् द्रव्यत्वादित्यत्र विषयितया गुणत्ववदभावमादायाव्याप्तिः।

पृथिव्यादिरूपसाध्याधिकरणनिरूपितप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकवृत्तित्वाप्रसिद्धेस्साध्याधिकरणयत्किञ्चिद्व्यक्तिपदेनात्मन एव ग्राह्यतया तन्निरूपिततादृशवृत्तितानवच्छेदकत्वस्य गुणत्वे विरहेण तादृशधर्म्मान्तरानवच्छिन्नत्वस्य प्रतियोगितायान्तदभावीयायां सत्त्वात्।

यदि च प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वाभावो निवेश्यते तदोक्तदोषविरहेऽपि साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशापेक्षया न लाघवमुक्तावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नाभावनिवेशादरे साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वीयसम्बन्धावच्छिन्नाभावस्य वक्ष्यमाणस्यैवातिलाघवमालोचनीयमिति दिक्।[१४२]

*प्रकाशः* – प्रकृते एकं मतं 'यत्तु' पदनिर्दिष्टमित्थमस्ति यत् प्रतियोगितावच्छेदकताघटकसम्बन्धेन यत्किञ्चित्साध्यावृत्तिधर्मनिष्ठसाध्यतावच्छेदकताव्यापका-

वच्छेदकत्वानिरूपितत्वं लक्षणघटकाभावीयप्रतियोगितायान्निवेश्यमिति।

उक्तस्यास्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितया स्व-तादात्म्य-स्वावच्छेदकताघटकसम्बन्धावच्छिन्नयत्किञ्चित्साध्यावृत्तिधर्मनिष्ठसाध्यतावच्छेदकताव्यापकावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टया भवितव्यमिति निर्गलितार्थः।

रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावीया प्रतियोगिता दर्शितोभयसम्बन्धेन प्रतियोगिताविशिष्टा न भवत्यतो न तामादाय तत्राव्याप्तिः सम्भवति, तत्र प्रतियोगितायां स्वतादात्म्यस्य सत्त्वेऽपि स्वावच्छेदकताघटक (विषयिता) सम्बन्धेन यत्किञ्चित्साध्यावृत्तिधर्म(रूपत्व)निष्ठसाध्यतावच्छेदकताव्यापकावच्छेदकत्वनिरूपितत्वस्यैव सत्त्वेन तादृशावच्छेदकत्वानिरूपितत्वरूपद्वितीयसम्बन्धविरहात्।

वह्निमान् धूमादित्यत्र महानसीयवह्न्यनुयोगिकसमवायसम्बन्धेन वह्नित्वविशिष्टाभावप्रतियोगितामादाय प्रसक्ताव्याप्त्यभावाय उक्तनिवेशप्रकारे 'यत्किञ्चिदि'ति साध्यविशेषणतया प्रवेशितम्। महानसीयवह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टाभावप्रतियोगितावच्छेदकधर्मस्य वह्नित्वस्य स्वावच्छेदकताघटकमहानसीयवह्न्यनुयोगिसमवायेन यत्किञ्चित्साध्ये पर्वतीये वह्नौ वृत्तित्वविरहात् तत्र तादृशविशेषणे सति न तादृशप्रतियोगितामादाय तत्राव्याप्तिः।

प्रमेयवद्वान् वाच्यत्वादित्यत्र प्रमेयस्य साध्यतावच्छेदकत्वस्थले स्वावच्छेदकताघटकसम्बन्धेन यत्किञ्चित्साध्यावृत्तिधर्मनिष्ठावच्छेदकत्वानिरूपितत्वघटितोक्तसम्बन्धेन प्रतियोगिताविशिष्टत्वस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितायामप्रसिद्ध्या प्राप्ताव्याप्तिवारणाय तादृशधर्मनिष्ठावच्छेदकतायां साध्यतावच्छेदकताव्यापकत्वस्य निवेशो विहितः, तादृशघटत्वपटत्वादिनिष्ठावच्छेदकतायाः साध्यतावच्छेदकताव्यापकत्वविरहात्तदुक्ताप्रसिद्धिविरहेणाव्याप्तेरभावादिति।

तन्न। समवायेन रूपत्वविशिष्टस्य यत्र विषयितासम्बन्धेन साध्यता, तज्ज्ञानत्वस्य च हेतुता, तत्र सद्धेतावव्याप्तिः स्यात्, रूपत्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकताकविषयित्वसम्बन्धावच्छिन्नरूपत्वविशिष्टनिष्ठप्रतियोगिताकाभावस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावत्वात्तदीयप्रतियोगिताया उक्तोभयसम्बन्धेन प्रतियोगिताविशिष्टत्वात्तादृशप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके रूपत्वे सत्त्वात्। तत्र प्रतियोगितायां प्रतियोगितावैशिष्ट्यनियामकसम्बन्धस्य

सत्त्वञ्च, तादृशप्रतियोगितावच्छेदकस्य रूपत्वस्य स्वावच्छेदकताघटकसम्बन्धावच्छिन्नयत्किञ्चित्साध्यनिरूपितवृत्तित्वाभाववद्धर्मत्वविरहाद् धर्मान्तरनिष्ठसाध्यतावच्छेदकताव्यापकावच्छेदकत्वानिरूपितत्वस्य तत्र सत्त्वाद्, उक्तोभयाभावद्वितीयप्रतियोगिघटकं यत्किञ्चित्साध्यनिरूपितवृत्तित्वाभाववद्धर्मनिष्ठसाध्यतावच्छेदकताव्यापकावच्छेदकत्वानिरूपितत्वमपहाय तत्स्थाने साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकधर्मनिष्ठावच्छेदकत्वानिरूपितत्वस्य निवेशे कृते यद्यपि उक्ताव्याप्तिः, उक्ताभावप्रतियोगितावच्छेदकस्य रूपत्वस्य साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकत्वात्, समवायेन रूपत्वविशिष्टस्य विषयितया अधिकरणे ज्ञानविशेषात्मके यत्किञ्चित्साध्याधिकरणे रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टस्य विषयितया विरहात्, तथाच साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकतादृशरूपत्वधर्मनिष्ठावच्छेदकत्वनिरूपितत्वस्यैव तत्र प्रतियोगितायां सत्त्वेन विवक्षितोभयस्य विरहात्तदादायाव्याप्तिर्न स्यात्।

किन्तु तदाऽवच्छेदकतायां प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमेव विवक्षणीयमन्यथा तस्यामवच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वविरहेण तथा निवेशेऽपि तत्राव्याप्तिवारणन्न स्यात्।

प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य च तत्रावच्छेदकतायां विवक्षितत्वे च तथानिवेशे गुणवान् द्रव्यत्वादित्यत्र समवायेन गुणसाध्यकसमवायेन द्रव्यत्वहेतुकस्थलेऽव्याप्तिः स्यात्, विषयितया गुणत्ववदभावीयायास्तादृश्याः प्रतियोगिताया अवच्छेदकत्वस्यैव साध्यतावच्छेदकत्वे गुणत्वे सत्त्वात् तत्र विषयितया गुणत्वस्य साध्याधिकरणयत्किञ्चिदात्मनिरूपितवृत्तितानवच्छेदकत्वविरहात् साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकधर्मान्तरनिष्ठावच्छेदकत्वानिरूपितत्वस्य तत्र सत्त्वात्।

साध्याधिकरणयत्किञ्चित्तया पृथिव्यादिकमेव परिगृह्य तत्र विषयितया रूपत्वस्य साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकत्वसम्पादनन्तु कर्तुमशक्यम्, पृथिव्यादिरूपसाध्याधिकरणनिरूपितप्रतियोगितावच्छेदकताघटकविषयित्वसम्बन्धावच्छिन्नावच्छेदकताकवृत्तित्वस्य प्रसिद्धत्वविरहात्। अर्थात् प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नाया पृथिव्यादिनिरूपितवृत्तितावच्छेदकताया अप्रसिद्ध्या अप्रसिद्धप्रतियोगिकाभावस्य विरहात् तादृशवृत्तितावच्छेदकत्वाभावरूपतादृशवृत्तितानवच्छेदकत्वासम्भवात्।

यदि तूक्ताव्याप्तिवारणाय साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकत्वघटकावच्छेदकत्वे प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमनिवेश्य साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितावच्छेदकत्वस्याभावो धर्मे प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव निवेश्येत, एवं निवेशे उक्ताव्याप्तिर्नस्यात्, तत्र उक्तरीत्या खण्डीकृतयोर्द्वयोः प्रसिद्धत्वात्, तत्रोक्ताभावप्रतियोगितावच्छेदकीभूतधर्मे गुणत्वे साध्याधिकरणपृथिव्यादिनिरूपितावच्छेदकत्वस्य प्रसिद्धस्य प्रतियोगितावच्छेदकताघटकविषयित्वसम्बन्धावच्छिन्नावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धेनासत्त्वात्, तादृशसम्बन्धावच्छिन्नप्रतियोगिताकतादृशावच्छेदकत्वाभाववद्गुणत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैवोक्ताभावप्रतियोगितायां सत्त्वेन तादृशधर्मनिष्ठावच्छेदकत्वानिरूपितत्वस्य विवक्षितस्य विरहात्।

किन्तु एवंनिवेशे गौरवाधिक्यदोषः स्यात्, उक्तनिवेशापेक्षया वक्ष्यमाणस्य साध्यतावच्छेदकताघटकस्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकावच्छेदकत्वाभावनिवेशस्यातिलघुत्वादित्युक्तखण्डाशयः।[१४२]

तत्त्वालोकः– "रूपत्वादिमतो ज्ञानस्य" (रूपत्वादिविशिष्टज्ञानादेः)[१] इति। ज्ञानत्वमत्र परिचायकमात्रन्तेन रूपत्ववज्ज्ञानाभावप्रतियोगितायां साध्यतावच्छेदकतदितरोभयावच्छिन्नत्वसत्त्वेऽपि रूपत्ववदभावस्य प्रतियोगितायान्तदसत्त्वान्न क्षतिः।

समवायान्यसम्बन्धेन भासमानस्योल्लिख्यमानस्यापि स्वरूपतो भानमङ्गीकृत्याह "रूपवानि"ति[२]। अन्यथा रूपत्ववद्वानित्येव ब्रूयात्, रूपसाध्यकस्थले तदवच्छेदकतायान्निरवच्छिन्नत्वविरहादिति भावः।

संयोगेन वह्निसाध्यके विषयितया वह्नित्ववदभावस्य यथाश्रुतप्रतियोगिवैयधिकरण्यविरहात् समवायेन साध्यतायामव्याप्त्यनुधावनमिति बोध्यम्। "अव्याप्तिप्रसङ्गादि"ति[३]। अत्र वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्ट-

---

१. (क) कोष्ठकान्तर्गतः पाठो मुद्रिततत्त्वालोकपुस्तके नास्ति।
(ख) प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४

२. तत्रैव, जागदीशीमूलम्, पृ. ४

३. तत्रैव, जागदीशीमूलम्, पृ. ४

साध्यकस्थलाऽव्याप्तिप्रसङ्गेन प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य यथाश्रुतस्य स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धावच्छिन्नघटत्वादिनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वस्य हेत्वधिकरणे सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या पारिभाषिकस्य च विवक्षितुमशक्यतया प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमेव निवेश्यमिति विषयितया रूपत्ववदभावस्य प्रतियोगिवैयधिकरण्यसम्भवादव्याप्तिप्रसङ्गादित्यर्थे तात्पर्य्यमिति।

सखण्डस्य स्वरूपतोभानासम्भवमभ्युपेत्याह ''यदि चे''ति[१]। ''रूपत्वन्यूनवृत्तिजाती''ति[२]। न्यूनवृत्तित्वञ्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। सामानाधिकरण्यञ्च तादृशप्रतियोगितानवच्छेदककर्मत्वसंयोगत्वादेः साध्यतावच्छेदकत्ववारणायोपादेयम्। सत्त्वगुणत्वयोस्साध्यतावच्छेदकत्ववारणाय विशेष्यदलम्। तयोर्जातित्वानङ्गीकारपक्षे स्वभिन्नत्वमेव वाच्यम्। संयोगतद्रूपान्यतरत्वादिवारणाय ''जाती''ति। तादात्म्येन जातिमतस्तादात्म्येन साध्यतायां जातित्वे सत्तान्यजातिमतस्तादात्म्येन साध्यतायां सत्त्वे च लघुसाध्यकेऽव्याप्त्युपेक्षणञ्च तादात्म्येन व्याप्यव्यापकभावस्य सर्वाङ्गीकाराविषयत्वादिति चिन्त्यम्।

''निरवच्छिन्नावच्छेदकत्वे''ति[३]। एतदभिधानन्तादृशप्रतियोगितानिरूपितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरावच्छिन्नत्वाभाव[४]घटितलक्षणासत्त्वसम्पादनाय तल्लक्षणस्य विशिष्ट[५]साध्यतावच्छेदकस्थलीयत्वादिति।

''स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेने''ति[६]। इदञ्च स्वसमानाधिकरणजातिमत्त्वस्वाधिकरणत्वादिलघुसम्बन्धस्याप्युपलक्षकतयाभिहितमिति बोध्यम्।[१४३]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४
२. तत्रैव, जागदीशीमूलम्, पृ. ४
३. तत्रैव, जागदीशीमूलम्, पृ. ५
४. 'साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नावच्छेदकत्वाभावे'त्येवं मुद्रितपुस्तके पाठः।
५. 'तल्लक्षणस्याविशिष्टे'ति मुद्रितपुस्तके पाठः।
६. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ५

*प्रकाशः* – 'रूपत्वादिमतो ज्ञानस्ये'ति[१] जागदीश्यंशस्य प्रतीकत्वेन परिग्रहः। जागदीश्यां 'रूपत्वादिविशिष्टज्ञानादे'[२]रित्येवं किञ्चित्परिवर्तितपाठान्तरमप्यस्ति, किन्तु 'ज्ञान'पदं तत्राप्यस्त्येव। तत्रोच्यते यदत्र ज्ञानपदबोधितं ज्ञानत्वं विषयितासम्बन्धेन रूपत्वादिमतः परिचायकमात्रन्न तु तस्याभावघटकत्वमपि, तस्याभावघटकत्वे तु विषयितया रूपत्ववज्ज्ञानाभावप्रतियोगितायां साध्यतावच्छेदकरूपत्वतदितरज्ञानत्वोभयावच्छिन्नत्वस्यैव अपेक्षितस्योक्तोभयानवच्छिन्नत्वस्य विरहेण तादृशप्रतियोगितामादायाव्याप्तिर्न स्यात्। ज्ञानत्वस्य तदघटकत्वे तु विषयितया रूपत्ववदभावप्रतियोगितायामुक्तोभयानवच्छिन्नत्वस्य सत्त्वेन तदाव्याप्तिः[३] प्रसज्येदेवेति।

साध्यहेतूपस्थापकपदद्वयघटितं वाक्यं रूपत्ववद्वान् पृथिवीत्वादित्येवमनुल्लिख्य रूपवान् पृथिवीत्वादित्येव यदुल्लिखितन्तदाशयस्य स्फुटीकरणाय तदवतरणरूपेण समवायान्यसम्बन्धेन भासमानस्योल्लिख्यमानस्यापि स्वरूपतो भानमङ्गीकृत्याह 'रूपवानि'ति[४]।

रूपत्ववानित्युक्तौ रूपत्वस्योल्लिख्यमानत्वेन समवायेनोल्लिख्यमानरूपत्वजाते रूपत्वत्वरूपेणैव भानं स्यात्ततश्च तस्य निरवच्छिन्नसाध्यतावच्छेदककत्वविरहात् सावच्छिन्नसाध्यतावच्छेदककत्वप्रसङ्गात् तत्र विषयितया रूपत्ववदभावमादायाव्याप्तिर्न स्यात्, समवायसम्बन्धातिरिक्तसम्बन्धेनोल्लिख्यमानजातेः स्वरूपत एव भानाभ्युपगमात् तादृशाभावप्रतियोगितावच्छेदकरूपत्वस्य सावच्छिन्नत्वविरहात्।

रूपवानित्येवमेव प्रतिज्ञावाक्यसत्त्वे तु तत्स्थलमननुल्लिख्यमानरूपत्वजात्यात्मकसाध्यतावच्छेदककतया निरवच्छिन्नसाध्यतावच्छेदककमेव भवति, तत्स्थलीयं लक्षणं निरवच्छिन्नावच्छेदकत्वघटितमेव, ततश्च तत्र समवायान्यविषयित्वसम्बन्धेनोल्लिख्यमानरूपत्वजातिनिष्ठावच्छेदकताकप्रतियोगिताकं विषयितया रूपत्ववदभावमादायाव्याप्तिरुचितैव भवतीति तदाशयः।

अत्र 'अव्याप्तिप्रसङ्गादि'ति[५] परिगृह्य उच्यते यत् प्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेशस्यावश्यकता, तत्र तथानिवेशविरहे रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्ववदभावमादायाव्याप्तिप्रसङ्ग-

---

१. सिद्धान्तलक्षणजागदीशी (सोमनाथोपाध्यायसम्पादिता), पृ. २११
२. सिद्धान्तलक्षणजागदीशी (श्रीगुरुप्रसादशास्त्रिसम्पादिता), पृ. २४
३. 'तदादायाव्याप्तिः' इत्यवगन्तव्यम्।
४. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४
५. तदेव, पृ. ४

प्रदर्शनेन, यदुपपादिता तद्[1] वह्निमान् इत्यत्र सुप्रसिद्धस्थल एव विषयितया वह्नित्ववदभावमादायाव्याप्तिप्रसङ्गदर्शनेन कुतो नोपपादिता? इति अन्तरुत्थितैतच्छङ्काया समाधानाय उच्यते।

साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छिन्नस्य प्रतियोगिनोऽनधिकरणहेत्वधिकरणवृत्तित्वरूपप्रतियोगिव्यधिकरणत्वविशेषितो लक्षणघटकाभावः प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतायां यथाश्रुतसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वघटितः, अर्थात् प्रतियोगितावच्छेदकनिष्ठसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणत्वाभाववद्धेत्वधिकरणवृत्त्यभावो, वह्नित्वप्रतियोगिकसमवायसम्बन्धेन वह्नित्वविशिष्टस्य यत्र साध्यता, धूमस्य च हेतुता, तत्र सद्धेतौ प्रसिद्धो न स्यात्, वह्नित्वप्रतियोगिकसमवायेन घटत्वपटत्वादीनां वृत्तित्वाप्रसिद्ध्या घटत्वपटत्वादिनिष्ठवह्नित्वप्रतियोगिकसमवायात्मकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकघटाद्यधिकरणताया अप्रसिद्ध्या घटाद्यभावस्य कस्यापि प्रतियोगिव्यधिकरणाभावत्वासम्भवात्।

यदि तूक्तदोषेण प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतावच्छेदकतायां यथाश्रुतसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमनिवेश्य पारिभाषिकमेव साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं साध्यतावच्छेदकताघटकेतरसम्बन्धावच्छिन्नत्व,-साध्यतावच्छेदकनिष्ठत्वोभयाभावरूपम्[2], तदापि घटत्वपटत्वादिनिष्ठायाः स्ववृत्तिवाच्यत्वसम्बन्धावच्छिन्नाया अपि अवच्छेदकतायाः साध्यतावच्छेदकनिष्ठत्वविरहेण उक्तोभयाभाववत्त्वरूपपारिभाषिकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वसम्पत्त्या तादृशावच्छेदकताकनिरूपकताकाधिकरणत्वस्य हेत्वधिकरणे सत्त्वेन (स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन घटत्वादिमतो वह्न्यादेर्धूमाधिकरणे पर्वतादौ संयोगेन सत्त्वेन) प्रतियोगिव्यधिकरणाभावोऽप्रसिद्ध एव स्यात्।

अतः प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतायां यथाश्रुतं पारभाषिकम्वा साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमनिवेश्य प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमेव निवेशनीयम्, ततश्च वह्निमान् धूमादित्यत्र सुप्रसिद्धस्थले विषयितया वह्नित्ववतो ज्ञानादेः साध्यतावच्छेदकेन संयोगसम्बन्धेन

१. 'यदुपपादिता तद्' इत्यत्र 'यदि'ति 'तदि'ति च क्रमशो 'यतः' 'ततः' इत्यभिप्रायकौ।

२. 'रूपमि'त्यस्याग्रे 'निवेश्येते'ति योजनीयम्।

अधिकरणाप्रसिद्ध्या विषयितया वह्नित्ववदभावः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणो लक्षणघटको भवितुन्नैव शक्नुयात्तदादाय तत्राव्याप्तिर्न स्यादतो विषयितासम्बन्धेन साध्यतावच्छेदकवतः साध्यतावच्छेदकसम्बन्धेन प्रसिद्धाधिकरणकस्थले रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्ववदभावमादायाव्याप्तिः प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकघटकसम्बन्धावच्छिन्नत्वनिवेशविरहे उक्ता, तत्र विषयितया रूपत्ववदभावस्य प्रतियोगिवैयधिकरण्यसम्भवादिति तदाशयात्।

पूर्वं दण्डिमान् दण्डिसंयोगादित्यत्र तद्दण्डवान्नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वं तत्ता-दण्डत्वाद्यविशेषिते एव स्वरूपतस्तद्दण्डमात्रे स्वीकृत्याव्याप्तिरुक्ता[1]। इदानीं पुनः सखण्डस्य तद्दण्डस्य जात्यखण्डोपाध्यतिरिक्तस्य किञ्चिद्रूपेणैव भाननियमात्स्वरूपतस्तद्दण्डस्य भानासम्भवमभ्युपेत्य तद्दण्डवान्नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकता तत्ताविशिष्टस्यैव दण्डस्य, न तु तत्तया अविशेषितस्य।

एवं स्थितौ तादृशाभावप्रतियोगितावच्छेदकताया दण्डनिष्ठायाः साध्यतावच्छेदकतावच्छेदकेतरतत्तावच्छिन्नत्वेन तदादाय तत्राव्याप्तिर्न स्यादित्याशयेन तत्र 'दण्ड्यादौ साध्ये'[2] इत्यत्र 'आदि' पदोपादानम्। उक्तरीत्या दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्त्यभावेऽपि तत्रादिपदग्राह्ये रूपत्वन्यूनवृत्तिजातिमद्वान् रूपादित्यत्र नीलपीताद्यभावं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावत्वेन परिगृह्याव्याप्तिः स्यान्नीलत्वपीतत्वादे रूपत्वन्यूनवृत्तिजातेः साध्यतावच्छेदकस्य तादृशाभावस्य निरवच्छिन्नप्रतियोगितावच्छेदकत्वात्।

अत्र 'रूपत्वन्यूनवृत्तिजाती' ति[3] परिगृह्य 'न्यूनवृत्तित्वं' परिष्क्रियते यत् 'स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेव स्वन्यूनवृत्तित्वम्'। नीलत्वादौ रूपत्वसमानाधिकरणत्वस्य रूपत्वसमानाधिकरणपीतादिस्वेतररूपवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य च द्वयोर्दलयोः सत्त्वात्तल्लक्षणसङ्गतिः।

उक्तलक्षणे विशेषणदलं 'स्वसमानाधिकरणत्वे सती' ति प्रकृते कर्मत्वसंयोगत्वादे 'रूपत्वन्यूनवृत्तिजाति' पदेन साध्यतावच्छेदकत्वव्यावृत्त्यर्थम्। स्वसामानाधिकरण्यानुपादाने कर्मत्वसंयोगत्वयो रूपत्वसमानाधिकरणभेदप्रतियोगितावच्छेदक-

---

१. प्रकृतग्रन्थे खण्डसंख्या १३९

२. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ३

३. तत्रैव, जागदीशीमूलम्, पृ. ४

त्वसत्त्वाद्रूपत्वन्यूनवृत्तित्वमापद्येत। तथासति तत्र रूपत्वन्यूनवृत्तिजातिरूपतया कर्मत्वसंयोगत्वयोरपि साध्यतावच्छेदकता आपद्येत। तत्र साध्यतावच्छेदकत्वापत्तौ च तादृशस्थले दीयमानाऽव्याप्तिः सङ्गता न स्यात्, रूपात्मकहेत्वधिकरणे कर्मत्ववतः कर्मणः संयोगत्ववतः संयोगस्य च सत्त्वेन तयोः प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वस्यैव सत्त्वात्। अतः 'स्वसमानाधिकरणत्वे सती'त्युक्तम्।

उक्तलक्षणे 'स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व'रूपविशेष्यदलादाने सत्त्वगुणत्वयो रूपत्वसमानाधिकरणत्वसत्त्वेन रूपत्वन्यूनवृत्तित्वापत्त्या रूपत्वन्यूनवृत्तिजात्यन्तर्गततया साध्यतावच्छेदकता स्यात्, तथासति पूर्ववदेव तत्राव्याप्तिदानमसङ्गतं स्यात्, तयो रूपसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वविरहात्, तादृशाभावप्रतियोगितानवच्छेदकत्वस्यैव तत्र सत्त्वादतः सत्त्वगुणत्वयोः साध्यतावच्छेदकत्ववारणाय विशेष्यदलं दत्तम्। तदुपादाने तु तयो रूपसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वविरहान्न दोषः।

सत्त्वगुणत्वयोर्जातित्वानङ्गीकारपक्षे तु तयो रूपत्वन्यूनवृत्तित्वेऽपि जातित्वविरहादेव साध्यतावच्छेदकत्वप्रसक्त्यसम्भवाद् विशेष्यदलस्थाने स्वभिन्नत्वमेव देयं स्वस्य स्वन्यूनवृत्तित्ववारणाय।

'रूपत्वन्यूनवृत्तिजातिमद्वानि'त्यनुपादाय 'रूपत्वन्यूनवृत्तिमद्वानि'त्येवोपादाने अर्थाद् 'जाति'पदानुपादाने संयोग-तद्रूपान्यतरत्वे जातित्वविरहिणि रूपत्वन्यूनवृत्तौ साध्यतावच्छेदकतापद्येत, रूपवति तादृशान्यतरत्वाश्रयस्य संयोगस्य सत्त्वेनोक्तान्यतरत्वस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वेनाऽव्याप्त्यसम्भवादुक्तग्रन्थासङ्गतिः स्यात्।

अत्र तत्त्वालोककृतेदमुच्यते यद् यद्यपि न केवलं रूपत्वन्यूनवृत्तिजातिमत्साध्यकरूपहेतुकस्थलेऽव्याप्तिः स्यात्, किन्तु तादात्म्यसम्बन्धेन जातिविशिष्टस्य तादात्म्यसम्बन्धेन साध्यतायां जातित्वस्य हेतुतायामपि अव्याप्तिः तादात्म्येन नीलत्वपीतत्वादिजातिमतस्तादात्म्येनाभावमादाय भवेदेव, तादृशाभावस्य स्वातिरिक्तपीतत्वादिजातौ हेत्वधिकरणे प्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वसम्भवात्तादृशाभावप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदकीभूतनीलत्वादिजातौ सत्त्वात्, तथा सत्तान्यजातिमतस्तादात्म्यसम्बन्धेन साध्यतायां सत्ताया हेतुतायामपि सत्तान्यनीलत्वादिजातिमदभावं स्वेतरपीतत्वादिजातिमद्वर्तिनमादायाव्याप्तिः स्यादेव, तथापि तदुपेक्षा तादात्म्येन व्याप्यव्यापकभावस्य हेतुसाध्याभावस्य सर्वानुमतत्वविरहादेव

जगदीशेन विहिता, परन्तूक्तकारणतस्तदुपेक्षा चिन्त्यैव, तादात्म्येन व्याप्यव्यापक-भावस्य सत्त्वात्।

'निरवच्छिन्नावच्छेदकत्वे'ति[1] प्रतीकोपरि तत्त्वालोकोऽस्ति — 'एतदभिधा-नन्तादृशप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरावच्छिन्नत्वाभाव-घटितलक्षणासत्त्वसम्पादनाय तल्लक्षणस्य विशिष्टसाध्यतावच्छेदकस्थलीयत्वादि'ति।

अत्र 'निरवच्छिन्नावच्छेदकत्वादि'त्युक्तिर्न शुद्धसाध्यतावच्छेदकस्थलीय-लक्षणस्य तत्रासत्त्वबोधनाय, रूपत्वन्यूनवृत्तिजातिमद्वान् रूपादित्यस्य विशिष्टसाध्य-तावच्छेदकस्थलत्वेन तत्र शुद्धसाध्यतावच्छेदकस्थलीयलक्षणासत्त्वबोधनस्यौचित्य-विरहात्, किन्तु विशिष्टसाध्यतावच्छेदकस्थलीयलक्षणासत्त्वबोधनायैव, रूपाधिकर-णवृत्तिनीलपीताद्यभावप्रतियोगितावच्छेदकताया अनुल्लिख्यमाननीलत्वपीतत्वादि-जातिनिष्ठतया स्वरूपत एव भासमाननिष्ठत्वेन निरवच्छिन्नत्वबोधनद्वारा साध्यतावच्छे-दकतावच्छेदक-तदितरोभयानवच्छिन्नत्वबोधनेन विशिष्टसाध्यतावच्छेदकस्थलीय-लक्षणासत्त्वबोधनौचित्यसद्भावाद् निरवच्छिन्ने उभयावच्छिन्नत्वविरहस्य कैमुतिक-न्यायसिद्धत्वादित्याशयः।

'स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेने'ति[2] जागदीशीभागस्यायमर्थो यद् रूपत्व-न्यूनवृत्तिजातिमद्वान् रूपादित्यत्र रूपत्वन्यूनवृत्तिनीलत्वपीतत्वादिकं समवायेन न साध्यतावच्छेदकम्, किन्तु रूपत्वमेव स्वन्यूनवृत्तिजात्याश्रयत्वरूपपरम्परासम्बन्धेन साध्यतावच्छेदकमतो नीलपीताद्यभावमादाय तत्राव्याप्तिर्न स्यात्, रूपाश्रये क्वापि स्वन्यूनवृत्तिजात्याश्रयत्वरूपपरम्परासम्बन्धेन रूपत्ववदभावस्य प्रतियोगिव्यधिकरण-त्वासम्भवादिति।

अत्र स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धोल्लेखः स्वसमानाधिकरणजातिमत्त्व-सम्बन्धस्य लघुभूतस्य तथा स्वाधिकरणत्वादेश्च लघुभूतसम्बन्धस्योपलक्षकः, अन्यथा तत्र सम्भवत्तादृशलघुभूतपारम्परिकसम्बन्धादर्शनं शून्यतासूचकं स्यात्, नीलपीतादिरूपेषु रूपत्वस्य यथा स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धस्तथैव स्वसमानाधिकरणनीलत्वपीतत्वादिजातिमत्त्वसम्बन्धः, रूपत्वाधिकरणत्वसम्बन्धोऽ-पीत्युक्तखण्डस्याशयः।[१४३]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ५

२. तदेव, पृ. ५

तत्त्वालोकः – यत्तु — रूपत्वन्यूनवृत्तिजातिमद्वानित्याकारानुगुण्येन तदभिधानमिति। तन्न, तत्सम्बन्धेन रूपत्वस्य तथात्वे रूपत्ववद्वानित्याकारस्यैव स्वहस्तिततत्वेन प्रकृतानुगुण्यस्य स्वहृदयैकमात्रवेद्यत्वात्।

"अनुमितिविधेयते"ति[1]। प्रमापरामर्षजन्यानुमितिविधेयतावच्छेदके-त्यर्थः। एवञ्चा"नुमित्यसम्भवादि"[2]त्यस्यापि प्रमापरामर्षजन्यानुमित्य-सम्भवादित्यर्थः। नातो दण्डांशे व्यापकतावच्छेदकत्वभ्रमाद्दण्डावच्छिन्न-विधेयताकानुमितिसम्भवेऽपि क्षतिः।

केचित्तु — सल्लिङ्गकानुमितेर्भ्रमात्मकपरामर्शमात्रजन्यत्वं सिद्धान्त-विरुद्धं कथमन्यथा ज्ञयेत्वादिलिङ्गकवाच्यत्वाद्यनुमितेस्साध्याभाववदवृत्तित्वा-द्यवगाहिभ्रमपरामर्षात्सम्भवेऽपि साध्याभाववदवृत्तित्वादेर्व्याप्तित्वानङ्गीकरण-ञ्चिन्तामणिकृतां घटते इति दण्डावच्छिन्नविधेयताकानुमितेरभावाद्यथाश्रुतमेव सम्यग् — इत्याहुः।

"प्रतियोगितावच्छेदकतानवच्छेदको यो धर्म" इति[3]। इदमुपलक्षणम्। दण्डिसंयोगसाध्यके तत्तद्दण्डिसंयोगाभावमादायाव्याप्तिवारणाय साध्यता-वच्छेदकतावच्छेदकतावच्छेदके प्रतियोगितावच्छेदकतावच्छेदकतानवच्छेद-कत्वमपि विवक्षणीयम्। एवम्विवक्षाधारैव 'केचिदि'त्यनेनास्वरससूचन-बीजम्बोध्यम्।

"अनुमित्यापत्तेरि"ति[4]। अथ तादृशानवच्छेदकं यद्दण्डत्वम्, तद्विशि-ष्टावच्छिन्नसामानाधिकरण्यज्ञानं दण्डावच्छिन्नविधेयताशाल्यनुमितौ कारणम्, तादृशानवच्छेदकदण्डत्वावच्छिन्नसामानाधिकरण्यज्ञानञ्च दण्डत्वावच्छिन्न-विधेयताशाल्यनुमिताविति सामानाधिकरण्यांशे दण्डादेः प्रवेशाप्रवेशाभ्यां सामग्रीभेदसम्भवेन नापत्तिसम्भव इति चेद्।

न। स्ववृत्तिवाच्यत्ववत्त्वादिसम्बन्धेन वह्निसमानाधिकरणाभाव-प्रतियोगितानवच्छेदकत्वस्य धूमत्वे सत्तया तदवच्छिन्नधूमसामानाधिकरण्य-ग्रहात्समवायेन तदवच्छिन्नधूमविशिष्टसामानाधिकरण्यग्रहाच्चाभ्रान्तस्य वह्नि-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ५
२. तदेव, पृ. ५
३. तदेव, पृ. ५
४. तदेव, पृ. ५

लिङ्गकधूमानुमितिवारणाय वह्निलिङ्गकधूमविशिष्टानुमितिवारणाय च येन सम्बन्धेन यस्यानवच्छेदकत्वन्तेन सम्बन्धेन तदवच्छिन्नसामानाधिकरण्यस्य व्याप्तिघटकत्वन्तादृशसामानाधिकरण्यज्ञानस्य च तेन सम्बन्धेन तदवच्छिन्न-विधेयताकानुमितौ तादृशसम्बन्धात्मकधर्म्मावच्छिन्नविधेयताकानुमितौ च कारणत्वम्वाच्यन्तथा चापत्तेरवारणादिति भावः।[१४४]

*प्रकाशः*—यः (यत्तु) इत्थमभिदधाति यद् रूपत्वन्यूनवृत्तिजातिमत्तया, अर्थाद् रूपत्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेन रूपत्वविशिष्टया, साध्यस्याभिधानं रूपत्वन्यून-वृत्तिजातिमद्वान् रूपादित्यनेन, तत्र रूपत्वन्यूनवृत्तिमद्वानित्याकारकानुमित्यानुगुण्य-दृष्ट्यैव यदि रूपत्वन्यूनवृत्तिजात्याश्रयत्वातिरिक्तेन केनापि सम्बन्धेन रूपत्वविशिष्टतया तत्र साध्यस्याभिधानमभविष्यत्तदा तस्य रूपत्वन्यूनवृत्तिजातिमद्वानित्याकारानुमित्यानु-गुण्यन्नाभविष्यदिति।

तन्नोचितम्। स्वन्यूनवृत्तिजात्याश्रयत्वसम्बन्धेन रूपत्वस्य साध्यतावच्छेदक-त्वप्रदर्शनेन रूपत्ववद्वानित्याकारकानुमितेरेव स्वहस्तिततत्वात् स्वन्यूनवृत्तिजात्या-श्रयत्वसम्बन्धेन रूपत्वस्य साध्यतावच्छेदकत्वोक्तेः, प्रकृतानुगुण्यस्य रूपत्वन्यूनवृत्ति-जातिमद्वानित्याकारानुमित्यानुगुण्यस्य स्वहृदयैकमात्रवेद्यत्वाद्, अर्थात्तादृशोक्ते-स्तादृशाकारानुगुण्यस्यान्यैर्वेद्यत्वविरहात्, अन्यैर्यत्तुभिन्नैस्तथोक्ते रूपत्ववद्वानित्या-कारानुगुण्यस्यैव वेद्यत्वादित्याशयात्।

'दण्ड्यादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमि'ति[१] दीधितिघटकं 'साध्यतावच्छेदकमि'ति 'अनुमितिविधेयतावच्छेदकमि'त्युक्त्या[२] जगदीशेन व्याख्यातम्। तत्र तत्त्वालोककृता 'अनुमितिविधेयते'ति परिगृह्य उच्यते यद'नुमितिविधेयतावच्छेदके'त्यस्य 'प्रमापरामर्षजन्यानुमितिविधेयतावच्छेदकेत्यर्थः' इति।

अत्र 'अनुमितिविधेयतावच्छेदके'त्यस्य 'प्रमापरामर्षजन्यानुमितिविधेयता-वच्छेदके'त्यर्थकरणे सति अग्रेऽपि 'तथाचोक्तव्याप्तिज्ञानाद्दण्ड्यंशे दण्डत्वप्रकारिका दण्डत्ववद्वानित्येवानुमितिर्न तु दण्डिमानिति दण्डप्रकारिकाऽपि, दण्डस्य व्यापकता-वच्छेदकत्वेनाग्रहात्, कारणबाधेन तदवच्छिन्नविधेयकानुमित्यसम्भवादि'ति[३]

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. २

२. तत्रैव, जागदीशीमूलम्, पृ. ५

३. तदेव, पृ. ५

जागदीशीघटकस्य 'अनुमित्यसम्भवादि'त्यस्यापि 'प्रमापरामर्षजन्यानुमित्यसम्भवा-दि'त्यर्थो बोध्य इति।

उक्तस्थलद्वयघटकानुमितिद्वयस्य प्रमापरामर्षजन्यानुमितिद्वयपरत्वव्याख्यानेन दण्डांशे व्यापकतावच्छेदकत्वभ्रमाद्दण्डस्य विधेयतावच्छेदकत्वसम्भवेऽपि 'तथा च उक्तव्याप्तिज्ञानाद्दण्ड्यंशे दण्डत्वप्रकारिका दण्डत्ववद्वानित्येवानुमितिर्न तु दण्डिमानिति' इत्युक्तेर्नासङ्गतिः। एवं तदग्रिमाया 'दण्डस्य व्यापकतावच्छेदकत्वेनाग्रहात् कारणबाधेन तदवच्छिन्नविधेयकानुमित्यसम्भवादि'त्युक्तेरपि नासङ्गतिरिति।

अत्र कैश्चिदिदं कथ्यते यज्जगदीशोक्तवाक्यद्वयानुमितिपदद्वयस्य प्रमापरामर्ष-जन्यानुमितिपरत्वस्वीकारो नावश्यकः, सल्लिङ्गकानुमितेर्भ्रमात्मकपरामर्षजन्यत्वस्य सिद्धान्तविरुद्धत्वात्, सल्लिङ्गकानुमितेर्भ्रमात्मकपरामर्षजन्यत्वविरहादेव चिन्तामणिकृता गङ्गेशेन साध्याभाववदवृत्तित्वादेर्व्याप्तित्वानङ्गीकारादन्यथा साध्याभाववदवृत्तित्वाद्य-वगाहिभ्रमात्मकपरामर्षतो ज्ञेयत्वादिलिङ्गकवाच्यत्वाद्यनुमितिसम्भवात्साध्याभाववद-वृत्तित्वादेर्व्याप्तित्वानङ्गीकारानौचित्यप्रसङ्गात्। सल्लिङ्गकानुमितेर्भ्रमात्मकपरामर्षाजन्यत्वे च दण्डांशे व्यापकतावच्छेदकत्वभ्रमाद्दण्डिमानित्येवं दण्डावच्छिन्नविधेयताकानुमितेः सम्भवाभावाद् जगदीशोक्तवाक्यघटकानुमितिपदस्य प्रमापरामर्षजन्यानुमित्यर्थकत्व-कथनावश्यकताया अभावात्तत्रानुमितिपदं यथाश्रुतमेव सम्यगिति।

जगदीशतर्कालङ्कारेण दण्डिमान् दण्डिसंयोगादित्येतत्स्थलीयं केषाञ्चिन्मतमुप-पाद्यते[1] यत् तत्र कारणभेदेन अर्थाद् अनुमितिविशेषव्याप्तिग्रहविशेषयोः कार्यकारण-भावभेदाद्दण्डावच्छिन्नविधेयताकानुमितिर्दण्डत्वावच्छिन्नविधेयताकानुमितिश्च जायेते। तत्र दण्डावच्छिन्नविधेयताकानुमितिम्प्रति प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्य-न्ताभावप्रतियोगितावच्छेदकतानवच्छेदको यो धर्मस्तद्धर्मविशिष्टावच्छिन्न(अर्थात्तत्र तादृशप्रतियोगितावच्छेदकतावच्छेदकभिन्नदण्डत्वविशिष्टावच्छिन्न)सामानाधिकरण्य-रूपव्याप्तिग्रहः कारणम्। दण्डत्ववद्वानित्याकारकदण्डत्वावच्छिन्नविधेयताकानुमिति-म्प्रति तु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मः (दण्डत्वरूपो धर्मः), तदवच्छिन्नसामानाधिकरण्यरूपव्याप्तिग्रहः कारणमिति।

तत्र तत्त्वालोककृता 'प्रतियोगितावच्छेदकतानवच्छेदको यो धर्म'[2] इत्यंशं परिगृह्य व्याख्यायते यत् 'प्रतियोगितावच्छेदकतानवच्छेदको यो धर्म' इति

---

१. 'केचित्तु' इत्यादिना 'इत्याहुरि'त्यन्तेन।
— प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ५
२. तदेव, पृ. ५

'प्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदको यो धर्म' इत्यादेरप्युपलक्षणम्, यतो दण्डिसाध्यकस्थले तद्दण्डवदभावमादाय प्रसक्ताव्याप्तिवारणाय यथा तादृशाभावप्रतियोगितावच्छेदकतानवच्छेदको धर्मस्तद्धर्मविशिष्टावच्छिन्नसामानाधिकरण्यरूपव्याप्तिग्रहस्तद्धर्मविशिष्टावच्छिन्नविधेयकानुमितये अपेक्षितो भवति, तथैव, यत्र दण्डिसंयोगस्य साध्यता, दण्डिसंयोगप्रतियोग्यनुयोग्यन्यतरत्वस्य हेतुता, तत्र, तत्तद्दण्डिसंयोगाभावमादाय प्रसक्ताव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकतावच्छेदके (साध्यतायास्तृतीयकोटिकावच्छेदके) प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदकत्वविवक्षाया अपि आवश्यकता स्यादेव, अर्थाद् (यथा) दण्डत्वस्य साध्यतावच्छेदकतावच्छेदकत्वस्थलाय तादृशप्रतियोगितावच्छेदकतानवच्छेदकत्वविवक्षापेक्षिता, तथैव दण्डत्वस्य साध्यतावच्छेदकतावच्छेदकतावच्छेदकत्वस्थलाय तादृशप्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदकत्वविवक्षापि अपेक्षितैव।

एवं दण्डत्वं तादृशं तदन्यमेव वा किञ्चित् साध्यतायाश्चतुर्थकोटिकमवच्छेदकं भवेत्तत्स्थलार्थं तादृशप्रतियोगिताचतुर्थानवच्छेदकत्वं साध्यतायाश्चतुर्थावच्छेदके विवक्षणीयं भवेद्, एवं विवक्षाधारापत्तिरेवात्र केषाञ्चिन्मतेऽस्वारस्यबीजमवधेयम्।

अनन्तरं 'यत्तु' मतं जगदीशेनेदं दर्शितं[1] यद्दण्डत्वधर्मिकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वज्ञानस्यैव कार्यतावच्छेदकं दण्डावच्छिन्नविधेयताकानुमितित्वमिति। अतो दण्डत्वस्य स्वाश्रयाश्रयत्वपरम्परया साध्यतावच्छेदकत्वे दण्डिमान् दण्डिसंयोगादित्यत्र दण्डावच्छिन्नविधेयताका एवानुमितिरिति।

तदेतद् 'यत्तु' मतन्नैव समीचीनम्, परम्परया दण्डत्वावच्छिन्नविधेयताकानुमितित्वस्यापि दण्डावच्छिन्नविधेयताकानुमितित्वस्येव दण्डत्वधर्मिकतादृशप्रतियोगितानवच्छेदकत्वज्ञानकार्यतावच्छेदकत्वात्सर्वदा एव दण्डावच्छिन्नविधेयताकदण्डत्वावच्छिन्नविधेयताकानुमित्योः 'दण्डिमान्' 'दण्डत्ववद्वानि'त्याकारकयोः प्रसङ्गापातात्।

अत्र 'अनुमित्यापत्तेः' इत्यनेन ''सर्वदैव 'दण्डिमान्' 'दण्डत्ववद्वानि'त्युभयाकारानुमित्यापत्तेरि''ति[2] [जागदीशीप्रतीकं] परिगृह्य तत्त्वालोककृता 'अथे'त्यादिना

---

१. 'यत्तु' इत्यादिना 'दिगि'त्यन्तेन।
   – प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ५

२. तदेव, पृ. ५

शङ्क्यते यत्तादृशानवच्छेदकं यद्दण्डत्वम्, तद्विशिष्टावच्छिन्नसामानाधिकरण्यज्ञानस्य दण्डावच्छिन्नविधेयताकानुमितिम्प्रति कारणत्वस्वीकारे तथा तादृशानवच्छेदक-दण्डत्वावच्छिन्नसामानाधिकरण्यज्ञानस्य दण्डत्वावच्छिन्नविधेयताकानुमितिम्प्रति कारणत्वस्वीकारे कारणीभूतज्ञानविषयसामानाधिकरण्यांशे एकत्र दण्डादेः प्रवेशेन, अपरत्र दण्डादेरप्रवेशेन, सामग्रीभेदसम्भवेन नैकदा न सर्वदा 'दण्डिमान्' 'दण्डत्ववद्वानि'त्यनुमित्योः प्रसङ्गरूपापत्तिरिति।

अत्र समाधीयते यत् संयोगेन वह्निरूपहेत्वधिकरणे अयोगोलके समवायेन धूमत्वविशिष्टस्य धूमस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावो यथा प्रतियोगि-व्यधिकरणो भवति तथा स्ववृत्तिवाच्य[त्व]वत्त्वसम्बन्धेन धूमत्वविशिष्टस्य संयोग-सम्बन्धावच्छिन्नप्रतियोगिताकाभावः प्रतियोगिव्यधिकरणो न भवति, स्ववृत्तिवाच्य-त्ववत्त्वसम्बन्धेन धूमत्वविशिष्टस्य वह्न्यादेः संयोगसम्बन्धेन अयोगोलकेऽपि विद्यमानत्वात्। एवंसति स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन वह्न्यात्मकहेतुसमाना-धिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य धूमत्वे सत्त्वेन तादृश-प्रतियोगितानवच्छेदकधूमत्वावच्छिन्नधूमसामानाधिकरण्यज्ञानादभ्रान्तस्य वह्निलिङ्गक-धूमानुमित्या भवितव्यम्, किन्तु वस्तुतस्तादृशसामानाधिकरण्यज्ञानात्तादृशानुमितिर्न जायते, तथा स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन तादृशप्रतियोगितानवच्छेदकं यद्धूमत्वम्, तादृशधूमत्वेन समवायेन अवच्छिन्नो यो धूमस्तादृशधूमविशिष्टसामानाधिकरण्यज्ञानाद् वह्निलिङ्गकधूमविशिष्टविषयकानुमित्या भवितव्यम्। न च वस्तुतस्तादृशसामानाधिक-रण्यज्ञानाद्धूमविशिष्टविधेयताकानुमितिर्भवति। अत उक्तापत्तिवारणाय येन सम्बन्धेन यस्य तादृशप्रतियोगितानवच्छेदकत्वन्तेन सम्बन्धेन तदवच्छिन्नसामानाधिकरण्यस्य व्याप्तिघटकत्वन्तादृशसामानाधिकरण्यज्ञानस्य च तेन सम्बन्धेन तदवच्छिन्नविधेयता-कानुमितौ, तथा येन सम्बन्धेन यस्य प्रतियोगितानवच्छेदकत्वं तादृशसम्बन्धात्मक-धर्मावच्छिन्नविधेयताकानुमितौ च कारणत्वं मन्तव्यम्।

समवायेन वह्नित्वं धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं भवति, अतः समवायेन वह्नित्वावच्छिन्नसामानाधिकरण्यस्य व्याप्तिघटकता = तादृशप्रतियोगितानव-च्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यज्ञानात् समवायेन वह्नित्वावच्छिन्नविधेयता-कानुमितिस्तथा तादृशसमवायात्मकसम्बन्धात्मकधर्मावच्छिन्नविधेयताकानुमितिश्च, अर्थात् तादृशसम्बन्धात्मक = समवायात्मकसम्बन्धात्मक,-धर्मावच्छिन्नवह्निर्यथा वह्नित्वेन अवच्छिन्नो भवति तथा वह्नित्वसमवायस्य वह्नौ सत्त्वात्तादृशसम्बन्धात्मक-समवायावच्छिन्नोऽपि वह्निर्भवति। तथा च वह्नित्वावच्छिन्नविधेयताका वह्नित्व-

समवायावच्छिन्नविधेयताका च वह्न्यनुमितिः समवायेन वह्नित्वधर्मिकतादृश-प्रतियोगितानवच्छेदकत्वज्ञानाद् भवति।

एवं प्रकृते स्वाश्रयाश्रयत्वरूपपारम्परिकसम्बन्धेन एव दण्डत्वं तादृशप्रतियोगितानवच्छेदकं भवति। अतः स्वाश्रयाश्रयत्व-दण्डत्वावच्छिन्नसामानाधिकरण्यस्य व्याप्तिघटकता तथा स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्वावच्छिन्नविधेयताकानुमितौ तथा स्वाश्रयाश्रयत्वसम्बन्धात्मकधर्मावच्छिन्नदण्डत्वाश्रयदण्डावच्छिन्नविधेयताकानुमितौ च कारणता भवेद्, एवं सति तादृशसामानाधिकरण्यज्ञानात् सर्वदैव 'दण्डत्ववद्वान्' 'दण्डिमानि'त्यनुमित्योरापत्तेर्वारणविरहादिति समाधातुराशयोऽवधेय इति भावः।[१४४]

**तत्त्वालोकः– इदन्त्ववधेयम्। येन सम्बन्धेन यस्यानवच्छेदकत्वम् तेन सम्बन्धेन तदवच्छिन्नसामानाधिकरण्यग्रहस्तेन सम्बन्धेन तदवच्छिन्नविधेयताकानुमितिप्रयोजकः, तद्विशेषिततादृशसम्बन्धात्मकधर्मावच्छिन्नसामानाधिकरण्यग्रहस्तादृशसम्बन्धात्मकधर्मावच्छिन्नविधेयताकानुमितिप्रयोजक इत्यभ्युपगमे नापत्तिरिति।**

**दीधितिकृतां दण्डत्वादेस्साध्यतावच्छेदकत्वानुधावनं यदस्ति तद्विशेषरूपेण संसर्गत्वानभ्युपगमेन, अन्यथा साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नसावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वाभावविवक्षणे दोषाभावात्तदनुधावनमफलं स्यादिति।[१४४-अ]**

***प्रकाशः*– अत्र 'इदन्त्ववधेयमि'त्युपक्रम्य तत्त्वालोककृतेदमुच्यते यदितः पूर्वन्तु आपत्तेरवारणमुपपादितमुपपादितरीत्या, किन्तु वस्तुत आपत्तेर्वारणं सम्भवत्येव, यतो हि येन सम्बन्धेन यस्यानवच्छेदकत्वं (स्वाश्रयाश्रयत्वसम्बन्धेन प्रकृते दण्डत्वस्यानवच्छेदकत्वं) तेन सम्बन्धेन तदवच्छिन्नसामानाधिकरण्यग्रहस्य (स्वाश्रयाश्रयाश्रयत्व[1]सम्बन्धेन दण्डत्वावच्छिन्नसामानाधिकरण्यग्रहस्य) तेन सम्बन्धेन तदवच्छिन्नविधेयताकानुमितेः (स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्वावच्छिन्नविधेयताकानुमितेः) प्रयोजकता। 'तद्विशेषित-तादृशसम्बन्धात्मकधर्मावच्छिन्नसामानाधिकरण्यग्रहस्य तु (दण्डत्वविशेषितस्वाश्रयाश्रयत्वसम्बन्धात्मकदण्डात्मकधर्मावच्छिन्नसामानाधिकरण्यग्रहस्य तु) तादृशसम्बन्धात्मकधर्मावच्छिन्न(दण्डत्वविशेषितदण्डात्मकधर्मावच्छिन्न)विधेयताकानुमितेः प्रयोजकता' इत्यभ्युपगमे दण्डत्वधर्मिक-

१. 'स्वाश्रयाश्रयत्वे'त्यनेन भवितव्यम्।

तादृशप्रतियोगितानवच्छेदकत्वज्ञानान्न सर्वदा 'दण्डत्ववद्वान्' 'दण्डिमानि'त्याकारानुमित्योरापत्तिसम्भव इति।

अनन्तरमत्र तत्त्वालोककृतेदं कथ्यते यद्दीधितिकृता दण्डिमान् दण्डिसंयोगादित्यादौ दण्ड्यादिसाध्यकस्थले परम्परासम्बद्धस्य दण्डत्वादेरेव साध्यतावच्छेदकत्वं यद्दर्शितन्तद् विशेषरूपेण संसर्गतामनभ्युपगम्यैव, यतो हि विशेषरूपेण संसर्गता यदि अभ्युपगम्येत, तदा उक्तस्थले दण्डत्वादेः परम्परया साध्यतावच्छेदकत्वाभ्युपगमो नावश्यकः स्यादन्यथैव तत्राव्याप्तिः परिहृता स्यात्। विशेषरूपेण संसर्गत्वाभ्युपगमे तत्राव्याप्तिवारकोपाय इत्थं स्यात्—

सावच्छिन्नसाध्यतावच्छेदकस्थले साध्यतावच्छेदकधर्मिकः साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्ना या सावच्छिन्ना अवच्छेदकता, तादृशावच्छेदकताप्रतियोगिकत्वविशेषितस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वस्याभावो विवक्षितः स्यात्, तथासति तत्र साध्यतावच्छेदकीभूते दण्डात्मकधर्मे तद्दण्डवान् नास्तीति प्रतीतिसिद्धप्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकदण्डत्वेतरतत्तावच्छिन्नसावच्छिन्नावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धेन सत्त्वेऽपि दण्डनिष्ठावच्छेदकतायास्तत्तावच्छिन्नत्वेन साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नसावच्छिन्नावच्छेदकत्वप्रतियोगिकस्वरूपेण स्वव्यधिकरणसम्बन्धेनासत्त्वात्तादृशस्वव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकतादृशावच्छेदकत्वाभावस्य तत्र दण्डात्मकसाध्यतावच्छेदके सत्त्वादव्याप्तेरभावादिति भावः।[१४४-अ]

तत्त्वालोकः— "हेतुतावच्छेदकावच्छिन्नाधिकरणत्वमि"ति[१]। ननु सत्तात्वावच्छिन्नाधिकरणत्वस्यापि हेतुतावच्छेदकावच्छिन्नाधिकरणतात्वाद् द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तितादवस्थ्यं वह्निज्ञानत्वसाध्यकवह्निहेतौ महानसीयवह्नित्वावच्छिन्नाधिकरणत्वस्यापि हेतुतावच्छेदकावच्छिन्नाधिकरणत्वरूपत्वादव्याप्तिश्चेत्यतो हेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपितस्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नवृत्तितावदधिकरणत्वन्निवेश्यम्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

एकत्वादेः पर्य्याप्त्यनभ्युपगमे च स्ववृत्तित्व, - स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन हेतुताविशिष्ट-निरूपकताकाधिकरणत्वम्वा विवक्षणीयम्, वृत्तित्वञ्च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन, वैशिष्ट्यञ्च प्रागुक्तचतुष्टय-सम्बन्धेन।

एवञ्च महानसीयवह्निसाध्यके समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टे सद्धेतौ कालिकसम्बन्धावच्छिन्नमहानसीयत्व-निष्ठावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताक-निरूपकताकाधिकरणत्वस्य तादृशरूपवृत्तिनिरूपकताकाधिकरणत्वेऽपि न क्षतिः।[१४५]

*प्रकाशः* – 'हेतुतावच्छेदकावच्छिन्नाधिकरणत्वमि'ति जागदीशीभागं परिगृह्य उपर्युक्तखण्डेन तत्त्वालोककृता विचार आरभ्यते—

'प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगिता-नवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरि'ति दीधितिघटक 'यद्रूपविशिष्टे'त्यंशस्य व्यावृत्तिर्दीधितिकृता 'इत्थञ्च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वाद्य-धिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिरि'[१]त्यनेन स्वयमेव प्रदत्ता 'साधनस्य विशिष्टसत्त्वादेर्गुणादाववृत्तेरि'[२]त्यनेनोपपादिता च। तत्र जगदीशेन 'तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्येति भाव'[३] इत्युल्लिख्य व्याख्यातम्, तज्जागदीशीघटकं 'हेतुतावच्छेदकावच्छिन्नाधिकरणत्वमि'ति प्रतीक-रूपेण परिगृह्य तत्त्वालोककृता व्याख्या आरभ्यते 'ननु सत्तात्वावच्छिन्नाधिकरण-त्वस्यापि' इत्यादिना पूर्वपक्षतत्समाधानादिना।

तत्र प्रथममयं पूर्वपक्षः क्रियते यल्लक्षणे 'यत्समानाधिकरण'स्थाने 'यद्रूप-विशिष्टसमानाधिकरण'निवेशस्य, अर्थाद् 'हेतुसमानाधिकरण'स्थाने 'हेतुतावच्छेदक-विशिष्टसमानाधिकरण'निवेशस्य, हेतुतावच्छेदकनिष्ठावच्छेदकताकनिरूपकताका-धिकरणतावद् वृत्त्यर्थस्य फलम् 'इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादि'त्यत्राव्याप्ति-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ६

२. तदेव, पृ. ६

३. तत्रैव, जागदीशीमूलम्, पृ. ६

वारणम्, गुणकर्मान्यत्वविशिष्टसत्तात्वरूपहेतुतावच्छेदकनिष्ठावच्छेदकताकनिरूपिता-काधिकरणताविरहं गुणे दर्शयित्वा, यद्दर्शितं तत्तु[1] तथानिवेशेऽपि द्रव्यं गुणकर्मान्यत्व-विशिष्टसत्त्वादित्यत्र सत्तात्वस्यापि हेतुतावच्छेदकान्तर्गततया सत्तात्वनिष्ठावच्छेदकता-कनिरूपकताकाधिकरणताया गुणेऽपि सत्त्वेन तत्र साध्याभावस्य द्रव्यत्वाभावस्य प्रतियोगिव्यधिकरणतया लक्षणघटकत्वसम्भवात्तदादायाव्याप्तिस्तदवस्थैव, न तु परिहृता भवति। तथा यत्र वह्निज्ञानत्वस्य साध्यता, विषयितया वह्नेश्च हेतुता, तत्रापि सद्धेतौ उक्ते निवेशप्रकारेऽव्याप्तिः प्रसज्यति, विषयितया महानसीयवह्न्यधिकर-णताया हेतुतावच्छेदकीभूतवह्नित्वनिष्ठावच्छेदकताकनिरूपकताकत्वात् तादृशाधिकर-णतावति महानसीयवह्निविषयकज्ञाने साध्याभावस्य वह्निज्ञानत्वाभावस्य प्रतियोगि-व्यधिकरणत्वेन तदादाय तत्राव्याप्तिः स्यात्। अर्थादुक्तनिवेशे न्यूनाधिकावच्छेदकताक-निरूपकताकाधिकरणतामादाय दोषः स्यादेवेति।

अत्रेदं समाधीयते यन्निवेशितहेतुतावच्छेदकावच्छिन्नाधिकरणतायास्तात्पर्य्यं हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपितस्वा-वच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तिता-वत्यामेवाधिकरणतायामस्ति। अर्थाद्धेतुतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकं रूपं यादृश्या अधिकरणताया निरूपकतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगिता-वच्छेदकरूपमेकमेव विवक्षितम्, उक्तयोर्द्वयो रूपयोरेकत्वे सत्येव उक्तरूपनिरूपिता = हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपिता स्वावच्छेदकता(अधिकरणतानिरूपकतावच्छेदकता)त्वावच्छिन्नप्रतियोगिकपर्य्याप्त्य-नुयोगितावच्छेदकत्वसम्बन्धावच्छिन्ना या वृत्तिता, तादृशवृत्ति(ता)वती अधिकरणता भवेन्नान्यथा।

द्रव्यं सत्त्वादित्यत्र गुणकर्मान्यत्ववैशिष्ट्य(गुणकर्मभेदसमानाधिकरणत्व) सत्तात्वैतदुभयगतद्वित्वमेव हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगिता-वच्छेदकरूपम्, तादृशं रूपं सत्तात्वावच्छिन्नाधिकरणतानिरूपकतावच्छेदकता-प्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं न भवति, सत्तात्वगतैकत्वस्यैव तथात्वादतः सत्तात्वावच्छिन्ना अधिकरणता विवक्षितहेतुतावच्छेदकावच्छिन्नाधिकरणता न भवति, अतोऽव्याप्तितादवस्थ्यन्न स्यात्।

---

१. 'तत्तु' इत्यस्याग्रे 'अपरिहृतमेव, यतः' इत्यपि योजनीयम्।

एवं वह्निज्ञानत्वसाध्यकवह्निहेतुकस्थलेऽपि महानसीयवह्न्यधिकरणतामादाया-व्याप्तिर्न स्यात्। वह्नित्वगतैकत्वस्यैव तत्र हेतुतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयो-गितावच्छेदकरूपता, महानसीयवह्न्यधिकरणतानिरूपकतावच्छेदकताप्रतियोगिक-पर्य्याप्त्यनुयोगितावच्छेदकरूपता तु महानसीयत्ववह्नित्वैतदुभयगतद्वित्वस्यैव, अतो महानसीयवह्न्यधिकरणताया विवक्षितहेतुतावच्छेदकावच्छिन्नाधिकरणतान्तर्गतत्व-विरहान्न तामादाय तत्राव्याप्तिरिति।

तत्त्वालोके हेतुतावच्छेदकावच्छिन्नत्वेन विवक्षिता अधिकरणता हेतुता-वच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपिता, अथ च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्ना या वृत्तिता, तादृशवृत्तितावत्त्वेन विशेषिता, एतावता हेतुतावच्छेदकतात्वावच्छिन्न-प्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपं विशेषितवृत्तिताया निरूपकमुक्तं जातम्।

तादृशरूपात्मकनिरूपकनिरूपिता वृत्तिता किंसम्बन्धावच्छिन्ना, सम्बन्धा-वच्छिन्नवृत्तिताया अभावादिति जिज्ञासायामुक्तं 'स्वावच्छेदकतात्वावच्छिन्नप्रतियोगि-कपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्ना' इति। तत्र सम्बन्धघटक 'स्व' पदग्राह्या तादृशवृत्तितावती अधिकरणता एव, किन्तु 'स्वावच्छेदकता' पदेन अधिकरणता निरूपकतावच्छेदकतैव ग्राह्या भवति, स्वनिरूपकतावच्छेदकस्य स्वावच्छेदकत्वेन व्यवहार्यत्वदर्शनात्, यथा पर्वतादौ 'धूमत्वावच्छिन्नाधिकरणता' इत्येवं व्यवहारो भवति, तत्रापि 'धूमत्वावच्छिन्नाधिकरणता' इत्यस्य धूमत्वावच्छिन्न-निरूपकताकाधिकरणताबोधने एव तात्पर्य्यं भवतीति बोधसौलभ्यायोक्तम्।

हेतुतावच्छेदकावच्छिन्नाधिकरणताया पर्य्याप्तिघटितोक्तपद्धत्या विवक्षा, एकत्वादेः पर्य्याप्त्यभ्युपगम पक्ष एव, सम्भवदुक्तिका। एकत्वादेः पर्य्याप्त्यनभ्युपगम-पक्षे तु तत्स्थाने हेतुताविशिष्टनिरूपकताकाधिकरणता एव 'हेतुतावच्छेदकावच्छिन्ना-धिकरणता' पदेन विवक्षणीया, तत्र निरूपकतायां हेतुतावैशिष्ट्यनियामकसम्बन्धौ 'स्ववृत्तित्व' 'स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व'रूपौ द्वौ। तत्र 'स्ववृत्तित्व'रूपप्रथमसम्बन्धघटकवृत्तितानियामकः सम्बन्धः स्वनिरूपितावच्छेद-कताविशिष्टान्यावच्छेदकत्वानिरूपितत्वात्मकः।

उभयदिशि सम्बन्धघटकावच्छेदकतावैशिष्ट्यं स्वसामानाधिकरण्य,-स्वा-नवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्व, - स्वानवच्छेदकानवच्छिन्नत्व,-स्वावच्छेदकसम्बन्धावच्छिन्नत्वैः प्रसिद्धैश्चतुर्भिः सम्बन्धैः विवक्षितम्। अत्र प्रसिद्ध-सम्बन्धचतुष्टयान्तर्गतभागद्वयघटकप्रथमसम्बन्धद्वयेन हेतुतावच्छेदकता-निरूपकता-

वच्छेदकतयोर्भिन्नाधिकरणकत्वं व्यावर्तितम्, भागद्वयगताभ्यां द्वितीयसम्बन्धाभ्यां निरूपकतावच्छेदकताया अनवच्छेदकस्य हेतुतावच्छेदकताया अवच्छेदकत्वं तथा हेतुतावच्छेदकताया अवच्छेदकस्य निरूपकतावच्छेदकताया अवच्छेदकत्वं व्यावर्तितम्।

भागद्वयगताभ्यां तृतीयसम्बन्धाभ्यां क्रमशो निरूपकतावच्छेदकतायां हेतुतावच्छेदकतानवच्छेदकावच्छिन्नत्वस्य व्यावृत्तिस्तथा हेतुतावच्छेदकतायां निरूपकतावच्छेदकतानवच्छेदकावच्छिन्नत्वस्य व्यावृत्तिर्भवति। उभयभागगताभ्यां चतुर्थसम्बन्धाभ्यां परस्परविभिन्नसम्बन्धावच्छिन्नत्वस्योभयत्र व्यावृत्तिर्भवतीति सामान्यतया ज्ञातं भवति।

पूर्वदर्शितपर्य्याप्तिघटितनिवेशपक्षापेक्षया अत्र हेतुताविशिष्टनिरूपकताकाधिकरणतानिवेशपक्षे फलविशेषं 'एवञ्चे'त्यादि 'न क्षतिरि'त्यन्तेन दर्शयति तत्त्वालोककृत्। यत्र महानसीयवह्नेः संयोगेन साध्यता, समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टस्य संयोगेन हेतुता, तत्र सद्धेतुस्थले महानसीयत्वनिष्ठकालिकसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकवह्नित्वनिष्ठसमवायसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणतां महानसेतरपर्वतादिवर्तिनीमादाय तत्र साध्याभावस्य महानसीयवह्न्यभावस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वसम्भवात्साध्याभावमादाय पर्य्याप्तिघटितप्रथमदर्शिते पक्षेऽव्याप्तिः स्यात्, तत्र महानसीयत्ववह्नित्वगतद्वित्वात्मके हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपे दर्शितापादकाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वेन आपादिकाया महानसीयत्वनिष्ठकालिकसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकवह्नित्वनिष्ठसमवायसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणताया विवक्षितरूपनिरूपितविवक्षितसम्बन्धावच्छिन्नवृत्तितावत्त्वस्य सत्त्वात्।

पश्चादुक्ते हेतुताविशिष्टनिरूपकताकाधिकरणतानिवेशपक्षे तु नोक्तसाध्यहेतुकस्थले नोक्ताधिकरणतामादायाव्याप्तिसम्भावना, तदीयनिरूपकतायां हेतुतानिरूपितावच्छेदकताविशिष्टान्यमहानसीयत्वनिष्ठकालिकसम्बन्धावच्छेदकतानिरूपितत्वस्यैव सत्त्वेन विवक्षितस्य तादृशावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य द्वितीयसम्बन्धस्य विरहात्तथा हेतुतायां निरूपकतानिरूपितावच्छेदकताविशिष्टान्यमहानसीयत्वनिष्ठसमवायसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्यैव सत्त्वेन स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वविरहेण तादृशसम्बन्धावच्छिन्नस्व-(हेतुता)वृत्तित्वरूपविवक्षितप्रथमसम्बन्धस्यापि विरहादिति भावः।[१४५]

तत्त्वालोकः— अत्र तार्णवह्निजातिमद्वह्निहेतुकयोस्तत्तज्ज्ञानत्वसाध्यकयोस्समवायेन वह्नित्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टहेतुकतज्ज्ञानत्वसाध्यके च वह्नित्वावच्छिन्ननिरूपकत्व,-जात्यवच्छिन्ननिरूपकत्व,-वह्नित्वावच्छिन्ननिरूपकत्व, - समवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकत्वनिरूपिताधिकरणता आदायाव्याप्तिवारणाय स्ववृत्तित्वघटकवैशिष्ट्यतया स्वसामानाधिकरण्यस्ववृत्तित्वस्वानवच्छेदकानवच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वसम्बन्धानां प्रवेशः।

एवं वह्निहेतुके तज्ज्ञानत्वसाध्यके तार्णवह्नित्वावच्छिन्ननिरूपकत्वनिरूपितां जातिमद्वह्नित्वावच्छिन्ननिरूपकतानिरूपितां जातिमद्धेतुके तज्ज्ञानत्वसाध्यके जातिमद्वह्नित्वावच्छिन्ननिरूपकतानिरूपिताम्वह्निज्ञानत्वसाध्यकवह्निहेतौ कालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतानिरूपिताञ्चाधिकरणतामादायाव्याप्तिवारणायोक्तानिरूपितत्वघटकवैशिष्ट्यतयास्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वसम्बन्धानां प्रवेशः।[१४६]

*प्रकाशः*— उपर्युक्तखण्डेन विवक्षितहेतुताविशिष्टनिरूपकताकाधिकरणताघटकवैशिष्ट्यनियामकस्ववृत्तित्वसम्बन्धघटकवृत्तित्वनियामकसम्बन्धघटकावच्छेदकतावैशिष्ट्यनियामकानां तथा स्व(हेतुता)निरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धघटकावच्छेदकतावैशिष्ट्यनियामकस्वसामानाधिकरण्यादीनां चतुर्णां सम्बन्धानां फलानि क्रमशो दर्श्यन्ते—

तत्र स्ववृत्तित्वदिशि अवच्छेदकतावैशिष्ट्यनियामकसम्बन्धचतुष्टयान्तर्गतस्वसामानाधिकरण्यस्यानुपादाने तज्ज्ञानत्वस्य साध्यतायां विषयितया तार्णवह्नेर्हेतुतायां वह्नित्वावच्छिन्ननिरूपकताकाधिकरणतावद्वह्निरित्याकारकज्ञानवृत्तितज्ज्ञानत्वाभाव-(तार्णवह्निज्ञानत्वाभाव)रूपसाध्याभावमादायाव्याप्तिः स्यात्।

वह्निनिष्ठनिरूपकतानिरूपितावच्छेदकताया वह्नित्वनिष्ठायाः स्वसामानाधिकरण्यातिरिक्तैस्त्रिभिः सम्बन्धैर्वैशिष्ट्यस्यैव हेतुतानिरूपितावच्छेदकतायां तार्णत्वनिष्ठायां सत्त्वाद् विशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य हेतुतायां सत्त्वेन हेतुतावृत्तित्वस्य निरूपकतायां सत्त्वात् तादृशनिरूपकताकाधिकरणतामादायाव्याप्तिः स्यादतस्तत्र सामानाधिकरण्यस्य निवेशः। तन्निवेशे तु वह्नित्वनिष्ठनिरूपकतावच्छेदकतासामाना-

धिकरण्यस्य तार्णत्वनिष्ठायां हेतुतावच्छेदकतायां विरहात्तादृशनिरूपकताया हेतुता-वृत्तित्वविरहान्न दोषः ॥१॥

एवं प्रथमसम्बन्धात्मकस्ववृत्तित्वघटकवैशिष्ट्यतया स्वानवच्छेदकानवच्छिन्न-त्वसम्बन्धावच्छिन्नस्ववृत्तित्वस्यानुपादाने तज्ज्ञानत्वसाध्यके विषयित्वेन जातिमद्वह्नि-हेतुकस्थले जात्यवच्छिन्ननिरूपकताका(जातिनिष्ठावच्छेदकताकनिरूपकताका)-धिकरणतावज्जातिमान् इत्याकारकज्ञानवृत्तितज्ज्ञानत्वाभाव (साध्याभाव) जातिम-द्वह्निज्ञानत्वाभावमादायाव्याप्तिः स्यात्। जातिमन्निष्ठनिरूपकतानिरूपिताया जातिनिष्ठा-वच्छेदकतायाः स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्वसम्बन्धातिरिक्त-स्वसामानाधिकरण्यादिभिस्त्रिभिः सम्बन्धैर्वैशिष्ट्यस्यैव हेतुतानिरूपितायां वह्नित्वनिष्ठा-वच्छेदकतायां सत्त्वाद् विशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य हेतुतायां सत्त्वेनोक्ता-धिकरणतामादायाव्याप्तिः स्यादतस्तत्र स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्व-वृत्तित्वस्य निवेशस्तन्निवेशे तु न दोषः, वह्नित्वनिष्ठायाः हेतुतानिरूपितावच्छेदकताया निरवच्छिन्नत्वेन जातिनिष्ठावच्छेदकताया जातित्वावच्छिन्नतया स्वानवच्छेदकान-वच्छिन्नत्वविरहात्। हेतुतावच्छेदकताया निरूपकतावच्छेदकतायां वृत्तित्वविरहेण वह्नित्वनिष्ठहेतुतावच्छेदकताया जातिनिष्ठनिरूपकतावच्छेदकतावैशिष्ट्यस्य वह्नित्व-निष्ठहेतुतावच्छेदकतायां विरहाद्धेतुताया विशिष्टान्यावच्छेदकतानिरूपितत्वेन हेतुता-वृत्तित्वस्य जात्यवच्छिन्ननिरूपकतायामभावात्तादृशनिरूपकताया अपरिग्रहादव्याप्तेर-भावात् ॥२॥

एवं स्ववृत्तित्वरूपप्रथमसम्बन्धघटकवैशिष्ट्यतया स्वानवच्छेदकानवच्छिन्न-त्वस्यानुपादाने तज्ज्ञानत्व(समवायेन वह्नित्वविशिष्टत्वे सति कालिकेन वह्नित्व-विशिष्टज्ञानत्व)साध्यके समवायेन वह्नित्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टस्य विषयितासम्बन्धेन हेतुतास्थले वह्नित्वनिष्ठावच्छेदकताकनिरूपकतामादाय तादृश-निरूपकताकाधिकरणतावति वह्निरित्याकारकज्ञाने समवायकालिकोभयसम्बन्धघटित-निर्दिष्टतज्ज्ञानत्वरूपसाध्याभावस्य प्रतियोगिव्यधिकरणत्वसम्भवात्साध्याभाव-मादायाव्याप्तिः स्यात्। हेतुतानिरूपितावच्छेदकतायां स्वानवच्छेदकानवच्छिन्नत्वाति-रिक्तैः स्वसामानाधिकरण्यादिभिस्त्रिभिः सम्बन्धैरुक्तनिरूपकतानिरूपितावच्छेदकता-वैशिष्ट्यस्यैव सत्त्वेन हेतुतायां विशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य सत्त्वेन स्व-(हेतुता)वृत्तित्वस्योक्तनिरूपकतायां सद्भावात्।

स्वानवच्छेदकानवच्छिन्नत्वस्य तत्रोपादाने तु हेतुतानिरूपितावच्छेदकताया निरूपकतावच्छेदकतानवच्छेदककालिकसम्बन्धावच्छिन्नत्वेन स्वानवच्छेदकान-

वच्छिन्नत्वविरहेण निरूपकतावच्छेदकतावैशिष्ट्याभावाद् विशिष्टान्यावच्छेदकता-निरूपितत्वस्यैव हेतुतायां सत्त्वात् स्व(हेतुता)वृत्तित्वस्य उक्तनिरूपकतायामभावा-द्दोषाभावात्॥३॥

स्ववृत्तित्वघटकवैशिष्ट्यतया स्वावच्छेदकसम्बन्धावच्छिन्नत्वरूपस्य चतुर्थ-सम्बन्धस्यानुपादानेऽपि तत्रैवानुपदोक्ते तृतीयप्रकारकसाध्यहेतुकस्थले समवाय-सम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतामादाय कालिकसम्बन्धेन वह्नि-त्वाविषयकज्ञाने साध्याभावस्य प्रतियोगिव्यधिकरणत्वसम्पत्त्या साध्याभावमादाया-व्याप्तिः स्यात्।

तदुपादाने तु कालिकसम्बन्धावच्छिन्नायां हेतुतानिरूपितावच्छेदकतायां समवायसम्बन्धावच्छिन्ननिरूपकतावच्छेदकतायाः स्वावच्छेदकसमवायसम्बन्धा-वच्छिन्नत्वविरहेण वैशिष्ट्यविरहात्तादृशावच्छेदकतानिरूपितहेतुतायां तादृशनिरूपक-ताया वृत्तित्वविरहात्परिग्रहाभावाद्दोषाभावात्॥४॥

निरूपकतायां हेतुतावैशिष्ट्यतया स्वनिरूपितावच्छेदकताविशिष्टान्या-वच्छेदकत्वानिरूपितत्वरूपद्वितीयसम्बन्धघटकावच्छेदकताविशिष्टत्वनियामक-सम्बन्धचतुष्टयान्तर्गतप्रथमसम्बन्धस्य स्वसामानाधिकरण्यस्यानुपादाने तज्ज्ञानत्व-(वह्निरित्याकारकज्ञानत्व)साध्यकविषयितासम्बन्धेन वह्निहेतुके तार्णवह्नित्वनिष्ठा-वच्छेदकताकनिरूपकतामादाय तादृशनिरूपकताकाधिकरणतावति तार्णवह्निरित्याका-रकज्ञाने तज्ज्ञानत्वा(वह्निरित्याकारकज्ञानत्वा)भावरूपं साध्याभावमादायाव्याप्तिः स्यात्, स्वसामानाधिकरण्यातिरिक्तैस्त्रिभिः सम्बन्धैर्हेतुतानिरूपितवह्नित्वनिष्ठावच्छेदक-तावैशिष्ट्यस्यैव तार्णत्वनिष्ठायां निरूपकतावच्छेदकतायां सत्त्वेन विशिष्टान्यावच्छेद-कत्वानिरूपितत्वस्योक्तनिरूपकतायां सत्त्वात्तादृशनिरूपकताकाधिकरणतामादाया-व्याप्तेर्भावात्। तदुक्तौ तु वह्नित्वनिष्ठहेतुतावच्छेदकतासामानाधिकरण्यस्य तार्णत्वनिष्ठ-निरूपकतावच्छेदकतायां विरहान्न दोषः॥५॥

उक्तानिरूपितत्वघटकवैशिष्ट्यतया स्वान्नवच्छेदकानवच्छिन्नत्वसम्बन्धा-वच्छिन्नस्ववृत्तित्वरूपद्वितीयसम्बन्धस्यानुपादाने तज्ज्ञानत्व(जातिमानित्याकारक-ज्ञानत्व) साध्यके विषयितया जातिमद्धेतुके जातिमद्वह्नित्वनिष्ठावच्छेदकताकनिरूपक-ताकाधिकरणतामादाय तादृशाधिकरणतावति जातिमान् वह्निरित्याकारकज्ञाने प्रतियोगिव्यधिकरणं जातिमान् इत्याकारकज्ञानत्वाभावरूपसाध्याभावमादायाव्याप्तिः स्यात्, वह्नित्वनिष्ठायां निरूपकतावच्छेदकतायां जातिनिष्ठहेतुतावच्छेदकतावैशिष्ट्यस्य स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नत्वसम्बन्धावच्छिन्न-स्व(हेतुतानिरूपिता-

वच्छेदकतायां)वृत्तित्वातिरिक्तैस्त्रिभिः सम्बन्धैः सत्त्वेन विशिष्टान्यावच्छेदकत्वा-निरूपितत्वस्य निरूपकतायां सद्भावात्तादृशनिरूपकताकाधिकरणतामादायाव्याप्तिः स्यात्तदुपादाने तु जातिनिष्ठहेतुतावच्छेदकताया जातित्वावच्छिन्नत्वेन वह्नित्वनिष्ठनिर-वच्छिन्ननिरूपकतावच्छेदकतायाः स्वानवच्छेदकानवच्छिन्नत्वविरहात्, उक्तसम्बन्धा-वच्छिन्नस्व(हेतुतावच्छेदकता)वृत्तित्वविरहेण विशिष्टान्यत्वस्यैव वह्नित्वनिष्ठनिरूपक-तावच्छेदकतायां भावात्तादृशावच्छेदकतानिरूपितत्वस्यैव उक्तनिरूपकतायां सत्त्वेन तदनिरूपितत्वविरहात्तदपरिग्रहात् ॥६॥

स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वरूपद्वितीयसम्ब-न्धघटकावच्छेदकतावैशिष्ट्यनियामकसम्बन्धचतुष्टयान्तर्गततृतीयसम्बन्धस्य स्वा-नवच्छेदकानवच्छिन्नत्वस्यानुपादाने वह्निज्ञानत्वसाध्यके विषयितया वह्निहेतुक-स्थले जातिमद्वह्नित्वनिष्ठावच्छेदकताकनिरूपकतामादाय तादृशनिरूपकताकाधिकरण-तावति जातिमद्वह्निरित्याकारकज्ञाने वह्निरित्याकारकज्ञानत्वाभावरूपसाध्याभावस्य प्रतियोगिव्यधिकरणत्वेन साध्याभावमादायाव्याप्तिः स्यात्, जातिनिष्ठायां निरूपकता-वच्छेदकतायां स्वानवच्छेदकानवच्छिन्नत्वातिरिक्तस्वसामानाधिकरण्यादिभिस्त्रिभिः सम्बन्धैर्हेतुतानिरूपितवह्नित्वनिष्ठावच्छेदकतावैशिष्ट्यस्यैव सत्त्वेन विशिष्टान्यावच्छेद-कत्वानिरूपितत्वस्योक्तनिरूपकतायां सद्भावात्, तत्र स्वानवच्छेदकानवच्छिन्नत्वस्यो-पादाने तु जातिनिष्ठाया निरूपकतावच्छेदकताया जातित्वावच्छिन्नत्वेन तत्र वह्नित्व-निष्ठनिरवच्छिन्नहेतुतावच्छेदकतायाः स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धविरहादुक्त-निरूपकतायाः अपरिग्रहाददोषः ॥७॥

एवमुक्तद्वितीयसम्बन्धघटकावच्छेदकतावैशिष्ट्यनियामकसम्बन्धान्तर्गतचतुर्थ-सम्बन्धस्य स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्यानुपादाने उक्तस्थले एव वह्निज्ञान-त्वसाध्यकवह्निहेतौ कालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितसमवाय-सम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतामादाय तादृशनिरूपकताका-धिकरणतावति कालिकेन वह्नित्वविशिष्टत्वे सति समवायेन वह्नित्वविशिष्टम् इत्याकारकज्ञाने वह्निज्ञानत्वाभावरूपसाध्याभावस्य प्रतियोगिव्यधिकरणत्वेन साध्या-भावमादायाव्याप्तिः स्यात्, कालिकसम्बन्धावच्छिन्नायां वह्नित्वनिष्ठनिरूपकतावच्छेद-कतायां वह्नित्वनिष्ठहेतुतावच्छेदकताविशिष्टत्वस्यैव स्वावच्छेदकसम्बन्धावच्छिन्नत्वा-तिरिक्तैः स्वसामानाधिकरण्यादिभिस्त्रिभिः सम्बन्धैः सत्त्वाद् विशिष्टान्यावच्छेदकत्वा-निरूपितत्वस्योक्तनिरूपकतायां सत्वेनोक्तनिरूपकतायाः परिग्रहात्।

तत्र स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्योपादाने तु कालिकसम्बन्धावच्छिन्ननिरूपकतावच्छेदकतायां हेतुतावच्छेदकताया वह्नित्वनिष्ठायाः स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य तत्र विरहेण विशिष्टत्वाभावात्तन्निरूपितत्वस्यैव निरूपकतायां सत्त्वेन विशिष्टान्यावच्छेदकत्वानिरूपितत्वविरहात्परिग्रहासम्भवाद्दोषविरहादष्टमसम्बन्धफलम् ॥८॥

तदेवमुभयदिशि अवच्छेदकतावैशिष्ट्यनियामकसम्बन्धाष्टकस्य मिलित्वा अष्टौ फलानि विवृतान्यवधेयानीति भावः।[१४६]

तत्त्वालोकः – तथा च वह्निमान्धूमादित्यत्रोक्तनिरूपकताकाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिस्तथा हि धूमवानिति प्रात्यक्षिकप्रतीतेरनियन्त्रितविषयिण्या अधिकरणत्वावगाहित्वेऽपि न तया तादृशाधिकरणत्वसिद्धिस्तद्विषयकत्वेनानुव्यवसीयमानतायास्सन्दिग्धत्वात्तद्विना तस्या अनुपपत्तिविरहाच्च।

धूमवान् पर्वत इत्यनुमितेर्न्नियन्त्रितविषयिण्या अधिकरणत्वावगाहित्वस्यैव विरहाद् न तयाऽपि तत्सिद्धिसम्भवः।

धूमवानिति शाब्दप्रतीतिर्मतुबर्थाधिकरणत्वमवगाहमानाप्यधिकरणत्वे धूमत्वविशिष्टन्निरूपितत्वसंसर्गेण भासयन्ती न धूमत्वावच्छिन्ने तत्र प्रमाणम्भवितुमर्हति।

न च गुणो गुणकर्मान्यत्वविशिष्टसत्तावानित्यस्याप्रामाण्याय मतुबर्थाधिकरणत्वे प्रकृत्यर्थभानेऽवच्छिन्नत्वेन प्रकृत्यर्थतावच्छेदकस्यापि तत्र भानमङ्गीकार्य्यमिति कथं धूमत्वावच्छिन्नाधिकरणतां धूमवानित्याप्तशब्दो न साधयेदिति वाच्यम्, धूमत्वावच्छिन्नाधिकरणतायां हि न नो विद्वेषः, किन्तु तत्पर्वते तत्पर्व्वतीयान्तरसत्त्वे धूमासत्त्वे चान्यत्र धूमसद्भावेऽपि च स्वविषयाधिकरणत्वमप्रमापयन्त्या तत्पर्वतीयधूमवानिति प्रतीत्या तन्महानसीयधूमवानित्यादिप्रतीत्या च सिद्धेभ्यस्तत्पर्वतीयधूमत्वावच्छिन्नाधिकरणत्वेभ्योऽतिरिक्तायां धूमत्वमात्रावच्छिन्नायाम्[१]।

न च महानसीयधूमवानिदं ज्ञानं प्रकारितया धूमवदिति प्रतीतिरप्रमा भवन्ती नान्तरेण धूमत्वमात्रावच्छिन्नाधिकरणतां स्वधर्मान्न तिरस्करिष्यतीति प्रमात्वे स्वप्रकारतावच्छेदकमात्रावच्छिन्नाधिकरणतैवान्तर्भावनीया,

१. 'नो विद्वेषः' इत्यनेन पूर्ववर्तिना अन्वयि।

शाब्दात्मिकायां च मतुबर्थे स्वप्रकृत्यर्थतावच्छेदकाशेषधर्म्मावच्छिन्नत्वस्येव तदितरानवच्छिन्नत्वस्यापि भाननियमोऽङ्गीकार्य्य इति प्रमात्वमेव संयोगेन धूमवानिति प्रतीतौ भवद्धूमत्वमात्रावच्छिन्नामधिकरणतां साधयिष्यति एवं धूमवानित्याप्तशब्दः कथमकस्मादुक्तशब्दमर्य्यादामतिपतिष्यति तथा च नापलपितुं शक्यं विवादाध्यासितमधिकरणत्वमिति वाच्यम्, अतिरिक्ताधिकरणताकल्पनागौरवप्रतिपक्षतर्कस्फूर्त्तिर्विषयितया धूमवत्त्वप्रतीतिविशेषप्रमात्वापत्तिभिया विषयितादिसम्बन्धस्थले वैमुख्यमासादयन्त्यपि संयोगादिस्थले प्रमात्वरीतिं शब्दमर्य्यादाञ्च स्ववश एव स्थापयिष्यतीति विषयितासम्बन्धस्थलीयप्रमात्वशरीरे स्वप्रकारतावच्छेदकमात्रावच्छिन्नाधिकरणत्वस्य प्रवेशेऽप्यन्यत्र तस्याप्रवेशाद्विषयितास्थले मतुबर्थे स्वप्रकृत्यर्थतावच्छेदकधर्ममात्रावच्छिन्नत्वभाननियमेऽप्यन्यत्र तदभावाच्चेति सामान्यधर्म्मावच्छिन्नाधिकरणतायाम्मानाभावः।

न चेयमुक्तिस्सिद्ध्यसिद्धिभ्यां पराहता, प्रमाणत्वावच्छेदेन स्वातिरिक्तधर्म्मानवच्छिन्नत्वसम्बन्धावच्छिन्नधर्म्मनिष्ठप्रकारतानिरूपिताधिकरणत्वनिष्ठविशेष्यतानिरूपकज्ञानजनकतायाः प्रमाजनकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाभावे प्रागुक्तविशेष्यतायां प्रमानिरूपितत्वाभावे वा तात्पर्य्यात्।

परमतप्रसक्तानुवादेन प्रतिषेधत्वाद्धेत्याशयेनाह "यद्यपी"ति[1]। इदञ्च प्राचाम्मतेनोक्तमुक्ताधिकरणत्वाभावेऽपि वक्ष्यमाणरीत्या हेत्वधिकरणत्वनिवेशसम्भवेन नोक्तलक्षणे काऽपि हानिरिति प्रौढिप्रकटनाशयेन।[१४७]

*प्रकाशः* – इदं द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिवारणाय लक्षणे यत्समानाधिकरणस्थाने 'यद्रूपविशिष्टसमानाधिकरणे'त्युक्तौ अर्थात् स्ववृत्तित्वस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपिताधिकरणतार्थकहेतुतावच्छेदकावच्छिन्नाधिकरणताया लक्षणे प्रवेशे सति, वह्निमान् धूमादित्यत्रोक्तसम्बन्धद्वयेन हेतुताविशिष्टनिरूपकताकाधिकरणताया अप्रसिद्ध्या (धूमत्वमात्रनिष्ठावच्छेदकताकनिरूपिताकाधिकरणत्वाप्रसिद्ध्या) अव्याप्तिः स्यात्।

उक्ताव्याप्त्युपपादनं जगदीशेन 'यद्यप्यवश्यक्लृप्ताभिः पर्वतत्वचत्वरत्वादितत्तद्धर्मविशिष्टतत्तद्धूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तिभिरेव धूमवानिति

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशोमूलम्, पृ. ६

प्रत्ययोपपत्तौ धूमत्वावच्छिन्नाधिकरणतायां मानाभावाद् वह्निमान् धूमादित्यादावव्याप्तिरि'त्युल्लिख्य कृतम्।[१]

धूमत्वमात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताया धूमवानिति प्रतीत्युपपत्त्यर्थं स्वीकारेऽपि तत्तद्धर्मत्वावच्छिन्नाधिकरणताया अस्वीकारे पर्वतत्वविशिष्टधूमवन्महानसम्, महानसत्वविशिष्टधूमवान् पर्वत इत्यादिप्रतीतेरापत्तिः स्यात्, धूमत्वावच्छिन्नाधिकरणताया महानसे पर्वतादौ च सत्त्वात्। तस्मादुक्तप्रतीत्यापत्तिवारणाय तत्तद्धूमत्वावच्छिन्नाधिकरणता अवश्यस्वीकर्त्तव्या भवन्ति, ताभिरेवावश्यस्वीकर्त्तव्याभिस्तत्तद्धूमत्वावच्छिन्नाधिकरणताव्यक्तिभिर्धूमवानिति प्रतीत्युपपत्तिसम्भवे धूमत्वमात्रावच्छिन्नाधिकरणता अनावश्यकत्वादप्रसिद्धेति तदाशयात्।

अत्र तत्त्वालोककृता इत्थमुपपाद्यते यद् धूमवानिति प्रात्यक्षिकी प्रतीतिर्धूमत्वमात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणता साधिका भवितुन्नार्हति, तस्याः प्रात्यक्षिकप्रतीतेर्नियन्त्रितविषयकत्वविरहेण अर्थाच्छाब्दबोधो यथा पदोपस्थाप्यार्थविषयकतया नियन्त्रितार्थको भवति, अनुमितिर्यथा व्यापकतावच्छेदकत्वेन गृहीतधर्मावच्छिन्नविधेयताकतया नियन्त्रितविषया भवति तथा नियन्त्रितविषयिका प्रात्यक्षिकी प्रतीतिर्नैव भवति, अतः प्रात्यक्षिकप्रतीतेर्नियन्त्रितविषयकत्वविरहेण अधिकरणताविषयकत्वेऽपि न तया प्रतीत्या धूमत्वावच्छिन्नाधिकरणतासिद्धिस्तादृशप्रतीतेर्धूमत्वावच्छिन्नविषयकत्वेनानुव्यवसीयमानताया (अनुव्यवसायकर्मतारूपविषयतायाः)संशयास्पदत्वात्, धूमत्वावच्छिन्नाधिकरणताविषयकत्वेन निश्चयात्मकानुव्यवसायविषयत्वस्य तत्र प्रतीतौ विरहात्।

एतावता तदेव तत्प्रतीत्या साधितो भवति यद्विषयकतया या प्रतीतिः स्वप्रकाशकस्वविषयकस्वोत्तरकालोत्पन्ननिश्चयात्मकज्ञानगृहीता भवति, धूमत्वावच्छिन्नाधिकरणता तु न तथा। धूमत्वावच्छिन्नाधिकरणताया उक्तप्रात्यक्षिकप्रतीतिसिद्धत्वाभावेऽपरो हेतुः 'तद्विना तस्या अनुपपत्तिविरहाच्च' इति[२]। तस्याः प्रतीतेर्धूमाधिकरणतावगाहितामात्रेणापि उपपत्तिसम्भवे धूमत्वावच्छिन्नाधिकरणतावगाहितामन्तरा अनुपपत्तेरभावात्।

धूमवान् पर्वत इत्यनुमित्यात्मकप्रतीतेर्नियन्त्रितविषयकत्वेन (व्यापकतावच्छेदकत्वेन) गृहीतधर्मावच्छिन्नविधेयताकत्वेन अधिकरणत्वावगाहित्वस्यैव विरहेण

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

२. प्रकृततत्त्वालोके

धूमत्वावच्छिन्नाधिकरणतावगाहित्वसम्भवाभावात्तादृशप्रतीत्यापि तत्सिद्धेः सम्भवाभावात्।

धूमवानिति शाब्दप्रतीतिर्मतुप्प्रत्ययोपस्थिताधिकरणतामवगाहमानाऽपि स्वविषयाधिकरणत्वे निरूपितत्वसम्बन्धेन धूमत्वविशिष्टं प्रकृत्यर्थं भासयन्ती धूमत्वावच्छिन्नाधिकरणतायां प्रमाणन्नैव भवति।

अत्र 'नचे'त्यादिना 'वाच्यमि'त्यन्तेन शङ्कते यदुक्तप्रात्यक्षिकानुमित्यात्मकप्रतीत्योरुक्ताधिकरणतासाधकत्वविरहेऽपि धूमवानित्याप्तशब्दप्रमाणजनिता प्रतीतिरुक्ताधिकरणतां साधयेदेव, गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतेरप्रामाण्योपपत्तये मतुप्प्रत्ययोपस्थिते अधिकरणत्वे मतुप्प्रकृत्यर्थस्य निरूपितत्वसम्बन्धेन मतुप्प्रकृत्यर्थतावच्छेदकस्य विशिष्टसत्तात्व-धूमत्वादेरवच्छिन्नत्वसम्बन्धेन भानस्वीकारस्यावश्यकत्वात्।

अर्थाद् गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिस्थले मतुप्प्रकृत्यर्थतावच्छेदकस्य गुणकर्मान्यत्वविशिष्टसत्तात्वस्य मतुबर्थाधिकरणत्वेऽवच्छिन्नत्वसम्बन्धेन भानस्वीकारमन्तरा सत्ताऽभिन्नविशिष्टसत्ताधिकरणताया गुणेऽपि सत्त्वेनोक्ता प्रतीतिरप्रमा न स्यात्, अतो यथा तत्राधिकरणत्वेऽवच्छिन्नत्वसंसर्गेण प्रकृत्यर्थतावच्छेदकस्यान्वयः स्वीकार्य्यो भवति, तथैव धूमवानित्येवं शाब्दप्रतीतिस्थलेऽपि, इति सिद्धैव धूमत्वावच्छिन्नाधिकरणतेति शङ्का।

अत्रोक्तशङ्का इत्थन्निरस्यते यद् धूमत्वावच्छिन्नाधिकरणतायां न नो विद्वेषः, किन्तु तत्पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणत्वेभ्योऽतिरिक्तायां धूमत्वमात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतायामस्माकं प्राचां विद्वेषोऽस्ति, यतो हि तत्पर्वते तत्पर्वतीयान्तरस्य = तत्पर्वतीयधूमातिरिक्तस्य तत्पर्वतीयस्य तृणादेः, सत्त्वे तत्पर्वते धूमासत्त्वे तत्पर्वतादन्यत्र धूमसद्भावे च या तत्पर्वतीयधूमवानिति प्रतीतिः सा प्रतीतिस्तत्पर्वते स्वविषयाधिकरणतान्नैव प्रमापयति धूमत्वावच्छिन्नाधिकरणतां तत्पर्वतीयधूमत्वावच्छिन्नाधिकरणताम्वा, तदानीं तत्पर्वते धूमस्यासत्त्वात्, अतस्तत्पर्वतीयधूमवानिति प्रतीतिरवश्यं तत्पर्वतीयधूमत्वावच्छिन्नाधिकरणताऽविषयिण्येव मन्तव्या, एवमेव तन्महानसे तन्महानसीयान्तरसत्त्वे तत्र धूमासत्त्वेऽन्यत्र धूमसत्त्वे तन्महानसीयधूमवानिति प्रतीतिस्तन्महानसे धूममप्रमापयन्ती तन्महानसीयधूमत्वावच्छिन्नाधिकरणताऽविषयिण्येव मन्तव्या भवति, अतस्तत्पर्वतीयत्वतन्महानसीयत्वादिविशेषिततत्तद्धूमत्वादिविशेष-विशेषधर्मावच्छिन्नाधिकरणता अनेका या अवश्यमन्तव्या भवन्ति, ताभ्योऽधिकरणताभ्योऽतिरिक्ता धूमत्वमात्रावच्छिन्ननिरूपकताका सामान्यधर्मा-

वच्छिन्नाधिकरणता नैव सिद्ध्यति तत्तद्वृक्षेभ्योऽतिरिक्तवनमिवैवेति पूर्वोत्थितशङ्कायाः समाधानम्।

अत्र 'न चे'त्यादिना 'वाच्यमि'त्यन्तेन पुनः शङ्कते यद् धूमत्वमात्रावच्छिन्ना तत्तद्धूमत्वावच्छिन्नाधिकरणताभ्योऽतिरिक्ता अधिकरणता नैव प्रमाणरहिता, यतो हि महानसीयधूमवानिदं ज्ञानं प्रकारितया (स्वनिष्ठप्रकारताख्यविषयतानिरूपितविषयिता-वत्तया) धूमवदिति प्रतीतिरप्रमा भवन्ती (प्रकारितया महानसीयधूमवति प्रकारितया धूमावगाहित्वेन अर्थाद् महानसीयत्वधूमत्वोभयनिष्ठावच्छेदकताकनिरूपकताकाधिक-रणतावति धूमत्वमात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतावगाहित्वेन अप्रमा भवन्ती) उक्तप्रतीतिर्धूमत्वमात्रावच्छिन्नाधिकरणतामन्तरेण = धूमत्वमात्रनिष्ठावच्छेद-कताकनिरूपकताकाधिकरणता[म]न्तरेण स्वधर्मान् न तिरस्करिष्यति।

'नान्तरेण धूमत्वमात्रावच्छिन्नाधिकरणतां स्वधर्मान् न तिरस्करिष्यती'त्येतद्-वाक्यादिघटकस्य 'न' इत्यस्य तद्वाक्यघटकेन 'तिरस्करिष्यती'त्यनेन सम्बन्धः 'स्वधर्मान्' इत्येतद्घटक'स्व'पदग्राह्यं स्वाव्यवहितपूर्वकालजातं महानसीयधूमवानिति ज्ञानम्, तस्य ये धर्माः सन्ति तेषु महानसीयत्वधूमत्वोभयनिष्ठावच्छेदकताकनिरूपक-ताकाधिकरणतात्मकधर्ममेव, स्वोत्तरोत्पन्ना 'ज्ञानमिदं प्रकारितया धूमवदि'ति अप्रमाप्रतीतिः प्रकारितया महानसीयधूमस्थाने प्रकारितया धूममवगाहमाना = धूमत्वमात्रावच्छिन्नाधिकरणतामवगाहमाना स्वपूर्वजातज्ञानीयमहानसीयत्वधूमत्वो-भयावच्छिन्नाधिकरणतात्मकं धर्मं, तिरस्करोति, अत एव सा स्वोत्तरोत्पन्ना प्रतीतिरप्रमा, यदि सा स्वोत्तरोत्पन्ना प्रतीतिः स्वप्रकारतावच्छेदकमात्रावच्छिन्ना-धिकरणतावगाहिनी (स्वप्रकारतावच्छेदकमहानसीयत्वधूमत्वोभयावच्छिन्नाधिकरण-तावगाहिनी) अ-भविष्यत्तदा सा नाप्रमा अभविष्यत्, किन्तु प्रमैवाभविष्यत्, इति उपपादितकारणवशात् प्रमात्वे प्रमात्वोपपत्तये स्वप्रकारतावच्छेदकमात्रावच्छिन्नाधिक-रणतैवान्तर्भावनीया, अर्थादशेषस्वप्रकारतावच्छेदकधर्मावच्छिन्नाधिकरणतावगाहित्वे सत्येव तत्र प्रमात्वं भवितुं शक्नुयाद्, यद्विधुरत्वात्सा महानसीयधूमवानिदं ज्ञानं प्रकारितया धूमवदिति प्रतीतिरप्रमा। एतावता उक्तया अप्रमात्मकप्रतीत्या धूमत्वमात्रा-वच्छिन्नाधिकरणता विषयीक्रियमाणा नापह्नोतुं शक्येति प्रतिपादितं जातम्।

अत्र 'न च महानसीयधूमवानिदं ज्ञानं प्रकारितया धूमवदिति प्रतीतिरप्रमा भवन्ती नान्तरेण धूमत्वमात्रावच्छिन्नाधिकरणतां स्वधर्मान्न तिरस्करिष्यतीति प्रमात्वे स्वप्रकारतावच्छेदकमात्रावच्छिन्नाधिकरणतैवान्तर्भावनीये'ति साहित्यिकविशेषवाचो-भङ्ग्या मदुपपादितः प्रतिपाद्यार्थः सूचितस्तथा 'महानसीयधूमवानिदं ज्ञानं प्रकारितया

धूमवदि'ति प्रतीतिसमुल्लेखः स्वप्रकारतावच्छेदकधर्ममात्रावच्छिन्नाया विषयित्व-सम्बन्धावच्छिन्नाया अधिकरणतायाः स्थलस्य सूचकः।

तदग्रे पुनरुच्यतें यद् शाब्दात्मिकायां च (महानसीयधूमवान् पर्वतीयधूमवा-नित्यादिप्रतीतौ) मतुप्-प्रत्ययोपस्थापिताधिकरणतायां स्व(मतुप्प्रत्यय)प्रकृत्यर्थता-वच्छेदकाशेष(तत्र तत्र महानसीयत्वधूमत्व, - पर्वतीयत्वधूमत्वाद्यशेष)धर्मा-वच्छिन्नत्वस्य यथा भाननियमो गुणो गुणकर्मान्यत्वविशिष्टसत्तावानित्यादेः प्रमात्व-निरासादिदर्शितकारणवशादङ्गीकार्य्यो भवति तथैव मतुबर्थाधिकरणतायां स्व-प्रकृत्यर्थतावच्छेदकेतरानवच्छिन्नत्वभाननियमोऽप्यङ्गीकार्य एवातः संयोगेन धूमवानिति प्रतीतौ धूमत्वेतरधर्मानवच्छिन्नधूमत्वावच्छिन्नाधिकरणतावगाहिन्यां प्रमात्वं भवद्-धूमत्वमात्रावच्छिन्नामधिकरणतां साधयिष्यत्येव।

एवं सति धूमवानित्याप्तशब्दः प्रमाणम् मतुबर्थे स्वप्रकृत्यर्थतावच्छेदका-शेषधर्मावच्छिन्नत्वस्वप्रकृत्यर्थतावच्छेदकेतरानवच्छिन्नत्वभाननियमात्मकशब्द-मर्य्यादान्नैव त्यक्ष्यत्यतो विवादाध्यासिता सामान्यधर्मावच्छिन्ना धूमत्वमात्रावच्छिन्ना अधिकरणता नैवापलपितुं शक्येति पूर्वपक्षः।

अत्र समाधीयते 'अतिरिक्ताधिकरणताकल्पनागौरवप्रतिपक्षतर्कस्फूर्ति-रि'त्यादिना। समाधात्रेदमुच्यते यत् सामान्यधर्मावच्छिन्नाधिकरणतानङ्गीकारपक्षस्य यः खलु प्रतिपक्षः सामान्यधर्मावच्छिन्नाधिकरणतास्वीकारपक्षः उपरि उपपादितस्तत्र प्रतिपक्षे तत्तद्धूमत्वादिविशेषधर्मावच्छिन्नाधिकरणतातिरिक्तसामान्यधर्मावच्छिन्ना-धिकरणतास्वीकारे कल्पनागौरवात्मकस्तर्कः स्फूर्तः सन् बाधको भवति। अतोऽति-रिक्ताधिकरणताकल्पनागौरवं विषयितया धूमवत्त्वप्रतीतिविशेष(महानसीयधूमवानिदं ज्ञानं प्रकारितया धूमवदिति प्रतीतिविशेष)प्रमात्वापत्तिभिया विषयितादिसम्बन्धस्थले वैमुख्यमावहदपि, सङ्कुचदपि, विरोधमकुर्वदपि संयोगादिसम्बन्धस्थले प्रमात्वरीतिम् [स्वप्रकारतावच्छेदकमात्रावच्छिन्नाधिकरणता(स्वप्रकारतावच्छेदकाशेषधर्मावच्छि-न्नाधिकरणता)ऽन्तर्भावनीयतात्मिकाम्] शाब्दबोधमर्य्यादाञ्च (मतुबर्थे स्वप्रकृत्यर्थता-वच्छेदकाशेषधर्मावच्छिन्नत्व-तदितरानवच्छिन्नत्वभाननियमात्मिकां) स्ववशे एव स्थापयिष्यति, अर्थादुक्तकल्पनागौरवं दर्शितप्रमात्वरीतिं दर्शितशब्दमर्य्यादाञ्च बाधेत एव।

अतो विषयितासम्बन्धस्थलीयप्रमात्वशरीरे स्वप्रकारतावच्छेदकमात्रा-वच्छिन्नाधिकरणत्वस्य (महानसीयधूमवानिदं ज्ञानं प्रकारितया धूमवदिति प्रतीतौ प्रमात्वापत्तिभिया) प्रवेशेऽपि अन्यत्र संयोगेन धूमवानित्यादिस्थले प्रमात्वशरीरे

स्वप्रकारतावच्छेदकधर्ममात्रावच्छिन्नाधिकरणत्वप्रवेशविरहात् तथा विषयितासम्बन्धस्थले मतुबर्थे स्वप्रकृत्यर्थतावच्छेदकाशेषधर्मावच्छिन्नत्वतदितरधर्मानवच्छिन्नत्वभाननियमेऽपि अन्यत्र संयोगादिसम्बन्धस्थले मतुबर्थे उक्तभाननियमाभावात्सामान्यधर्मावच्छिन्नाधिकरणतायां संयोगादिसम्बन्धावच्छिन्नधूमत्वादिसामान्यधर्ममात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतायां मानाभाव इति प्रथमोत्थापितशङ्काया प्रतिष्ठितिः।

अनन्तरमुक्तोक्तौ (सामान्यधर्मावच्छिन्नाधिकरणतायां मानाभावोक्तौ) सिद्ध्यसिद्धिभ्यां पराहतत्वं शङ्कते। सामान्यधर्मावच्छिन्नाधिकरणता यदि सिद्धा तर्हि तत्र मानाभावकथनमनुचितम्, मानवत एव सिद्धत्वात्, यदि सा सामान्यधर्मावच्छिन्नाधिकरणता असिद्धा=सिद्धिरहितैवास्ति, तथापि तत्र मानाभावकथनमनुचितमेव, मानविरहिणो मानाभावकथनस्य प्रयोजनानुपलम्भादिति शङ्कितुराशयः।

समाधानमत्र क्रियते यत्सामान्यधर्मावच्छिन्नाधिकरणतायां मानाभावकथनस्य प्रमाणत्वावच्छेदेन स्वातिरिक्तधर्मानवच्छिन्नत्वसम्बन्धावच्छिन्नधूमत्वादिधर्मनिष्ठप्रकारतानिरूपिताधिकरणत्वनिष्ठविशेष्यतानिरूपकज्ञानजनकताया प्रमाजनकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावबोधने अथवा स्वातिरिक्तधर्मानवच्छिन्नत्वसम्बन्धेन धर्मनिष्ठप्रकारतानिरूपितविशेष्यतायां प्रमानिरूपितत्वाभावबोधने तात्पर्य्यात्, तथासति पूर्वोक्तेः सिद्ध्यसिद्धिभ्यां पराहतत्वासम्भवात्, प्रमाणविशेषे पूर्वतस्तथासिद्धिसत्त्वेऽपि पक्षतावच्छेदकप्रमाणत्वावच्छेदेन सिद्धेरसत्त्वात् पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकसामानाधिकरण्येन सिद्धेः प्रतिबन्धकत्वविरहात्, नैतादृशं किमपि प्रमाणं यत् स्वातिरिक्तधर्मानवच्छिन्नत्वसम्बन्धेन धर्मनिष्ठप्रकारतानिरूपिताधिकरणतानिष्ठविशेष्यताकं ज्ञानं जनयति, न वा उक्ता विशेष्यता स्वातिरिक्तधर्मानवच्छिन्नत्वसम्बन्धावच्छिन्नधर्मनिष्ठप्रकारतानिरूपिताधिकरणतानिष्ठा विशेष्यता, या प्रमानिरूपिता भवतीति तत्तात्पर्य्यात्, एकरूपेण सिद्धस्यापि रूपान्तरेण साधने सिद्धसाधनदोषविरहाच्च।

परमतसिद्धानुवादेन सामान्यधर्मावच्छिन्नाधिकरणताप्रतिषेधाद्वा सिद्ध्यसिद्धिभ्यां पराहतत्वाक्षेपनिराससम्भवादित्याशयेन जागदीश्यां तर्कालङ्कार आह 'यद्यप्यवश्यक्लृप्ताभिः पर्वतत्वचत्वरत्वादितत्तद्धर्मविशिष्टतत्तद्धूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तिभिरेव धूमवानिति प्रत्ययोपपत्तौ धूमत्वाद्यवच्छिन्नाधिकरणतायां मानाभावाद् वह्निमान् धूमादित्यादावव्याप्तिः, हेतुतावच्छेदकीभूतधूमत्वाद्यवच्छिन्नाधिकरणत्वाप्रसिद्धेरि'ति[१]।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

कथनमिदं प्राचाम्मतेन उक्ताधिकरणत्वाभावेऽपि (सामान्यधर्मावच्छिन्नाधिकरणत्वाभावेऽपि) वक्ष्यमाणरीत्या, "हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तथाविधं हेतुतावच्छेदकाश्रयाधिकरणमेव 'हेतुतावच्छेदकावच्छिन्नाधिकरणे'त्यनेन विवक्षितमि"[१]त्यनया, हेत्वधिकरणत्वनिवेशसम्भवे, नोक्तलक्षणे काऽपि हानिरिति प्राचां प्रौढिप्रकटनाशयेन बोध्यमिति भावः।[१४७]

तत्त्वालोकः— **वस्तुतस्तु सामान्यधर्मावच्छिन्नाधिकरणताङ्गीकार एव ज्यायान्, तथा हि प्रमात्वं हि प्रकारताविशिष्टप्रकारताकज्ञानत्वमेवानुगतम्, वैशिष्ट्यञ्च स्वावच्छेदकाशेषस्वावच्छेदकमात्रावच्छिन्नाधिकरणतावन्निष्ठविशेष्यताकत्वस्वतादात्म्योभयसम्बन्धेन।**

**तच्च संयोगेन धूमवत्त्वज्ञाने भवद्बुभुत्सितामधिकरणतां साधयदेव भविष्यति, अन्यथा विशिष्टसत्त्वसत्त्वयोरनतिरेकादेकविशिष्टसत्त्वनिरूपिताया अपि अपरविशिष्टसत्त्वनिरूपिततया तया च विशिष्टसत्तावत्त्वबुद्धेः प्रमात्वनियमानिर्व्वाहादधिकरणतानां भेदायावच्छेदकभेदकल्पनेऽपि तत्तत्पर्व्वतीयधूमादेर्भिन्नमूर्त्तिकतया तत्तन्निरूपितत्वमात्रेण भेदसम्भवात्पर्व्वतीयधूमत्वावच्छिन्नत्वमपि न स्याज्जात्यखण्डोपाध्यतिरिक्ततया नानवच्छिन्ननिरूपकत्वसम्भव इतीयन्नहि राज्ञामाज्ञा।**

**न च निरूपकस्य तत्र स्वरूपतोऽभानान्न तथेति वाच्यम्, भासमानधर्म्मस्य निरूपकविशेषणत्वेऽप्यवच्छेदकत्वे मानाभावात्।**

**अथ प्रतियोगिविशेषणतया भासमानतामात्रेण प्रतियोगितावच्छेदकत्ववन्निरूपकतावच्छेदकत्वमपि स्यादेव निरूपकविशेषणतया भासमानतयेति चेद्, धूमो नास्तीति प्रतीतिवद्धूमवानिति प्रतीतिरपि प्रतियोगिविशेषणतया भासमाने धूमत्वमात्रेऽवच्छेदकत्ववत् प्रतियोगिताया निरूपकताया अवच्छेदकत्वं निरूपकविशेषणतयावगाहमाने धूमत्वमात्रे किमिति न[२] कल्पयेत्।[१४८]**

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

२. मुद्रितपुस्तके 'न' इति नास्ति।

*प्रकाशः* – सामान्यधर्मावच्छिन्नाधिकरणतास्थापनाय 'वस्तुतस्त्वि'त्याद्युपर्य्युक्तखण्डस्योपक्रमः।

वस्तुतस्तु सामान्यधर्मावच्छिन्नाधिकरणतास्वीकार एव समुचितः, यतो हि प्रमात्वं प्रकारताविशिष्टप्रकारताकज्ञानत्वस्वरूपमेवानुगतम्, तत्र प्रकारतायां द्वितीयायां प्रथमप्रकारताविशिष्टतानियामकसम्बन्धौ स्वावच्छेदकाशेषस्वावच्छेदकमात्रावच्छिन्नाधिकरणतावन्निष्ठविशेष्यताकत्व(स्वावच्छेदकाशेषधर्मावच्छिन्नस्वावच्छेदकेतरधर्मानवच्छिन्नाधिकरणतावन्निष्ठविशेष्यताकत्व)-स्वतादात्म्यरूपौ। संयोगेन घटवति भूतले जायमानं 'भूतलं घटवदि'ति ज्ञानं प्रकारतावच्छेदकघटत्वावच्छिन्नघटत्वेतरानवच्छिन्नाधिकरणतावन्निष्ठविशेष्यताकतया विवक्षितोभयसम्बन्धेन प्रकारताविशिष्टप्रकारताकज्ञानत्वरूपप्रमात्ववद्भवति।

तादृशं प्रमात्वं संयोगेन धूमवत्त्वज्ञाने भवद्बुभुत्सितामधिकरणतां साधयदेवोपपन्नं भविष्यति, भवता=विशेषधर्मावच्छिन्नाधिकरणताभ्योऽनतिरिक्तां सामान्यधर्मावच्छिन्नाधिकरणतां मन्वानेन, बुभुत्सितां=बोधेच्छाविषयीभूताम्, अधिकरणताम् अर्थाद् विशेषधर्मावच्छिन्नाधिकरणतातिरिक्तां सामान्यधर्मावच्छिन्नामधिकरणतां, साधयदेव उपपन्नं भविता।

अन्यथा = सामान्यधर्मावच्छिन्नाधिकरणताया अतिरिक्ताया अस्वीकारे, विशिष्टस्य शुद्धानतिरिक्तत्वसिद्धान्तसत्त्वाद् गुणकर्मान्यत्वविशिष्टसत्तायाः शुद्धसत्तातोऽतिरेकविरहादेकविशिष्टसत्तानिरूपिताया = गुणभेदविशिष्टसत्तानिरूपिताया, अपि अपरविशिष्टसत्ता=गुणत्वविशिष्टसत्ता, निरूपिततया (उभयोर्विशिष्टानतिरिक्तशुद्धसत्तानिरूपितत्वेन), तया च अभिन्नया अधिकरणतया विशिष्टसत्तावत्त्वबुद्धेः प्रमात्वनियमानिर्वाहाद् [अर्थाद्] गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति बुद्धेरप्रमात्वस्य, द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावानिति बुद्धेः प्रमात्वस्य, निर्वाहः=उपपत्तिः, न स्यात्।

यदि प्रमात्वाप्रमात्वोपपत्तयेऽधिकरणतानां भेदोऽधिकरणतानां भेदाय [च] अवच्छेदकभेदः कल्प्येत, तदापि तत्तत्पर्वतीयधूमादेः परस्परविभिन्नमूर्तिकतया तत्तद्धूमादिनिरूपितत्वमात्रेण तत्पर्वतीयधूमाद्यधिकरणतोऽपरपर्वतीयधूमाद्यधिकरणताया भेदोपपत्तिसम्भवेन तत्तत्पर्वतीयधूमत्वाद्यवच्छिन्नत्वमपि अधिकरणताभेदाय नापेक्षितं स्यात्।

जात्यखण्डोपाध्यतिरिक्तस्य विभिन्नमूर्तिकस्य तत्तत्पर्वतीयधूमादेरधिकरणतानिरूपकता निरवच्छिन्ना नैव भवितुमर्हा, अतस्तत्र तत्तद्धूमत्वादेरधिकरणतावच्छेदकत्व=

अधिकरणतानिरूपकतावच्छेदकत्व, -कल्पनेत्यपि राजाज्ञायास्तादृश्या विरहेण न सम्भवदुक्तिका।

विभिन्नमूर्तिकस्यापि तत्तद्धूमादेरधिकरणतानिरूपकस्य स्वतोऽविशेषितरूपेण भानासम्भवान्न स्वतो निरूपकता, किन्तु तत्तद्धूमत्वादिनैव निरूपकतेति चेत्, तत्रोच्यते यन्निरूपके भासमानस्य धर्मस्य निरूपकविशेषणत्वेऽपि तादृशस्य तत्तद्धूमत्वादेर-वच्छेदकत्वकल्पने प्रमाणाभावादिति।

अथापि धूमो नास्तीत्यादिप्रतीतिसिद्धाभावप्रतियोगिधूमादिविशेषणतया भासमानतामात्रेण धूमत्वादेर्यथा प्रतियोगितावच्छेदकता भवति, तथैव निरूपक-विशेषणतया भासमाने तत्तद्धूमत्वादौ निरूपकतावच्छेदकतापि भवितुमर्हैव इत्युच्येत, तदा धूमो नास्तीति प्रतीतिस्थले प्रतियोगिविशेषणतया भासमाने धूमत्वमात्रे प्रतियोगिताया अवच्छेदकत्ववदेव धूमवानिति प्रतीतिस्थलेऽपि निरूपके (अधिकरण-तानिरूपकविशेषणतया भासमाने) धूमत्वमात्रे निरूपकताया अवच्छेदकत्वस्य कल्पयितुं शक्यत्वादिति समाधिरिति भावः।[१४८]

तत्त्वालोकः — यदि च धूमत्वस्यावच्छेदकत्वे धूमत्वावच्छिन्नप्रतियोगि-ताकमहानसीयधूमाभावस्य पर्वते सत्त्वेन तत्र धूमो नास्तीति प्रतीतेः प्रमात्व-वारणायैव धूमत्वमात्रस्यावच्छेदकत्वकल्पनमिति चेत्, तदा तादृश-प्रयोजनस्याभावेन धूमत्वादिष्ववच्छेदकत्वकल्पनमपि न स्यात्।

तस्मादसति बाधके सामान्यतो दृष्टानुसारित्वमेव कल्पनायाम्वाच्यमिति प्रतीतौ विशिष्टसत्तावत्तावगाहिन्यामधिकरणत्वेऽवच्छिन्ननिरूपकताकत्वस्य दृष्टत्वेन तत्पर्व्वतीयधूमवानित्यत्रावच्छिन्नाधिकरणत्वावगाहित्ववद्विषयितया धूमवानित्यत्र धूमत्वमात्रावच्छिन्नाधिकरणत्वावगाहित्वस्यापि दृष्टतया संयोगेन धूमवानित्यत्र धूमत्वमात्रावच्छिन्नाधिकरणत्वावगाहित्वमपि स्यादेव।

एवं विशिष्टसत्तावानित्ययं शब्दो विशिष्टसत्तात्वावच्छिन्नाधिकरणता-म्बोधयतीति तत्पर्वतीयधूमवानित्यपि तत्पर्व्वतीयधूमत्वावच्छिन्नाधिकरणता-म्बोधयेदितिवद्विषयितया धूमवानिति शब्दो धूमत्वमात्रावच्छिन्नामधिकरणतां बोधयतीति संयोगेन धूमवानित्यपि धूमत्वमात्रावच्छिन्नाधिकरणतां बोधयेदेव।

एवञ्च नाकस्मात्प्रमाभेदकल्पनाप्रसक्तिर्न वा मतुंपस्स्वप्रकृत्यर्थतावच्छे-दकमात्रावच्छिन्नाधिकरणत्वबोधकत्वनियमरूपशब्दमर्य्यादाभङ्गप्रसङ्गोऽपि।

न च प्रकृते गौरवरूपबाधकसद्भावादसति बाधके इत्यनुपपन्नं स्यादिति सामान्यनिदर्शनेन तावदेव कल्प्यं न यत्र गौरवादिकं प्रसज्यत इति तादृश-धूमत्वावच्छिन्नत्वेऽधिकरणतायां स्वीकृतेऽपि नातिरिक्ताधिकरणताप्रसक्ति-र्धूमत्वमात्रावच्छिन्नत्वे चातिरिक्ताधिकरणत्वप्रसङ्ग इति गौरवमिति तन्न कल्प्य-मिति वाच्यम्, अनेकाधिकरणतासु धूमवानिति प्रतीतिविषयतासम्बन्ध-कल्पनापेक्षयातिरिक्ताधिकरणताकल्पनाया एव लघुत्वात्।

सामान्याभावातिरिक्तावयव्यादिस्वीकर्तृभिरपीदृशमेव लाघवादिक-मङ्गीकृतमन्यथा तत्तत्सिद्धिरपि तेषान्न स्याद्, विशेषाभावकूटावगाहित्वस्य विलक्षणसंयोगवदवयवविषयकत्वस्य च सामान्याभावप्रतीतिघटादि-प्रतीत्योस्सम्भवात् प्रतिबध्यप्रतिबन्धकभावादेस्तत्तद्धर्मातिरिक्तधर्म्मान-वच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वादिघटितरूपादिभिरभाववत्ता-बोधप्रमात्वस्य तद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वावच्छिन्नानुयोगिताक-पर्य्याप्तिकसंख्यावच्छिन्नवद्विशेष्यताकप्रकारताकत्वरूपत्वाच्च दोषासम्भवा-दित्यलम्पल्लवितेन।[१४९]

*प्रकाशः* – उपर्युक्तखण्डादिमेन 'यदी'त्यादिना अतिरिक्तसामान्यधर्मा-वच्छिन्नाधिकरणताविद्वेषी पुनः शङ्कितुमुपक्रमते— धूमो नास्तीति प्रतीतिस्थले प्रतियोगिविशेषणतया भासमाने धूमत्वमात्रे अभावप्रतियोगिताया अवच्छेदकता-कल्पनामन्तरा पर्वते धूमो नास्तीति प्रतीतेः प्रमात्वापत्तिवारणमशक्यम्, धूमत्वा-वच्छिन्नप्रतियोगिताकस्य महानसीयधूमाभावस्य पर्वतेऽपि सत्त्वेन तत्र धूमत्वमात्रस्या-वच्छेदकत्वानङ्गीकारे तत्र धूमो नास्तीति प्रतीतेः प्रमात्वापत्तिर्वारिता न स्यात्, किन्तु धूमवानिति प्रतीतिस्थले निरूपकविशेषणतया भासमाने धूमत्वमात्रे नावच्छेदकत्व-कल्पना, तत्र धूमत्वमात्रस्यावच्छेदकत्वमन्तरा आपत्त्यनुपपत्त्योरभावादिति।

अत्र अतिरिक्तसामान्यधर्मावच्छिन्नाधिकरणतावादिनोच्यते यद् यदि धूमो नास्तीति प्रतीतिस्थल इव धूमवदिति प्रतीतिस्थले धूमत्वमात्रे अवच्छेदकत्वकल्पना-प्रयोजनविरहात्तत्र धूमवदिति प्रतीतिस्थले धूमत्वमात्रस्य अधिकरणतानिरूपकता-वच्छेदकत्वकल्पितन्न स्यात्तदा तत्र धूमत्वादेरवच्छेदकत्वकल्पनाऽपि न स्यात्तत्र धूमत्वादेरवच्छेदकत्वस्वीकारमन्तरापि तत्र तत्र तत्तद्धूमादेः पर्वतीयमहानसीयधूमादे-र्भिन्नभिन्नमूर्तिकतयाऽधिकरणताभेदकत्वसम्भवेनापत्त्यनुपपत्त्योरभावात्।

तस्मादसति बाधके कल्पनायास्सामान्यतो दृष्टानुसारित्वमेव मन्तव्यमुचित-मिति, विशिष्टसत्तावत्तावगाहिन्यां = द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावानिति, प्रतीतौ

अधिकरणत्वे अवच्छिन्न(विशिष्टसत्तात्वावच्छिन्न)निरूपकताकत्वस्य दृष्टत्वेन तत्पर्वतीयधूमवानित्यत्र प्रतीतौ अवच्छिन्नाधिकरणतावगाहित्ववत् (तत्पर्वतीयधूमत्वमात्रावच्छिन्नाधिकरणतावगाहित्ववद्) विषयितया धूमवानिति प्रतीतौ धूमत्वमात्रावच्छिन्नाधिकरणत्वावगाहित्वस्यापि दृष्टत्वेन संयोगेन धूमवानित्यत्र प्रतीतौ धूमत्वमात्रावच्छिन्नाधिकरणत्वावगाहित्वमपि स्यादेव।

एवं विशिष्टसत्तावानित्ययं प्रमाणवाक्यात्मकशब्दो यथा विशिष्टसत्तात्वावच्छिन्नाधिकरणताम्बोधयति तथैव तत्पर्वतीयधूमवानित्यपि प्रमाणशब्दस्तत्पर्वतीयधूमत्वावच्छिन्नाधिकरणताम्बोधयेत्, तत्पर्वतीयधूमवानिति प्रमाणशब्दस्य तत्पर्वतीयधूमत्वावच्छिन्नाधिकरणताबोधकत्ववद् विषयितया धूमवानिति शब्दो धूमत्वमात्रावच्छिन्नाधिकरणताम्बोधयति, विषयितया धूमवानिति शब्दस्य धूमत्वमात्रावच्छिन्नाधिकरणताबोधकतावदेव च संयोगेन धूमवानित्यपि प्रमाणशब्दो धूमत्वमात्रावच्छिन्नाधिकरणताम्बोधयेत्।

एवञ्च उपपादितयुक्त्या सामान्यधर्मावच्छिन्नाधिकरणताङ्गीकारे चाकस्मात् प्रमात्वभेदकल्पनायाः (विषयितासम्बन्धस्थलीयप्रमात्वात् संयोगादिसम्बन्धस्थलीयप्रमात्वे भेदकल्पनायाः) प्रसक्तिर्न, न वा विषयितासम्बन्धस्थलीयाया मतुपः स्वप्रत्यर्थतावच्छेदकमात्रावच्छिन्नाधिकरणत्वबोधकत्वनियमरूपशब्दमर्य्यादायाः संयोगेन धूमवानित्यादिसंयोगादिसम्बन्धस्थलेऽकस्माद्भङ्गप्रसङ्गोऽपि भवत[1] इति।

अत्र अतिरिक्तसामान्यधर्मावच्छिन्नाधिकरणतानङ्गीकर्ता पुनः 'न चे'त्यादिना शङ्कते यद् विषयितासम्बन्धस्थले विषयितया धूमवत्त्वप्रतीतिविशेष(महानसीयधूमवानिति ज्ञानं प्रकारितया धूमवदिति)प्रतीतौ प्रमात्वापत्तिभयात् प्रमात्वशरीरे स्वप्रकारतावच्छेदकमात्रावच्छिन्नाधिकरणताया अन्तर्भावस्वीकारेऽपि तथा विषयितासम्बन्धस्थले मतुबर्थे स्वप्रकृत्यर्थतावच्छेदकमात्रावच्छिन्नत्वभाननियमस्वीकारेऽपि अन्यत्र संयोगादिसम्बन्धस्थले गौरवरूपबोधकसद्भावात् तत्पर्वतीयधूमत्वादिविशेषधर्मावच्छिन्नाधिकरणतातिरिक्तायाः सामान्यधर्मावच्छिन्नाधिकरणतायाः स्वीकारे गौरवाद् 'असति बाधके' इत्यनुपपन्नं स्यादतः सामान्यनिदर्शनेन = सामान्यदृष्टान्तेन, दृष्टमनुसृत्य तावदेव कल्पितुमुचितं यन्न गौरवग्रस्तं भवति।

---

१. 'नैव भवत' इति मातृकायाम्।

ततश्चाधिकरणतायां धूमत्वावच्छिन्नत्वे = तत्पर्वतीयधूमत्वाद्यवच्छिन्नत्वे, स्वीकृतेऽपि नातिरिक्ताया अधिकरणतायाः प्रसक्तिः, सामान्यधर्मावच्छिन्नाया अधिकरणताया विशेषधर्मावच्छिन्नाधिकरणतारूपत्वात्। अधिकरणतायां धूमत्वादि-सामान्यधर्मावच्छिन्नत्वमात्रे स्वीकृते तु सामान्यधर्ममात्रावच्छिन्नाऽधिकरणता अतिरिक्ता अधिकरणता प्रसक्ता स्यात्ततश्च गौरवं शिरस्यापतितं स्यात्। अतोऽधिकर-णतायां धूमत्वमात्रावच्छिन्नत्वं (तत्) न कल्प्यमिति प्राचां सामान्यधर्मावच्छिन्ना-मतिरिक्तामधिकरणतां तिरस्कुर्वतां पूर्वपक्षः।

अत्र अतिरिक्तसामान्यधर्मावच्छिन्नाधिकरणतां मन्यमानैः (अधिकरणतायां धूमत्वादिसामान्यधर्ममात्रावच्छिन्नत्वम्मन्यमानैः) समाधीयते यद् अनेकासु = तत्त-द्धूमत्वादिविशेषधर्मावच्छिन्नासु, अधिकरणतासु धूमवानिति प्रतीतिविषयतात्मक-सम्बन्धकल्पनापेक्षया अतिरिक्ताधिकरणताकल्पनाया एव लघुत्वादिति।

ईदृशलाघवादिकमङ्गीकृत्य विशेषाभावकूटातिरिक्तस्य सामान्याभावस्य अशेषाऽवयवेभ्योऽतिरिक्तस्य = अवयवसङ्घातातिरिक्तस्य अवयविनश्च स्वीकारा-दन्यथा तयोरपि सिद्धिस्तेषां प्राचां न स्यात्।

सामान्याभावप्रतीतेः (घटो नास्ति, वायौ रूपन्नास्तीत्यादिप्रतीतेर्विशेषाभाव-कूटावगाहित्वस्य घटादिप्रतीतेः) अवयविप्रतीतेर्विलक्षणसंयोग(आरम्भकसंयोग)-वदवयवविषयकत्वस्य सम्भवात्। तथा सामान्याभावानङ्गीकारे प्रतिबध्य-प्रतिबन्धकभावस्योपपत्तिः घटप्रकारताकबुद्धिम्प्रति घटत्वमात्रनिष्ठावच्छेदकताक-प्रतियोगिताकाभाव[1]प्रकारताबुद्धेः स्थाने तत्तद्घटत्वादिधर्मातिरिक्तधर्मानवच्छिन्न-प्रतियोगित्वसम्बन्धावच्छिन्नघटनिष्ठप्रकारतानिरूपिताभावनिष्ठविशेष्यत्वावच्छिन्न-प्रकारताकबुद्धित्वादिना भविष्यति। एतच्च 'प्रतिबध्य-प्रतिबन्धकभावादेस्त-त्तद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वादिघटितरूपादिभि-रि'त्यनेन तत्त्वालोककृता बोधितम्।

अत्र 'सामान्याभावप्रतीतेर्विशेषाभावकूटावगाहित्वसम्भवादि'त्यस्य पूर्वमेवो-क्तत्वेन 'तत्तद्धर्मै'ति तद्घटादि-तद्घटाभावादिबुद्ध्योः प्रतिबध्यप्रतिबन्धकबोधनाय, तत्र 'तत्तद्धर्मावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वादिघटिते'त्यनुक्त्वा 'तत्तद्धर्मा-तिरिक्तधर्मानवच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वादिघटिते'त्युक्तिः तद्घटवत्ता-बुद्धिम्प्रति तद्घटपटोभयाभावबुद्धेः प्रतिबन्धकत्वनिरासाय बोध्या।

---

१. ...'प्रतियोगिताकभावे'ति मातृकायाम्।

तथा अभाववत्ताबोधप्रमात्वस्य सामान्याभावानङ्गीकारे तद्धर्मावच्छिन्न-प्रतियोगिताकाभाववत्त्वावच्छिन्नानुयोगिताकपर्य्याप्तिकसंख्यावच्छिन्नवद्विशेष्यताक-प्रकारताकत्वरूपत्वादुपपत्तिर्जायते।

एतेनेदमुक्तं जातं यत् सर्वेऽपि घटविशेषाभावा घटत्वावच्छिन्नप्रतियोगिताका-भावा भवन्ति, प्रत्येकविशेषाभावप्रतियोगितावच्छेदकत्वस्य सामान्यधर्मेऽपि सत्त्वात्, ततश्च घटत्वादिसामान्यधर्मावच्छिन्नावच्छिन्नप्रतियोगिताकाभावत्वेनानुगतीकृतो यो यो यत्संख्यावान् विशेषाभावो यत्राधारे तिष्ठति तत्र तत्संख्याकविशेषाभाववत्त्वज्ञानं प्रमा भवति। यत्रैक एव विशेषाभावो भवति तत्रैकविशेषाभाववत्ताज्ञानमेव प्रमा, यत्र द्वौ विशेषाभावौ तिष्ठतस्तत्र तयोर्द्वयोर्विशेषाभावयोर्ज्ञानं प्रमा, यत्र त्रयो विशेषाभावास्तत्र त्रयाणां तेषां विशेषाभावानां ज्ञानं प्रमा। अन्यविशेषाभाववति अन्यविशेषाभाववत्ताज्ञानं प्रमा नैव भवति। यत्संख्याप्रतियोगिकपर्य्याप्त्यनुयोगिता-वच्छेदकं तद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वं तत्संख्यावच्छिन्नवन्निष्ठा विशेष्यता निरूपिका यस्याः प्रकारतायास्तादृशप्रकारताकत्वरूपमेव तदभाववत्त्वबुद्धेः प्रमात्वमिति 'तद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वावच्छिन्नानुयोगिताकपर्य्याप्तिकसंख्यावच्छिन्न-वद्विशेष्यताकप्रकारताकत्वरूपत्वादि'त्यनेन तत्त्वालोककृता बोधितम्।

अत्रेमं संशयं मनो धावति यत् पर्य्याप्तिप्रतियोगिभूता संख्या अभाववन्निष्ठा अभिप्रेता आहोस्विदभाववद्वृत्त्यभावनिष्ठाऽभिप्रेता। तत्र संख्याया अभाववन्निष्ठत्वे 'तादृशसंख्यावच्छिन्नवद्विशेष्यताकप्रकारताकत्वे'त्यग्रिमोक्तिः सङ्गता न भवति तथा 'संख्यावच्छिन्नविशेष्यताकप्रकारताकत्वे'त्येव युक्तं स्यात्, पर्य्याप्तिप्रतियोगिसंख्याया अभाववद्वृत्त्यभावगतत्वे तादृशसंख्याया अनुयोगितावच्छेदकमभावगतानुगतधर्म एव स्यान्न तु अभाववन्निष्ठं तद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वम्, निर्दिष्टन्तु तत्र 'तद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्त्वावच्छिन्नानुयोगिताकपर्य्याप्तिकसंख्यावच्छिन्ने'-त्यादि। 'तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकसंख्या' इत्यादिपाठमेव सम्भावयामः, 'वदि'ति तत्राधिकं भाति, अभावगतसंख्याप्रतियोगिक-पर्य्याप्त्यनुयोगितावच्छेदकत्वस्य तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वे युक्तत्वात्, तादृशसंख्यावच्छिन्नाभाववद्विशेष्यताकप्रकारताकत्वस्य अग्रिमस्य तादृशस्थितौ युक्तत्वसम्भवादिति। अधिकन्तु विचिन्तकैश्चिन्तनीयमिति, उक्तस्वरूपके अभाव-वत्ताबोधप्रमात्वे दोषाभावादित्यलं विस्तारेणेत्युक्तखण्डस्य प्रकाशः।[१४९]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

तत्त्वालोकः– "तथापि हेतुतावच्छेदकीभूतधर्म" इत्यादि[1]। अत्राधिकरणतात्रयं हेतुतावच्छेदकसम्बन्धावच्छिन्नं हेतुतावच्छेदकाश्रयत्वमवच्छेदकताद्वयञ्च हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नं ग्राह्यम्, तेन कालिकेन धूमाश्रयह्रदनिष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वोभयाभावस्य धूमत्वे सत्त्वेऽपि न ह्रदस्य हेत्वधिकरणत्वप्रसङ्गः, न वा ज्ञानाभावविषयकज्ञानत्वसाध्यकज्ञानाभावहेतुकसद्धेतौ हेतुतावच्छेदकज्ञानाभावत्वस्य स्वाश्रयघटोभयविषयकज्ञाननिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वघटितोभयाभावसत्त्वेनोक्तज्ञानस्य हेत्वधिकरणत्वेऽप्यव्याप्तिः।

न च विषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य धूमत्वे सत्त्वेनोभयाभावस्य धूमत्वे विरहाद्धेत्वधिकरणत्वाप्रसिद्ध्या वह्निमान् धूमादित्यत्राव्याप्तिः।

एवं कालिकेन धूमत्वाश्रयाधिकरणत्वस्य ह्रदे सत्त्वेऽपि न तस्य हेत्वधिकरणत्वप्रसङ्गः। एवं विषयितया वह्निहेतुके कालिकेन वह्नित्वविशिष्टविषयकज्ञानस्य न तत्प्रसङ्गः।

समवायेन धूमहेतुकस्थले विषयित्वसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकनिरूपकत्वमादाय न हेत्वधिकरणत्वाप्रसङ्ग[2] इति।

अथ वह्निज्ञानत्वसाध्यके वह्नौ सद्धेतौ हेतुतावच्छेदकवह्नित्वस्य स्वाश्रयमहानसीयवह्निविषयकज्ञाननिष्ठमहानसीयवह्नित्वावच्छिन्नाधिकरणतानवच्छेदकत्वविरहेणोभयाभाववत्त्वेन तज्ज्ञानस्य हेत्वधिकरणत्वापत्त्या अव्याप्तिरिति चेद्।

अत्र केचिद्— हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नाश्रयाधिकरणयन्निष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयाभावस्स एव हेत्वधिकरणत्वेन विवक्षित इति नाव्याप्तिः।[१५०]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

२. 'हेत्वधिकरणत्वप्रसङ्ग' इति मुद्रितपुस्तके।

*प्रकाशः* – उपर्य्युक्तखण्डेन 'तथापि हेतुतावच्छेदकीभूतधर्मे[1] स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तथाविधं हेतुतावच्छेदकाश्रयाधिकरणमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितमि'ति जागदीशीं परिगृह्य विचारो विधीयते—

दर्शितविवक्षायां वह्निमान् धूमादित्यत्र हेतुतावच्छेदकीभूतधूमत्वधर्मे धूमत्वाश्रयाधिकरणीभूतपर्वतादिनिष्ठाधिकरणतानवच्छेदकत्वस्य सत्त्वेऽपि अधिकरणतावच्छेदकत्वविरहेण उक्तद्वयव्यतिरेकसत्त्वाद्धेतुतावच्छेदकधूमत्वाश्रयाधिकरणं पर्वतादिरेव विवक्षितहेतुतावच्छेदकावच्छिन्नाधिकरणं प्रसिद्ध्यतीत्यतो नाप्रसिद्ध्या तत्राव्याप्तिः।

उक्तविवक्षाविषयान्तर्गता अधिकरणतात्रयी। तासु प्रथमा — स्वाश्रयाधिकरणीभूतेत्यत्र, द्वितीया — यन्निष्ठाधिकरणेत्यत्र, तृतीया — अधिकरणतावच्छेदकत्वस्येत्यत्र। तास्तिस्रोऽधिकरणता हेतुतावच्छेदकसम्बन्धावच्छिन्ना विवक्षिताः।

तथोक्तविवक्षाविषयान्तर्गतं हेतुतावच्छेदकाश्रयत्वम् एवं तदन्तर्गतमवच्छेदकताद्वयं (यन्निष्ठाधिकरणतानवच्छेदकत्वमित्यत्र एका अवच्छेदकता, द्वितीया पुनः अधिकरणतावच्छेदकत्वेत्यत्र) हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नं विवक्षितम्।

तत्र प्रथमायामधिकरणतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविरहे वह्निमान् धूमादित्यत्र ह्रदस्यापि हेत्वधिकरणत्वापत्त्या तन्निष्ठप्रति[योगि]व्यधिकरणं साध्याभावमादायाव्याप्तिः स्यात्, ह्रदे हेत्वधिकरणत्वापत्तिश्च, कालिकसम्बन्धेन ह्रदस्य धूमत्वाश्रयाधिकरणीभूतत्वेन धूमत्वात्मकहेतुतावच्छेदकधर्मे ह्रदनिष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वयोर्द्वयोर्व्यतिरेकसद्भावात्। तत्र हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वसत्त्वे तु ह्रदस्य संयोगेन धूमानधिकरणत्वान्नाव्याप्तिः।

द्वितीयाधिकरणतायां तत्र हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविरहे ज्ञानाभावविषयकज्ञानत्वसाध्यके विषयितया ज्ञानाभावहेतुके सद्धेतौ ज्ञानाभावघटोभयविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या तन्निष्ठसाध्याभावमादायाव्याप्तिः स्यात्, ज्ञानाभावघटोभयविषयकज्ञानस्य हेत्वधिकरणत्वापत्तिश्च, ज्ञानाभावत्वरूपे हेतुतावच्छेदके स्वाश्रयाधिकरणीभूतज्ञानाभावघटोभयविषयकज्ञाननिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्यैव सत्त्वेन तन्निष्ठाधिकरणतानवच्छेदकत्वविरहेण

---

१. जागदीश्या उपलब्धसंस्करणेषु 'तथापि हेतुतावच्छेदकधर्मे' इत्यादिपाठ एवोपलभ्यते।
—प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

तन्निष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वयोर्द्वयोर्विरहसद्भावात्। तत्र हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वसत्त्वे तु ज्ञानाभावघटोभयविषयकज्ञाननिष्ठहेतु-तावच्छेदकविषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य ज्ञानाभावत्वे विरहेण तन्निष्ठाधिकरणतानवच्छेदकत्वस्य हेतुतावच्छेदकविषयित्वसम्बन्धावच्छिन्नाधिकरण-तावच्छेदकत्वस्य च द्वयोः सद्भावादुक्तज्ञानस्य हेत्वधिकरणत्वाभावादव्याप्तेरभावात्।

तृतीयाधिकरणतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वासत्त्वे वह्निमान् धूमादित्यत्र हेत्वधिकरणत्वाप्रसिद्ध्याऽव्याप्तिस्तत्र हेत्वधिकरणत्वाप्रसिद्धिश्च, हेतुतावच्छेदके धूमत्वे स्वाश्रयाधिकरणीभूतपर्वतादिनिष्ठाधिकरणतानवच्छेदकत्वस्य विषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य च द्वयोः सद्भावात्।

तत्र हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वसत्त्वे तु धूमत्वस्य विषयित्वसम्बन्धा-वच्छिन्नाधिकरणतावच्छेदकत्वेऽपि हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नाधिकरणता-वच्छेदकत्वविरहान्न दोषः।

विवक्षितोक्तघटकहेतुतावच्छेदकाश्रयस्य हेतुतावच्छेदकताघटकसम्बन्धा-वच्छिन्नत्वविरहे ह्रदस्य कालिकेन धूमत्वाश्रयाद्धेत्वधिकरणत्वापत्त्या वह्निमान् धूमादित्यत्राव्याप्तिः, तत्र हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नसत्त्वे तु ह्रदस्य तादृशेन समवायेन धूमत्वाश्रयत्वविरहाददोषात्।

तद्घटकप्रथमावच्छेदकतायां हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वा-विवक्षणे वह्निज्ञानत्वसाध्यके विषयितया वह्नौ सद्धेतौ कालिकेन वह्नित्वविशिष्ट-विषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या तन्निष्ठसाध्याभावमादायाव्याप्तिः स्यात्, हेतुतावच्छेदकवह्नित्वाश्रयाधिकरणीभूतोक्तज्ञाननिष्ठाधिकरणतायाः कालिकसम्बन्धा-वच्छिन्नावच्छेदकत्वस्यैव वह्नित्वे सत्त्वेन तन्निष्ठाधिकरणतानवच्छेदकत्वविरहेणोक्त-द्वयविरहेणोक्तज्ञानस्य हेत्वधिकरणत्वसम्भवात्। तत्र हेतुतावच्छेदकताघटक-सम्बन्धावच्छिन्नत्वविवक्षणे तु तत्र कालिकेन वह्नित्वस्यावच्छेदकत्वेऽपि हेतुता-वच्छेदकताघटकसमवायेनावच्छेदकत्वविरहादुक्तयोर्द्वयोः सत्त्वेन द्वयोर्व्यतिरेक-विरहाद्दोषाभावात्।

तद्घटकद्वितीयावच्छेदकतायां हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्व-विशेषणविरहे समवायेन धूमहेतुकस्थले समवायेन धूमवतो धूमावयवस्य हेत्वधिकरणत्वमनुपपन्नं स्यात्, तत्र हेतुतावच्छेदकीभूते धूमत्वे धूमत्वाश्रयाधिकर-णीभूतधूमावयवनिष्ठाधिकरणतावच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च

(अधिकरणतानिरूपकताया विषयित्वसम्बन्धावच्छेदकत्वरूपस्य च) द्वयोः सत्त्वेनोक्त-योर्द्वयोर्व्यतिरेकविरहात्। तदुपादाने तु विषयित्वसम्बन्धावच्छिन्नावच्छेदकत्वस्य = अधिकरणतावच्छेदकत्वस्य तत्र सत्त्वेन हेतुतावच्छेदकताघटकसमवायसम्बन्धा-वच्छिन्नावच्छेदकत्वविरहान्न दोषः। एतच्च 'समवायेन धूमहेतुकस्थले विषयित्व सम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताक निरूपकत्वमादाय न हेत्वधिकरणत्वाप्रसङ्ग' इत्युल्लिख्य तत्त्वालोककृता बोधितम्।

तत्र धूमस्य समवायेन हेतुतास्थलानुधावनं विषयित्वसम्बन्धावच्छिन्नधूम-त्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताया हेतुतावच्छेदकसम्बन्धावच्छिन्नायाः प्रसिद्ध्यर्थम्, विषयित्वसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकनिरूपकताकायाः संयोगसम्बन्धावच्छिन्नाधिकरणतायाः प्रसिद्धेरभावात्।

समवायेन धूमस्य सद्धेतुता तु तत्र स्याद् यत्र धूमावयवज्ञानस्य विषयतया साध्यता स्यात्। संयोगेन वह्निसाध्यकधूमस्य समवायेन हेतुत्वे तु तस्यासद्धेतुतैव, समवायेन धूमवति धूमावयवे संयोगेन वह्नेरसत्त्वात्, धूमावयवेऽपि संयोगेन वह्नेः सत्त्वे तु तत्रापि तस्य सद्धेतुतैवेति।

अनन्तर'मथे'त्यादिनोक्तप्रकारकहेत्वधिकरणताविवक्षायां वह्निज्ञानत्वसाध्यके विषयितया वह्नौ सद्धेतौ महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वप्रसक्त्या तत्र साध्याभावस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावत्वात्साध्याभावमादाया-व्याप्तिं शङ्कते— तत्र महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वप्रसक्तिश्च वह्नित्वरूपहेतुतावच्छेदकधर्माश्रयमहानसीयवह्नेर्विषयितया अधिकरणीभूतमहानसीय-वह्निविषयज्ञाननिष्ठाधिकरणतानवच्छेदकत्वविरहेण अधिकरणतावच्छेदकत्वस्य सत्त्वेऽपि द्वयोर्व्यतिरेकस्य सद्भावाद् भवति।

उक्ताव्याप्तेः परिहारः कैश्चिदित्थं विधीयते— हेत्वधिकरणत्वेन स एव विवक्षितः हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्ना(हेतुतावच्छेदकगततादृशरूपावच्छिन्ना)श्रयाधिकरणयन्निष्ठाधिकरणता-वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्व, - अधिकरणतात्वावच्छिन्न-प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयाभावौ भवेतामिति।

तथा सति वह्निज्ञानत्वसाध्यकवह्नौ सद्धेतावव्याप्तिर्न स्यात्, महानसीयवह्नि-विषयकज्ञानस्य विवक्षितोक्तहेत्वधिकरणत्वविरहात्। महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वविरहश्च— हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनु-

योगितावच्छेदकरूपे वह्नित्वगतैकत्वे वह्नित्वगतैकत्वावच्छिन्ना(वह्नित्वा)श्रयाधिकरण(महानसीयवह्न्यधिकरण)महानसीयवह्निविषयकज्ञाननिष्ठाधिकरणतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य[1] अधिकरणतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वयोः सत्त्वात्, विवक्षितस्य द्वयोर्व्यतिरेकस्य विरहेण महानसीयवह्निविषयकज्ञानस्य यत्पदेन परिग्रहाभावादिति।[१५०]

तत्त्वालोकः – नन्वत्र द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्राव्याप्तिर्गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वगतद्वित्वे स्वावच्छिन्नाश्रयाधिकरणगुणनिष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वसत्त्वेऽपि तादृशावच्छेदकत्वविरहेणोभयाभावसत्त्वेन गुणस्यापि हेत्वधिकरणत्वाद् गुणकर्म्मान्यत्वविशिष्टसत्तावानिति प्रतीतौ घटवृत्तित्वविशिष्टविशिष्टसत्तावानित्यादिप्रतीत्यनुरोधेन क्लृप्तघटवृत्तित्वविशिष्टविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणताव्यक्तीनामेव विशिष्टसत्तात्वावच्छिन्नाधिकरणतात्वेन विषयत्वाद्विशिष्टसत्तात्वमात्रावच्छिन्नाधिकरणत्वे मानाभावादिति।

यदत्र[2] घटवृत्तित्वविशिष्टविशिष्टसत्तावानिति प्रतीतौ घटवृत्तित्वविशिष्टसत्तावानिति प्रतीत्यनुरोधेन क्लृप्तघटवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतैव विषयः, तस्याश्च गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावगाहिन्यां न विषयत्वसम्भवः।

नचोक्तप्रतीतिर्न्निरूपकांशे भासमानगुणकर्मान्यत्ववैशिष्ट्येऽप्यवच्छेदकत्वावगाहिनीति त्रितयधर्मावच्छिन्नाधिकरणतात्वस्योक्ताधिकरणतायां विरहेण न तस्यास्तत्प्रतीतिसम्भव इति वाच्यम्, लाघवेनापत्त्यादिविरहेण चोक्तप्रतीतेर्गुणकर्मान्यत्वेऽवच्छेदकत्वावगाहित्वाकल्पनादित्युक्तविशिष्टसत्त्वहेतुके नाव्याप्तिस्सम्भवत्यपि तु द्रव्यं घटवृत्तिसत्त्वादित्यत्राव्याप्तिः, गुणस्य घटवृत्तित्वसत्तात्वगतद्वित्वावच्छिन्नाश्रयाधिकरणत्वात्, तद्द्वित्वस्याधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वाच्च।

---

१. महानसीयवह्निविषयकज्ञाननिष्ठाधिकरणतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपं महानसीयत्ववह्नित्वोभयगतद्वित्वमेव भवति, न तु वह्नित्वगतमेकत्वमतो वह्नित्वगतैकत्वरूपे स्वावच्छिन्नाश्रयाधिकरणतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य तत्र सत्त्वमेव।

२. 'यदत्रे'त्यस्यात्रैव खण्डेऽग्रिमेण 'प्राज्ञजातीयैरुच्यते' इत्यनेनान्वयः।

घटवृत्तिसत्तावानिति प्रतीतौ तद्धटवृत्तिसत्तावानित्यादिप्रतीत्यनुरोधेन क्लृप्ततद्धटवृत्तिसत्तात्वावच्छिन्नाधिकरणत्वादेरेव घटवृत्तिसत्तात्वावच्छिन्नाधिकरणतात्वेन विषयत्वादिति प्राज्ञजातीयैरुच्यते।

**तदग्राह्यमसत्कल्पतायास्तस्याग्रे स्फुटत्वादिति चेद्।[१५१]**

***प्रकाशः*** —वह्निज्ञानत्वसाध्यकवह्निहेतुकस्थले प्रसक्त[अव्याप्ति]परिहारायानुपदं कैश्चित्परिष्कृते हेत्वधिकरणत्वे 'नन्वत्रे'त्यादिनोक्ततत्त्वालोकखण्डेन 'द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादि'त्यत्राव्याप्तिं शङ्कते—

परिष्कृते हेत्वधिकरणत्वे उक्तस्थले 'गुणस्यापि हेत्वधिकरणत्वापत्त्या साध्याभावस्य लक्षणघटकत्वात्तदादायाव्याप्तिः प्रसज्यति, गुणस्य तत्र हेत्वधिकरणत्वापत्तिश्च गुणकर्मान्यत्ववैशिष्ट्य-सत्तात्वोभयगतद्वित्वात्मके हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नाश्रयाधिकरण-(उक्तद्वित्वावच्छिन्नसत्तात्व, - आश्रयाधिकरण)गुणनिष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य गुणे गुणकर्मान्यत्वविरहेण सत्त्वेऽपि अधिकरणतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य विरहेण विवक्षितोभयाभावस्य सत्त्वाद् भवति।

उक्तरूपस्य = गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वोभयगतद्वित्वस्य अधिकरणतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वविरहश्च— सामान्यधर्मावच्छिन्नाधिकरणतानङ्गीकारेण गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिविषयताया तत्रानङ्गीकारात्, घटो गुणकर्मान्यत्वविशिष्टसत्तावान् पटो गुणकर्मान्यत्वविशिष्टसत्तावानित्यादिप्रतीत्यनुरोधेन क्लृप्तघटवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणता पटवृत्तित्वविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणताव्यक्तीनामेव (तत्तदधिकरणताव्यक्तिविशेषाणामेव) विशिष्टसत्तात्वावच्छिन्नाधिकरणतात्वेन गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिविषयतास्वीकाराद् विशिष्टसत्तात्वमात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतायाः स्वीकारे प्रमाणविरहादिति।

द्रव्यं विशिष्टसत्त्वादित्यत्रोक्तरीत्या प्रसक्ताव्याप्तिवारणायात्र प्राज्ञजातीयैरुच्यते यद् घटवृत्तित्वविशिष्ट-विशिष्टसत्तावान्, पटवृत्तित्वविशिष्ट-विशिष्टसत्तावानित्यादिप्रतीतौ घटवृत्तित्वविशिष्टविशिष्टसत्तात्वावच्छिन्नाधिकरणता पटवृत्तित्वविशिष्टविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणता न विषयः, किन्तु घटवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणता पटवृत्तित्वविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणता एव विषयः,

घटवृत्तित्वविशिष्टसत्तावान् पटवृत्तित्वविशिष्टसत्तावानित्यादिप्रतीत्यनुरोधेन तथा-क्लृप्तत्वाद्, घटादिवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतायाः क्लृप्तत्वात्।

क्लृप्तायाश्च घटादिवृत्तित्वविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणतायाः गुण-कर्मान्यत्वविशिष्टसत्तावानित्यस्यां गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणता-वगाहिन्यां प्रतीतौ विषयत्वासम्भवेन गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिविषयता विशिष्टसत्तात्वमात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताया एव।

न च घटो घटवृत्तित्वविशिष्ट-विशिष्ट(गुणकर्मान्यत्वविशिष्ट)सत्तावानित्यादि-प्रतीतिविषयता घटवृत्तित्वविशिष्टसत्तावानित्यादिप्रतीत्यनुरोधेन घटवृत्तित्वविशिष्ट-सत्तात्वावच्छिन्नाधिकरणताया न सम्भवति, घटो घटवृत्तित्वविशिष्ट-विशिष्ट-सत्तावानिति प्रतीतेर्निरूपकांशे भासमानगुणकर्मान्यत्ववैशिष्ट्येऽपि अवच्छेदकत्वा-वगाहित्वेन घटवृत्तित्व,-गुणकर्मान्यत्ववैशिष्ट्य,-सत्तात्वरूपत्रितयधर्मावच्छिन्ना-धिकरणतात्वेनाधिकरणतावगाहित्वेन घटवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणता-यामुक्तत्रितयधर्मावच्छिन्नाधिकरणतात्वविरहेण घटवृत्तित्वविशिष्टसत्तात्वावच्छिन्ना-धिकरणताया घटो घटवृत्तित्वविशिष्टविशिष्ट(गुणकर्मान्यत्वविशिष्ट)सत्तावानिति प्रतीतिविषयत्वासम्भव इति वाच्यम्।

अत्र समाधीयते यल्लाघववशादापत्त्यादिविरहाच्च घटो घटवृत्तित्वविशिष्ट-विशिष्ट(गुणकर्मान्यत्वविशिष्ट)सत्तावानिति प्रतीतिविषयाधिकरणतानिरूपकता-वच्छेदकताया गुणकर्मान्यत्वे अर्थाद्गुणकर्मान्यत्ववैशिष्ट्ये कल्पनानङ्गीकारादिति, तथा च घटो विशिष्टसत्तावान् पटो विशिष्टसत्तावानित्यादिप्रतीतिविषयता घटादिवृत्तित्व-विशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणताया एव, घटवृत्तिसत्तावान् पटवृत्तिसत्तावानित्या-दिप्रतीतिक्लृप्तत्वात्, न तु घटादिवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाया अधिकरणतायाः, अतो विशिष्टसत्तावान् = गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिविषयताया गुण-कर्मान्यत्वविशिष्टसत्तात्वमात्रनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतायाः सद्भावाद् द्रव्यं गुणकर्मान्यत्वविशिष्टत्वे सति सत्त्वादित्यत्राव्याप्तिर्न स्यात्, गुणकर्मान्यत्ववैशिष्ट्य-सत्तात्वगतद्वित्वे अधिकरणतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगिता-वच्छेदकत्वस्यापि सत्त्वेन विवक्षितोभयाभावविरहेण गुणस्य हेत्वधिकरणत्वविरहात्।

किन्तु द्रव्यत्वसाध्यकघटवृत्तिसत्तात्मकसद्धेतावव्याप्तिस्स्यात्। तत्राव्याप्तिश्च गुणस्य हेत्वधिकरणत्वापत्त्या द्रव्यत्वाभावरूपसाध्याभावमादाय। तत्र गुणस्य हेत्व-धिकरणत्वापत्तिश्च — गुणस्य घटवृत्तित्वसत्तात्वगतद्वित्वावच्छिन्नाश्रयाधिकरणत्वाद् घटवृत्तित्वसत्तात्वगतद्वित्वात्मकहेतुतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकरूपे

अधिकरणतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वविरहाच्च गुणमादाय, हेतुतावच्छेदकगतोक्तरूपे विवक्षितोभयाभावस्य सत्त्वात्।

तत्राधिकरणतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वविरहश्च— घटवृत्तिसत्तावानिति प्रतीतौ तद्घटवृत्तिसत्तावानिति प्रतीत्यनुरोधेन क्लृप्ततद्घटवृत्तिसत्तात्वाद्यवच्छिन्नाधिकरणताव्यक्तीनामेव, घटवृत्तिसत्तात्वावच्छिन्नाधिकरणतात्वेन विषयत्वाङ्गीकारादिति, किन्तूपपादितं प्राज्ञजातीयकथ्यन्नैव ग्रहणार्हम्, तस्य प्राज्ञजातीयैरुक्तस्य असत्कल्पताया अग्रे स्फुटत्वात्, तस्माद् द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्रोपपादिताव्याप्तिर्भवत्येवेति चेद्— इति भावः।[१५१]

तत्त्वालोकः— न। स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य विवक्षितत्वात्। तादृशस्य तद्घटवृत्तिसत्तात्वावच्छिन्नाधिकरणत्वस्य गुणे विरहात्।

न च ''द्रव्यमेव न तु गुणादिरि''त्यादिग्रन्थे[१] गुणस्याधिकरणत्वविरहप्रयोजकतया विशिष्टसत्तात्वे तादृशावच्छेदकत्वद्वयसत्त्वप्रदर्शनमसङ्गतं गुणस्य प्रागुक्तस्वाश्रयाधिकरणत्वविरहादिति वाच्यम्, तद्ग्रन्थस्य यथाश्रुताभिप्रायकत्वात्।

यतो विशिष्टसत्तात्वं गुणनिष्ठाधिकरणतानवच्छेदकमतो न गुणादिर्य्यतो द्रव्यनिष्ठाधिकरणतावच्छेदकमतो द्रव्यमधिकरणमित्यर्थतात्पर्य्यकत्वाद्वा।

यत्तु— घटान्यत्वविशिष्टप्रमेयावच्छिन्नाधिकरणत्वस्य धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकतया तदाश्रयत्वस्य ह्रदादौ सत्त्वेन वह्निमान्धूमादित्यत्राव्याप्तिरिति— तन्न, प्रमेयत्वावच्छिन्नावच्छेदकताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य प्रमेयत्व एव कल्पनाद् घटान्यत्वविशिष्टधूमत्वाद्यवच्छिन्नाधिकरणत्वव्यक्तीनामेव विषयत्वाच्चेति दोषासम्भवात्। [१५२]

*प्रकाशः*— 'नन्वि'त्यादिपूर्वखण्डेन द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ कैश्चित्परिष्कृते हेत्वधिकरणत्वे प्रदत्ताव्याप्तिं परिहर्तुम् 'ने'त्याद्युक्तखण्डस्योपक्रमः।

प्रसक्ताव्याप्तिपरिहाराय हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपात्मका(स्वा)वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताक-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७

निरूपकताकाधिकरणताया एव हेत्वधिकरणत्वेन विवक्षितत्वेनोक्ताव्याप्तिपरिहाराद् निरुक्तोभयाभाववत् = स्वावच्छिन्नाश्रयाधिकरण - यन्निष्ठाधिकरणतात्वावच्छिन्न-पर्य्याप्त्यनुयोगितानवच्छेदकत्व, - अधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-नुयोगितावच्छेदकत्वोभयाभाववत्, यद् हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्य्याप्त्यनुयोगितावच्छेदकं रूपम्, तादृशरूपावच्छिन्नाश्रयाधिकरणत्वं हेत्वधिकरणत्वं पूर्वोक्तं नैव विवक्षितम्।

किन्तु अधिकरणतानिरूपकतावच्छेदकतावच्छेदकतापर्य्याप्त्यनुयोगिता-वच्छेदकीभूत-यद्रूपनिष्ठस्वावच्छिन्नानुयोगिताक-पर्य्याप्तिकावच्छेदकताकनिरूपकता-काधिकरणतावद् - यन्निष्ठाधिकरणतावच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकघटित उक्तोभयाभावो भवति, तादृशरूपात्मकं यत्स्वम्, तादृशस्वावच्छिन्नानुयोगिकपर्य्याप्ति-कावच्छेदकताक-निरूपकताकाधिकरणत्वरूपमेव हेत्वधिकरणत्वं विवक्षितम्।

एवं स्थितौ द्रव्यं घटवृत्तिसत्त्वादित्यत्र अतादृशस्य घटवृत्तित्वसत्तात्वगतद्वित्वा-वच्छिन्नाश्रयाधिकरणत्वस्य गुणे सत्त्वेऽपि तादृशस्य तद्घटवृत्तिसत्तात्वावच्छिन्नाधिकर-णत्वस्य गुणे विरहान्न दोषः। तद्घटवृत्तित्वसत्तात्वगतद्वित्वे तादृशरूपावच्छिन्नानुयोगि-ताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावत्तद्घटनिष्ठाधिकरणतावच्छेदक-तापर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव सत्त्वेन तदनवच्छेदकत्वविरहेणोक्तोभयाभाव-वत्त्वसत्त्वात् तादृशस्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताका-धिकरणत्वस्य तद्घटे एव सत्त्वेन गुणेऽसत्त्वाद् दोषासम्भवात्।

घटवृत्तित्वसत्तात्वगतद्वित्वस्यातादृशत्वन्तु, अधिकरणतानिरूपकतावच्छेदक-तापर्य्याप्त्यनुयोगितावच्छेदकत्वविरहात्। तत्र तद्विरहश्च, घटवृत्तिसत्तावानिति प्रतीतौ तद्घटवृत्तिसत्तावानिति प्रतीत्यनुरोधेन तद्घटवृत्तिसत्तात्वावच्छिन्नाधिकरणताया एव विषयतया क्लृप्तत्वेन घटवृत्तिसत्तात्वावच्छिन्नाधिकरणताया विषयत्वविरहात्।

द्रव्यं गुणकर्मान्यत्वे सत्त्वादित्यत्र गुणकर्मान्यत्ववैशिष्ट्य-सत्तात्वगतद्वित्वा-वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणताया द्रव्ये एव सत्त्वेन गुणादावसत्त्वात्साध्याभावस्य लक्षणघटकत्वासम्भवादव्याप्तेरभावात्।

द्रव्यत्वसाध्यकघटवृत्तिसत्ताहेतुकस्थलेऽपि अव्याप्तिर्न स्यात्, घटवृत्तित्व-सत्तात्वगतद्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधि-करणताया घट एव सत्त्वेन गुणादौ तादृशाधिकरणत्वविरहात्साध्याभावस्य लक्षण-घटकत्वासम्भवात्।

एवं द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्रापि नाव्याप्तिसम्भावना, तद्घटवृत्तित्व-सत्तात्वगतद्वित्वात्मकहेतुतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्ना-नुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतायास्तद्घट एव सत्त्वेन गुणादावभावात्साध्याभावस्य लक्षणघटकत्वविरहात्।

तत्त्वालोके 'तादृशस्य तद्घटवृत्तिसत्तात्वाद्यवच्छिन्नाधिकरणत्वस्य गुणे विरहादि'त्युक्तिः द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्, द्रव्यं घटवृत्तिसत्त्वात्, द्रव्यं तद्घटवृत्तिसत्त्वादित्यादौ सर्वत्र गुणस्य हेत्वधिकरणत्वप्रसक्त्या प्रसक्तदोषस्य गुणस्य विवक्षितहेत्वधिकरणत्वविरहदर्शनद्वारा विरहप्रदर्शनपरा बोध्या। द्रव्यत्वसाध्यकगुण-कर्मान्यत्वे सति सत्त्व-घटवृत्तिसत्त्व-तद्घटवृत्तिसत्त्वेषु हेतुषु अव्याप्त्यभावप्रयोजकस्य गुणे तादृशहेत्वधिकरणत्वविरहस्यैकत्वेन एकोक्त्यैव पूर्वापादिताशेषापत्तीनां परिहार-बोधनात्।

अत्र तादृशहेत्वधिकरणत्वविवक्षायामुत्तरग्रन्थासङ्गतिरूपं दोषं 'न चे'त्यादिना शङ्कते। इदमुच्यते यद् हेतुतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयो-गिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणताया एव विवक्षितत्वे अग्रिमे ग्रन्थे 'द्रव्यं विशिष्टसत्त्वादित्यादौ तादृशहेत्वधिकरणं द्रव्यमेव, न तु गुणादि, विशिष्टसत्तात्वे तन्निष्ठाधिकरणतानवच्छेदकत्वस्य [सामान्यतः] अधिकरणतावच्छेद-कत्वस्य च द्वयोः सत्त्वादि'त्यत्र[1] विशिष्टसत्तात्वे तादृशावच्छेदकत्वद्वय (गुणनिष्ठा-धिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वद्वय)सत्त्वप्रदर्शनमसङ्गतं भवति, गुणस्य स्वाश्रयाधिकरणत्वविरहाद्, अर्थाद् यादृशहेतुतावच्छेदकीभूतधर्मे स्वाश्रया-धिकरणयन्निष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरे-कस्तादृशहेतुतावच्छेदकाश्रयाधिकरणत्वविरहादिति।

अर्थाद् विवक्षितत्वेनेदानीं दर्शितस्य हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगि-ताकपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताक-निरूपकताकाधिकरणतायाः स्वाश्रयाधिकरणता(हेतुतावच्छेदकताश्रयाधिकरणता)-पदप्रतिपाद्यत्वेन विवक्षिताया गुणे विरहेण विशिष्टसत्तात्वे गुणनिष्ठाधिकरणता-नवच्छेदकत्वाधिकरणतावच्छेदकत्वयोर्द्वयोः सत्त्वप्रदर्शनमुक्तेनोत्तरग्रन्थेन सङ्गतन्न भवतीति तदाशयः।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७

आक्षिप्तस्य उत्तरग्रन्थे विशिष्टसत्तात्वे तादृशावच्छेदकत्वद्वय(गुणनिष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वद्वय)सत्त्वप्रदर्शनासङ्गतत्वस्य परिहारं 'तद्ग्रन्थस्य यथाश्रुता(हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूत-यन्निष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकस्तथाविधं हेतुतावच्छेदकाश्रयाधिकरणमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितमिति यथाश्रुतग्रन्था)भिप्रायकत्वादि'ति निर्दिश्य तत्त्वालोके विधीयते।

अर्थादुत्तरग्रन्थे विशिष्टसत्तात्वे तादृशावच्छेदकत्वद्वयदर्शनं नैवेदानीं दर्शितं विवक्षितं स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वमादाय, किन्तु जागदीश्यां 'हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूत-यन्निष्ठे'त्यादिना[1] दर्शितयथाश्रुताधिकरणताभिप्रायेणैव, अतो नोक्तासङ्गतिदोषः।

अथ वा दर्शितोत्तरग्रन्थस्य 'यतो विशिष्टसत्तात्वं गुणनिष्ठाधिकरणतानवच्छेदकमतो न गुणादिस्तत्र हेत्वधिकरणं विशिष्टसत्तात्वं यतो द्रव्यनिष्ठाधिकरणतावच्छेदकमतो द्रव्यन्तत्र हेत्वधिकरणमि'त्यर्थे तात्पर्य्यस्वीकारादुक्तासङ्गतेरभावात्।

स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणताया विवक्षायां वह्निमान् धूमादित्यत्र ह्रदस्य हेत्वधिकरणत्वापत्त्याऽव्याप्त्युद्भावनं 'यत्तु' करोति। तत्र ह्रदस्य हेत्वधिकरणत्वापत्तिश्च सामान्यधर्मावच्छिन्नाधिकरणतायास्तत्तद्विशेषधर्मावच्छिन्नाधिकरणतारूपत्वेन घटान्यत्वविशिष्टसामान्यधर्मात्मकप्रमेयावच्छिन्नाधिकरणताया विशेषधर्मावच्छिन्नाधिकरणतात्मकहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकधूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकाधिकरणता (धूमत्वात्मकप्रमेयनिष्ठावच्छेदकताकनिरूपकताकाधिकरणता) ह्रदत्वरूपप्रमेयनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतादिरूपतया तदभिन्नाभिन्नाभिन्नस्य तदभिन्नत्वनियमाद् धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतातोऽभिन्नघटान्यप्रमेयावच्छिन्नाधिकरणताऽभिन्नह्रदत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताश्रयत्वस्य ह्रदे सत्त्वात्तत्र साध्याभावस्य वह्न्यभावस्य लक्षणघटकत्वादव्याप्तिरिति।

तन्न, घटान्यप्रमेयावच्छिन्नाधिकरणताया धूमत्वह्रदत्वादिगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतारूपत्वाभावात् तादृशाधिकरणता(घटान्यप्रमेयावच्छिन्नाधिकरणता)निरूपकतावच्छेदकताक-

---

[1]. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

प्रतियोगिपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य प्रमेयत्वे एव कल्पनात्, अर्थाद् घटान्यप्रमेयावच्छिन्नाधिकरणतायाः प्रमेयत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतारूपत्वस्वीकारादुक्तापत्तेरभावात्।

घटान्यप्रमेयावच्छिन्नाधिकरणताविषयकप्रतीति(घटान्यप्रमेयवद्वानितिप्रतीति)-विषयताया घटान्यत्वविशिष्टधूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तीनामेव विशेषाणां स्वीकारेण अविशेषितधूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तीनां तादृशप्रतीतिविषयत्वविरहेण घटान्यप्रमेयावच्छिन्नाधिकरणत्वस्य धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतारूपताविरहाच्चेति भावः।[१५२]

तत्त्वालोकः – **न च महानसीयसाध्यके समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टहेतावव्याप्तिः, कालिकसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताकवह्नित्वनिष्ठसमवायसम्बन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणत्वस्य पर्वतेऽपि सत्त्वात्, कालिकेन महानसीयत्वविशिष्टवह्निमानिति प्रतीतौ पर्वतीयत्वविशिष्टतादृशवह्नित्वावच्छिन्नाधिकरणत्वादेः क्लृप्तस्यैव विषयत्वात् समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टवानिति प्रतीतौ तत्तन्महानसीयत्वविशिष्टतादृशवह्नित्वावच्छिन्नाधिकरणतानां क्लृप्तानां विषयत्वादिति वाच्यम्, स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन हेतुतावच्छेदकतात्वव्यापकत्वस्योक्ताधिकरणतायां विवक्षितत्वात्। अवच्छेदकतावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन बोध्या।**

**न चैवमुक्ताधिकरणतायां तादृशपर्य्याप्तिकावच्छेदकताकत्वनिवेशनं व्यर्थमिति वाच्यम्, गुणान्यत्वविशिष्टसत्त्वस्य हेतुतावच्छेदकत्वे द्रव्यान्यत्वविशिष्टसत्तानिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वमादायाव्याप्तेर्वारणीयत्वात्।**

**न चैवमपि वह्नित्वविशिष्टज्ञानत्वसाध्यके समवायेन वह्नित्वविशिष्टहेतुके कालिकसम्बन्धावच्छिन्नसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतामादायाव्याप्तिः, वह्नित्वे द्विविधावच्छेदकत्वस्य सत्त्वेऽपि तद्गतैकत्वस्यैव तादृशनिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वादिति वाच्यम्, अवच्छेदकताभेदे विलक्षणापेक्षाबुद्धिविषयरूपस्य वह्नित्वमात्रेऽपि तादृशनिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वेन द्वित्वस्य स्वीकारात् तार्णवह्नित्व,-वह्नितार्णत्वगतद्वित्वयोरिवावच्छेदकत्ववैलक्षण्येन भेदवदिति— वदन्ति।[१५३]**

*प्रकाशः –* हेतुतावच्छेदकगत-तादृशरूपावच्छिन्नानुयोगिताक-पर्य्याप्तिकावच्छेदकताक-निरूपकताकाधिकरणतात्मक-हेत्वधिकरणताविवक्षणे महानसीयस्य संयोगेन साध्यतायां समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टस्य संयोगेन हेतुतायामुपर्य्युक्तखण्डेनाव्याप्तिं शङ्कते।

उक्तसाध्यहेतुकस्थले कालिकसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताक-समवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताक-निरूपकताकाधिकरणताया हेतुतावच्छेदकीभूतवह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताक-निरूपकताकाधिकरणतान्तर्गताया पर्वते सत्त्वेन (कालिकेन महानसीयत्ववतः समवायेन वह्नित्ववतः पर्वतीयवह्नेः पर्वते सत्त्वेन) तत्र महानसीयाभावरूपसाध्याभावस्य लक्षणघटकत्वसम्भवात्तदादायाव्याप्तिः प्रसज्यति।

अत्रोक्ताव्याप्त्युपपादनाय तत्त्वालोककृदिदमुपपादयति यदुक्तस्थले हेतुतावच्छेदकवह्नित्वगतैकत्वरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वावगाहिनी प्रतीतिर्द्विविधास्ति। एका कालिकेन महानसीयत्वविशिष्टवह्निमानित्याकारा यादृशप्रतीतिविषयीभूता अधिकरणता कालिकसम्बन्धावच्छिन्नमहानसीयत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नवह्नित्वसामान्यधर्मावच्छिन्नाधिकरणता पर्वतीयत्व-चत्वरीयत्वादि-तत्तद्विशेषधर्मविशिष्टवह्नित्वावच्छिन्नाधिकरणता व्यक्तिविशेषरूपा एव क्लृप्ताः। द्वितीया प्रतीतिः तादृशाधिकरणता व्यक्तिविशेषान्तर्गतपर्वतीयत्वविशिष्टवह्नित्वावच्छिन्नाधिकरणता पर्वते तिष्ठति, तत्र साध्याभावस्य लक्षणघटकता भवत्येव।

तादृशवह्नित्वावच्छिन्नाधिकरणतावगाहिनी अपरा प्रतीतिः समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टवानित्याकारा यादृशप्रतीतिविषयीभूता समवायसम्बन्धावच्छिन्नमहानसीयत्वसामान्यधर्मावच्छिन्नकालिकसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाधिकरणतातोऽभिन्नास्तत्तन्महानसीयत्वरूपविशेषविशेषधर्मविशिष्टतादृशवह्नित्वावच्छिन्नाः क्लृप्ता एव विशेषा अधिकरणताव्यक्तयः। अर्थात् तत्रोक्तरीत्या उक्तविवक्षायां हेत्वधिकरणतावन्महानसमिव पर्वत-चत्वरादयोऽन्येऽपि वह्निमन्तो भवन्त्येवातोऽव्याप्तिः प्रसज्यत्येवेति भावः।

आपादिताव्याप्तेः समाधानमुक्ताधिकरणतायां हेतुतावच्छेदकतात्वव्यापकत्वं निविश्य विधीयते। उक्ताधिकरणतायां हेतुतावच्छेदकतात्वव्यापकतानियामकः सम्बन्धः स्व(उक्ताधिकरणता)निरूपितावच्छेदकतावत्त्वरूपः। स्वनिरूपितावच्छेदकतावत्त्वघटकावच्छेदकतावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामाना-

धिकरण्योभयसम्बन्धेन विवक्षिता। अर्थात् सर्वत्रैव हेतुतावच्छेदकतात्ववति स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन अवच्छेदकतावत्त्वघटितस्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन यस्यामुक्ताधिकरणतायां स्यात्, सैवोक्ताधिकरणता हेत्वधिकरणतात्वेन ग्राह्यास्ति, यथा वह्निमान् धूमादित्यत्र पर्वतीयत्वविशिष्टधूमत्वाद्यवच्छिन्नाधिकरणता स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन हेतुतावच्छेदकतात्वव्यापिका भवति, यतो हि हेतुतावच्छेदकतात्वं तिष्ठति समवायसम्बन्धावच्छिन्नायां धूमत्वनिष्ठावच्छेदकतायाम्, तत्र धूमत्वावच्छिन्ना(धूमत्वनिष्ठसमवायसम्बन्धावच्छिन्ना)वच्छेदकताकनिरूपकताकाधिकरणता स्वावच्छेदकसमवायसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेनावच्छेदकतावत्त्वघटितस्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन तिष्ठत्येव, उक्तनिवेशे सति महानसीयसाध्यके समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टहेतुकस्थले कालिकसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताक-समवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताया विवक्षितेन उक्तसम्बन्धेन हेतुतावच्छेदकतात्वव्यापकत्वविरहादव्याप्तेरभावात्।

तत्रोक्ताधिकरणताया हेतुतावच्छेदकतात्वव्यापकत्वविरहश्च — हेतुतावच्छेदकतात्वस्य समवायसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतायां सत्त्वेन तत्र उक्ताधिकरणतायाः स्वनिरूपितावच्छेदकता(महानसीयत्वावच्छेदकता)सामानाधिकरण्यसत्त्वेऽपि स्वावच्छेदकसम्बन्धावच्छिन्नत्वविरहाद् एवं हेतुतावच्छेदकतात्ववत्यां कालिकसम्बन्धावच्छिन्नायां वह्नित्वनिष्ठावच्छेदकतायाम् उक्ताधिकरणतायाः स्वनिरूपितवह्नित्वनिष्ठावच्छेदकतासामानाधिकरण्यसत्त्वेऽपि स्वावच्छेदकसम्बन्धावच्छिन्नत्वविरहात्।

अनन्तरमत्र शङ्कते यद् हेतुतावच्छेदकतात्वव्यापकत्वस्योक्ताधिकरणतायां निवेशे सति हेतुतावच्छेदकगत-तादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकत्वनिवेशो व्यर्थ एवेति।

तत्र समाधीयते यन्नो व्यर्थः स इति, गुणान्यत्वविशिष्टसत्ता यत्र हेतुतावच्छेदिका भवति, तादृशसाध्यहेतुकसद्धेतुस्थले द्रव्यान्यत्वविशिष्टसत्तानिष्ठावच्छेदकताकनिरूपकताकाधिकरणतामादाय प्रसक्ताव्याप्तेर्वारणायोक्तनिवेशस्यावश्यकत्वात्।

द्रव्यत्व-कर्मत्वान्यतरसाध्यक-गुणान्यत्वविशिष्टसत्तावतस्तादात्म्येन हेतुकस्थले गुणान्यत्वविशिष्टसत्ताया हेतुतावच्छेदकता भवति। गुणान्यत्वविशिष्टसत्तावद् द्रव्यं भवति कर्म च, तादात्म्येन तादृशहेत्वधिकरणं द्रव्यं कर्म च भवति,

तत्र द्रव्यत्वकर्मत्वान्यतरस्य सद्भावेन तादृशहेतोः सद्धेतुता। तत्र द्रव्यान्यत्वविशिष्ट-सत्तानिष्ठावच्छेदकताकनिरूपकताकाधिकरणता स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेनावच्छेदकतावत्त्वघटित - स्वनिरूपितावच्छेदकता-वत्त्वसम्बन्धेन हेतुतावच्छेदकतात्वव्यापिका भवत्येव। तादृशाधिकरणताया गुणेऽपि सत्त्वेन तत्रोक्तान्यतराभावात्मकसाध्याभावमादायाव्याप्तिः स्यात्।

हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपा-वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकत्वस्य तत्र विशेषणतया निवेशे च तादृशाधिकरणतायास्तादृशत्वविरहान्न दोषः। तत्र तादृशत्वविरहश्च— गुणान्यत्वघटित-सत्तात्व-सत्ताघटितसमुदायगतरूपतो द्रव्यान्यत्वसत्तात्व-सत्ताघटित-समुदायगतरूपस्य भिन्नत्वाद्भवति।

न चैवमपि = स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन हेतुतावच्छेदकतात्व-व्यापिकायामधिकरणतायां तादृशपर्य्याप्तिकावच्छेदकताकनिरूपकताकत्वनिवेशे सत्यपि, समवायेन वह्नित्वविशिष्टविषयकज्ञानत्वसाध्यके समवायेन वह्नित्वविशिष्टस्य विषयितासम्बन्धेन हेतुतास्थले कालिकसम्बन्धावच्छिन्नसमवायसम्बन्धावच्छिन्न-वह्नित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतामादायाव्याप्तिः स्यादेव, तादृशा-धिकरणतावति साध्याभावस्य प्रतियोगिव्यधिकरणत्वेन लक्षणघटकत्वसम्भवात्, आपादकत्वेन दर्शिताधिकरणतानिरूपकतावच्छेदकतात्वस्य कालिकसम्बन्धावच्छि-न्नायां वह्नित्वनिष्ठावच्छेदकतायां समवायसम्बन्धावच्छिन्नायाञ्च वह्नित्वनिष्ठावच्छेदक-तायां सत्त्वेन अर्थाद् वह्नित्वे कालिकसमवायभेदेन द्विविधावच्छेदकत्वस्य सत्त्वेऽपि हेतुतावच्छेदकीभूतवह्नित्वगतैकत्वस्य तादृशाधिकरणतानिरूपकतावच्छेदकताप्रतियो-गिपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वात्, तादृशावच्छेदकताकनिरूपकताकाधिक-रणतावति साध्याभावस्य सत्त्वात्साध्याभावमादाय तत्राव्याप्तिः प्रसज्येत इति शङ्का।

अत्र समाधीयते यत् तत्रापादकाधिकरणतानिरूपकतावच्छेदकता-प्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं द्वित्वमेव भवति, न तु वह्नित्वगतैकत्वम्, वह्नित्वगतनिरूपकतावच्छेदकतायाः कालिकसमवायसम्बन्धभेदेन भिन्नतया वह्नित्व-मात्रेऽवच्छेदकत्वसत्त्वेऽपि कालिकसम्बन्धावच्छिन्नत्व-समवायसम्बन्धावच्छिन्नत्व-योर्द्वयोः सत्त्वेन विलक्षणापेक्षाबुद्धिविषयद्वित्वस्यैव तादृशनिरूपकतावच्छेदकता-पर्य्याप्त्यनुयोगितावच्छेदकत्वस्वीकारात्, वह्नित्वगतैकत्वस्य हेतुतावच्छेदकता-प्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वाद्दोषासम्भवात्।

तत्र विलक्षणापेक्षाबुद्धिविषयरूपद्वित्वस्य तादृशनिरूपकतावच्छेदकतया पर्य्याप्त्यनुयोगितावच्छेदकत्वस्वीकारे निदर्शनं प्रस्तूयते 'तार्णवह्नित्ववह्नितार्णत्व-गतद्वित्वयोरिवावच्छेदकत्ववैलक्षण्येन भेदवदि'ति। विशेषण-विशेष्यभावं व्यत्यस्य तार्णवह्निवह्नितार्णयोर्विषयितया हेतुताभेदे तार्णत्व-वह्नित्वगतद्वित्व, - वह्नित्व-तार्णत्वगत-द्वित्वयोर्यथा अवच्छेदकतावैलक्षण्येन भेदो भवति, तथैव प्रकृतेऽपि सम्बन्धभेदप्रयुक्तावच्छेदकताभेदेन अवच्छेदकताप्रतियोगिक-पर्य्याप्त्यनुयोगितावच्छेदकभेदोऽपीति तदाशयः। एतत्पर्य्यन्तं केषाञ्चिन्मतोपपादनम्। तदेव 'इति वदन्ती'ति निर्दिश्य बोधितमिति भावः।[१५३]

तत्त्वालोकः – **परे तु — प्रकृतहेतुतायां स्ववृत्तिनिरूपकताकाधिकरणतावद्यन्निष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वाधिकरणतानिरूपकतावत्त्वोभयाभाववत्त्वमस्ति, स एव हेत्वधिकरणपदार्थत्वेन विवक्षितः। निरूपकतावत्ता च स्ववृत्तित्वसम्बन्धेन। स्ववृत्तित्वञ्च सर्वं स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन, वैशिष्ट्यञ्च स्वसामानाधिकरण्य - स्वानवच्छेदकानवच्छिन्नत्व - स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्वसम्बन्धेषु यदुपादेयं तत्सम्बन्धेन। तथा च न कोऽपि दोषः। सम्बन्धव्यावृत्तिस्तु प्रायशो विषयित्वसम्बन्धेन हेतुतास्थलेऽव्याप्तिवारणरूपानुसन्धेयेति।**

**एवञ्चैकत्वादेः पर्य्याप्त्यनभ्युपगमेऽपि न क्षतिर्न्न वा वह्नित्वमात्रगत-द्वित्वाभावेऽपि चोक्तदोष— इति प्राहुः।[१५४]**

*प्रकाशः* – लक्षणघटकहेत्वधिकरणपदार्थं 'परे' यथा मन्यन्ते तथोपपादयितुमुक्तखण्डस्योपक्रमः। स एव हेत्वधिकरणपदार्थत्वेन विवक्षितः परेषाम्मते — प्रकृतहेतुतायां स्व(प्रकृतहेतुता)वृत्तिनिरूपकताकाधिकरणतावद् यन्निष्ठाधिकरणता-निरूपितनिरूपकतावदन्यत्वाधिकरणतानिरूपकतावत्त्वोभयाभाववत्त्वं भवति। विवक्षितोभयाभावप्रथमप्रतियोगिघटकनिरूपकतावत्ता द्वितीयप्रतियोगिभूतनिरूपकतावत्ता च स्व(निरूपकता)वृत्तित्वसम्बन्धेन।

स्ववृत्तित्वञ्च सर्वं स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन। सम्बन्धघटकावच्छेदकतावैशिष्ट्यञ्च स्वसामानाधिकरण्य, - स्वानवच्छेदकानवच्छेदकानवच्छिन्नत्व, - स्वावच्छेदकसम्बन्धावच्छिन्नत्व, - स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्वसम्बन्धेषु यावदावश्यकन्तावत्सम्बन्धेन।

उक्तहेत्वधिकरणपदार्थविवक्षायां वह्निज्ञानत्वसाध्यके विषयितया वह्नेर्हेतुता-स्थले महानसीयवह्निविषयकज्ञानं हेत्वधिकरणपदार्थान्तर्गतं न भवति, प्रकृतहेतुतायां स्ववृत्तिनिरूपकताकाधिकरणतावन्महानसीयवह्निविषयकज्ञाननिष्ठाधिकरणतानिरूपित-निरूपकतावदन्यत्वस्य अधिकरणतानिरूपकतावत्त्वस्य च द्वयोः सत्त्वेन विवक्षितो-भयाभावविरहात्।

एकत्वादेः पर्य्याप्त्यनभ्युपगमपक्षे पर्य्याप्तिघटितनिवेशवतः 'केचित्तु'मतस्य सम्भवाभाव इव एकत्वादेः पर्य्याप्त्यनभ्युपगमजनितासम्भवदोषोऽपि नास्त्येव दर्शिते 'परे तु' मते, पर्य्याप्तिरहितत्वात्, तथा समवायेन वह्नित्वविशिष्टविषयकज्ञानत्वसाध्यके समवायेन वह्नित्वस्य विषयितया हेतुतास्थले सम्बन्धभेदप्रयुक्तावच्छेदकताभेदेन वह्नित्वमात्रगतस्यापेक्षाबुद्धिविषयद्वित्वस्यानभ्युपगमेऽपि कालिकसम्बन्धावच्छिन्न-समवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतामादाया-व्याप्तिसम्भावनापि न, तत्रापादकाधिकरणस्य हेत्वधिकरणपदार्थान्तर्गतत्वविरहाद्, आपादकाधिकरणमादाय प्रकृतहेतुतायां विवक्षितोभयाभाववत्त्वविरहात्। तत्र हेतुता-निरूपितावच्छेदकताविशिष्टान्यकालिकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्यैव आपादकाधिकरणतानिरूपकतायां सत्त्वात्।

परैः परिष्कृते हेत्वधिकरणपदार्थे प्रकृतहेतुता-हेत्वधिकरणनिष्ठाधिकरणता-निरूपकतयोः स्वावच्छेदकता-स्वावच्छेदकताघटकसम्बन्धादिना सर्वथा साम्यमपेक्षितं भवति।

वह्निमान् धूमादित्यत्र परिष्कृतहेत्वधिकरणपदार्थान्तर्गतः पर्वतादिर्भवति, यतो हि तत्र प्रकृतहेतुता धूमनिष्ठा धूमत्वावच्छिन्ना संयोगसम्बन्धावच्छिन्ना च, तस्यां प्रकृतहेतुतायां धूमनिष्ठायां स्वनिरूपिता(निरूपकतानिरूपिता)वच्छेदकताविशिष्टान्या-वच्छेदकत्वानिरूपितत्वसम्बन्धेन वृत्तिर्या निरूपकता, तादृशनिरूपकतानिरूपिता या अधिकरणता, तादृशाधिकरणतावत्पर्वतादिनिष्ठाधिकरणतानिरूपिता निरूपकता पर्वतीयत्वादिविशिष्टतत्तद्धूमादिनिष्ठा, तादृशनिरूपकतावत्ता स्वनिरूपितावच्छेदकता-विशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धावच्छिन्न-स्ववृत्तित्वसम्बन्धेन प्रकृतहेतुता-यान्नैव भवति, निरूपकतायां विशिष्टान्यावच्छेदकत्वनिरूपितत्वस्यैव सत्त्वात्, अतो तादृशनिरूपकतावदन्यत्वस्य सत्त्वेऽपि अतिरिक्तसामान्यधर्मावच्छिन्नानङ्गीकारेण अधिकरणतानिरूपकतावत्त्वविरहेण विवक्षितोभयाभाववत्त्वस्य सत्त्वादिति।

निरूपकतायाः प्रकृतहेतुतावृत्तित्वं प्रकृतहेतुताया निरूपकतावृत्तित्वञ्च उभयमपि स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितसम्बन्धेनैव। एतत्सूचनायैव 'स्ववृत्तित्वञ्च सर्वं स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेने'त्यत्र 'सर्वमि'त्युक्तम्। तत्रादिभागे 'प्रकृतहेतुतायां स्ववृत्तिनिरूपकता' इति यदायातं तत्र 'स्व'पदेन हेतुता ग्राह्या भवति। प्रकृतहेतुतायां निरूपकतावत्तानियामकतया निर्दिष्टस्ववृत्तित्वसम्बन्धघटक'स्व'पदग्राह्या निरूपकता भवति।

उभयदिशि वृत्तितानियामकतया दर्शितसम्बन्धघटकावच्छेदकतावैशिष्ट्यं स्वसामानाधिकरण्यादिप्रसिद्धचतुष्टयान्तर्गतोपादेयसम्बन्धेन विवक्षितम्। तदेव बोधितं 'वैशिष्ट्यञ्च स्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्न-स्ववृत्तित्वेषु यदुपादेयं तत्सम्बन्धेन' इत्युक्त्या।

तदनन्तरं 'सम्बन्धव्यावृत्तिस्तु प्रायशो विषयित्वसम्बन्धेन हेतुतास्थलेऽव्याप्तिवारणरूपानुसन्धेयेती'ति यन्निर्दिष्टं तदनुसृत्य सम्बन्धफलानि दर्श्यन्ते—

तार्णवह्निज्ञानत्वसाध्यके विषयितया तार्णवह्निहेतुके वह्निज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावमादायाव्याप्तिवारणाय हेतुतायां निरूपकताया वृत्तितानियामकसम्बन्धस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वघटकावच्छेदकतावैशिष्ट्यनियामकसम्बन्धेषु स्वसामानाधिकरण्यस्य निवेशः, हेतुतानिरूपिततार्णत्वनिष्ठावच्छेदकतायां निरूपकतानिरूपितवह्नित्वनिष्ठावच्छेदकतायाः स्वसामानाधिकरण्यातिरिक्तस्वानवच्छेदकानवच्छिन्नत्वादिवैशिष्ट्यस्यैव सत्त्वात्। स्वसामानाधिकरण्यस्य तत्र प्रवेशे तु तार्णत्वनिष्ठावच्छेदकतायां वह्नित्वनिष्ठावच्छेदकतासामानाधिकरण्यविरहाददोषः।

वह्नित्ववज्ज्ञानत्वसाध्यके वह्नित्ववतो विषयितया हेतुतास्थले वह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावमादाय प्रसक्ताव्याप्तिवारणाय तत्र स्वानवच्छेदकानवच्छिन्नत्वस्य निवेशः, तत्र निरूपकतावच्छेदकताया अनुल्लिख्यमानवह्नित्वनिष्ठत्वेन हेतुतावच्छेदकताया उल्लिख्यमानवह्नित्वनिष्ठत्वेन स्वानवच्छेदकानवच्छिन्नत्वनिवेशे सति हेतुतावच्छेदकतायां स्वानवच्छेदकानवच्छिन्नत्वविरहेण दोषविरहात्।

समवायेन वह्नित्वविशिष्टविषयकज्ञानत्वसाध्यके समवायेन वह्नित्वविशिष्टस्य विषयितया हेतुतास्थले कालिकेन वह्नित्वविशिष्टविषयकज्ञानस्य हेत्वधिकरणत्व-

प्रसक्त्या प्रसक्ताव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य तृतीयवैशिष्ट्यस्य निवेशः।

वह्निज्ञानत्वसाध्यके विषयितया वह्नेर्हेतुतास्थले वह्नित्ववज्ज्ञानस्य हेत्वधिकरणत्वापत्त्यां साध्याभावमादायाव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्वरूपस्य चतुर्थसम्बन्धस्य प्रवेशः, तस्य तत्र प्रवेशे तु निरूपकतावच्छेदकतायाः सावच्छिन्नत्वेन हेतुतावच्छेदकताया निरूपकतावच्छेदकतायां स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन वृत्तित्वविरहाद्दोषासम्भवात्।

एवमेवापरभागेऽपि स्वसामानाधिकरण्यादिसम्बन्धचतुष्टयफलानि वह्निज्ञानत्वसाध्यके विषयितया वह्नेर्हेतुत्वे तार्णवह्निज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावमादाय प्रसक्ताव्याप्तिवारणाय स्वसामानाधिकरण्यस्य निवेशः, वह्नित्वनिष्ठहेतुतावच्छेदकतावैशिष्ट्यस्य स्वसामानाधिकरण्यातिरिक्तसम्बन्धैस्तार्णत्वनिष्ठनिरूपकतावच्छेदकतायां सत्त्वात्। तदुक्तौ तु तार्णत्वनिष्ठावच्छेदकतायां वह्नित्वनिष्ठावच्छेदकतासामानाधिकरण्यविरहान्न दोषः।

तत्र स्वानवच्छेदकानवच्छिन्नत्वस्यानुपादाने वह्निज्ञानत्वसाध्यके वह्नेर्विषयितया हेतुतायां वह्नित्ववद्विषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावमादायाव्याप्तिस्स्यात्। तदुक्तौ सावच्छिन्नायां वह्नित्वनिष्ठनिरूपकतावच्छेदकतायां निरवच्छिन्नवह्नित्वनिष्ठहेतुतावच्छेदकतावैशिष्ट्यविरहान्न दोषः।

स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य तृतीयसम्बन्धस्यानुपादाने समवायेन वह्नित्वविशिष्टविषयकज्ञानत्वसाध्यके समवायेन वह्नित्वविशिष्टस्य विषयितया हेतुत्वे कालिकेन वह्नित्वविशिष्टविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यादतस्तदुपादानम्।

तत्र चतुर्थसम्बन्धानुपादाने वह्नित्व-तज्ज्ञानत्वसाध्यकवह्नित्ववद्धेतुकस्थले वह्निज्ञानस्य हेत्वधिकरणत्वापत्त्याव्याप्तिः स्यादतस्तदुपादानं बोध्यमिति भावः।[१५४]

तत्त्वालोकः– इदन्तु बोध्यम्। व्याप्तिज्ञानस्य कारणता च नोक्तोभयाभावादिविषयिताघटितरूपेण, किन्तु हेतुतावच्छेदकावच्छिन्नविषयता[1]-निरूपिताधिकरणत्वविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयताघटितरूपेणैव, तथैव व्याप्तिज्ञानस्यानुमितिकारणस्यानुव्यवसीयमानत्वात्।

१. 'विषयिते'ति मुद्रितप्राचीनपुस्तके।

धूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहे धूमवत्त्वस्य धूमत्वावच्छिन्नाधिकरणतात्वेनावगाहनम्।

विषयितया धूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहे च धूमत्वेतरधर्म्मानवच्छिन्नाधिकरणतात्वेन धूमवत्त्वस्यावगाहनान्न प्रमात्वस्यानुपपत्तिः, उक्तोभयाभावस्य शब्दानुगमानुरोधेन व्याप्तिलक्षण एव हेत्वधिकरणत्वपरिचायकतया प्रवेश इति।[१५५]

*प्रकाशः* – 'इदन्तु बोध्यमि'त्यादिनोपरिनिर्दिष्टखण्डेनेदं बोध्यते यदतिरिक्तसामान्यधर्मावच्छिन्नानङ्गीकारे लक्षणघटक'हेतुतावच्छेदकावच्छिन्नाधिकरणे'त्यनेन 'हेतुतावच्छेदकीभूते स्वाश्रयाधिकरणीभूत-यन्निष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वयोर्द्वयोर्व्यतिरेकस्तथाविधोभयाभावादिविषयिताघटितरूपेण अनुमितिकारणता व्याप्तिज्ञानस्य न भवति, व्याप्तिज्ञानप्रकाशकज्ञानेन =व्याप्तिज्ञानानुव्यवसायेन उक्तोभयाभावादिविषयिताघटितरूपेण, – हेत्वधिकरणताया प्रकाशितत्वविरहात् = अनुव्यवसीयमानत्वविरहात्, किन्तु हेतुतावच्छेदकावच्छिन्नविषयतानिरूपिताधिकरणत्वविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयताघटितरूपेणैव व्याप्तिज्ञानस्यानुमितिकारणता भवति, तथैव तस्यानुव्यवसीयमानत्वात् = अनुव्यवसायग्राह्यत्वात्। एतावता येन रूपेण यस्यानुव्यवसायग्राह्यता भवति तेनैव रूपेण तस्य कारणता भवतीत्यावेदितं जातम्।

हेतुतावच्छेदकावच्छिन्नादिविषयताघटितरूपेणैव व्याप्तिज्ञानस्यानुमितिकारणता, न तूक्तोभयाभावादिविषयिताघटितरूपेणेति यदुक्तम्, तदेव समर्थयति अग्रिम सन्दर्भेण 'धूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहे' इत्यादिना।

वह्नित्वेन वह्नेर्धूमत्वेन धूमादनुमितये वह्नित्वधर्मिकधूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहोऽपेक्षितो भवति। तत्र धूमवत्त्वस्य धूमत्वावच्छिन्नाधिकरणतात्वरूपेणैव ग्राह्यता भवति।

विषयितया ग्रहस्थले विशेषं दर्शयति 'विषयितया धूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहे च धूमत्वेतरधर्मानवच्छिन्नाधिकरणतात्वेन धूमवत्त्वस्यावगाहनान्न प्रमात्वस्यानुपपत्तिरि'त्यनेन।

अस्यायम्भावो यद् धूमत्वविषयितानिरूपिताधिकरणत्वविषयितानिरूपिताधिकरणविषयितानिरूपितवृत्तित्वविषयितानिरूपिताभावविषयितानिरूपितप्रतियोगित्वविषयितानिरूपितावच्छेदकत्वविषयितानिरूपिताभावविषयितानिरूपितवह्नित्वविषयितावज्ज्ञानेन वह्नित्वे धूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहस्थले धूमत्वेत-

रानवच्छिन्नत्वमेवाधिकरणतायां भासते, न तु धूमत्वावच्छिन्नत्वम्, तथैवानुभवात्।

एतदेव 'विषयितया धूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहे च धूमत्वेतरानवच्छिन्नाधिकरणतात्वेन धूमवत्त्वस्यागाहनान्न प्रमात्वस्यानुपपत्तिरि'त्यनेन बोधितम्।

विषयितया यथावगाहनं भवति तथा 'न च महानसीयधूमवानिति ज्ञानं प्रकारितया धूमवदिति प्रतीतिरप्रमा' इत्यादेर्व्याख्यावसरे पूर्वमेव स्पष्टीकृतम्[1]। तत्रैव प्रमाणत्वावच्छेदेन स्वातिरिक्तधर्मानवच्छिन्नत्वसम्बन्धावच्छिन्नधर्मनिष्ठप्रकारतानिरूपिताधिकरणत्वनिष्ठविशेष्यतानिरूपकप्रकारताकज्ञानजनकताप्युक्ता प्रमाणस्य। तत्राधिकरणतायां धूमत्वधर्मस्य स्वातिरिक्तधर्मानवच्छिन्नत्वसम्बन्धेनैव प्रकारत्वेन तादृशज्ञानस्य प्रमात्वमुपपद्यते।

एतेन अधिकरणतायां सामान्यधर्मावच्छिन्नाधिकरणतानङ्गीकारे धूमत्वावच्छिन्नत्वविरहेण तत्र धूमत्वावच्छिन्नत्वाभाववति धूमत्वावच्छिन्नत्वप्रकारकं ज्ञानमप्रमैव स्यान्न तु प्रमेति शङ्काऽपाकृता, तत्र ज्ञाने अधिकरणतायां धूमत्वावच्छिन्नत्वावगाहनविरहाद् धूमत्वेतरानवच्छिन्नत्वस्यैव स्वातिरिक्तानवच्छिन्नत्वसम्बन्धेन धूमत्वस्यैव वा तथावगाहनादिति। उक्तोभयाभावः शब्दानुगमानुरोधेन हेत्वधिकरणतापरिचायकतयैव केवलं व्याप्तिलक्षणे प्रविष्टो न तु तद्घटितरूपेण व्याप्तिज्ञानस्य कारणत्वाभिप्रायेणेति भावः।[१५५]

तत्त्वालोकः— **अथानयोरेकमनुसृत्य विचारप्रसङ्गः। तत्र स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकयन्निष्ठाधिकरणत्वं तादृशावच्छेदकताकाधिकरणतावद्यन्निष्ठाधिकरणत्वापेक्षया लघुभूतङ्कुतो न निवेशितमिति पर्य्यनुयोगे प्रतिविधानमुच्यते कैश्चित्, तथा हि तादृशाधिकरणत्वस्य यत्पदार्थपरिचायकतयैव प्रवेशेनाभावकोटावप्रवेशादस्मत्पक्ष एव लाघवम्, युष्मत्पक्षे च तादृशावच्छेदकताकनिरूपकताकत्वस्य परिचायकत्वस्यासम्भवात्। पर्वतादिनिष्ठतदधिकरणताघटितोभयाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन प्रतियोग्यंशे भासमाने तदधिकरणताघटितोभयत्वस्यैव कल्पनीयतया पर्वतादीनां तादृशोभयाभावप्रतियोगितानिरूपितपरम्परावच्छेदकत्वरूपहेत्वधिकरणत्वानुपपत्तेरिति।**

**तत्र, महानसानुयोगिकसंयोगेन धूमहेतुके महानसनिष्ठमहानसानुयोगिकसंयोगसम्बन्धावच्छिन्नाधिकरणत्वघटितोभयाभावप्रतियोगितावच्छे-**

---

१. तत्त्वालोकप्रकाशे खण्डसंख्या १४७

दकत्वस्य महानसवृत्तित्वाघटितोभयत्व एव कल्पनीयतया महानसस्य हेत्वधिकरणत्वानुपपत्त्या गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकारेणैवैतदुक्तिरित्यस्यावश्यवाच्यत्वात् तादृशाभावीयपरम्परावच्छेदकतावदधिकरणत्वस्यैव वा विवक्षणीयत्वादिति।[१५६]

*प्रकाशः* – उपरिनिर्दिष्टखण्डेन 'अथे'त्यादिना हेतुतावच्छेदकावच्छिन्नविषयतानिरूपिताधिकरणत्वविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयताघटितरूप, - उभयाभावादिविषयिताघटितरूपयोरुपरिनिर्दिष्टयोरेकं हेतुतावच्छेदकावच्छिन्नादिविषयताघटितरूपमनुसृत्य विचारो विधीयते, प्रसङ्गप्राप्तत्वात् अथवा 'तत्रे'त्यादिनानुपदं निर्देक्ष्यमाणयोः 'स्वावच्छिन्नानुयोगिताके'त्यादि 'तादृशावच्छेदकताके'त्याद्योरेकमनुसृत्य विचारो विधीयते।

तत्रेत्थं जिज्ञासा जागर्ति यत्तादृशावच्छेदकताकाधिकरणतावद्यन्निष्ठाधिकरणत्वापेक्षया अर्थाद् 'हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणीभूत-यन्निष्ठाधिकरणतानवच्छेदकत्वे'त्यादिवाक्यबोधितोभयाभावप्रतियोगितानिरूपितपरम्परावच्छेदकरूपहेत्वधिकरणत्वापेक्षया लघुभूतम् स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वमेव अर्थाद् हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकं यद्रूपन्तादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वमेव कुतो न लाघवान्निवेशितमिति।

अत्र कैश्चित्समाधीयते यत् तादृशाधिकरणत्वस्य, अर्थात् तादृशोभयाभावप्रतियोगितानिरूपितपरम्परावच्छेदकाधिकरणत्वस्य, यत्पदार्थपरिचायकतयैव अभावकुक्षौ प्रवेशसत्त्वादस्मत्पक्ष एव, अर्थात् तादृशावच्छेदकताकाधिकरणतावद्यन्निष्ठाधिकरणत्वनिवेश एव लाघवम्, युष्मत्पक्षे अर्थात् स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकयन्निष्ठाधिकरणत्वनिवेशपक्षे, स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकत्वस्य परिचायकत्वासम्भवाल्लाघवविरहात्।

तादृशावच्छेदकताकाधिकरणत्वस्य उक्तोभयाभावप्रतियोगितावच्छेदकान्तर्गतस्य यत्पदार्थपरिचायकतामात्रार्थं तत्र प्रवेशो न तु अनुमितिकारणीभूतव्याप्तिज्ञाने उक्तोभयाभावघटितरूपेण विषयत्वसम्पत्त्यर्थम्। तत्र बीजं दर्शयति 'पर्वतादिनिष्ठतदधिकरणताघटितोभयाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन प्रतियोग्यंशे भासमान-तदधिकरणताघटितोभयत्वस्यैव कल्पनीयतया पर्वतादीनां तादृशोभयाभावप्रतियोगितानिरूपितपरम्परावच्छेदकत्वरूपहेत्वधिकरणत्वानुपपत्तेरि'ति।

अर्थाद् यत्पदार्थपरिचायकतया तत्र तस्याप्रवेशे उभयाभावघटितरूपेण तस्य अनुमितिकारणव्याप्तिज्ञानविषयतास्वीकारे वह्निमान् धूमादित्यत्र पर्वतादीनां हेत्वधिकरणत्वन्नोपपन्नं स्यात्, प्रतियोग्यंशे भासमानस्य तदधिकरणताघटितोभयत्वस्यैव लघुभूतस्य तादृशोभयाभावप्रतियोगितावच्छेदकत्वेन पर्वतादेरुक्तोभयाभावप्रतियोगितायाः पारम्परिकावच्छेदकत्वविरहेण तादृशोभयाभावप्रतियोगितानिरूपितपरम्परावच्छेदकत्वस्य तत्रासम्भवात्। पर्वतादिघटितोभयत्वस्य तदघटितं तदधिकरणत्वघटितोभयत्वमपेक्ष्य गुरुत्वेनानवच्छेदकत्वादिति।

उत्थितजिज्ञासाया उपर्य्युक्तं कैश्चित् कृतं समाधानमयुक्तमिति 'तन्ने'त्यादिना उपपाद्यते। सिद्धान्तिनेदमुच्यते यद् गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकारेणैव तादृशावच्छेदकताकाधिकरणताया प्रवेशस्य सत्त्वाद् वह्निमान् धूमादित्यत्र पर्वतादीनां तादृशोभयाभावप्रतियोगितानिरूपितपरम्परावच्छेदकत्वरूपहेत्वधिकरणत्वानुपपत्तिर्न भवति, तदुक्तेर्गुरुधर्मस्य प्रतियोगितावच्छेदकत्वस्वीकारपक्षीयत्वविरहे वह्निसाध्यके महानसानुयोगिकसंयोगेन धूमहेतुकस्थले महानसस्य हेत्वधिकरणत्वन्नोपपद्येत, महानसनिष्ठमहानसानुयोगिकसंयोगसम्बन्धावच्छिन्नाधिकरणत्वघटितोभयाभावप्रतियोगितावच्छेदकत्वस्य लघुभूते महानसनिष्ठत्वाघटिते महानसानुयोगिकसंयोगसम्बन्धावच्छिन्नाधिकरणत्वघटितोभयत्वे एव कल्पनीयत्वसम्भवात्। महानसस्य तद्धटकत्वविरहेण तादृशोभयाभावप्रतियोगितानिरूपितपरम्परावच्छेदकत्वरूपहेत्वधिकरणत्वं न स्यात्। अतः पूर्वोक्तस्य = तादृशावच्छेदकताकाधिकरणतावद्यन्निष्ठाधिकरणत्वस्य तादृशाभावीयपरम्परावच्छेदकतावदधिकरणत्वस्यैव वा, विवक्षणीयत्वादिति भावः।[१५६]

तत्त्वालोकः– अत्र वदन्ति। धूमवानिति प्रतीतौ न पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणत्वादेर्विषयत्वं किन्तु धूमत्वाश्रयनिरूपिताधिकरणतात्वेन, ततोऽप्यवश्यक्लृप्तेषु तत्तद्व्यक्तिनिरूपिताधिकरणत्वेष्वेव, तथा च धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वाप्रसिद्धेस्स्वावच्छिन्नाश्रयाधिकरणत्वमेव विवक्षणीयम्।

न च द्रव्यं घटवृत्तिसत्त्वादित्यत्र प्रागुक्तरीत्याऽव्याप्तिरिति वाच्यम्, तद्धटवृत्तिसत्तावानिति प्रतीतौ तद्धृत्तिसत्तात्वावच्छिन्नाधिकरणत्वस्य तद्वृत्तिसत्तावानिति प्रतीत्यनुराधेन क्लृप्तस्य विषयत्वात्प्रयोजनाभावेन घटत्वेऽवच्छेदकत्वाकल्पनात्, तदधिकरणत्वस्य घटवृत्तिसत्तावानित्यत्र विषयत्वासम्भवात्।

न च तद्धटवृत्तिसत्ताहेतुक एवाव्याप्तिरिति वाच्यम्, हेतुतावृत्तियत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपसामान्यस्यैव विवक्षितत्वात्, वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकत्वसम्बन्धेन, वैशिष्ट्यञ्च स्वसामानाधिकरण्यादिना बोध्यम्।

तथा च हेतुतानिरूपितघटत्वनिष्ठावच्छेदकताया उक्तावच्छेदकतावैशिष्ट्यविरहेण तादृशावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदके तद्व्यक्तिवृत्तिसत्तात्वावच्छिन्नाधिकरणतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसत्त्वान्न पटादीनामधिकरणत्वप्रसङ्गः।

एवञ्च स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकाधिकरणत्वप्रवेशेऽपि तद्धटवृत्तिसत्त्वहेतुके तादृशाधिकरणत्वाप्रसिद्ध्या दोषतादवस्थ्येन तत्स्थलीयदोषवारणप्रयोजनकत्वस्य तत्रोक्तौ निगृहीत एव वक्ता स्यात्।[१५७]

*प्रकाशः* – कैश्चित्कृतस्य उत्थितजिज्ञासासमाधानस्य 'तन्ने'त्यादिना निराकरणे जाते सिद्धान्तसमाधानम् 'अत्र वदन्ति' इत्यादिना विधीयते। 'अत्र वदन्ती'त्यस्य अग्रिमखण्डस्थेन 'इति मार्मिका' इत्यनेन सम्बन्धः।

सिद्धान्तिनः कथयन्ति यदुक्तोभयाभाववद् यद्धेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपात्मकं स्वम्, तदवच्छिन्नाश्रयाधिकरणत्वरूपमेव हेत्वधिकरणत्वं विवक्षणीयम्, न तूक्तोभयाभाववद्धेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वम्।

तथा निवेशे वह्निमान् धूमादित्यत्र हेतुतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकधूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वं प्रसिद्धन्न स्यात्। यतो हि धूमवानिति प्रतीतेर्विषयता अवश्यक्लृप्तत्वात् तत्तद्व्यक्तिनिरूपिताधिकरणत्वेष्वेव धूमत्वाश्रयनिरूपिताधिकरणतात्वेन अङ्गीकृता भवति, न तु पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणत्वादौ, पर्वतानामनन्तत्वेन पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणताया अपि सामान्यधर्मावच्छिन्नाधिकरणत्वात्, तादृश = पर्वतीयधूमवानित्यादिप्रतीतेः धूमत्वाश्रयनिरूपिताधिकरणतात्वेन तत्तद्धूमव्यक्तिनिरूपिताधिकरणत्वविशेषाणामवगाहिताया एव क्लृप्तत्वात्।

अतो दोषयुक्ते तस्मिन् लघुत्वसत्त्वेऽपि निवेशार्हतैव नास्ति, दोषराहित्येन निवेशार्हता स्वावच्छिन्नाश्रयाधिकरणत्व एव विद्यते, ततस्तदेव विवक्ष्यते = निवेश्यते, ततश्चोत्थिता जिज्ञासा प्रशान्तैवेति।

अत्र = स्वावच्छिन्नाश्रयाधिकरणत्वविवक्षणे, 'न चे'त्यादिना दोषं दर्शयति — स्वावच्छिन्नाश्रयाधिकरणत्वविवक्षणे द्रव्यत्वसाध्यकघटवृत्तित्वविशिष्टसत्ताहेतुकस्थलेऽव्याप्तिः स्यात्, निरुक्तोभयाभाववद् यद् हेतुतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं घटवृत्तित्वसत्तात्वगतद्वित्वम्, तदवच्छिन्नसत्तात्वाश्रयाधिकरणत्वस्य गुणे सत्त्वेन गुणस्य हेत्वधिकरणत्वापत्त्या साध्याभावमादायाव्याप्तिः स्यादिति।

अत्र समाधीयते — 'तद्घटवृत्तिसत्तावानिति प्रतीतौ तत्तद्वृत्तिसत्तात्वावच्छिन्नाधिकरणत्वस्य तद्वृत्तिसत्तावानिति प्रतीत्यनुरोधेन क्लृप्तस्य विषयत्वात् प्रयोजनाभावेन घटत्वेऽवच्छेदकत्वाकल्पनात्, तदधिकरणत्वस्य घटवृत्तिसत्तावानित्यत्र विषयत्वाकल्पनादि'ति।

अस्यायमभिप्रायो यद् घटवृत्तिसत्तावानिति प्रतीतिग्राह्या, घटवृत्तिसत्तावानिति प्रतीतिविषया वा अधिकरणता न तद्घटवृत्तिसत्तात्वावच्छिन्नाधिकरणता, किन्तु तद्वृत्तिसत्तावानिति प्रतीत्यनुरोधेन ततोऽपि (तद्घटवृत्तिसत्तावानिति प्रतीतितोऽपि) अवश्यक्लृप्तत्वात् तद्वृत्तिसत्तात्वावच्छिन्नाधिकरणता एव, न तु तद्घटवृत्तिसत्तात्वावच्छिन्नाधिकरणता, प्रयोजनाभावेन तादृशप्रतीतिविषयाधिकरणतानिरूपकतावच्छेदकताया घटत्वेऽकल्पनात्।

एवं सति तदधिकरणत्वस्य = तद्वृत्तिसत्तात्वावच्छिन्नाधिकरणत्वस्य, तद्घटवृत्तिसत्तावानिति प्रतीतिविषयस्य घटवृत्तिसत्तावानित्यत्र विषयत्वाकल्पनात्, - द्रव्यं घटवृत्तिसत्त्वादित्यत्र हेतुतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकघटवृत्तित्वसत्तात्वगतद्वित्वरूपे स्वावच्छिन्नाश्रयाधिकरणगुणनिष्ठाधिकरणतानिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य अधिकरणतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वयोः सत्त्वेनोक्तोभयाभावासत्त्वान्न तदवच्छिन्नाश्रयाधिकरणत्वात्तत्र गुणस्य हेत्वधिकरणत्वापत्तिसम्भवो, न वा तत्राव्याप्तिसम्भव इति।

न च द्रव्यं घटवृत्तिसत्त्वादित्यत्र दर्शितयुक्त्या घटवृत्तिसत्तात्वे अधिकरणतावच्छेदकत्वस्यैव (अधिकरणतानिरूपकतावच्छेदकत्वस्यैव) सत्त्वेन घटवृत्तित्वसत्तात्वगतद्वित्वे अधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव

सत्त्वेन निरुक्तोभयाभावासत्त्वाद्दोषाभावेऽपि द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्रैवाव्याप्ति-स्स्यात्, तद्घटवृत्तित्वसत्तात्वगतद्वित्वावच्छिन्नाश्रयाधिकरणत्वस्य गुणे सत्त्वात् तद्घट-वृत्तित्व-सत्तात्वगतद्वित्वस्य तादृशत्वाद् = निरुक्तोभयाभाववत्त्वाद्, हेतुतावच्छेदकता-त्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपात्मके तत्र स्वावच्छिन्नाश्रया-धिकरणगुणनिष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेऽपि तत्रावश्यक्लृप्तत्वात् तद्वृत्तिसत्तात्वस्यैवाधिकरणतावच्छेदकत्वेन तद्घट-वृत्तिसत्तात्वस्याधिकरणतावच्छेदकत्वानङ्गीकारेण अधिकरणतावच्छेदकतात्वा-वच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वविरहेणोक्तोभयाभावस्य तत्र सत्त्वेन तस्य तादृशत्वादिति पूर्वपक्षः।

अत्र समाधानं विधीयते यद् 'हेतुतावृत्ति-यत्किञ्चिदभावप्रतियोगितावच्छेद-कताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपसामान्यस्यैव विवक्षितत्वादि'ति। तत्र यत्किञ्चिदभावप्रतियोगिताया हेतुतायां वृत्तितानियामकः सम्बन्धः स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगि-ताकपर्य्याप्तिकावच्छेदकताकत्वरूपः। हेतुतावच्छेदकतायाः = हेतुतावृत्तिप्रतियोगिता-वच्छेदकतायाः, - वैशिष्ट्यं स्वसामानाधिकरण्यादिसम्बन्धेन विवक्षितम्।

एवं विवक्षायां द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्राव्याप्तिर्न भवति, यतो हि पूर्वं हेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदके तद्घटवृत्तित्व-सत्तात्वगत-द्वित्वे अधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वविरहप्रयुक्ता, तद्वृत्तित्व-सत्तात्वगतद्वित्वस्यैव तत्र अधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-नुयोगितावच्छेदकत्वात्, प्रसज्यन्ती आसीत्।

उक्तविवक्षादशायां हेतुतानिरूपितायां घटत्वनिष्ठावच्छेदकतायां हेतुतावृत्तिर्या यत्किञ्चिदभावीया तद्वृत्तिसत्ताभावीया प्रतियोगिता, तदवच्छेदकता तद्व्यक्तिवृत्तित्व-सत्तात्वोभयंनिष्ठा, न तु घटत्वनिष्ठापि, प्रयोजनाभावेन तत्र तदवच्छेदकत्वानङ्गीकारात्, तद्विशिष्टत्वविरहेण तद्व्यक्तिवृत्तित्व-सत्तात्वनिष्ठहेतुतानिरूपितावच्छेदकताया एव हेतुतावृत्तियत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टत्वेन तादृश(हेतुतावृत्ति-यत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्ट)हेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-नुयोगितावच्छेदक-तद्व्यक्तिवृत्तिसत्तात्वावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्न-पर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वात्तद्घटेतरपटगुणादीनां हेत्वधिकरणत्वाप्रसक्त्या नाव्याप्तिः।

तद्वृत्तित्व-सत्तात्वगतद्वित्वात्मके रूपे हेतुतावृत्तियत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकात्मके स्वावच्छिन्नाश्रयाधिकरणपटादिगुणादिनिष्ठाधिकरणतावच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य अधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वयोः सत्त्वेन निरुक्तोभयाभावविरहात् तदवच्छिन्नाश्रयाधिकरणत्वेऽपि पटगुणादीनां हेत्वधिकरणत्वापत्तिर्न, न च तत्प्रयुक्ता तत्राव्याप्तिः, तत्र हेत्वधिकरणता तद्घट एव, स्वावच्छिन्नाश्रय-तद्घटनिष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव तत्र सत्त्वेन तादृशपर्य्याप्त्यनुयोगितानवच्छेदकत्वघटितनिरुक्तोभयाभावस्य तत्र सत्त्वात्।

सामान्यपदाप्रवेशे = 'हेतुतावृत्तियत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपसामान्यस्यैव विवक्षितत्वादि'त्यत्र यत् 'सामान्य'पदं तदप्रवेशे, द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्र हेतुतावृत्तिघटवृत्तिसत्त्वाभावात्मकयत्किञ्चिदभावप्रतियोगित्वमादाय एतद्घटस्य हेत्वधिकरणत्वापत्तिः स्यादतस्तत्प्रवेशः। तत्र तदप्रवेशे उक्तस्थले एतद्घटस्य हेत्वधिकरणत्वापत्तिश्च हेतुतानिरूपितघटत्वनिष्ठावच्छेदकतावैशिष्ट्यविरहाभावेन, हेतुतावृत्तितादृशयत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपे घटवृत्तिसत्तात्वगते स्वावच्छिन्नाश्रयाधिकरणैतद्घटनिष्ठाधिकरणतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वविरहेण निरुक्तोभयाभावस्य तत्र सत्त्वात्तादृशरूपावच्छिन्नाश्रयाधिकरणत्वस्यैतद्घटे सत्त्वात्।

तत्र 'सामान्य'पदोपादाने तु हेतुतावृत्ति-तद्वृत्तिसत्ताभावप्रतियोगित्वमादाय तदवच्छेदकतावैशिष्ट्यस्य हेतुतानिरूपितघटत्वनिष्ठावच्छेदकताया विरहेण हेतुतावृत्तितादृशाभावप्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकीभूततद्व्यक्तिवृत्तिसत्तात्वगतरूपे स्वावच्छिन्नाश्रयाधिकरणैतद्घटनिष्ठाधिकरणतावच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य, - अधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वयोः सत्त्वेन निरुक्तोभयाभावविरहान्न तदवच्छिन्नाश्रयाधिकरणत्वमादाय तस्य हेत्वधिकरणत्वप्रसक्तिः।

एवञ्च = द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्र प्रसक्ताव्याप्तेर्हेतुतावृत्तियत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपसामान्यविवक्षया वारणे सति— स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकहेत्वधिकरणत्वप्रवेशेऽपि तद्घटवृत्तिसत्त्वहेतुके तादृशाधिकरणत्वाप्रसिद्ध्या

दोषतादवस्थ्येन तत्स्थलीयदोषवारणप्रयोजनकत्वस्योक्तौ निगृहीत एव वक्ता स्यात्।

उक्तसन्दर्भभागस्यायमाशयो यद् 'हेतुतावृत्तियत्किञ्चिदभावप्रतियोगिता' इत्यादिनवीनविवक्षातः पूर्वं स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वप्रवेशे वह्निमान् धूमादित्यत्र धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वाप्रसिद्ध्या दोषः स्यादतस्तथाप्रवेशासम्भवात् 'स्वावच्छिन्नाश्रयाधिकरणत्वमेव विवक्षणीयमि'त्युक्तम्। अनन्तरं स्वावच्छिन्नाश्रयाधिकरणत्वस्यैव प्रवेशे, स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य प्रवेशविरहे, द्रव्यं घटवृत्तिसत्त्वादित्यत्र दोष आपादितः, यद्दोषस्य वारणं तद्घटवृत्तिसत्तावानिति विषयतां तद्वृत्तिसत्तात्वावच्छिन्नाधिकरणत्वेष्वेव स्वीकृत्य कृतम्।

तत्र यदि वक्ता एवमुच्याद् यद्द्रव्यं घटवृत्तिसत्त्वादित्यत्र प्रसक्ताव्याप्तिवारणार्थं स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वप्रवेशस्वीकारे तद्घटवृत्तिसत्त्वहेतुके द्रव्यत्वसाध्यकेऽव्याप्तिः स्यात्तत्र क्लृप्तत्वात्, तद्वृत्तिसत्तात्वस्यैवाधिकरणतानिरूपकतावच्छेदकत्वेन तद्घटवृत्तिसत्तात्वगतरूपस्याधिकरणतानिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वविरहात्, तादृशरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वाप्रसिद्ध्याऽव्याप्तितादवस्थ्यं स्यादतस्तत्स्थलीय(द्रव्यं तद्घटवृत्तिसत्त्वादित्येतत्स्थलीय)दोषवारणप्रयोजनकत्वमेव स्वावच्छिन्नाश्रयाधिकरणत्वनिवेशस्य = स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वप्रवेशविरहस्येत्येवं वक्ता अतो निगृहीतः स्याद्, यतः स्वावच्छिन्नाश्रयाधिकरणत्वविवक्षायाः स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वाविवक्षायाः प्रयोजनस्य वह्निमान् धूमादित्यत्र स्वावच्छिन्ना(धूमत्वगतैकत्वावच्छिन्ना)नुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वाप्रसिद्ध्या प्रसक्ताव्याप्तिवारणस्य पूर्वमेवोक्तत्वात्, स्वावच्छिन्नाश्रयाधिकरणत्वप्रवेशेऽपि द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्र प्रसक्ताव्याप्तेः परिहारस्तु हेतुतावृत्तियत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टत्वस्य हेतुतावच्छेदकताविशेषणं स्वीकृत्य तादृशहेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपसामान्यस्य विवक्षयैव भवतीत्याशयः।[१५७]

तत्त्वालोकः— न च कम्बुग्रीवादिमद्धेतुकेऽव्याप्तिः, प्रतियोग्यंशे भासमानस्यैवातिप्रसङ्गाद्यनापादकस्याप्यवच्छेदकत्वाभ्युपगमात्।

अथ प्रतियोग्यंशेऽभासमानस्याप्यवच्छेदकत्वन्तदोक्ताव्याप्तीनाम्वारणाय गुरुधर्म्मस्यापि निरूपकांशे भासमानधर्म्ममात्रस्य चावच्छेदकत्वमङ्गीकार्य्यन्तत्र विशिष्टसत्त्वहेतुके घटवृत्तित्वविशिष्टविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणत्वावगाहितया विशिष्टसत्तावानिति प्रतीत्युपपादनस्य शक्यतया प्रागुक्तरीत्याऽव्याप्तिवारणाय स्वावच्छिन्नाधिकरणत्वनिवेश आवश्यक इति चेत्।

'पर्वतीयत्वादिविशिष्टधूमत्वावच्छिन्नाधिकरणत्वे'त्यादिग्रन्थानुरोधेनोक्ताव्याप्तीनां वारणाय च किमित्यनतियुक्तिकपक्ष आश्रियते, 'द्रव्यमेव न तु गुणादिरि'त्यादिग्रन्थस्वारसिकार्थसिद्धये उक्तदोषाणान्निरासाय च, या च प्रतीतिरधिकरणतानिरूपकांशे भासमानधर्मस्यावच्छेदकत्वं विना नोपपद्यते साऽवच्छेदकत्वन्तत्रावगाहमाना तत्संसर्गतया पर्याप्तिमेवावगाहते, अवच्छेदकत्वावगाह्यत्यन्ताभावप्रतीतिवद्यन्निरूपकांशे भासमानधर्मे अवच्छेदकत्वं विनाप्युपपद्यते, तस्या अवच्छेदकत्वावगाहित्वस्याप्यप्रामाणिकतया पर्याप्त्यवगाहित्वन्तु सुतरामप्रामाणिकं ध्वंसप्रतीतिवत्तथा सति पर्वतीयधूमवानित्यादिप्रतीतौ पर्वतीयधूमत्वावच्छिन्नमधिकरणत्वन्तादृशधूमत्वाश्रयनिरूपितमधिकरणत्वम्वा विषय इत्यन्यदेतत्, धूमवानित्यत्र तु धूमनिरूपिताधिकरणत्वस्यैव विषयत्वं, विशिष्टसत्तावानित्यस्या अवच्छेदकत्वावगाहित्वम्विनानुपपन्नाया विशिष्टसत्तात्वपर्याप्तावच्छेदकत्वावगाहित्वमेव गुरुधर्मावच्छिन्नाधिकरणत्वमपि स्वीक्रियंत एवोक्तग्रन्थे, अवच्छिन्नपदमाश्रयपरमेवेति न तद्ग्रन्थस्यासंगतिरित्येतत्पक्ष एव ततः सयुक्तिराश्रयितव्यस्तत्र न बहुतरकुसृष्टिकल्पनावकाशोऽपीति गृहाण।

एवञ्च समवायेन रूपादिहेतुके रूपनिरूपितसमवायावच्छिन्नाधिकरणतावच्छेदकस्याप्रसिद्ध्या अव्याप्तिः स्यादिति तादृशाधिकरणतावन्निष्ठत्वेनाधिकरणताप्रवेशस्तथा च तादृशविशिष्टसत्ताद्यवच्छिन्नाधिकरणतावच्छेदकत्वस्य प्रसिद्ध्या नाव्याप्तिः। विशेषरूपेण संसर्गता नाङ्गीक्रियत एवेत्याशयः।

यद्वा यत्पदार्थे स्वावच्छिन्नाश्रयनिरूपिताधिकरणत्वस्याधिकरणत्वे च तद्वृत्तित्वस्योक्त्यां स्वाश्रयावच्छिन्ननिरूपितत्वमेव विवक्षितम्, तादृश्या चोक्तिभङ्ग्या चिन्तामणि-दीधित्यादावेव भवितव्यन्नान्यत्रेत्यत्र विशेषं नावकल्पयाम इति मार्मिकाः।

एतेन स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताक-हेतुतावच्छेदकसम्बन्धावच्छिन्नयन्निष्ठाधिकरणत्वं विवक्षणीयं तावतापि वह्निमान्धूमादित्यत्र ह्रदस्य हेत्वधिकरणत्ववारणसम्भवात् यत्पदार्थे स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताधिकरणत्वन्न वाच्यमित्यपि समाहितम्।[१५८]

*प्रकाशः* – 'हेतुतावृत्तियत्किञ्चिदभावप्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकते'त्यादिदर्शितविवक्षायां कम्बुग्रीवादिमद्धेतुकस्थलेऽव्याप्तिं शङ्कते— यतो हि तत्राव्याप्तिः स्यात्, तत्र हेतुतावृत्तिकम्बुग्रीवादिमदभावप्रतियोगिताया अवच्छेदकता लघुभूते घटत्वे एव, न तु गुरुभूते कम्बुग्रीवादिमत्त्वे, तद्विशिष्टत्वस्य कम्बुग्रीवादिमत्त्वरूपहेतुतावच्छेदकनिष्ठहेतुतावच्छेदकतायामभावात्।

उक्ताव्याप्तिं समाधत्ते 'प्रतियोग्यंशे भासमानस्यैवातिप्रसङ्गाद्यनापादकस्याप्यवच्छेदकत्वाभ्युपगमादि'ति।

घटत्वेऽतिप्रसङ्गाद्यनापादकत्वसहितलघुत्वसत्त्वेऽपि प्रतियोग्यंशे भासमानत्वविरहेण प्रतियोग्यंशे भासमानस्य तादृशस्यावच्छेदकत्वाभ्युपगमेन कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकताया कम्बुग्रीवादिमत्त्व एवाभ्युपगमेनोक्तदोषाभावात्।

प्रतियोग्यंशेऽभासमानस्याप्यवच्छेदकत्वे तु उक्ताव्याप्तीनां वारणाय गुरुधर्मस्यापि निरूपकांशे भासमानमात्रस्य चावच्छेदकत्वमङ्गीकार्यम्, अर्थात् प्रतियोग्यंशेऽभासमानस्यापि यदि अवच्छेदकत्वं स्वीक्रियेत, तदा कम्बुग्रीवादिमत्त्वहेतुकस्थले कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकता घटत्वे स्यात्, स्यात्तदा तत्राव्याप्तिरतस्तत्राव्याप्तिवारणाय द्रव्यं तद्घटवृत्तिसत्त्वादित्यादौ चोक्ताव्याप्तीनां वारणाय गुरुधर्मस्यापि निरूपकांशे भासमानमात्रस्य चावच्छेदकत्वमङ्गीकार्यम्।

तथासति द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्र तद्घटवृत्तिसत्तावानिति प्रतीतिविषयाधिकरणतानिरूपकतावच्छेदकता तद्वृत्तिसत्त्वापेक्षया गुरुभूतेऽपि निरूपकांशे भासमाने तद्घटवृत्तिसत्तात्वे स्यात्, तथासति तत्र तद्घटवृत्तिसत्तात्वगतरूपे अधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य, स्वावच्छिन्नाश्रयाधिकरणगुणादिनिष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य चोभयोः सत्त्वेन विवक्षितोभयाभावस्य विरहात्तदवच्छिन्नाश्रयाधिकरणत्वाद् गुणस्य हेत्वधिकरणत्वासम्भवादव्याप्तिर्न स्यात्तत्राव्याप्तिवारणाय 'हेतुतावृत्तियत्किञ्चिदभावप्रतियोगिताविशिष्टहेतुतावच्छेदकते'त्यादि 'सामान्या'न्तनवीनविवक्षा नावश्यिका

स्यात्। तथाविधनवीनविवक्षाविरहे कम्बुग्रीमादिमद्धेतुकस्थले प्रतियोग्यंशेऽभासमान-स्याप्यतिप्रसङ्गाद्यनापादकस्यावच्छेदकत्वेऽप्यव्याप्तिर्न स्यात्।

गुरुधर्मस्याप्यवच्छेदकत्वे द्रव्यं विशिष्टसत्त्वादित्यत्र घटवृत्तित्वविशिष्ट-विशिष्टसत्तावान्, पटवृत्तित्वविशिष्टसत्तावानित्यादिप्रतीतिविषयताया घटपटादि-वृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतायां सम्भवेन विशिष्टसत्तावानिति प्रतीति-विषयताया अपि क्लृप्तायामुक्तायां गुरुभूतायां घटपटादिवृत्तित्वविशिष्टसत्तात्वावच्छिन्ना-धिकरणतायां स्वीकारेण हेतुतावच्छेदकविशिष्टसत्तात्वगतरूपे अधिकरणता-वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वविरहेण स्वावच्छिन्नाश्रयाधिकर-णगुणनिष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वसत्त्वेऽपि निरुक्तोभयाभावस्य सत्त्वात्तादृशविशिष्टसत्तात्वगतरूपावच्छिन्नाश्रयाधिकरणगुणस्य हेत्वधिकरणत्वापत्त्या तत्र प्रसक्ताव्याप्तिवारणाय स्वावच्छिन्नाधिकरणत्वनिवेशः, अर्थाद् हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकता-काधिकरणत्वनिवेश आवश्यकः।

तथासति तत्र गुणे विशिष्टसत्तात्वगतरूपावच्छिन्नाश्रयाधिकरणत्वसत्त्वेऽपि विशिष्टसत्तात्वगतरूप – गुणकर्मान्यत्ववैशिष्ट्य – सत्तात्वगतद्वित्वावच्छिन्नानुयोगिता-कपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वविरहाद् गुणस्य हेत्वधिकरणत्वा-सम्भवादव्याप्तिर्न स्यादिति चेत्।

अत्र समाधीयते— "पर्वतीयत्वादिविशिष्टधूमत्वावच्छिन्नाधिकरणत्वे'-त्यादिग्रन्थानुरोधेनोक्ताव्याप्तीनां वारणाय च किमित्यनतियुक्तिकः पक्ष आश्रियते, 'द्रव्यमेव न तु गुणादिरि'त्यादिग्रन्थस्वारसिकार्थसिद्धये उक्तदोषाणान्निरासाय च, या प्रतीतिरधिकरणतानिरूपकांशे भासमानधर्मस्यावच्छेदकत्वं विना नोपपद्यते, सावच्छेदकत्वन्तत्रावगाहमाना तत्संसर्गतया पर्य्याप्तिमेवावगाहते, अवच्छेदकत्वा-वगाह्यत्यन्ताभावप्रतीतिवदि"त्यादिना 'इति मार्मिका' इत्यन्तेन।

समाधातुः सिद्धान्तिनः कथनस्यायमाशयो यत् 'पर्वतीयत्वादिविशिष्टधूमत्वा-वच्छिन्नाधिकरणत्वे'त्यादिग्रन्थानुरोधेन, अर्थाद् 'यद्यप्यवश्यं क्लृप्ताभिः पर्वतत्व-चत्वरत्वादितत्तद्धर्मविशिष्टतत्तद्धूमत्वाद्यवच्छिन्नाधिकरणते'त्यादि[१] 'पूर्वपक्षोपस्था-पक - 'तथापि हेतुतावच्छेदकीभूतधर्मे' इत्यादि - 'द्रव्यं विशिष्टसत्त्वादित्यादौ तादृशहेत्वधिकरणं द्रव्यमेव, न तु गुणादि, विशिष्टसत्तात्वे तन्निष्ठाधिकरणता-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ६

नवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोः सत्त्वादिति ध्येयमि'[१]त्यन्तोत्तर-पक्षोपपादकजागदीशीग्रन्थानुरोधेन, तथा 'द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्, द्रव्यं घटवृत्तिसत्त्वाद् द्रव्यतद्घटवृत्तिसत्त्वात्, स्वसमवायित्वेन कपालवान् कम्बुग्रीवादि-मत्त्वादि'त्यादौ उक्ताव्याप्तीनां वारणाय च अनतियुक्तिकस्य = विशेषयुक्तिरहितस्य, अर्थान्निर्युक्तिकप्रतियोग्यंशेऽभासमानस्यापि अवच्छेदकत्वाङ्गीकारवतो गुरुधर्मस्यापि निरूपकांशे भासमानधर्ममात्रस्य चावच्छेदकत्वाङ्गीकारवतः, पक्षस्याश्रयणन्नैवोचितम्।

किन्तु 'द्रव्यं विशिष्टसत्त्वादित्यत्र तथाविधं हेत्वधिकरणं द्रव्यमेव, न तु गुणादिरि'त्यादिग्रन्थस्य, अर्थात्पूर्वपक्षोत्तरपक्षघटितदर्शितजागदीशीग्रन्थस्य, स्वारसि-कार्थसिद्धये तथा दर्शितस्थलेषूक्ताव्याप्तीनां वारणाय चेदमेव मतं सयुक्तिकं शोभनं यद् भूतले घटो नास्ति, पटो नास्तीत्याद्यत्यन्ताभावप्रतीतिर्यथा घटत्वादाववच्छेद-कत्वमनवगाहमाना नोपपद्यते यत्किञ्चिद्घटस्य विद्यमानतायां घटान्तरासत्त्वे तथाऽप्रती-तेरतः सा घटत्वादाववच्छेदकत्वन्तदवच्छेदकत्वसम्बन्धतया पर्य्याप्तिञ्चावगाहमानैव भवति, तथैव अधिकरणताविषयिणी अपि विशिष्टसत्तावानित्यादिर्या प्रतीतिरधिकर-णतानिरूपकांशे भासमानधर्मस्यावच्छेदकत्वम्विना नोपपन्ना भवति, अतस्तादृशी साऽपि प्रतीतिरधिकरणतानिरूपकांशे भासमानधर्मस्यावच्छेदकत्वं पर्य्याप्तिं च तद-वच्छेदकत्वसम्बन्धतया अवगाहमानैव माननीयोचिता भवति तथा भूतले मुद्गरेण घटो नश्यति, घटो ध्वस्त इत्यादिध्वंसविषयिणी प्रतीतिर्यथा प्रतियोग्यंशे भासमान-स्यापि घटत्वादेरवच्छेदकत्वमनवगाहमानाऽपि उपपद्यमाना तत्रावच्छेदकतां न वा तत्संसर्गतया पर्य्याप्तिमवगाहते, यत्किञ्चिद्घटध्वंसवत्यपि अत्र 'घटो ध्वस्त' इति प्रतीतेः, तथैव पर्वतीयधूमवानिति प्रतीतेः पर्वतीयधूमत्वावच्छिन्नाधिकरणत्वस्य पर्वतीयधूमत्वाश्रयाधिकरणत्वस्यैव वा विषयत्वेऽपि धूमवानिति प्रतीतेर्धूमत्वे-ऽवच्छेदकत्वमनवगाहमानाया अनुपपत्तेरभावाद्धूमत्वाश्रयनिरूपिताधिकरणतैव विषयो न तु धूमत्वावच्छिन्नाधिकरणता।

विशिष्टसत्तावानिति प्रतीतेस्तु गुणे तादृशप्रतीतिविरहेणावच्छेदकत्वावगाहित्व-मन्तराऽनुपपन्नाया विशिष्टसत्तात्वपर्य्याप्तावच्छेदकत्वावगाहित्वमेवोचितम् अर्थाद् विशिष्टसत्तावानिति प्रतीतौ विशिष्टसत्तात्वपर्य्याप्तावच्छेदकताकाधिकरणतैव विषयः, सत्तात्वापेक्षया विशिष्टसत्तात्वस्य गुरुत्वेऽपि गुरुधर्मावच्छिन्नाधिकरणताया अङ्गीकारात्। अतो द्रव्यं कर्मान्यत्वे सति सत्त्वादित्यत्र विशिष्टसत्तात्व-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७

मात्रावच्छिन्नाधिकरणतायाः सद्भावाद्धेतुतावच्छेदकविशिष्टसत्तात्वगतरूपे = गुणकर्मान्यत्ववैशिष्ट्य-सत्तात्वगतद्वित्वे, स्वावच्छिन्नाश्रयगुणमादायोभयोः सत्त्वाद्विवक्षितोभयाभावविरहान्न गुणस्य हेत्वधिकरणत्वप्रसक्तिरतो न तत्राव्याप्तिर्या तत्त्वालोके 'नन्वत्रे'त्यादिना[१] तथा 'विशिष्टसत्त्वहेतुके' इत्यादि 'प्रागुक्तरीत्याऽव्याप्तिवारणाय स्वावच्छिन्नाधिकरणत्वनिवेश आवश्यक' इत्यन्तेनोक्ता[२]। अतस्तत्राव्याप्तिवारणाय शङ्कितः स्वावच्छिन्नाधिकरणत्वनिवेशः = स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकाधिकरणत्वनिवेशो नावश्यकः, किन्तु स्वावच्छिन्नाश्रयाधिकरणत्वनिवेश एव समुचितः, 'तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्य' इत्याद्युक्तजागदीशे ग्रन्थे[३] 'अवच्छिन्न' पदस्याश्रयपरकतया तद्ग्रन्थस्य स्वावच्छिन्नाश्रयाधिकरणत्व-(हेतुतावच्छेदकगततादृशरूपावच्छिन्नाश्रयाधिकरणत्व)निवेशपक्षे, फलतः, तादृशहेतुतावच्छेदकाश्रयाधिकरणत्वनिवेशपक्षे, असङ्गतिरपि न, अत एतत्पक्ष एव सयुक्तिकः, यत्र बहुतरकुसृष्टिकल्पनावकाशो न भवति, आश्रयितव्य इति गृहाण।

एवञ्च स्वावच्छिन्नाश्रयाधिकरणत्वस्यैव, अर्थाद् हेतुतावच्छेदकाश्रयाधिकरणत्वस्यैव निवेशे, स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकाधिकरणताया = हेतुतावच्छेदकावच्छिन्नाधिकरणतायाः, निवेशविरहे सति, तथा विशिष्टसत्तात्वमात्रपर्य्याप्तावच्छेदंकताकाधिकरणताया अभ्युपगमे सति, सामान्यधर्मावच्छिन्नाधिकरणताया अस्वीकारे, द्रव्यत्वसाध्यकसमवायेन रूपादिहेतुकस्थले रूपात्मकहेतुनिरूपितहेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधिकरणतावच्छेदकताया रूपत्वसामान्यधर्मावच्छिन्नाधिकरणत्वविरहेणाप्रसिद्ध्याऽव्याप्तिर्मा भवतु— एतदर्थमेव तादृशाधिकरणतावन्निष्ठत्वेन, अर्थाद् हेतुतावच्छेदकताघटकसम्बन्धेन हेतुतावच्छेदकाश्रयनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावन्निष्ठत्वेन, विवक्षितोभयाभाववद्धेतुतावच्छेदकगतरूपावच्छिन्नाश्रयनिरूपितहेतुतावच्छिन्नाधिकरणतावन्निष्ठत्वेनाधिकरणतायाः प्रवेशो विहितः। तथासति अर्थात्तादृशाधिकरणतावन्निष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वार्थकतादृशाधिकरणतावन्निष्ठाधिकरणतानवच्छेदकत्वघटितोक्ताभावस्यैव प्रवेशे तु, समवायेन रूपहेतुकस्थले रूपनिरूपितसमवायसम्बन्धावच्छिन्नाधिकरणतावच्छेदकताया

१. प्रकृतग्रन्थे तत्त्वालोकखण्डसंख्या १५१

२. प्रकृतग्रन्थे तत्त्वालोकखण्डसंख्या १५८

३. प्रकृतग्रन्थे सिद्धान्तलक्षणजागदीशी, पृ. ६

अप्रसिद्धत्वेऽपि तादृशाधिकरणतावद्द्रव्यनिरूपिताधिकरणतावच्छेदकताया विशिष्ट-सत्तात्वे प्रसिद्ध्या नाव्याप्तिः।

विशेषरूपेण संसर्गता नाङ्गीक्रियते, तेन तत्त्वालोकस्य 'महानसानुयोगिक-संयोगेन धूमहेतुके महानसनिष्ठमहानसानुयोगिकसंयोगसम्बन्धावच्छिन्नाधिकरणत्व-घटितोभयाभाव(हेतुतावच्छेदकगततादृशरूपसामान्यधर्मिकविवक्षितोभयाभाव)-प्रतियोगितावच्छेदकत्वस्य महानसनिष्ठत्वाघटितोभयत्व एव कल्पनीयतया महानसस्य हेत्वधिकरणत्वानुपपत्त्या गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकारावश्यकतो'क्तिः[1] परिहृता, विशेषरूपेण संसर्गत्वानङ्गीकारे महानसानुयोगिक-संयोगेन धूमे हेतुत्वा-सम्भवात् तादृशस्थलानुरोधेन गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकारावश्यकता-विरहात्।

यद्वा यत्पदार्थे स्वावच्छिन्नाश्रय = हेतुतावच्छेदकगततादृशरूपावच्छिन्नाश्रय, -(हेतु)निरूपिताधिकरणत्वस्य अधिकरणत्वे च तद्वृत्तित्वस्य = यत्पदार्थवृत्तित्वस्योक्त्या स्वावच्छिन्नाश्रय[2](हेतुतावच्छेदकगततादृशरूपावच्छिन्नाश्रय = हेतुतावच्छेदकाश्रय)-हेतुनिरूपितत्वमेव अधिकरणत्वे विवक्षितम्, तादृश्या = दर्शितया, चोक्तिभङ्ग्या चिन्तामणि-दीधित्यादावेव भवितव्यन्न तु तदन्यत्र = जागदीशी-गादाधरी-कालीशङ्करी-तत्त्वालोकादिषु इत्यत्र, विशेषं हेतुं नावकल्पयामः = नावगच्छामः।

अर्थाच्चिन्तामणि-दीधित्यादौ यथा तादृश्या विशेषवाचोभङ्ग्या तत्र तत्र तथातथा विवक्षितार्थस्यावबोधनं भवति तथैव दर्शितग्रन्थेऽपि दर्शितवाचोभङ्ग्या दर्शितस्य विवक्षितार्थस्यावबोधो भवितुं शक्नोत्येवेति मार्मिकाः = सिद्धान्ति-समाधातारः प्राहुः।

एतेन = उक्तकथनेन अर्थात् स्वावच्छिन्नाश्रयाधिकरणताया स्वाश्रयावच्छिन्न-निरूपिताधिकरणताया वा एव विवक्षितत्वेन, स्वावच्छिन्नानुयोगिताकपर्य्याप्तिका-वच्छेदकताकनिरूपकताकाधिकरणताया विवक्षाविरहेण तथा हेतुतावच्छेदकताघटक-सम्बन्धेन हेतुतावच्छेदकताश्रयहेतुनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणता-वन्निष्ठत्वेन अधिकरणताप्रवेशोक्त्या —

---

१. प्रकृतग्रन्थे तत्त्वालोकः, खण्डसङ्ख्या १५६

२. 'स्वाश्रयावच्छिन्ने'त्यादिपाठस्तत्त्वालोके। तदनुसारं 'स्वाश्रयावच्छिन्न(हेतुतावच्छेदकगततादृश-रूपाश्रयावच्छिन्न = हेतुतावच्छेदकाश्रयावच्छिन्न)' इत्येवं पाठयोजनया भवितव्यम्।

स्वावच्छिन्नानुयोगिताक (हेतुतावच्छेदकगततादृशरूपावच्छिन्नानुयोगिताक)-पर्य्याप्तिकावच्छेदकताकप्रतियोगिताकहेतुतावच्छेदकसम्बन्धावच्छिन्नयन्निष्ठाधिकरण-त्वं विवक्षणीयम् = हेतुतावच्छेदकगततादृशरूपधर्मिकविवक्षितोभयाभावघटकतया विवक्षणीयम्, तावतापि वह्निमान् धूमादित्यत्र ह्रदस्य हेत्वधिकरणत्ववारणसम्भवात् = धूमत्वनिष्ठैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकधूमत्वनिष्ठावच्छेदकताकप्रतियोगिताक-हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नयन्निष्ठाधिकरणत्वेन ह्रदनिष्ठाधिकरणत्वपरिग्रहा-सम्भवात्, यत्पदार्थे स्वावच्छिन्नानुयोगिताक(हेतुतावच्छेदकगततादृशरूपावच्छिन्ना-नुयोगिताक)पर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वन्न वाच्यमित्यपि समाहितम्, दर्शितरीत्यैव वह्निमान् धूमादित्यत्र ह्रदे हेत्वधिकरणत्वस्य वारितत्वाद् हेतुतावच्छेदकताघटकसम्बन्धेन हेतुतावच्छेदकाश्रयनिरूपितहेतुतावच्छेदकसम्बन्धा-वच्छिन्नाधिकरणताया ह्रदे विरहात्, यत्पदार्थे स्वावच्छिन्नाश्रयाधिकरणताया एव विवक्षितत्वस्य सिद्धान्तितत्वेन तत्र स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताक-निरूपकताकाधिकरणताया विवक्षाविरहाच्चेत्युक्तखण्डस्याशयं प्रतीमः।[१५८]

तत्त्वालोकः – **अथ विशिष्टाभावमुपेक्ष्योभयाभावनिवेशनं कथं कृतमिति न वाच्यम्, महानसानुयोगिकसंयोगेन धूमहेतुकसद्धेतौ विशिष्टाप्रसिद्ध्या-ऽव्याप्तेरिति।**

**ननु हेतुतावच्छेदकगतरूपे तादृशयन्निष्ठाधिकरणतानिरूपकतावच्छेद-कतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाधिकरणतानिरूपकतावच्छेद-कतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वगतद्वित्वाश्रयाधिकरणत्वं स एव हेत्वधिकरणपदार्थ इत्येव वाच्यं लाघवात्—**

**न च विषयितया वह्न्यादिहेतुके विषयित्वसम्बन्धावच्छिन्नाधिकरणता (निरूपकता)[१]वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वाप्रसिद्ध्-याऽव्याप्तिरिति वाच्यम्, घटत्वत्वादौ तत्सौलभ्यात्, घटत्वनिष्ठानुयोगिता-वच्छेदकत्वस्य तदेकत्वे तद्व्यक्तित्वे वा कल्पनीयत्वादन्यथोभयाभावकल्पेऽपि नित्यज्ञानानुयोगिकविषयितासम्बन्धेन घटहेतुके नित्यज्ञाननिष्ठाधिकरणता-वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिः स्यादिति चेद्।**

---

१. कोष्ठकान्तर्गतः मुद्रितपुस्तके नास्ति।

न। अधिकरणतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वाभावस्य गगनाभावरूपस्य वह्नित्वगतैकत्वादौ द्वित्वेन सत्तया विषयितया वह्निहेतुकसद्धेतौ महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्तेः।

तादृशावच्छेदकतात्वावच्छिन्नाधिकरणत्वतादृशाभावत्वावच्छिन्नाधिकरणत्वगतद्वित्वाश्रयाधिकरणत्वविवक्षणेप्युक्तदोषतादवस्थ्यमेव, तादृशाधिकरणताया अपि गगनाभावनिष्ठाया अधिकरणात्मकत्वेन गगनाभावात्मकतया द्वित्वेन तदधिकरणताया वह्नित्वगतैकत्वे सत्त्वात्।

उभयाभावनिवेशे च तत्कोटौ तादृशावच्छेदकत्वतादृशावच्छेदकत्वाभावयोस्तत्त्वेनैव प्रवेशेन तयोरधिकरणारूपत्वेन[१] दोषस्य न सम्भवः।

उभयाभावस्य गगनाभावादिरूपत्वेऽपि उभयवर्त्ति तादृशाभावत्वेन सत्त्वायोगाच्च तत्प्रणाल्या अपि न तत्संभव इति।

वस्तुतस्तु तादृशद्वयवृत्तित्वप्रवेशे घटघटान्यगतद्वित्वस्य तादृशोभयवृत्तितया तदाश्रयत्वस्य रूपमात्रे सत्त्वेन विषयितया वह्न्यादिहेतुकस्थले महानसीयवह्निविषयकज्ञानादेरपि हेत्वधिकरणत्वप्रसङ्ग इति तादृशद्वयमात्रवृत्तिद्वित्वविवक्षणे च मात्रार्थप्रवेशेनोभयाभावापेक्षया गौरवप्रसङ्ग इति सूक्ष्ममीक्षणीयम्।[१५९]

*प्रकाशः* – 'अथे'त्यादिनोक्तखण्डादिमेन शङ्कते यद् विवक्षितहेत्वधिकरणकोटौ विशिष्टाभावमनिवेश्योभयाभावस्य निवेशः कथं कृतः, उभयाभावापेक्षया विशिष्टाभावनिवेशे लाघवं स्यादिति।

तत्र समाधीयते— विशिष्टाभावस्य निवेशे महानसानुयोगिक-संयोगेन धूमहेतुकवह्निसाध्यकस्थलेऽव्याप्तिर्भवेत्, तत्र विशिष्टप्रसिद्धिविरहात्, यतो हि तत्र महानसानुयोगिकसंयोगात्मकहेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकाश्रयाधिकरणं महानसमात्रम्। अतो महानसमात्रवृत्तिमहानसीय-तद्धूमादिगत-तद्धूमत्वादौ विशेषधर्मे स्वाश्रयाधिकरणनिष्ठाधिकरणतानवच्छेदकत्वासम्भवः। ततश्च तादृशाधिकरणतानवच्छेदकत्वविशिष्टाधिकरणतावच्छेदकत्वस्याप्रसिद्धिः, महानसीयवह्निधूमादिगतवह्नित्वधूमत्वादौ सामान्यधर्मे तादृशाधिकरणतानवच्छेदकत्वस्य सत्त्वेऽपि अधिकरणतावच्छेदकत्वविरहेण तादृशाधिकरणतानवच्छेदकत्वविशिष्टाधिकरणतावच्छेदकत्वस्याप्रसिद्धिरेव।

---

१. 'तयोरधिकरणत्वरूपत्वेने'ति प्राचीनमुद्रितपुस्तके।

शुद्धसंयोगस्य हेतुतावच्छेदकसम्बन्धस्थले विशिष्टाप्रसिद्धिर्न स्यात्, तत्र महानसवत् पर्वतादेरपि हेतुतावच्छेदकताश्रयाधिकरणत्वेन पर्वतीयधूमत्वादौ धूमत्वाश्रयमहानसनिष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च सद्भावेन विशिष्टस्य प्रसिद्धिसम्भवात्, अतो महानसानुयोगिक-संयोगेन धूमहेतुकस्थले विशिष्टाप्रसिद्धिरुक्तेति बोध्यम्।

उभयप्रसिद्धिस्तु महानसानुयोगिक-संयोगेन धूमहेतुकस्थलेऽपि सम्भवत्येव, हेतुतावच्छेदकाश्रय-महानसनिष्ठाधिकरणतानवच्छेदकत्वस्य वह्नित्वधूमत्वादौ सामान्यधर्मे अधिकरणतावच्छेदकत्वस्य महानसीयतद्धूमत्वादौ विशेषधर्मे प्रसिद्धिसत्त्वादिति।

अत्र पुनः शङ्कते यज्जागदीशीदर्शितप्रकारे हेतुतावच्छेदकीभूतधर्मे निर्दिष्टोभयाभावनिवेशापेक्षया अथवा तत्त्वालोकदर्शितोक्तजागदीशीपरिष्कृतप्रकारे हेतुतावच्छेदकगततादृशरूपे निर्दिष्टोभयाभावमनिवेश्य लाघवाद् हेतुतावच्छेदकगतरूपे तादृश(हेतुतावच्छेदकाश्रयाधिकरण, - अथवा हेतुतावच्छेदकगतरूपावच्छिन्नाश्रयाधिकरण)यन्निष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वगतद्वित्वाश्रयाधिकरणत्वं स एव (तादृश यत्पदार्थ एव) हेत्वधिकरणपदार्थतया कुतो न विवक्ष्यते? वह्निमान् धूमादित्यत्र धूमत्वगतैकत्वे पर्वतमहानसादिकं हेतुतावच्छेदकाश्रयाधिकरणं यत्पदार्थहेतुतावच्छेदकगतरूपावच्छिन्नाश्रयाधिकरणम्वादाय यत्तन्निष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्व, - अधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वैतद् यद् द्वयं तद्गतद्वित्वाश्रयं यद्द्वितीयम्, अधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वम्, तदाश्रयत्वस्य धूमत्वगतैकत्वे हेतुतावच्छेदके सत्त्वेन पर्वतमहानसादौ हेत्वधिकरणत्वोपपत्तिः स्यादेव।

अत्र वह्निज्ञानत्वादिसाध्यके विषयितया वह्न्यादिहेतुकस्थले हेतुतावच्छेदकविषयित्वसम्बन्धावच्छिन्न-अधिकरणता(अधिकरणतानिरूपकता)वच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकत्वस्याप्रसिद्ध्याऽव्याप्तिः स्यात्, धूमत्वादिसामान्यधर्मस्यापि विषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वादिति शङ्कते 'न च विषयितया वह्न्यादिहेतुके' इत्यादिना 'अव्याप्तिरिति वाच्यमि'त्यन्तेन।

अप्रसिद्ध्या प्रदत्ताव्याप्तेः समाधानं घटत्ववत्वादौ तत्सौलभ्योक्त्या विधीयते 'घटत्ववत्वादौ तत्सौलभ्यादि'त्यादिना। विषयितया घटाद्यधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य घटत्वादिगतैकत्वे घटत्वादिगत-तद्व्यक्तित्वे एव वा कल्पनीयत्वेन घटत्ववत्वादौ विषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य प्रसिद्धिसम्भवात्।

अन्यथा — तत्र घटत्ववत्वादावपि तादृशपर्य्याप्त्यनुयोगितावच्छेदकत्वस्वीकारे यथास्थितोभयाभावस्य निवेशपक्षेऽपि नित्यज्ञानानुयोगिकविषयितासम्बन्धेन घटहेतुके नित्यज्ञानत्वसाध्यकस्थले हेतुतावच्छेदकगतरूपावच्छिन्नाश्रयाधिकरणनित्यज्ञाननिष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाभावस्या(तादृश-पर्य्याप्त्यनुयोगितानवच्छेदकत्वस्या)प्रसिद्ध्याऽव्याप्तिः स्यादिति।

उत्थापितपूर्वपक्षो वह्निज्ञानत्वसाध्यकविषयितया वह्निहेतुकसद्धेतौ महानसीय-वह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्तिदोषेण निरस्यते, उभयाभावानिवेशे हेतुतावच्छेदकगतरूपे निर्दिष्टद्वित्वाश्रयाधिकरणत्वनिवेशे सति अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वेन गगनाभावनिष्ठस्य विषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाभावात्मकतादृशपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य गगनाभावरूपस्य गगनाभावहेतुतावच्छेदकगतरूपे वह्नित्वगतैकत्वे सत्त्वेन वह्नित्वगतैकत्वावच्छिन्नवह्नित्वाश्रयमहानसीयवह्नेर्विषयितयाधिकरणत्वस्य महानसीयवह्निविषयकज्ञाने सत्त्वान्महानसीयवह्निज्ञानस्य यत्पदार्थान्तर्गतत्वादिति।

पुनरुच्यते यदुक्तोभयाभावप्रवेशे दोषतो मुक्तये हेतुतावच्छेदकगतरूपे हेतुतावच्छेदकगतरूपावच्छिन्नाश्रय - यन्निष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकतात्वावच्छिन्नाधिकरणत्व(तादृशावच्छेदकतात्वावच्छिन्नाधिकरणत्व), - तादृशाभावत्वावच्छिन्नाधिकरणत्व(अधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाभावत्वावच्छिन्नाधिकरणत्व)-गतद्वित्वाश्रयाधिकरणत्वविवक्षायामपि वह्निज्ञानत्वसाध्यके विषयितया वह्निसद्धेतुकस्थले पूर्वोक्ताव्याप्तिस्तदवस्थैव स्यात्, यतो हि निर्दिष्टद्वित्वाश्रय-अधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाभावत्वावच्छिन्नाधिकरणताया गगनाभावनिष्ठाया अधिकरणात्मकत्वेन गगनाभावात्मकतया द्वित्वेन तदधिकरणताया वह्नित्वगतैकत्वे हेतुतावच्छेदकगतरूपे सत्त्वेन, अर्थाद् निरुक्तद्वित्वाश्रयतादृशाभावत्वावच्छिन्नाधिकरणताया गगनाभावरूपाया हेतुतावच्छेदकवह्नित्वगतैकत्वे सत्त्वेन, तादृशवह्नित्वगतैकत्वावच्छिन्नवह्नित्वाश्रयमहानसीयवह्नेर-

धिकरणत्वस्य विषयितया महानसीयवह्निविषयकज्ञाने सत्त्वात्तस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिस्तदवस्था स्यात्।

उक्तोभयाभावस्यैव तत्र निवेशसत्त्वे तु उक्तस्थले = वह्निज्ञानत्वसाध्यके विषयितया वह्निहेतुकस्थले यथाऽव्याप्तिर्न भवति तथोपपादयति 'उभयाभावनिवेशे च' इत्यादिना 'न तत्सम्भव इती'त्यन्तेन। उक्तोभयाभावनिवेशस्थितौ, तत्कोटौ = उक्तोभयाभावप्रतियोगिकोटौ, तादृशावच्छेदकत्व = स्वावच्छिन्नाश्रयाधिकरणयन्निष्ठाधिकरणतारूपकतावच्छेदकतात्वावच्छिन्नत्व-पर्य्याप्त्यनुयोगितावच्छेदकत्व, - तादृशावच्छेदकत्वाभाव (अधिकरणतारूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाभाव)योः तत्त्वेनैव प्रवेशेन = तादृशावच्छेदकत्वत्वेन तादृशावच्छेदकत्वाभावत्वेन एव प्रवेशेन, तयोरधिकरणारूपत्वेन = गगनाभावारूपत्वेन, न दोषस्य सम्भवः। अथवा तादृशावच्छेदकत्व-तादृशावच्छेदकत्वाभावयोस्तत्त्वेनैव = उक्तोभयत्वेनैव, प्रवेशेन तयोरुभयोरधिकरणारूपत्वेन न दोषस्य सम्भवः।

गगनाभावे तादृशावच्छेदकत्वविरहेण तादृशावच्छेदकत्वाभावसत्त्वेऽपि उक्तोभयासत्त्वेनोक्ताभावस्य सत्त्वेऽपि उक्तोभयाभावस्य स्वाधिकरणात्मकगगनाभावत्वेऽपि उक्तोभयवति तादृशाभावत्वेन उक्तो[भया]भावत्वेनोक्तोभयाभावस्य सत्त्वायोगाद् गगनाभावत्वेन गगनाभावस्य तत्रापि सत्त्वात्तत्प्रणाल्यापि न तत्सम्भवः = न दोषस्य सम्भव इति।

हेतुतावच्छेदकगतरूपे विवक्षितोभयाभावप्रवेशतो मुक्तये उत्थापितप्रकारद्वयस्य तादृशावच्छेदकत्व-तादृशानवच्छेदकत्वगतद्वित्वघटितस्य तथा तादृशावच्छेदकतात्वावच्छिन्नाधिकरणत्व-तादृशाभावत्वावच्छिन्नाधिकरणत्वगतद्वित्वघटितस्य वा प्रकारान्तरेण खण्डनं 'वस्तुतस्तु' इत्यादिना प्रकृतखण्डान्तिमभागेन क्रियते।

तत्रेदमुच्यते यत्तादृशद्वयवृत्तित्वप्रवेशे सति वह्निविषयकज्ञानत्वसाध्यके विषयितया वह्निसद्धेतुके महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यात्, यतो हि घट-घटान्यगतद्वित्वे घटान्यवृत्तित्वं भवत्येव, उक्तयोस्तादृशावच्छेदकत्वतादृशावच्छेदकत्वाभावयोरथवा तादृशावच्छेदकतात्वावच्छिन्नाधिकरणत्व, - तादृशाभावत्वावच्छिन्नाधिकरणत्वयोरुभयोर्घटान्यत्वेन घट-घटान्यगतद्वित्वस्य तादृशोभयवृत्तितया तदाश्रयत्वस्य = घट-घटान्यगतद्वित्वाश्रयत्वस्य, रूपमात्रे अर्थाद् हेतुतावच्छेदकगते सर्वत्र रूपे, सत्त्वेन प्रकृतहेतुतावच्छेदकीभूतवह्नित्वगतैकत्वरूपेऽपि सत्त्वेन तदवच्छिन्नवह्नित्वाश्रयमहानसीयवह्नेर्विषयितयाधिकरणीभूते महानसीयवह्निविषयकज्ञाने हेत्वधिकरणत्वप्रसक्तिः स्यात्ततस्तत्राऽव्याप्तिः स्यात्।

घट-घटान्यगतद्वित्वपरिग्रहाभावाय तादृशद्वय(उक्तोभय)मात्रवृत्तिद्वित्वस्यैव विवक्षायां घट-घटान्यगतद्वित्वस्य तादृशद्वयमात्रवृत्तित्वविरहेण परिग्रहो यद्यपि न स्यात्, किन्तुं तथाविवक्षणे मात्रार्थप्रवेशेनोभयाभावापेक्षया गौरवप्रसक्तिः स्यादिति सूक्ष्ममीक्षणीयमिति भावः।[१५९]

तत्त्वालोकः— अथ यद्वृत्त्यभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकं तस्यैव हेत्वधिकरणरूपत्वं वाच्यमुक्तोभयाभावापेक्षया लघुत्वात्। यद्वृत्तिता च स्वप्रतियोगिमत्त्वग्रहविरोधितावच्छेदकसम्बन्धेन ग्राह्या, तेन कालिकेन धूमाभावस्य पर्वतादिवृत्तित्वेऽपि न क्षतिः। गगनाभावभेदादिहेतुकस्थले हेत्वभावस्य गगनाभावरूपस्य हेत्वधिकरणवृत्तित्वेऽपि गगनाभावभेदाभावत्वस्य तद्वृत्तितानवच्छेदकतया यद्वृत्तितावच्छेदकानुयोगिताविशिष्टप्रतियोगितानवच्छेदकत्वविवक्षायान्न दोषः। वैशिष्ट्यञ्च स्वनिरूपितत्व-स्वनिष्ठानुयोगित्वा[1]निरूपितत्वोभयसम्बन्धेनेति चेद्।

न। वृत्त्यनियामकस्य प्रतियोगितानवच्छेदकत्वे तेन हेतुतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः, विवक्षणीयञ्च हेतुतावच्छेदकसम्बन्धावच्छिन्नमेव प्रतियोगित्वम्, सम्बन्धान्तरावच्छिन्नहेत्वभावस्य हेत्वधिकरणवृत्तेः। पारिभाषिकहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वञ्च हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः सम्बन्धान्तरावच्छिन्नहेत्वभावप्रतियोगित्वे च पारिभाषिकस्य विरहाद्वृत्त्य[2]नियामकसम्बन्धेन सद्धेतौ साध्यानधिकरणस्य हेत्वधिकरणत्वापत्त्या विवक्षितुमशक्यम्। स्वाश्रयाधिकरणत्वस्य यत्पदार्थविशेषणत्वेऽपि विषयित्वादिना वृत्त्यनियामकेन वह्निहेतुके महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वं दुर्वारमेव।

अथ वृत्त्यनियामकस्य भेदप्रतियोगितावच्छेदकतावच्छेदकतायास्सर्वानुमतत्वेन यद्वृत्तिभेदप्रतियोगितानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतानवच्छेदकत्वमेव विवक्षितमिति चेद्, हेतुप्रतियोगिकस्य हेतुतावच्छेदकसम्बन्धत्वे हेत्वधिकरणवृत्तितादृशभेदाप्रसिद्धेरव्याप्तिस्तद्वारणाय हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वहेतुताव्यापकत्वोभयाभावनिवेशे न लाघवम्। किञ्च प्रमेयधूमादिहेतुकस्थले गुरुधर्मस्य प्रतियोगिता-

---

१. 'स्वनिष्ठानुयोगिता' इति प्राचीनमुद्रितपुस्तके।

२. 'वृत्तिनियामके'ति प्राचीनमुद्रितपुस्तके।

**नवच्छेदकत्वे ह्रदादीनामपि हेत्वधिकरणत्वापत्तिः पारिभाषिकावच्छेदकत्व-विवक्षणे च तत्पर्यालोचनेऽतीव गौरवं प्रतिभाति।[१६०]**

***प्रकाशः*** **–** उक्तोभयाभावघटितहेत्वधिकरणापेक्षया लघुभूतहेत्वधिकरण-पदार्थस्वरूपम् 'अथे'त्यादिनोपर्य्युक्तखण्डेन सन्दर्श्य पूर्वपक्षः क्रियते यद् हेतुतावच्छेदकं यद्वृत्त्यभावप्रतियोगितानवच्छेदकं भवति, तस्यैव यत्पदार्थस्य हेत्वधिकरणत्वं यदि स्वीकृतं स्यात्तदा लाघवं स्यात्। उक्तलघुभूतस्वरूपघटकयद्वृत्तिता स्व(अभाव)-प्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन ग्राह्या। अतो धूमाभावस्य पर्वतादौ कालिकसम्बन्धेन वृत्तित्वेऽपि स्वरूपेण स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धा-त्मकेन वृत्तित्वविरहात्पर्वतादेर्न हेत्वधिकरणत्वानुपपत्तिः, तादृशेन स्वरूपेण पर्वतादि-वृत्त्यभावप्रतियोगितानवच्छेदकत्वस्य धूमत्वे हेतुतावच्छेदकेऽक्षतत्वात्।

गगनाभावभेदादिहेतुकस्थले घटोऽभिधेयो गगनाभावभिन्नत्वादित्यादौ अभिधेयत्व-वाच्यत्वादेः साध्यतायां गगनाभावभेदस्य हेतुतायां हेत्वभावस्य गगना-भावभेदाभावस्य 'अभावाभावस्य प्रतियोगिस्वरूपत्व'सिद्धान्ताद् 'अन्योन्याभावा-भावस्य प्रतियोगितावच्छेदकस्वरूपता' सिद्धान्ताच्च गगनाभावस्वरूपतया गगनाभाव-भेदवति गगनाभावातिरिक्ते घटादौ सर्वत्र गगनाभावस्य स्वरूपसम्बन्धेन विद्यमानत्वा-त्तत्प्रतियोगितावच्छेदकत्वस्यैव हेतुतावच्छेदके गगनाभावभेदत्वे सत्त्वेन घटादौ हेत्वधिकरणत्वानुपपत्तिः स्यादिति तु न शङ्कितुं शक्यम्, यद्वृत्तितानवच्छेदकानुयोगितया स्वनिरूपितत्व-स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन विशिष्टप्रतियोगिता-नवच्छेदकं हेतुतावच्छेदकं, तस्यैव यत्पदार्थस्य हेत्वधिकरणत्वस्वीकारेणोक्तदोषा-सम्भवात्।

गगनाभावभेदाभावस्य गगनाभावस्वरूपत्वेऽपि गगनाभावस्य केवलान्वयित्वेन घटादौ सर्वत्र सत्त्वेऽपि घटादिनिरूपितवृत्तितावच्छेदकत्वस्य गगनाभावत्वे एव सत्त्वेन हेतुतावच्छेदकस्य गगनाभावभेदत्वस्य घटादिवृत्तितानवच्छेदकानुयोगिताविशिष्ट-प्रतियोगितानवच्छेदकत्वस्य सत्त्वाद् गगनाभावभेदाभावत्वस्य घटादिवृत्तितावच्छेदक-त्वविरहात्।

वह्निमान् धूमादित्यत्र पर्वतादिनिरूपिततादृशस्वरूपसम्बन्धावच्छिन्नवृत्तिता-वच्छेदकं घटाभावत्वादिकम्, तदनुयोगिता घटाभावगता, अनुयोगिताया अनुयोगिस्व-रूपत्वेन घटाभावात्मिका स्वनिरूपितत्व-स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन तादृशानुयोगिताविशिष्टा प्रतियोगिता घटादिनिष्ठा, तदवच्छेदकत्वस्य घटत्वादौ सत्त्वेन धूमत्वे हेतुतावच्छेदके तदनवच्छेदकत्वस्योपपन्नत्वात्।

तादृशानुयोगितावैशिष्ट्यनियामकतया द्वितीयसम्बन्धस्य स्वनिष्ठानुयोगित्वा-निरूपितत्वस्य निवेशाद् गगनाभावभेदनिष्ठप्रतियोगिताया व्यावृत्तिः, गगनाभावस्य गगनाभावभेदाभावात्मकतया गगनाभावस्य प्रतियोगिता गगन इव गगनाभावभेदेऽपि यद्यपि प्राप्ता भवति, किन्तु घटादिवृत्तितावच्छेदकगगनाभावत्वानुयोगितया उक्तोभय-सम्बन्धेन विशिष्टा गगननिष्ठैव प्रतियोगिता भवति, न तु गगनाभावभेदनिष्ठा, यतो गगनाभावत्वरूपघटादिवृत्तितावच्छेदकानुयोगिता गगनाभावनिष्ठा गगनाभावात्मिका, तन्निष्ठानुयोगिता गगनाभावत्वस्यानुयोगिता, गगनाभावभेदनिष्ठप्रतियोगितायां तन्निरू-पितत्वस्यैव सत्त्वेन स्वनिष्ठानुयोगित्वानिरूपितत्वविरहात्। तत्र गगनाभावभेदनिष्ठ-प्रतियोगितायां तादृशानुयोगितानिष्ठानुयोगितानिरूपितत्वस्य सत्त्वन्तु अन्योन्याभावा-भावस्य = गगनाभावभेदाभावस्य गगनाभावरूपप्रतियोगिस्वरूपत्वमिव गगना-भावत्वरूपप्रतियोगितावच्छेदकस्वरूपत्वस्यापि सद्भावात्, गगनाभावात्मकानुयोगि-तानिष्ठगगनाभावत्वानुयोगितानिरूपितत्वस्यापि गगनाभावभेदनिष्ठप्रतियोगितायां सद्भावादिति।

उपपादितपूर्वपक्षो वृत्त्यनियामकस्वामित्वादिसम्बन्धेन हेतुतास्थलेऽव्याप्तिदोषेण निराक्रियते। कामेश्वरो राजा दरभंगाराज्यवत्त्वादित्यादौ वृत्त्यनियामकस्वामित्व-सम्बन्धेन हेतुतास्थले वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेन तत्सम्ब-न्धावच्छिन्नयद्वृत्त्यभावप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिः स्यात्, वह्निमान् धूमादित्यादौ सम्बन्धान्तरावच्छिन्नप्रतियोगिताकहेत्वभावस्य हेतुतावच्छेदकसम्बन्धेन हेतुमति सत्त्वादव्याप्त्यभावाय हेतुतावच्छेदकसम्बन्धावच्छिन्नस्यैव प्रतियोगित्वस्य विवक्षणी-यत्वसत्त्वात्।

हेतुतावच्छेदकसम्बन्धेतरसम्बन्धानवच्छिन्नत्वरूपस्य पारिभाषिकस्य हेतुता-वच्छेदकसम्बन्धावच्छिन्नत्वस्य विवक्षापि कर्तुमशक्यैव, यतो हि तथाविवक्षासत्त्वे वृत्त्यनियामकसम्बन्धेन हेतुतास्थले साध्यतावच्छेदकसम्बन्धेन साध्यानधिकरणदेशस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यात्, तद्देशवृत्त्यभावीयपारिभाषिकहेतुतावच्छेदक-सम्बन्धावच्छिन्नप्रतियोगिताया अवच्छेदकत्वविरहस्य हेतुतावच्छेदके सत्त्वात्। तत्र तादृशप्रतियोगितावच्छेदकत्वविरहश्च हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगि-तायाः प्रसिद्धेरभावात् तत्सम्बन्धावच्छिन्नप्रतियोगिताया अवच्छेदकत्वस्य तत्र सम्भवाभावाद् हेतुतावच्छेदकीभूतवृत्त्यनियामकसम्बन्धेतरसम्बन्धावच्छिन्नायां हेत्व-भावप्रतियोगितायां हेतुतावच्छेदकेतरसम्बन्धावच्छिन्नत्वस्यैव सत्त्वेन हेतुतावच्छेदक-सम्बन्धेतरसम्बन्धानवच्छिन्नत्वरूपपारिभाषिकहेतुतावच्छेदकसम्बन्धावच्छिन्नत्व-

विरहात्, ततश्च साध्यानधिकरणीभूतयत्पदार्थवृत्त्यभावप्रतियोगितानवच्छेदकत्वस्य हेतुतावच्छेदके सद्भावेन तत्र साध्यानधिकरणस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यात्।

उक्ते वृत्त्यनियामकस्वामित्वसम्बन्धेन सद्धेतुस्थलेऽव्याप्त्यभावाय स्वाश्रयाधिकरणत्वस्य (हेतुतावच्छेदकाश्रयाधिकरणत्वस्य) यत्पदार्थविशेषतया प्रवेशे साध्यानधिकरणस्य हेतुतावच्छेदकाश्रयाधिकरणत्वविरहेणोक्तस्थलेऽव्याप्तिवारणसम्भवेऽपि वृत्त्यनियामकविषयित्वसम्बन्धेन वह्निहेतुके सद्धेतुस्थले वह्निज्ञानत्वसाध्यके महानसीयवह्निज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यादेव, तत्र महानसीयवह्निविषयकज्ञानात्मके अधिकरणे हेतुतावच्छेदकवह्नित्वाश्रयमहानसीयवह्नेरधिकरणत्वसत्त्वात् तद्वृत्त्यभावपारिभाषिकहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वविरहस्य हेतुतावच्छेदके वह्नित्वे पूर्वोपपादितरीत्यैव सत्त्वात्।

अनन्तरमिदं शङ्कते यद्वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकसम्बन्धत्वानभ्युपगमेऽपि 'चैत्रो न पचति' इत्यादिप्रतीत्याऽनुकूलत्वसम्बन्धेन वृत्त्यनियामकेन पाकविशिष्टकृतेः समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य चैत्रादौ स्वीकाराद् वृत्त्यनियामके प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धत्वस्य सर्वानुमततया यद्वृत्तिभेदप्रतियोगितानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतानवच्छेदकं हेतुतावच्छेदकं तस्यैव हेत्वधिकरणत्वविवक्षायामपि उक्तोभयाभावघटितापेक्षया लाघवं स्यात्, ततश्च वृत्त्यनियामकसम्बन्धेन सद्धेतुकेऽव्याप्तिर्न स्यात्, तस्य प्रतियोगितावच्छेदकसम्बन्धत्वविरहेऽपि भेदप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धत्वसम्भवात्, साध्यानधिकरणे हेतुतावच्छेदकसम्बन्धेन हेतुमतो भेदस्य तादृशस्य सत्त्वेन तद्वृत्तिभेदतादृशप्रतियोगितावच्छेदकतावच्छेदकत्वस्यैव हेतुतावच्छेदके सत्त्वात्साध्यानधिकरणस्य हेत्वधिकरणत्वासम्भवात्तत्राव्याप्तेरभावात्।

अत्र समाधीयते यद् धूमप्रतियोगिक-संयोगेन धूमहेतुके वह्निसाध्यकस्थले तथाविधेऽन्यत्र च हेत्वधिकरणवृत्तितादृशभेदाप्रसिद्ध्याऽव्याप्तिः स्यात्, संयोगेन घटादिमद्भेदस्य धूमप्रतियोगिकसंयोगात्मकहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकत्वासम्भवादिति।

उक्तापत्तिवारणाय यद्वृत्तिभेदप्रतियोगितावच्छेदकतायां हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व-हेतुताव्यापकत्वोभयाभावस्य निवेशे हेतुप्रतियोगिकस्य हेतुतावच्छेदकसम्बन्धस्थले संयोगघटादिमद्भेदप्रतियोगितावच्छेदकतायां हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य सत्त्वेऽपि हेतुताव्यापकत्वविरहेणोक्तोभयाभावस्य सत्त्वाद्दोषाभावेऽपि उभयाभावनिवेशेन लाघवासम्भवात्, वह्निमान् प्रमेयधूमा-

दित्यादौ गुरुधर्मस्य हेतुतावच्छेदकस्थले गुरुधर्मस्य प्रमेयधूमत्वस्य ह्रदादिवृत्तिभेदीय-तादृशप्रतियोगितावच्छेदकतावच्छेदकत्वविरहेण हेत्वधिकरणत्वापत्त्याऽव्याप्तेश्च, पारिभाषिकप्रतियोगितावच्छेदकत्वविवक्षणे अर्थात्तादृशप्रतियोगितावच्छेदकतावच्छे-दकानतिरिक्तवृत्तित्वरूपस्य तादृशावच्छेदकत्वविवक्षणे, प्रमेयधूमत्वादेः तादृशावच्छे-दकतावच्छेदकधूमत्वाद्यनतिरिक्तवृत्तित्वेन दोषवारणे तत्पर्य्यालोचनायामतीव गौरवं स्यादिति प्रकाशः।[१६०]

तत्त्वालोकः – अत एव हेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताक-पर्य्याप्तिकावच्छेदकताकनिरूपकताकसम्बन्धितावद्वृत्तिभेदीयप्रतियोगितानिरू-पितपरम्परावच्छेदकतावत्प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगिता-नवच्छेदकत्वं स एव हेत्वधिकरणपदार्थः, भेदश्च हेतुतावच्छेदकसम्बन्धा-वच्छिन्नं यत्प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धित्वं तदवच्छिन्नप्रतियोगिता-कः, एवञ्च कपिसंयोगादिहेतुकसद्धेतौ हेत्वभावस्य तद्वद्भेदस्य च साध्याधिकर-णवृत्तित्वेऽपि न क्षतिः, उक्तसम्बन्धितावद्व्यक्तिभेदकूटस्यैवात्र प्रवेशात्।

न च विषयितया प्रमेयवह्निहेतुके सद्धेतौ प्रमेयमहानसीयवह्निविषयक-ज्ञानस्यं हेत्वधिकरणत्वप्रसङ्गः विषयित्वादीनां वृत्त्यनियामकत्वेन प्रतियोगि-तानवच्छेदकतया प्रमेयवह्नित्वावच्छिन्नप्रतियोगित्वाप्रसिद्धिरिति वाच्यम्, यत्प्रतियोगितावच्छेदकतावच्छेदकधर्मावच्छिन्नसम्बन्धित्वस्यैव विवक्षित-त्वात् प्रमेयमहानसीयवह्निविषयकज्ञाने विषयितया प्रमेयवह्निमद्भेदस्य सत्त्वेन तस्य हेत्वधिकरणत्वासम्भवात्।

प्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वञ्च पर्य्याप्तिघटितं वाच्यम्, अन्यथा महानसीयवह्निविषयकज्ञानस्य वह्निमदभावप्रतियोगितावच्छेदकता-वच्छेदकवह्नित्वावच्छिन्नमहानसीयवह्निसम्बन्धितावत्त्वेन वह्निविषयकज्ञानस्य च महानसीयवह्निमदभावप्रतियोगितावच्छेदकतावच्छेदकवह्नित्वावच्छिन्न-सम्बन्धितावत्त्वेन विषयितया वह्निहेतुके महानसीयवह्निहेतुके चाव्याप्त्यापत्तेः।

एवञ्च धूमवद्भेदप्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नसम्बन्धित्वा-प्रसिद्ध्या यत्प्रतियोगित्वेन तस्यानुपादेयतया धूमहेतुकस्थले ह्रदादीनां हेत्व-धिकरणत्ववारणाय स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसम्बन्धि-तावत्त्वं स्वाश्रयावच्छिन्नवत्त्वं वा यत्पदार्थे विशेषणमावश्यकमिति परास्तम्, धूमप्रतियोगिकसंयोगेन धूमहेतुकस्थलेऽव्याप्तेः।[१६१]

*प्रकाशः*—उक्तखण्डादिमस्य 'अत एवे'त्यस्यात्रैव खण्डेऽग्रिमेण 'परास्तमि'-त्यनेन सम्बन्धः। 'यद्वृत्त्यभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकमि'त्यादिना दर्शितहेत्वधिकरणनिर्वचनप्रकारस्य त्यागे यो हेतुरतिगौरवम्, तेनैव हेतुनाऽनुपदं दर्शयिष्यमाणहेत्वधिकरणनिर्वचनप्रकारान्तरस्यापि त्याग इति 'अत एवे'त्यस्यार्थः।

हेत्वधिकरणपदार्थनिर्वचनेऽपरः प्रकारोऽयम्— हेतुतावच्छेदकगतरूपे स्वा-(हेतुतावच्छेदकगतरूपा)वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताक-सम्बन्धितावद् यद् वृत्तिभेदीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगिताव-च्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वं स एव हेत्वधिकरणपदार्थ इति।

एतद्घटकभेदो हेतुतावच्छेदकसम्बन्धावच्छिन्नं यत् प्रतियोगितावच्छेदका-वच्छिन्नसम्बन्धित्वं तदवच्छिन्नप्रतियोगिताको विवक्षितः, अर्थाद् हेतुतावच्छेदक-सम्बन्धावच्छिन्ना यद्धर्मावच्छिन्ना सम्बन्धिता भवति तद्धर्मावच्छिन्नसम्बन्धितावद्-व्यक्तिभेदसमूहो विवक्षितः।

तादृशभेदविवक्षणेन कपिसंयोगहेतुकसद्धेतुस्थले वृक्षो द्रव्यं कपिसंयोगादित्यत्र हेतुतावच्छेदकगतरूपे कपिसंयोगत्वगतैकत्वे कपिसंयोगगतैकत्वावच्छिन्नानुयोगिताक-पर्य्याप्तिकावच्छेदकताकनिरूपकताकसम्बन्धितावति साध्याधिकरणे अव्याप्यवृत्तित्वेन कपिसंयोगाभावरूपहेत्वभावस्येव कपिसंयोगवद्भेदस्य वृत्तेस्तद्भेदीयप्रतियोगिता-निरूपितपरम्परावच्छेदकतावत्-प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगिता-वच्छेदकत्वस्यैव सत्त्वेन साध्याधिकरणस्य हेत्वधिकरणत्वानुपपत्तिः, तत्र यत्किञ्चित्-कपिसंयोगवद्भेदस्य सत्त्वेऽपि तस्य विवक्षितत्वविरहाद् विवक्षितस्य हेतुतावच्छेद-कसमवायसम्बन्धावच्छिन्नकपिसंयोगत्वावच्छिन्नसम्बन्धिवद्व्यक्तिभेदकूटस्य तत्र विरहाद् 'यत्'पदपरिगृहीतस्य साध्याधिकरणस्यापि तादृशप्रतियोगितावच्छेदका-वच्छिन्नसम्बन्धितावद्व्यक्तित्वेन तादृशव्यक्तिभेदकूटान्तर्गत-तद्व्यक्तिभेदस्य तत्रावृत्तेः।

एतदेव 'भेदश्च हेतुतावच्छेदकसम्बन्धावच्छिन्नं यत्प्रतियोगितावच्छेदका-वच्छिन्नसम्बन्धित्वं तदवच्छिन्नप्रतियोगिकः, एवञ्च कपिसंयोगादिहेतुकसद्धेतौ हेत्व-भावस्य तद्वद्भेदस्य च साध्याधिकरणवृत्तित्वेऽपि न क्षतिः, उक्तसम्बन्धितावद्व्यक्ति-भेदकूटस्यैव प्रवेशात्' इत्यनेन बोधितम्, तादृशप्रतियोगितावच्छेदकावच्छिन्न-सम्बन्धित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य प्रवेशेन तादृशसम्बन्धित्ववद्-व्यक्तिभेदकूटस्य प्रवेशात्तत्र साध्याधिकरणे तादृशभेदासत्त्वान्नानुपपत्तिरित्याशयात्।

प्रसिद्धस्थले वह्निमान् धूमादित्यत्र हेतुतावच्छेदकधूमत्वगतैकत्वरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकसम्बन्धितावति = धूमत्वगतैकत्वावच्छिन्नाश्रयसम्बन्धितावति पर्वतादौ, वृत्तियों हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नसम्बन्धित्वनिष्ठावच्छेदकताकप्रतियोगिताको भेदः संयोगेन घटवान्नेति प्रतीतिसिद्धस्तदीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकता घटत्वगतैकत्वे तिष्ठेत्, तादृशपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य धूमत्वगतैकत्वे हेतुतावच्छेदकगतरूपे सत्त्वात्पर्वतादौ यत्पदार्थे हेत्वधिकरणत्वोपपत्तिस्तत्र तादृशसम्बन्धितावति हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नधूमत्वरूपप्रतियोगितावच्छेदकधर्मावच्छिन्नसम्बन्धित्वावच्छिन्नप्रतियोगिताकभेदस्य संयोगेन धूमत्वावच्छिन्नवान्न (संयोगेन धूमत्वावच्छिन्नसम्बन्धी न) इत्यादिप्रतीतिसाक्षिकस्य तत्रासत्त्वेन धर्तुमशक्यत्वात्।

अनन्तरमुक्तभेदविवक्षायां = हेतुतावच्छेदकसम्बन्धावच्छिन्न– प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धित्वावच्छिन्नप्रतियोगिताकभेदविवक्षायां, प्रमेयवह्निज्ञानत्वसाध्यकविषयितया प्रमेयवह्निहेतुकसद्धेतुस्थले प्रमेयमहानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या 'नचे'त्यादिनाऽव्याप्तिं शङ्कते।

तत्र हेतुतावच्छेदकविषयित्वसम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकताया गुरुधर्मस्य प्रतियोगितावच्छेदकत्वेऽपि विषयित्वसम्बन्धावच्छिन्नप्रमेयवह्नित्वावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या निरुक्तसम्बन्धितावत्-प्रमेयमहानसीयवह्निविषयकज्ञानवृत्तिभेदत्वेन विषयितया प्रमेयवह्निमद्भेदस्य विवक्षितभेदान्तर्गतत्वविरहेण = हेतुतावच्छेदकसम्बन्धावच्छिन्नयत्प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धित्वं तदवच्छिन्नप्रतियोगिताकत्वविरहेण, धर्तुमशक्यतया भेदान्तरीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य हेतुतावच्छेदकगतरूपे प्रमेयवह्नित्वगतैकत्वे सत्त्वेन प्रमेयमहानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावमादाय प्रमेयवह्निज्ञानत्वसाध्यकविषयितया प्रमेयवह्निहेतुकसद्धेतुस्थलेऽव्याप्तिः स्यादिति पूर्वपक्षः।

अत्र समाधीयते। हेतुतावच्छिन्नाया प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धिताया स्थाने हेतुतावच्छेदकसम्बन्धावच्छिन्ना या प्रतियोगितावच्छेदकतावच्छेदकधर्मावच्छिन्ना सम्बन्धिता, तादृशसम्बन्धित्वनिष्ठावच्छेदकताकप्रतियोगिताक एव भेदो विवक्षितः, अर्थात् प्रतियोगितावच्छेदकतावच्छेदकीभूतयद्धर्मावच्छिन्ना हेतुतावच्छेदकसम्बन्धावच्छिन्ना सम्बन्धिता भवति तादृशधर्मावच्छिन्नतादृशसम्बन्धावच्छिन्न-

सम्बन्धित्वनिष्ठावच्छेदकताकप्रतियोगिताक एव विवक्षितः।

तथासति विषयित्वरूपहेतुतावच्छेदकसम्बन्धस्य प्रतियोगितावच्छेदकत्व-विरहेऽपि प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धत्वानपायाद् विषयितया प्रमेयवह्नि-मद्भेदस्य तादृशस्य प्रमेयमहानसीयवह्निविषयकज्ञाने सत्त्वात्तादृशभेदीयप्रतियोगिता-निरूपितपरम्परावच्छेदकतावत्प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगिता-वच्छेदकत्वस्यैव हेतुतावच्छेदकगतप्रमेयवह्नित्वगतैकत्वे सत्त्वेन विवक्षिततादृशा-नवच्छेदकत्वविरहात्प्रमेयमहानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वासम्भवाद-व्याप्तिविरहादिति समाधातुराशयः।

उक्तविवक्षान्तर्गतं प्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वं पर्य्याप्तिघटित-मेव विवक्षितम्, तेन वह्निज्ञानत्वसाध्यके विषयितया वह्निहेतुकसद्धेतुस्थले महानसीय-वह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या नाव्याप्तिः। अन्यथा महानसीयवह्निविषयक-ज्ञाने वह्निमदभावप्रतियोगितावच्छेदकतावच्छेदकवह्नित्वावच्छिन्नमहानसीयवह्निसम्ब-न्धितासत्त्वेन तद्वृत्तिभेदत्वेन तादृशसम्बन्धितावद्भेदस्य वह्निमद्भेदस्य धर्तुमशक्यतया हेतुतावच्छेदकगते वह्नित्वगतैकत्वे विवक्षितपर्य्याप्त्यनुयोगितानवच्छेदकत्वसत्त्वात्तस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यात्।

पर्य्याप्तिघटितस्यैव प्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वस्य विवक्षितत्वे तु तत्र महानसीयवह्निविषयके ज्ञाने पर्य्याप्त्या प्रतियोगितावच्छेदकतावच्छेदकवह्नि-त्वावच्छिन्नसम्बन्धित्वासत्त्वेन वह्नित्वपर्य्याप्तावच्छेदकताकप्रतियोगिताकभेदस्य अर्थात् पर्य्याप्त्या वह्नित्वावच्छिन्नसम्बन्धितावद्भेदस्य महानसीयवह्निविषयकज्ञाने वृत्तित्वेन धर्तुं शक्यतया तादृशभेदीयप्रतियोगितानिरूपिततादृशपर्य्याप्त्यनुयोगिता-वच्छेदकत्वस्यैव हेतुतावच्छेदकगतरूपे सत्त्वेन महानसीयवह्निविषयकज्ञानस्य हेत्व-धिकरणत्वविरहान्नाव्याप्तिः।

प्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वस्य पर्य्याप्तिघटितस्यैव निवेशादेव च उक्तवह्निहेतुकस्थल इवैव महानसीयज्ञानत्वसाध्यके विषयितया महानसीयवह्नि-हेतुकसद्धेतुस्थलेऽपि वह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिर्न। अन्यथा वह्निविषयकज्ञाने महानसीयवह्निमदभावप्रतियोगितावच्छेदकतावच्छेदकवह्नित्वा-वच्छिन्नसम्बन्धिसत्त्वेन तत्र विषयिता महानसीयवह्निमद्भेदस्य अर्थात् प्रतियोगिता-वच्छेदकतावच्छेदकमहानसीयवह्नित्वावच्छिन्नभेदस्याविद्यमानत्वेऽपि धर्तुमशक्यतया तादृशानवच्छेदकत्वस्य हेतुतावच्छेदकगतरूपे सत्त्वादुक्तज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावायाव्याप्तिः स्यात्।

पर्य्याप्तिघटितस्यैव तस्य विवक्षणे तु तत्र वह्निविषयकज्ञाने पर्य्याप्त्या प्रतियोगितावच्छेदकतावच्छेदकमहानसीयवह्नित्वावच्छिन्नसम्बन्धित्वविरहेण पर्य्याप्त्या महानसीयवह्नित्वावच्छिन्नसम्बन्धितावद्भेदस्य महानसीयवह्निमान्नेति प्रतीतिसिद्धस्य तत्र सत्त्वाद् धर्तुं शक्यतया तादृशभेदीयतादृशपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव हेतुतावच्छेदकगतरूपे सत्त्वेनाव्याप्तेरभावात्।

प्रकृते प्रमेयवह्निज्ञानत्वसाध्यकविषयितया प्रमेयवह्निहेतुकसद्धेतुस्थलेऽपि प्रमेयमहानसीयवह्निविषयकज्ञाने प्रमेयवह्निमदभावप्रतियोगितावच्छेदकतावच्छेदकप्रमेयवह्नित्वावच्छिन्नप्रमेयमहानसीयवह्निसम्बन्धितासत्त्वेऽपि प्रमेयवह्न्यभावस्य पर्य्याप्त्या प्रतियोगितावच्छेदकतावच्छेदकप्रमेयवह्नित्वावच्छिन्नसम्बन्धिताविरहेण पर्य्याप्त्या प्रमेयवह्नित्वावच्छिन्नसम्बन्धितावद्भेदस्य प्रमेयवह्निमान्नेति प्रतीतिसिद्धस्य तत्र सत्त्वेन प्रमेयमहानसीयवह्निज्ञानस्य न हेत्वधिकरणत्वापत्तिर्न वा तत्राव्याप्तिरिति।

एवञ्च = हेतुतावच्छेदकसम्बन्धावच्छिन्नं यत्प्रतियोगितावच्छेदकतावच्छेदकधर्मावच्छिन्नसम्बन्धित्वं तदवच्छिन्नप्रतियोगिताकभेदस्य निवेशे च वह्निमान् धूमादित्यत्र धूमवद्भेदप्रतियोगितावच्छेदकतावच्छेदकधूमत्वावच्छिन्नसम्बन्धित्वाप्रसिद्ध्या[1] ह्रदादिवृत्तिभेदत्वेन धूमत्वंरूपप्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नसम्बन्धितावद्भेदस्य धूमवान्नेति प्रतीतिसिद्धस्य धर्तुमशक्यतया ह्रदादिवृत्तिभेदीयप्रतियोगितानिरूपितपरम्परावच्छेदकवत् प्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य हेतुतावच्छेदकधूमत्वगतैकत्वे सम्भवाद् ह्रदादीनां हेत्वधिकरणत्वापत्त्या साध्याभावमादाय प्रसक्ताव्याप्तिवारणाय हेत्वधिकरणपरक-यत्पदार्थे स्वा(हेतुतावच्छेदकगतरूपा)वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताक(निरूपकताक)सम्बन्धितावत्त्वरूपं विशेषणमथवा स्वा(हेतुतावच्छेदकगतरूपा)श्रयावच्छिन्नवत्त्वं विशेषणमावश्यकमित्येतद् बोधनायैव एतत्कल्पोपक्रमभागे 'हेतुतावच्छेदकगतरूपे' एतदनन्तरं 'स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकसम्बन्धितावद् यद्वृत्तिभेदीय' इत्युल्लिखितम्।

हेत्वधिकरणपरकयत्पदार्थे दर्शितविशेषणे प्रदत्ते सति— वह्निमान् धूमादित्यत्र ह्रदादेस्तादृशसम्बन्धितावत्त्वविरहान्न हेत्वधिकरणत्वप्रसक्तिरतो न तत्राव्याप्तिः— इति परास्तम्, धूमप्रतियोगिकसंयोगेन धूमहेतुकवह्निसाध्यकस्थले अर्थाद् हेतुप्रतियोगिक-

---

१. सामान्यधर्मावच्छिन्नाधिकरणताया इव सामान्यधर्मावच्छिन्नसम्बन्धिताया अपि अनङ्गीकाराद्धूमत्वसामान्यधर्मावच्छिन्नसम्बन्धित्वाप्रसिद्धिः।

हेतुतावच्छेदकसम्बन्धत्वे तादृशसम्बन्धितावद्वृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नसम्बन्धित्वावच्छिन्नप्रतियोगिताकविवक्षित-भेदाप्रसिद्ध्याऽव्याप्तेः पूर्वदर्शितकल्पोक्तायाः प्रसङ्गात्, तद्वारणायोपायान्तराश्रयणे पूर्वकल्प इवैव गौरवाधिक्यप्रसङ्गादिति प्रकाशः।[१६१]

तत्त्वालोकः— यत्तु— हेतुतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धित्वीय स्वरूपेण सम्बन्धित्वाभावो निवेश्य इति नोक्तदोषः, न च धूमत्वावच्छिन्न-विषयित्वादिसम्बन्धावच्छिन्नसम्बन्धित्वस्य प्रसिद्धतया हेतुतावच्छेदक-सम्बन्धावच्छिन्नसम्बन्धिताप्रतियोगिकस्वरूपेण तदभावस्य पर्वतादिषु सत्तया धूमवदभावप्रतियोगित्वस्य यत्पदेनोपादेयत्वाद्धूमहेतुके हेत्वधिकरणत्वानुप-पत्तिरिति वाच्यम्, हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य पर्य्याप्त्यघटितस्य सम्बन्धितायाम्विशेषणत्वादिति।

तत्तुच्छम्। सम्बन्धित्वात्यन्ताभावनिवेशे कपिसंयोगहेतुकेऽव्याप्तेर-निवार्यत्वादुक्तसम्बन्धित्वस्याप्यव्याप्यवृत्तित्वेन तदभावस्य हेतुमति सत्त्वाद्, विषयितात्वकालिकत्वान्यतरवत्[१]सम्बन्धावच्छिन्नवह्नित्वावच्छिन्नसम्बन्धि-त्वमादाय विषयितया वह्निहेतुके महानसीयवह्निविषयकज्ञानादेरधिकरणत्व-प्रसङ्गात्, महाकालानुयोगिक— कालिकेन घटादिहेतुकस्थले महाकाले तादृशसम्बन्धित्वाभावस्यासत्त्वेन महाकालस्य हेत्वधिकरणत्वानुपपत्तेः। तद्वारणायायासश्च गुरुत्वाद्विफलायासं करिष्यतीत्यलन्तेनेति ध्येयम्।[१६२]

*प्रकाशः*—दर्शिते हेत्वधिकरणपदार्थप्रकारे हेतुप्रतियोगिकस्य हेतुतावच्छेदक-सम्बन्धस्थले वह्निसाध्यकधूमप्रतियोगिक-संयोगेन धूमहेतुकसद्धेतौ याऽव्याप्तिरुक्ता, तां परिहर्तुं 'यत्तु' कथ्यमिदमस्ति यद् हेतुतावच्छेदकसम्बन्धावच्छिन्नं यत्प्रतियोगिता-वच्छेदकतावच्छेदकधर्मावच्छिन्नसम्बन्धित्वं तदवच्छिन्नप्रतियोगिताकभेदमनिवेश्य प्रतियोगितावच्छेदकतावच्छेदकधर्मावच्छिन्नसम्बन्धित्वाभाव एव हेतुतावच्छेदक-सम्बन्धावच्छिन्नसम्बन्धित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको निवेश्यः। एवं निवेशे धूमप्रतियोगिकसंयोगेन धूमसद्धेतुस्थलेऽव्याप्तिर्न स्यात्।

तत्र धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्न(हेतुतावच्छेदकसम्बन्धावच्छिन्न)-घटवद्भेदप्रतियोगितावच्छेदकतावच्छेदकघटत्वावच्छिन्नसम्बन्धित्वस्य प्रसिद्धिविरहेण तादृशसम्बन्धित्वावच्छिन्नप्रतियोगिताकघटवद्भेदादेर्ग्रहणासम्भवेऽपि घटवद्भेद-

१. 'वत्' इति नास्ति प्राचीनमुद्रितपुस्तके।

प्रतियोगितावच्छेदकतावच्छेदकघटत्वावच्छिन्नसम्बन्धित्वाभाव(हेतुतावच्छेदकधूम-प्रतियोगिकसंयोगसम्बन्धावच्छिन्नसम्बन्धित्वप्रतियोगिकस्वरूपात्मकव्यधिकरण-सम्बन्धावच्छिन्नप्रतियोगिताकाभाव)मादायैव तत्र पर्वतादेर्हेत्वधिकरणत्वोपपत्त्याऽ-व्याप्तिर्न स्यादिति।

अत्र पुनः शङ्कते यत् तादृशसम्बन्धित्वाभावस्य निवेशे धूमप्रतियोगिकसंयोगेन धूमहेतुकस्थले पर्वतादौ हेत्वधिकरणत्वन्नोपपन्नं स्यात्, विषयित्वसम्बन्धावच्छिन्नधूम-वद्भेदप्रतियोगितावच्छेदकतावच्छेदकधूमत्वावच्छिन्नसम्बन्धित्वस्य प्रसिद्धत्वाद्, हेतुतावच्छेदकधूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्नसम्बन्धिताप्रतियोगिकस्वरूप-सम्बन्धावच्छिन्नप्रतियोगिताकतादृशसम्बन्धित्वाभावस्य पर्वतादौ सत्त्वात्तदीय-प्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितात्वावच्छिन्नप्रतियोगितापर्य्या-प्त्यनुयोगितावच्छेदकत्वस्यैव हेतुतावच्छेदकधूमत्वगतैकत्वरूपे सत्त्वेन विवक्षित-तादृशानवच्छेदकत्वविरहात्पर्वतादेर्हेत्वधिकरणत्वन्न स्यादिति।

अत्र समाधीयते यद् हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य पर्य्याप्त्यघटितस्य विवक्षितत्वादिति। पर्य्याप्त्यघटितहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य धूम-प्रतियोगिकत्वविशेषणाघटिताविशेषितसंयोगसम्बन्धावच्छिन्न-संयोगेन धूमवद्भेदीय-प्रतियोगितावच्छेदकतावच्छेदकधूमत्वावच्छिन्नसम्बन्धितायां सत्त्वेन तादृश-सम्बन्धित्वस्यैव पर्वतादौ सत्त्वेन पर्वतादिवृत्तितया धूमत्वावच्छिन्नसम्बन्धित्वा-भावस्य परिग्रहाभावात्पर्वतादौ हेत्व[धिकरण]त्वन्नानुपपन्नं भवेदिति।

तदेतद् 'यत्तु'मतं तुच्छमेव, यतस्तादृशसम्बन्धित्वात्यन्ताभावस्य निवेशे कपिसंयोगहेतुकसद्धेतुस्थले कपिसंयोगवद्भेदीयप्रतियोगितावच्छेदकतावच्छेदक-कपि-संयोगवद्भेदीयप्रतियोगितावच्छेदकतावच्छेदक-कपिसंयोगत्वावच्छिन्नसम्बन्धित्वस्या-व्याप्यवृत्तितया तादृशसम्बन्धत्वात्यन्ताभावस्य साध्याधिकरणे हेतुमति सत्त्वेन तदादाय हेतुतावच्छेदकगतरूपे तादृशपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव सत्त्वाद्धेत्वधिकरण-त्वन्न स्यादिति।

उपर्युक्ते 'यत्तु'मते द्वितीयो दोषो वह्निज्ञानत्वसाध्यकविषयितया वह्निहेतुक-सद्धेतुस्थले महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या तद्वर्तिसाध्याभाव-मादाय, यतो हि विषयितात्व-कालिकत्वान्यतरवत्सम्बन्धावच्छिन्नवह्निमद्भेद-प्रतियोगितावच्छेदकतावच्छेदकवह्नित्वावच्छिन्नसम्बन्धित्वस्यैव कालिकत्ववतः सम्बन्धस्योक्तान्यतरघटकत्वाद् महानसीयवह्निविषयकज्ञाने सत्त्वाद्, हेतुतावच्छेदक-सम्बन्धावच्छिन्नसम्बन्धिताप्रतियोगिकस्वरूपस्य तादृशसम्बन्धत्वस्य व्यधिकरण-

सम्बन्धत्वविरहात्, तादृशसम्बन्धित्वावच्छेदकान्यतरत्वाद्विषयिताया तादृशसम्बन्धित्वाभावस्य महानसीयवह्निविषयकज्ञानवृत्तित्वेन धर्तुमशक्यतया तदात्मकयत्पदार्थमादाय हेतुतावच्छेदकवह्नित्वगतैकत्वरूपे विवक्षिततादृशपर्य्याप्त्यनुयोगितानवच्छेदकत्वसत्त्वात् तस्य हेत्वधिकरणत्वप्रसक्त्याऽव्याप्तिः स्यादिति।

'यत्तु'मते तृतीयो दोषः महाकालत्वसाध्यकमहाकालानुयोगिककालिकसम्बन्धेन घटादिहेतुकस्थले महाकालस्य हेत्वधिकरणत्वानुपपत्त्याऽव्याप्तिः। तत्र महाकालस्य हेत्वधिकरणत्वानुपपत्तिश्च विवक्षितसम्बन्धित्वाभावस्य महाकालेऽसत्त्वात्, महाकालानुयोगिककालिकसम्बन्धावच्छिन्नसम्बन्धिताप्रतियोगिकस्वरूपस्य तादृशसम्बन्धित्वव्यधिकरणसम्बन्धत्वविरहात्।

'यत्तु'मते दर्शितदोषत्रयवारणायायासकरणे गौरवापाताद् लाघवमिच्छतो गुरुतरायासकरणे उद्देश्यासिद्ध्याऽऽयासवैफल्यप्रसङ्गादिति प्रकाशः।[१६२]

तत्त्वालोकः — **ननु व्यापकतावच्छेदकत्वरूपाभावप्रतियोगितावच्छेदकत्वेन हेतुरेवोपादेयो न तु हेत्वधिकरणत्वम्, तथा च हेत्वधिकरणत्वस्य लक्षणाघटकतया तद्विचारोऽर्थान्तरग्रस्त इति चेद्।**

**यदि विशिष्टसत्तावानिति प्रतीतेर्विशिष्टसत्त्वस्य गुणे सत्तया तत्राप्रामाण्याय विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावगाहित्वे विशिष्टसत्तावान्नेति प्रतीतेरपि विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावच्छिन्नभेदावगाहित्वं तदा विशिष्टसत्ताधिकरणत्वावगाहित्वमेवेति नोक्तप्रतीतिसिद्धाभावस्य हेतुतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वमिति विशिष्टसत्त्वे हेतावव्याप्तेर्न तस्य लक्षणाघटकता।**

**यद्यपि विशिष्टसत्ता नास्तीति प्रतीतौ विशिष्टसत्ताभावस्य भासमानत्वेऽपि तस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया विरोधित्वकल्पनाद्गुणे प्रमात्वस्योक्तप्रतीतेरिव विशिष्टसत्तावान्नेति प्रतीतेरपि विशिष्टसत्तात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदावगाहित्वेऽपि तस्य प्रतियोगितावच्छेदकतावच्छेदकीभूतधर्मावच्छिन्नाधिकरणतया विरोधित्वस्वीकारात्प्रमात्वं गुणेऽप्युपपद्यत इति विषमो दृष्टान्तस्तथापि विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकभेदस्य तादृशावच्छेदकतात्वावच्छिन्नाधिकरणतयैव विरोधित्वेन तत्कोटौ विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वस्याप्रविष्टत्वात्प्रविष्टस्य विशिष्टसत्त्वस्य गुणसाधारणत्वादुक्ताधिकरणत्वस्य द्रव्यत्वत्वे सत्तयाऽव्याप्तिर्दुरुद्धरैव।**

यत्र विशिष्टसत्त्वं साक्षादवच्छेदकं तत्रैव हि विरोधनिरूपकतया तदधिकरणत्वं व्यवस्थितम्, प्रकृते च तादृशावच्छेदकत्वस्यैव प्रतियोगितावच्छेदकत्वेन तदवच्छेदकावच्छिन्नाधिकरणताया एव विरोधनिरूपकत्वम्, तत्र च विशिष्टसत्तात्वावच्छिन्नाधिकरणता कथञ्चिदपि[1] नान्तर्भवतीति सूक्ष्ममीक्षणीयम्।[१६३]

*प्रकाशः* – 'नन्वि'त्याद्युपर्युक्ततत्त्वालोकेन हेत्वधिकरणत्वस्य लक्षणाघटकत्वं स्वीकृत्य सामान्यधर्मावच्छिन्नाधिकरणत्वानङ्गीकारेऽपि क्षतेरसम्भवेन हेत्वधिकरणत्वविचारोऽप्रासङ्गिक इत्याशङ्कते।

द्रव्यं विशिष्टसत्त्वादित्यादौ द्रव्यत्वत्वं विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकमित्येवंविधसाध्यतावच्छेदकधर्मिकव्यापकतावच्छेदकत्वज्ञानात्तथा हेतुधर्मिक(विशिष्टसत्तादिधर्मिक)दर्शितव्यापकतावच्छेदकत्वरूपाभावप्रतियोगितावच्छेदकत्वज्ञानाद् ('द्रव्यत्वत्वधर्मिकविशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वरूपाभावप्रतियोगितावच्छेदिका विशिष्टसत्ता' इत्याकारकज्ञानाद्) एव विशिष्टसत्तादिहेतुकद्रव्यत्वाद्यनुमितिर्जायते, तादृशानुमितिकारणीभूतव्याप्तिज्ञानविषयव्याप्तिघटकतया हेतुरेवोपादेयो न तु हेत्वधिकरणत्वमिति पूर्वपक्षितुराशयः। एतदेव 'ननु व्यापकतावच्छेदकत्वरूपाभावप्रतियोगितावच्छेदकत्वेन हेतुरेवोपादेयो न तु हेत्वधिकरणत्वन्तथा च हेत्वधिकरणत्वस्य लक्षणाघटकतया तद्विचारोऽर्थान्तरग्रस्त इती'त्यनेन सूचितम्।

हेत्वधिकरणत्वस्य लक्षणघटकत्वावश्यकताप्रतिपादनद्वाराऽनुपदोक्तशङ्कानौचित्यं 'यदी'त्यादिना दर्श्यते। गुणे विशिष्टसत्त्वस्य सत्तानतिरिक्तत्वेन विद्यमानतया तत्र (गुणे) विशिष्टसत्तावानिति प्रतीतेः प्रामाण्याभावाय विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वविषयकत्वस्वीकार आवश्यकः, अन्यथोक्ता प्रतीतिर्गुणेऽप्रमा न स्याद्, विशिष्टस्य शुद्धानतिरिक्तत्वेन शुद्धसत्तायास्तत्र सत्त्वेन विशिष्टाया अपि तस्यास्तत्र सत्त्वाद्, उक्तयुक्त्या विशिष्टसत्तावानिति नञ्रहितप्रतीतेर्विशिष्टसत्तात्वावच्छिन्नाधिकरणविषयकत्वावश्यकत्वे विशिष्टसत्तावान्नेति नञ्घटितविरोधिप्रतीतेर्गुणे प्रामाण्याय विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वविषयकत्वस्वीकार आवश्यकः, विशिष्टसत्तावान्नेति प्रतीतेर्विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वविषयकत्वे स्वीकृते सति तुल्यन्यायाद् द्रव्यत्वत्वं विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकमिति प्रतीतेरपि विशिष्टसत्ताधिकरणत्व(विशिष्टसत्तात्वावच्छिन्नाधिकरणत्व)विषयकत्वमेव। अतो द्रव्यत्वत्वं

---

१. 'कथञ्चिदि'त्येव प्राचीनमुद्रितपुस्तके।

विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकमिति प्रतीतिसिद्धव्यापकतावच्छेदकत्व-रूपाभावस्य विशिष्टसत्तात्वरूपहेतुतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताका-भावत्वम्, अर्थाद्धेतुतावच्छेदकावच्छिन्नाधिकरणत्वाघटिताभावत्वं द्रव्यं विशिष्ट-सत्त्वादित्यत्र द्रव्यत्वसाध्यकविशिष्टहेतौ अव्याप्तिदोषान्नैव शङ्कितुं शक्यम्, किन्तु हेतुतावच्छेदकत्वावच्छिन्नाधिकरणत्वमेव व्यापकतावच्छेदकत्वरूपाभावप्रतियोगिता-वच्छेदकम्। अन्यथा द्रव्यत्वत्वस्य विशिष्टसत्तावद्गुणनिष्ठाभावप्रतियोगिता-वच्छेदकत्वेन तत्राव्याप्तिः स्यात्। एतदेव 'यदि' इत्यारभ्य 'विशिष्टसत्त्वे हेतावव्याप्तेर्न तस्य लक्षणाघटकते'त्यन्तेन बुबोधयिषितम् बोधितम्।

'नन्वि'त्यादिना प्रथममुपपादितशङ्कायाः पुनः समर्थनाय 'यद्यपी'त्यादिना पुनरुच्यते यद् विशिष्टसत्तास्तीति प्रतीतेर्गुणेऽप्रामाण्याय विशिष्टसत्तात्वावच्छिन्ना-धिकरणत्वावगाहित्वस्वीकारावश्यकत्वमिव विशिष्टसत्ता नास्तीति प्रतीतेर्विशिष्टसत्ता-त्वावच्छिन्नाधिकरणत्वाभावावगाहित्वस्वीकारो नावश्यकस्तस्यां प्रतीतौ विशिष्टसत्ता-भावस्यैव भासमानत्वेऽपि तस्य विशिष्टसत्ता नास्तीति प्रतीतिविषयविशिष्टसत्ताभावस्य विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वेन सहैव विरोधित्वकल्पनादेव तस्याः प्रतीतेर्गुणे विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वरूपविरोधिनोऽसत्त्वेन तत्र प्रामाण्यसम्भवात्। विशिष्टसत्ता नास्तीतिं प्रतीतौ विशिष्टसत्ताभावस्यैव विषयत्वमिव विशिष्टसत्तावान्नेति प्रतीतावपि विशिष्टसत्तात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्यैव, न तु विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य भासमान-त्वेऽपि तस्य = विशिष्टसत्तावान्नेति प्रतीतिविषयविशिष्टसत्तात्वावच्छिन्नावच्छेदकता-कप्रतियोगिताकभेदस्य, स्वप्रतियोगितावच्छेदकतावच्छेदकीभूतविशिष्टसत्तात्वा-वच्छिन्नाधिकरणत्वेन सहैव विरोधकल्पनाद्गुणे विशिष्टसत्तात्वावच्छिन्नाधिकरणत्व-विरहेण तत्र (गुणे) विशिष्टसत्तावान्नेति प्रतीतेः प्रमात्वोपपत्तिसम्भवाद् विषमो दृष्टान्तः। अर्थाद् विशिष्टसत्तावानिति प्रतीतेर्विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावगाहित्वमिव विशिष्टसत्तावान्नेति प्रतीतेर्न विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावच्छिन्नभेदा-वगाहित्वम्, किन्तु विशिष्टसत्तात्वावच्छिन्ननिष्ठावच्छेदकताकप्रतियोगिताकाभेदा-वगाहित्वमेव।

अत्र 'तथापी'त्यादिना समाधीयते यद् विशिष्टसत्तात्वावच्छिन्नावच्छेदक-ताकप्रतियोगिताकभेदस्य स्वप्रतियोगितावच्छेदकतावच्छेदकविशिष्टसत्तात्वावच्छिन्ना-धिकरणत्वेन सहैव विरोधित्वं प्रकल्प्य विशिष्टसत्तावान्नेति प्रतीतेर्गुणे प्रमात्वमुपपाद्य विशिष्टसत्तात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदावगाहित्वस्वीकारसम्भवेऽपि

विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकं द्रव्यत्वत्वमित्येवं प्रतीतिविषयस्य विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकभेदस्य न विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वेन सह विरोधः, किन्तु विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वावच्छिन्नाधिकरणत्वेन सहैव, तत्कोटौ = विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकभेदस्य विरोधिकोटौ, विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाधिकरणे विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदके विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वप्रवेशविरहेण तत्र प्रविष्टस्य विशिष्टसत्त्वस्य शुद्धसत्त्वानतिरिक्ततया गुणेऽपि सद्भावात्तदधिकरणत्वस्य = विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकभेदविरोधिनो विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाधिकरणत्वस्य, द्रव्यत्वत्वे सत्त्वेन द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिर्दुरुद्धरैव स्यात्।

यत्र विशिष्टसत्त्वं = विशिष्टसत्तात्वं साक्षादवच्छेदकं भवति, अर्थाद् यादृशात्यन्ताभावस्य विशिष्टसत्तात्वं साक्षादवच्छेदकं भवति, तत्र यथा गुणे विशिष्टसत्ता नास्तीति प्रतीतिसिद्धाभावस्थले, अथवा विशिष्टसत्तैव यत्र भेदस्य साक्षात्प्रतियोगितावच्छेदिका भवति यथा गुणो विशिष्टसत्तावान्नेति प्रतीतिसिद्धभेदस्थले, तत्रैव तदधिकरणत्वस्य = विशिष्टसत्त्वाधिकरणत्वस्य = विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वस्य, विरोधनिरूपकत्वं व्यवस्थितम्, न तु परम्परया तदवच्छेदकत्वस्थले, यथा विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकमिति प्रतीतिसिद्धभेदस्थले, तत्र विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्यैव तादृशभेदरूपाभावस्य साक्षात्प्रतियोगितावच्छेदकत्वेन तदवच्छेदकावच्छेदकावच्छिन्नाधिकरणताया एव विरोधनिरूपकत्वेन तत्र विशिष्टसत्तात्वावच्छिन्नाधिकरणताया कथञ्चिदपि अन्तर्भावविरहेण द्रव्यं विशिष्टसत्त्वादित्यत्र व्याप्तिर्दुरुद्धरा स्यादिति 'नन्वि'त्यादिना विहितशङ्कायाः समाधानम्।

अत्र खण्डे 'तत्र च विशिष्टसत्तात्वावच्छिन्नाधिकरणता कथञ्चिदपि नान्तर्भवती'त्यत्र सङ्केतं विधाय मत्पितृचरणकृट्टिप्पणी— 'परम्परासम्बन्धावच्छिन्नविशिष्टसत्तात्वावच्छिन्नाधिकरणतयैव विरोधः प्रसक्तः, स च न युक्तः, साक्षादनवच्छेदकत्वादिति भावः'[१] इति।

---

१. प्रकाशकृतां पितृचरणानां तत्त्वालोककृतां साक्षाच्छिष्याणां पण्डितषष्ठीनाथमिश्राणां प्राचीनमुद्रिततत्त्वालोकपुस्तकस्थैषा टिप्पणी, तत्रैव पृ. ७४

अस्या अपि मद्वर्णिताभिप्रायकत्वमेव, विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकमिति प्रतीतिसिद्धव्यापकतावच्छेदकत्वरूपाभावप्रतियोगितायाः साक्षादवच्छेदकत्वस्य तादृशप्रतियोगितावच्छेदकत्व एव सत्त्वेन विशिष्टसत्त्वस्य साक्षादवच्छेदकत्वविरहात्तदधिकरणतायास्तत्र विरोधनिरूपकत्वव्यवस्थितेरभावात्, तत्र विशिष्टसत्त्वाधिकरणत्वप्रवेशविरहे च द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तेर्दुरुद्धरत्वादिति तदाशयादिति भावः ।[१६३]

तत्त्वालोकः – केचित्तु — अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वेन धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वन्नास्तीति बुद्धेर्धूमत्वविशिष्टवैशिष्ट्यावगाहितया भ्रमत्वापत्त्या न ततोऽर्थसिद्धिः। तद्विशिष्टवैशिष्ट्यावगाहित्वं हि तद्गतरूपवृत्तिनिरूपकताकाधिकरणत्वावगाहित्वमेव, महानसीयवह्निविषयकज्ञानं वह्निमद्वह्निविषयकज्ञानम्महानसीयवह्निमदित्यनयोर्विशिष्टवैशिष्ट्यावगाहिनोरन्यथाऽप्रामाण्यानुपपत्तेः। धूमवानिति प्रमाया न धूमत्वविशिष्टवैशिष्ट्यावगाहित्वं येन धूमत्वगतैकत्ववृत्त्यधिकरणत्वसिद्धिः स्यात्। तत्रैव हि विशिष्टवैशिष्ट्यावगाहित्वं यत्र विशिष्टवैशिष्ट्यावगाह्युपलक्षितवैशिष्ट्यावगाहिनोः प्रमात्वाप्रमात्वयोर्विशेषोपलब्धिरिति — वदन्ति।

भवन्ति ते 'विशिष्टवैशिष्ट्यावगाहिमर्यादान्नातिशेते' इति नियमतात्पर्यानभिज्ञाः, व्यक्तीभविष्यति हि तदर्थः पृथिवीसमवेतत्वस्योपलक्षणतया प्रतियोगितावच्छेदकत्वोपपादनावसरे। भवतु वा धूमत्वावच्छिन्नाधिकरणतावगाहित्वेनोक्तप्रतीतेर्भ्रमत्वम् तावतापि तया धूमत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावसिद्धौ किम्बाधकमाकलयन्तीति न विद्मो वयम्, धूमासत्त्वनिबन्धनभ्रमत्वस्यैव हि तादृशार्थबाधकतायां न्याय्यत्वात्। 'तत्रैव हि विशिष्टवैशिष्ट्यावगाहित्वमि'त्यादि यदुक्तन्तेन जानीमहे न दृष्टन्तैर्लोहितोष्णीषाधिकरणम्, तत्र हि विशिष्टवैशिष्ट्यावगाहित्वस्यौत्सर्गिकत्वं व्यवस्थापितमनुभूयतेऽपि च, तदानीमरक्तस्य दण्डस्य सत्त्वेऽत्र रक्तदण्डोऽस्तीति वादिनं प्रति तद्दण्डालोचनवतामुपहासाद्युपलब्धेरिति ।[१६४]

*प्रकाशः* – 'ननु व्यापकतावच्छेदकत्वरूपाभावप्रतियोगितावच्छेदकत्वेन हेतुरेवोपादेयो न तु हेत्वधिकरणत्वमि'त्यादिना पूर्वं यत्पूर्वपक्षितन्तत्र विषये केचन यद्वदन्ति तस्योपपादनन्तत्खण्डनञ्च 'केचित्त्वभावे'त्यादिनोपर्युक्ततत्त्वालोकखण्डेन विधातुमिहोपक्रमः।

वह्निमान् धूमादित्यत्र वह्नित्वरूपसाध्यतावच्छेदकधर्मिकधूमवद्वृत्त्यभाव-प्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीत्यात्मकव्यापकतावच्छेदकत्वरूपाभावबुद्धेर्धूम-त्वविशिष्टवैशिष्ट्यावगाहितया भ्रमात्मकता, भ्रमात्मिकया च तया बुद्ध्या धूमहेतुक-वह्न्यनुमितिरूपस्यार्थस्यासिद्धिः। उक्तबुद्धेरभावबुद्धित्वाद्विशिष्टवैशिष्ट्यावगाहिता अर्थाद्धूमत्वविशिष्टवैशिष्ट्यावगाहिता, अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात्। तस्या बुद्धेर्यतो धूमत्वविशिष्टवैशिष्ट्यावगाहित्वरूपविशिष्टवैशिष्ट्यावगाहिता, अतस्तस्या असदर्थस्य धूमत्वरूपसामान्यधर्मावच्छिन्नाधिकरणत्वस्यावगाहिता, यतो हि तद्गतरूपवृत्तिनिरूपकताकाधिकरणत्वावगाहित्वमेव = स्वावच्छेदकतात्वावच्छिन्न-पर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन धूमत्वगतैकत्ववृत्तिनिरूपकताकाधिकरणत्वा-वगाहित्वमेव, तद्विशिष्टवैशिष्ट्यावगाहित्वम् = धूमत्वविशिष्टवैशिष्ट्यावगाहित्वम्।

अत एव = तद्गतरूपवृत्तिनिरूपकताकाधिकरणत्वावगाहित्वस्यैव तद्विशिष्ट-वैशिष्ट्यावगाहित्वादेव, महानसीयवह्निविषयकं ज्ञानं वह्निमद् वह्निविषयकं ज्ञानं महानसीयवह्निमद्— अनयोर्द्वयोर्विशिष्टवैशिष्ट्यावगाहिनोर्ज्ञानयोरप्रामाण्यमुपपद्यते, क्रमशो वह्नित्वगतैकत्वगतवृत्तिनिरूपकताकमहानसीयत्ववह्नित्वगतद्वित्ववृत्तिनिरूपक-ताकाधिकरणत्वयोरवगाहित्वात्।

धूमवानिति प्रतीतिरर्थाद् विषयित्वसम्बन्धान्यसंयोगादिसम्बन्धेन धूमवानित्या-कारिका या प्रमात्मिका प्रतीतिः, सा न धूमत्वविशिष्टवैशिष्ट्यावगाहिनी, अर्थाद्धूमत्व-गतैकत्ववृत्तिनिरूपकताकाधिकरणत्वावगाहिनी, अतो न धूमत्वगतैकत्ववृत्तिनिरूपक-ताकाधिकरणत्वसिद्धिरर्थाद्धूमत्वरूपसामान्यधर्मावच्छिन्नाधिकरणत्वसिद्धिः।

तत्रैव विशिष्टवैशिष्ट्यावगाहिता भवति, यत्र विशिष्टवैशिष्ट्यावगाह्युप-लक्षितवैशिष्ट्यावगाहिनोः प्रमात्वाप्रमात्वयोर्विशेषोपलब्धिर्भवति, यथा – धूमवानिति प्रतीतेः प्रमात्वाद्धूमत्वोपलक्षितवैशिष्ट्यावगाहिता, महानसीयवह्निविषयकं ज्ञानं वह्नि-मद् वह्निविषयकं ज्ञानं महानसीयवह्निमदित्यनयोरप्रमात्वाद्विशिष्टवैशिष्ट्यावगाहिता। अतो धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वन्नास्तीति बुद्धेर्विशिष्टवैशिष्ट्यावगाहिन्या महानसीयवह्निविषयकं ज्ञानं वह्निमदिति बुद्धेरिव अप्रमात्वाद् = भ्रमरूपत्वाद् न ततोऽर्थसिद्धिरिति निर्गलितार्थः।

वह्नित्वगतैकत्ववृत्तिनिरूपकताकविषयित्वसम्बन्धावच्छिन्नाधिकरणताया वह्निविषयकज्ञाने प्रसिद्धाया महानसीयवह्निविषयकज्ञानेऽभावेन महानसीयवह्निज्ञानं वह्निमदित्यस्य ज्ञानस्याप्रमात्वम् एवं महानसीयवह्निज्ञानं महानसीयत्व-वह्नित्वगतद्वित्ववृत्तिनिरूपकताकविषयित्वसम्बन्धावच्छिन्नाधिकरणताया महानसीय-वह्निज्ञानं महानसीयवह्निमदिति प्रमात्मकज्ञाने प्रसिद्धाया वह्निज्ञानं महानसीयवह्निमदिति ज्ञाने विरहेण तत्र तादृशाधिकरणत्वावगाहिनस्तस्याप्रमात्वं युक्तम्। धूमत्वगतै-कत्ववृत्तिनिरूपकताकविषयित्वसम्बन्धावच्छिन्नाधिकरणताया विषयितया धूमवज्ज्ञाने प्रसिद्धत्वेऽपि संयोगेन धूमवानिति प्रमात्मकज्ञानीयाया संयोगसम्बन्धावच्छिन्नाया धूमत्वगतैकत्ववृत्तिनिरूपकताकाधिकरणताया संयोगेन धूमवानिति प्रमाया धूमत्वविशिष्टवैशिष्ट्यानवगाहिन्या एव सत्त्वेनाप्रसिद्धत्वेन तदवगाहित्वस्य वह्नित्वे धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वन्नास्तीति बुद्धौ स्वीकारे तस्या असदर्था-वगाहितया भ्रमत्वापत्तिस्ततश्च ततोऽर्थासिद्धिरिति केषाञ्चिदाशयः।

'ते' इत्यादिना खण्ड्यते उपर्युपपादितं केषाञ्चिन्मतम्। उक्तवादिनस्ते 'अभावबोधो हि विशिष्टवैशिष्ट्यावगाहिमर्य्यादान्नातिशेते' इति नियमतात्पर्य्यन्न जानन्ति। व्यक्तीभविष्यति = प्रकाशीभवष्यति, तदर्थः = 'विशिष्टवैशिष्ट्यावगाहि-मर्य्यादान्नातिशेते' इति नियमतात्पर्य्यार्थः, पृथिवीसमवेतत्वस्योपलक्षणतया प्रतियोगि-तावच्छेदकत्वोपपादनावसरे = जागदीश्या अवच्छेदकत्वनिरुक्तेस्तत्त्वालोकाख्यायां विवेचनायाम्।

अवच्छेदकत्वनिरुक्तौ जगदीशेन 'पृथिवीसमवेतत्वासमनियतस्यापि च समवेतत्वस्य पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वमनतिप्रसङ्गादि'त्युक्तम्।[1] तेन अभावबोधे विशिष्टवैशिष्ट्यावगाहित्वनैयत्यविरहो बोधितो भवति, अत एव अभावबोधो विशिष्टवैशिष्ट्यावगाही एव भवतीत्यनभिधाय 'विशिष्टवैशिष्ट्य-मर्य्यादान्नातिशेते' इत्येवोक्तम्।

व्युत्पत्तिवादे 'प्रतियोगिविशेषिताभावज्ञानञ्च विशिष्टवैशिष्ट्यबोधमर्य्यादान्ना-तिशेते इति दर्शनात्केवलं विशेष्ये विशेषणमिति रीत्या न कश्चिदभ्युपैती'ति गदाधरोक्तिः।[2]

---

१. जागदीशी टीका (सोमनाथोपाध्यायसम्पादिता), अवच्छेदकत्त्वनिरुक्तिः, पृ. २५७

२. व्युत्पत्तिवादः (श्रीकीर्त्यानन्दझासम्पादितः, वाराणसी, १९७६), पृ. ३५-३६

तत्र 'केवलं विशेष्ये विशेषणमिति रीत्ये'ति परिगृह्य तत्त्वालोककृता — 'विशेष्यसम्बन्धिनि तद्द्वारा ह्यसम्बद्धत्वमिह कैवल्यमभावप्रत्ययस्थले तन्नास्तीत्यर्थः। एवञ्चाभावस्थले प्रतियोगिप्रकारस्योपलक्षणत्वव्यावृत्तिरनुदर्शिता भवति। तेन हि गन्धप्रागभाववान्नास्ति, रक्तदण्डो नास्तीत्यादौ गन्धप्रागभाव-रक्तत्वादेः प्रतियोगि-प्रकारस्याप्युपलक्षणत्वमुक्तं न विरुद्ध्यते, उपलक्षणस्यापि तस्य स्वावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वयस्याभ्युपगतत्वेन कैवल्यविरहात्। अत एव अभावबोधो हि विशिष्टवैशिष्ट्यावगाह्येव भवतीत्यनभिधाय तत्र तत्राभावबोधो हि विशिष्टवैशिष्ट्यावगाहिमर्य्यादान्नातिशेते इत्युक्तिः, विशिष्टवैशिष्ट्यावगाहिनो रीतिं विशेषणविशेष्योभयसम्बन्धावगाहित्वलक्षणां नातिक्रामतीति तु तदर्थः। प्रतियोगि-प्रकारस्य विशेषणत्वोपलक्षणत्वे प्रत्ययकालसत्त्वासत्त्वनिबन्धने, न तु विशेष्य-सम्बन्धिसम्बद्धत्वासम्बद्धत्वप्रयुक्ते, ताभ्यां विशेषणत्वोपलक्षणत्वाभ्यामवच्छेदकत्व-वैलक्षण्यस्याङ्गीकारादभावयोर्नवैलक्षण्यमिति बोध्यमि'ति[1] तत्त्वालोको विहितः।

अवच्छेदकत्वनिरुक्तितत्त्वालोकं विदधता तेन समनियतलघुधर्मस्य प्रतियोगितावच्छेदकत्वनियमेऽन्वयव्यभिचारमुक्त्वा व्यतिरेकव्यभिचारमाह – पृथिवी-समवेतत्वेति।

अथ पृथिवीसमवेताभावस्य जलादिवृत्तेस्समवेतत्वमात्रेऽवच्छेदकत्वस्या-नभ्युपगमात्कुतो व्यभिचार इति चेन्न, पृथिवीसमवेतत्वोपलक्षिताभावस्य समवायिमात्रावृत्तेरवच्छेदकत्वस्य समवेतत्वमात्रे स्वीकारे क्षतिविरहेण तत्रैव व्यतिरेकव्यभिचारे तात्पर्य्यात्।

न चैतादृशावच्छेदकत्वमप्रामाणिकम्, दण्डी पुरुषो नास्तीत्यादौ दण्डादे-स्तादृशावच्छेदकतायास्स्वीकारात्। अत एव सत्तान्यपृथिवीसमवेतशून्यं वायुत्वा-दित्यस्य व्यभिचारित्वाभिधानं दीधितिकृतः सङ्गच्छते।

अभावबोधस्य विशिष्टवैशिष्ट्यावगाहित्वनियमोऽपि प्रतियोग्यंशेऽभासमानस्य प्रतियोगितावच्छेदकत्वमेव व्यासेधति, तावतैव व्यधिकरणधर्मावच्छिन्नाभाव-निराकरणसम्भवात्।

प्रतियोग्यंशे उपलक्षणतयाऽभाननियमोऽप्यनवच्छेदकस्य तथा (अवच्छेदक-तया) भाननिराकरणपरः, तावतैव च तद्घटवति एतद्घटांशे उपलक्षणतया घटत्वं

---

१. व्युत्पत्तिवादः (श्रीकीर्त्यानन्दझासम्पादितः, वाराणसी, १९७६), गूढार्थतत्त्वालोकः, पृ. ३५

विषयीकृत्य घटो नास्तीति प्रतीतेरेतद्घटप्रतियोगिताकाभावावगाहिन्या वारणात् तत्र घटत्वस्यानवच्छेदकत्वात्।

नहि घटत्वस्यावच्छेदकत्वमविषयीकृत्य प्रतिबध्यप्रतिबन्धकभावगुरुत्वापादकं यावद्घटाभावमादायातिप्रसञ्जकञ्च घटत्वसमनियतप्रतियोगिताकाभावावगाहित्वं तस्याः स्वीकुर्मः, येन तावतैवोक्तप्रतीतेर्वारणेनोक्तनियमस्याप्रामाणिकत्वं भवेत्।

न चोपलक्षणतया भासमानस्याप्यवच्छेदकत्वे विशिष्टाभावादुपलक्षिताभावस्याव्यावृत्तिः प्रसज्येतिदेश्यम् विशिष्टप्रतियोगिकस्य विशेष्यमात्रप्रतियोगिकस्य च संसर्गस्य प्रतियोगितावच्छेदकत्वाङ्गीकारेण तदुपपत्तेः, एकत्वप्रागभाववद्घटस्य संयोगेनाभावप्रतियोगितावच्छेदकत्वस्य विशिष्टप्रतियोगिकसंसर्गस्याप्रसिद्धत्वेन असम्भवेऽपि तादृशस्थलेऽगत्या प्रतियोगितापर्य्याप्तिर्विशेषणविशेष्ययोरुभयोर्विशिष्टस्थले, उपलक्षितस्थले तु विशेष्यमात्रेऽङ्गीकारेणोभयोरुपपत्तेश्च।

केचित्तु— पृथिवीसमवेताभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य समवेतत्वावच्छिन्नप्रतियोगिताकत्वेऽपि क्षत्यभावात्, तदभिप्रायेणैवोक्तग्रन्थः। न च प्रतियोगितावच्छेदकत्वं वृत्तित्व एवोचितमिति शङ्क्यम्, समवेतत्वस्य समवायरूपतया लाघवानवकाशादित्याहुः।

परे तु— किञ्चिद्धर्मावच्छिन्नानुयोगिकवैशिष्ट्यावच्छिन्नाधिकरणताया एव विलक्षणत्वेन पृथिवीसमवेताभावस्य जलादावभावात् समवेतत्वस्यावच्छेदकत्वं न क्षतिमावहतीति न तद्ग्रन्थासङ्गतिः। तादृशाधिकरणताया एव वैलक्षण्यमेतदर्थं हि द्रव्यत्वसामानाधिकरण्यवतः परामर्षाद्गुणे द्रव्यत्वानुमितिः प्रमा स्यादित्यादिग्रन्थाः सम्वदन्तीति वदन्ति। तच्चिन्त्यम्। घटवृत्तित्वविशिष्टवाच्यत्वाभावप्रतियोगितावच्छेदकताया वैशिष्ट्यमात्रे प्रतिपादितत्वादुक्तग्रन्थानामुपलक्षणतयाप्युपपत्तेरिति।[१]

प्रक्रान्त'केचित्तु'मतखण्डनाय प्रकृतखण्डे 'भवतु वे'त्यादिनाऽपरां युक्तिमुपस्थापयति तत्त्वालोककृद् यद्— धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतेर्धूमत्वावच्छिन्नावगाहित्वेन भ्रमत्वेऽपि तावतापि तया प्रतीत्या धूमत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावसिद्धौ वह्नित्वरूपसाध्यतावच्छेदकधर्मिकधूमात्मकहेतुमद्वृत्त्यभावप्रतियोगितावच्छेदकत्वाभावरूपव्यापकतावच्छेदकत्वरूपाभावसिद्धौ ते किं बाधकमाकलयन्तीति वयं न विद्मः। अर्थादुक्तप्रतीत्या

१. अवच्छेदकत्वनिरुक्तिजागदीशी, तत्त्वालोकः, हस्तलिखितपत्र सं. ४, ख. ९

धूमत्वावच्छिन्नाधिकरणत्वावगाहित्वभ्रमात्मिकयाऽपि उक्ताभावसिद्धौ किमपि बाधकं नास्ति उक्तप्रतीतेर्धूमासत्त्वनिबन्धनं भ्रमत्वं यद्यभविष्यत्तदा तस्या उक्ताभावसाधकत्वन्नाभविष्यत्, तथा तु = धूमासत्त्वनिबन्धनभ्रमत्वन्तु स्वेनापि तेन तत्र नाङ्गीक्रियते, ततः कुतस्तस्यास्तादृशाभावसाधकता न स्यादिति।

पर्वतमहानसादौ यदि धूमो न स्यात्तदैव तत्र धूमासत्त्वजनितभ्रमत्वमापन्नया धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीत्या धूमत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकव्यापकतावच्छेदकत्वरूपाभावसिद्धिर्भवितुमशक्या स्यात्, तथा नास्ति, अतस्तया प्रतीत्या तादृशाभावः सिद्ध्यत्येवेति भावः।

तथा तत्रैव विशिष्टवैशिष्ट्यावगाहित्वं यत्र विशिष्टवैशिष्ट्यावगाह्युपलक्षितवैशिष्ट्यावगाहिनोः प्रमात्वाप्रमात्वयोर्विशेषोपलब्धिरिति यदुक्तं तेन जानीमो वयं यत्ते लोहितोष्णीषाधिकरणन्न दृष्टवन्तः। तत्र लोहितोष्णीषाधिकरणे अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वस्यौत्सर्गिकत्वं व्यवस्थापितमस्ति। अनुभूयते च तदानीमरक्तस्य दण्डस्य सत्त्वे 'अत्र रक्तदण्डो नास्ती'ति वादिनम्प्रति तद्दण्डालोचनवत्कर्तृकोपहासोपलब्धिः, तत्र रक्तत्वस्योपलक्षणतयैव प्रविष्टत्वेन रक्तत्वोपलक्षितदण्डप्रतियोगिकाभावस्य तत्रासत्त्वात्।

पृथिवीसमवेतं नास्ति, दण्डी पुरुषो नास्ति, रक्तदण्डो नास्ति, गन्धप्रागभाववान् नास्तीत्यादौ समवेतत्वादिमात्रस्यावच्छेदकत्वाभ्युपगमेन तत्र नियमांशे 'विशिष्टमर्य्यादान्नातिशेत' इत्युक्त्या लोहितोष्णीषाधिकरणेऽभावबोधे विशिष्टवैशिष्ट्यावगाहित्वस्य स्पष्टत औत्सर्गिकत्वोक्त्या च धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वन्नास्तीति अभावबुद्धेर्धूमत्वविशिष्टवैशिष्ट्यावगाहित्वावश्यकत्वविरहात्तस्या भ्रमत्वापत्तेरभावात्केचित्तूक्तिरसङ्गतेति सारांश इति भावः।[१६४]

तत्त्वालोकः – **अथ महानसीयवह्न्यभावत्वसाध्यके महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वेन सम्बन्धेन वह्निहेतुके विरुद्धेऽतिव्याप्तिः, वह्नित्वगतैकत्वे हेतुतावच्छेदकसम्बन्धावच्छिन्नस्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावन्महानसीयवह्न्यभावनिष्ठाधिकरणत्वघटितोभयाभावसत्त्वेन महानसीयवह्न्यभावस्यैव हेत्वधिकरणत्वादतः प्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे विवक्षणीयम्, तथा च लाघवेनोभयाभावमनिवेश्य हेतुतावच्छेदकगतरूपवृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रमीयविशेष्यतावत्त्वमेव हेत्वधिकरणपदार्थो**

वाच्यस्तावतैव सर्वदोषवारणसम्भवात्।

न चोपलक्षणीभूतस्य निरूपकतानवच्छेदकत्वेऽपि प्रकारतावच्छेदकत्वस्य स्वीकृततयोपलक्षणतया गुणकर्मान्यत्वावगाहिगुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रमीयविशेष्यतावत्त्वस्य गुणेऽपि सत्त्वाद् द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिरिति वाच्यम्; हेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्यन्निष्ठविशेष्यतानिरूपितप्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वस्य विवक्षितत्वाद् उपलक्षकधर्म्मस्य प्रकारतानवच्छेदकत्वाच्च।

न च गुणकर्मान्यत्वसत्त्वयोः समूहालम्बनबोधस्य गुणकर्मान्यत्वोपलक्षितसत्त्वावगाहिबोधस्य च किम्वैलक्षण्यमिति वाच्यम्, गुणकर्म्मान्यत्वप्रकारतानिरूपितविशेष्यत्वाभिन्नसत्त्वप्रकारताकत्व-तदभावयोरेव वैलक्षण्यप्रयोजकत्वात्।

एतेन— धूमत्वस्य संयोगसम्बन्धावच्छिन्नाधिकरणतामात्रानवच्छेदकत्वस्य व्यवस्थापितत्वेन स्वाश्रयाश्रयाधिकरणत्वस्यैव निवेशनीयतया द्रव्यं विशिष्टसत्त्वादित्यत्रानुपदोक्ताव्याप्तेर्न्न निस्तार— इति निरस्तम्।

विशेष्यतानिरूपितत्वञ्च विशेष्यतानिष्ठनिरूप्यतानिरूपितप्रकारतात्वावच्छिन्ननिरूपकतावत्त्वम्, नातः प्रमेयत्ववद् = महानसीयवह्निविषयकज्ञानवद् = वह्निमानिति विषयितया वह्न्यवगाहिवह्न्यंशे तादृशज्ञानमुपलक्षणतयावगाहमानज्ञानमादाय महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वप्रसङ्ग इति चेद्।

न। महानसीयवह्निविषयक-वह्निविषयकज्ञानान्यतरद्वह्निमदिति ज्ञानमादाय महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्तेः।

न च विशेष्यतायामुभयावृत्तिधर्मावच्छिन्नत्वं प्रकारतायाम्वा विशेष्यतावच्छेदकव्यापकविधेयप्रतियोगिकसंसर्गावच्छिन्नत्वम्वा विशेषणं तथा च न दोष इति वाच्यम्, यादृशसाध्यहेतुकस्थले हेतुमत्ताज्ञानन्नोभयावृत्तिधर्मावच्छेदेन नवाऽवच्छेदकावच्छेदेन चोत्पन्नन्तत्राव्याप्त्यापत्तेरिति।[१६५]

*प्रकाशः*– 'अथ महानसीयवह्न्यभावत्वसाध्यके' इत्यादिनोपर्य्युक्ततत्त्वालोकेन लाघवेनापरथा हेत्वधिकरणपदार्थव्यवस्थां विधातुं भूमिकामवतारयति— यत् पूर्वदर्शिते उभयाभावघटिते हेत्वधिकरणपदार्थे सति महानसीय-

वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्निना विरुद्धेन हेतुना महानसीयवह्न्यभावत्वसाध्यकेऽतिव्याप्तिः स्यात्।

तत्र हेतुतावच्छेदकवह्नित्वगतैकत्वरूपे महानसीयवह्न्यभावात्मकमधिकरणमादाय विवक्षितोभयाभावसत्त्वेन महानसीयवह्न्यभावस्यैव विवक्षितहेत्वधिकरणत्वापत्त्या साध्याभावस्य लक्षणघटकत्वविरहादभावान्तरमादायातिव्याप्तिः स्यात्, वह्नित्वगतैकत्वे महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वात्मकहेतुतावच्छेदकसम्बन्धेन स्वावच्छिन्न = वह्नित्वगतैकत्वावच्छिन्न,-वह्नित्वाश्रयमहानसीयवह्न्यधिकरणमहानसीयवह्न्यभावनिष्ठाधिकरणतानिरूपकतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेऽपि अधिकरणतानिरूपकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वविरहेण विवक्षितोभयाभावसत्त्वात्।

अत्र महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वरूपहेतुतावच्छेदकसम्बन्धप्रयोज्यैव महानसीयवह्न्यभावस्य साध्याधिकरणस्य पूर्वोक्तोभयाभावघटितहेत्वधिकरणपदार्थविवक्षायां महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन विरुद्धहेतोर्वह्नेरधिकरणता। यतो हि तत्र दर्शितहेतुतावच्छेदकसम्बन्धावच्छिन्ना महानसीयवह्न्यभावनिष्ठैवाधिकरणता, तादृशाधिकरणताया या निरूपकता सा महानसीयवह्निनिष्ठा, तदवच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वं महानसीयत्ववह्नित्वगतद्वित्व एव, न तु वह्नित्वगतैकत्वरूपे वह्नित्वगतैकत्वे, तदनवच्छेदकत्वस्यैव सत्त्वात्, तत्र तदनवच्छेदकत्वस्य सत्त्वेऽपि द्वितीयस्य प्रतियोगिनोऽधिकरणता (अधिकरणतानिरूपकता)वच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य विरहेणोभयाभावस्य सत्त्वात्।

अत्र तत्रोभयाभावसङ्गमनप्रकारे उभयाभावप्रतियोगिकोटौ यदि 'स्वावच्छिन्नाश्रयाधिकरणयन्निष्ठे'त्यपहाय हेतुतावच्छेदकसम्बन्धावच्छिन्न-स्वा(हेतुतावच्छेदकगतरूपा)वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकमहानसीयवह्नित्वावच्छिन्ननिरूपकताकाधिकरणत्वघटितोभयाभावो यथाश्रुत एवोपादीयेत तदा महानसीयवह्न्यभावनिष्ठा, या हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणता, तन्निरूपकता महानसीयवह्नित्वावच्छिन्ना, तदवच्छेदकता महानसीयत्व-वह्नित्वोभयनिष्ठा, सा कथं स्वा(हेतुतावच्छेदकगतरूपा = वह्नित्वगतैकत्वरूपा)वच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिनी भवेत्। महानसीयत्व-वह्नित्वगतद्वित्वरूपस्यैव तदनुयोगितावच्छेदकत्वाद् हेतुतावच्छेदकसम्बन्धावच्छिन्न-स्वावच्छिन्न-वह्नित्वगतैकत्वावच्छिन्नानुयोगिताक-

पर्य्याप्तिकावच्छेदकताकमहानसीयवह्नित्वावच्छिन्ननिरूपकताकाधिकरणताया विरहात्तत्रातिव्याप्त्यापादनन्न युज्येत।

अत उक्तसाध्यकोक्तसम्बन्धेनोक्तविरुद्धहेतुकस्थले प्राप्तातिव्याप्तिवारणाय हेतुतावच्छेदकगतरूपे प्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वनिवेशः कर्त्तव्यः स्यात्, तथानिवेशे सति उक्तस्थले हेतुतावच्छेदकवह्नित्वगतैकत्वरूपे प्रमीयहेतुतावच्छेदक = महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्व, - सम्बन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वविरहेणातिव्याप्तिर्न स्यात्, तत्र प्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य महानसीयत्व-वह्नित्वगतद्वित्व एव सत्त्वेन हेतुतावच्छेदकवह्नित्वगतैकत्वेऽभावात्।

एवंनिवेशे गौरवं भवति, अतो लाघवाद् उभयाभावमनिवेश्य हेतुतावच्छेदकगतरूपवृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रमीयविशेष्यतावत्त्वमेव हेत्वधिकरणपदार्थो विवक्षणीयः, एतावतैव सर्वदोषवारणसम्भवात्। अत्र हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारताया हेतुतावच्छेदकगतरूपवृत्तित्वं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन विवक्षितमवधेयम्।

महानसीयवह्न्यभावसाध्यके महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्निहेतुके विरुद्धे हेतुतावच्छेदकवह्नित्वगतैकत्वरूपे हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारताया दर्शितविवक्षितसम्बन्धेन वृत्तित्वविरहेण महानसीयवह्न्यभावस्य हेत्वधिकरणत्वासम्भवान्नातिव्याप्तिसम्भवः।

वह्निमान् धूमादित्यत्र प्रसिद्धस्थले हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारताया दर्शितविवक्षितसम्बन्धेन धूमत्वगतैकत्वे हेतुतावच्छेदकगतरूपे वृत्तितया तादृशप्रकारतानिरूपितप्रमीयविशेष्यतावत्त्वस्य पर्वतादौ सत्त्वेन तत्र हेत्वधिकरणत्वोपपत्तिः।

अत्र परिष्कारे 'न चोपलक्षणीभूतस्य चे'त्यादिना द्रव्यं विशिष्टसत्त्वादित्यत्र गुणस्य हेत्वधिकरणत्वापादनद्वाराऽव्याप्तिमाशङ्कते। तदर्थमिदमुच्यते यद् उपलक्षणीभूते निरूपकतावच्छेदकत्वविरहेऽपि प्रकारतावच्छेदकत्वस्य स्वीकृततया उपलक्षणतया गुणकर्मान्यत्वावगाहिनी गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति या प्रमात्मिका प्रतीतिस्तदीयविशेष्यतावत्त्वस्य, अर्थाद् गुणकर्मान्यत्व-सत्तात्वोभयगतद्वित्वात्मकहेतुतावच्छेदकगतरूपवृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रमीय-

विशेष्यतावत्त्वस्य, गुणे सम्भवाद्गुणस्य हेत्वधिकरणत्वापत्त्या द्रव्यत्वाभाव-(साध्याभाव)मादायाव्याप्तिः स्यादिति।

अत्र 'हेतुतावच्छेदकगतरूपे' इत्यादिना समाधीयते यत् स्वावच्छिन्ना(हेतुतावच्छेदकगतरूपावच्छिन्ना)नुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्-यन्निष्ठविशेष्यतानिरूपितप्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य हेतुतावच्छेदकगतरूपे विवक्षयोक्तदोषवारणसम्भवाद् गुणकर्मान्यत्व-सत्तात्वगतद्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्द्रव्यनिष्ठविशेष्यतानिरूपितहेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नप्रकारतावच्छेदकतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव हेतुतावच्छेदकगतोक्तरूपे सत्त्वेन गुणे उक्तहेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणताविरहेण गुणस्य 'यत्'पदेन धर्तुमशक्यतया हेत्वधिकरणत्वासम्भवात्, उपलक्षकधर्मस्य निरूपकतानवच्छेदकत्ववत्प्रकारताया अप्यनवच्छेदकत्वाच्च द्रव्यं विशिष्टसत्त्वादित्यत्र दोषासम्भवात्।

न चोपलक्षकधर्मस्य निरूपकतानवच्छेदकत्वमिव प्रकारताया अपि अनवच्छेदकत्वे गुणकर्मान्यत्व-सत्त्वयोः समूहालम्बनबोधस्य, अर्थाद् गुणकर्मान्यत्वनिष्ठप्रकारतानिरूपितविशेष्यतातो भिन्नविशेष्यताशालिनः सत्त्वनिष्ठप्रकारतावतो बोधस्य, गुणकर्मान्यत्वोपलक्षितसत्त्वनिष्ठप्रकारतानिरूपितविशेष्यताशालिबोधाद् वैलक्षण्यं न स्याद् गुणकर्मान्यत्वस्योभयत्र बोधे प्रकारतावच्छेदकत्वविरहादिति वाच्यम्, दर्शिते गुणकर्मान्यत्वसत्त्वयोः समूहालम्बनबोधे विभिन्नप्रकारतानिरूपितविभिन्नविशेष्यतयोः सत्त्वेऽपि समानाधिकरणत्वेन तयोर्विषयतयोर्जगदीशसिद्धान्तेऽभेदव्यवहारेण गुणकर्मान्यत्वप्रकारतानिरूपितविशेष्यत्वाभिन्नसत्त्वप्रकारताकत्व(गुणकर्मान्यत्वप्रकारतानिरूपितविशेष्यत्वाभिन्नविशेष्यताकसत्त्वप्रकारताकत्व)तदभावयोरेव तयोर्वैलक्षण्यप्रयोजकत्वाद् गुणकर्मान्यत्वोपलक्षितबोधे गुणकर्मान्यत्वरूपोपलक्षकधर्मे प्रकारत्वविरहाद् गुणकर्मान्यत्वप्रकारतानिरूपितविशेष्यत्वाभिन्नविशेष्यतानिरूपितसत्त्वप्रकारताकत्वासम्भवात्।

एतेन = द्रव्यं विशिष्टसत्त्वादित्यत्र प्रसञ्जिताव्याप्तिवारणाय दर्शितहेत्वधिकरणपदार्थभागे 'स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्यन्निष्ठविशेष्यते'ति भागे हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्याधिकरणतायां निवेशाभावेन, उक्ताधिकरणतावद्यन्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतायामेव हेतुता-

वच्छेदकसम्बन्धावच्छिन्नत्वनिवेशसत्त्वेन उपलक्षकधर्मस्य प्रकारताया अपि अनवच्छेदकत्वेन च— संयोगेन वह्निसाध्यकसंयोगेन धूमहेतुकस्थले धूमत्वस्य हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नपर्वत-महानस-चत्वरादिनिष्ठ-तत्तदधिकरणता-मात्रानवच्छेदकत्वस्य व्यवस्थापितत्वेन हेतुतावच्छेदकधूमत्वगतैकत्वरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावतो 'यत्'पदार्थप्रसिद्धेरभावात् पर्वतादौ हेत्वधिकरणत्वासम्भवादव्याप्तिः स्यात्, तद्वारणाय उक्ताधिकरणतास्थाने, अर्थाद्धेतुतावच्छेदकरूपावच्छिन्नानुयोगिकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतास्थाने स्वाश्रयाश्रयाधिकरणत्वस्य = हेतुतावच्छेदकगतरूपाश्रयाश्रयाधिकरणत्वस्य, निवेशे द्रव्यं विशिष्टसत्त्वादित्यत्र गुणेऽपि तादृशाधिकरणत्वसत्त्वेन तत्राव्याप्तिनिस्तारो न स्याद्— इति निरस्तम्।

तादृशनिरूपकताकाधिकरणताभागे हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशविरहेण धूमत्वस्य संयोगसम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वस्यैव व्यवस्थापितत्वेन संयोगेन कालिकादिसम्बन्धावच्छिन्नाया अधिकरणताया धूमत्वगतैकत्वरूपावच्छिन्नानुयोगिताकायाः प्रसिद्ध्यास्तादृशाधिकरणतावत्पर्वतादि 'यत्'-पदार्थनिष्ठविशेष्यतानिरूपितप्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकता-प्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य धूमत्वगतैकत्वे हेतुतावच्छेदकगतरूपे सम्भवेन वह्निमान् धूमादित्यत्राव्याप्तेरप्रसक्त्या 'स्वाश्रयाश्रयाधिकरणत्व'निवेशस्या-नावश्यकतया स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरण-तावद्यन्निष्ठविशेष्यतानिरूपितप्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदक-ताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतावच्छेदकगतरूपे विवक्षायां गुणे उक्ताधिकरणत्वविरहेण तत्राव्याप्तेरभावात्, उपलक्षकधर्मस्य प्रकारतानवच्छेद-कत्वेन हेतुतावच्छेदकगतरूपवृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपित-प्रमीयविशेष्यतावत्त्वरूपहेत्वधिकरणपदार्थे द्रव्यं विशिष्टसत्त्वाद् वह्निमान् धूमाद् [इत्यादौ] कुत्रापि दोषासम्भवाच्च।

उक्तनिवेशे प्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतायां तादृशाधिकरणता-वद्यन्निष्ठविशेष्यतानिरूपितत्वञ्च विशेष्यतानिष्ठनिरूप्यतानिरूपितप्रकारतात्वा-वच्छिन्ननिरूपकतावत्त्वरूपं विवक्षितम्। अन्यथा वह्निज्ञानत्वसाध्यकविषयिता-सम्बन्धेन वह्निसद्धेतुकस्थले महानसीयवह्निज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभाव-मादायाव्याप्तिः स्यात्।

तत्र महानसीयवह्निज्ञानस्य अन्यथा हेत्वधिकरणत्वापत्तिश्च प्रमेयत्ववद् = महानसीयवह्निविषयकज्ञानवद् = वह्निमानिति ज्ञानमादाय, यतो हि तत्र ज्ञाने एका विशेष्यता वह्निज्ञाननिष्ठा प्रमेयत्ववन्महानसीयवह्निज्ञानोपलक्षितवह्निनिष्ठप्रकारता-निरूपिता, द्वितीया विशेष्यता प्रमेयत्वनिष्ठप्रकारतानिरूपिता उपलक्षकधर्मात्मक-महानसीयवह्निज्ञाननिष्ठा, किन्तु एतद्विशेष्यताद्वयनिरूपकं ज्ञानमेकमेव। अतो महानसीयवह्निज्ञानोपलक्षितवह्निनिष्ठप्रकारतानिरूपिततादृशवह्निज्ञाननिष्ठविशेष्यताया वह्नित्वगतैकत्वात्मकहेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदक-ताकनिरूपकताकाधिकरणतावन्निष्ठत्वे द्वितीयविशेष्यतायाः प्रमेयत्वनिष्ठप्रकारता-निरूपिताया महानसीयवह्निज्ञाननिष्ठाया अपि तादृशाधिकरणतावन्निष्ठत्वेन ग्रहणा-त्तादृशविशेष्यतावतो महानसीयवह्निज्ञानस्य हेत्वधिकरणत्वमापद्यते। अर्थादुक्तज्ञान-मादाय महानसीयवह्निज्ञाननिष्ठविशेष्यतानिरूपितापि प्रमीयहेतुतावच्छेदकविषयित्व-सम्बन्धावच्छिन्ना वह्न्यात्मकहेतुनिष्ठा प्रकारता भवति, ततश्च तत्र महानसीयवह्नि-ज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यादिति।

तत्र तादृशविशेष्यतानिरूपितत्वस्य विशेष्यतानिष्ठनिरूप्यतानिरूपिता प्रकारतात्वावच्छिन्ना या निरूपकता, तादृशनिरूपकतावत्त्वरूपस्यैव विवक्षितत्वे तु तत्र महानसीयवह्निज्ञाननिष्ठविशेष्यतानिष्ठनिरूप्यतानिरूपितप्रकारतात्वावच्छिन्न-निरूपकताया वह्निनिष्ठप्रकारतायामभावान्न दोषः, अर्थात् तत्र महानसीयवह्निज्ञानं विषयित्वसम्बन्धेन प्रमीयवह्न्यात्मप्रकारस्य नो विशेष्यीभूतमपि तु तादृशवह्न्यात्मक-प्रकारस्योपलक्षकमेव, उपलक्षकीभूतमहानसीयवह्निज्ञाननिष्ठविशेष्यतानिष्ठनिरूप्यता-निरूपितप्रकारतात्वावच्छिन्ननिरूपकताया प्रमेयत्वनिष्ठप्रकारतायामेव सत्त्वेन तस्या प्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविरहादित्याशयात्।

विशेष्यताया निरूपिका यथा प्रकारता तथा ज्ञानमपि तन्निरूपकम्, तत्र ज्ञानात्मकं विशेष्यतानिरूपकमादाय प्रमेयत्ववन्महानसीयवह्निज्ञानोपलक्षितविषयित्व-सम्बन्धावच्छिन्नवह्निप्रकारकज्ञानं प्रगृह्योक्तापत्तिः। प्रकारतारूपस्यैव विशेष्यता-निरूपकस्य प्रकृते विवक्षया उक्तापत्तेर्निरास इति भावः।

स्वविषयकज्ञाने विषयितया प्रकारीभवद्वह्निनिष्ठविषयतायाः स्वाश्रयोपलक्षक-महानसीयवह्निज्ञानात्मकविषयनिष्ठविषयतानिरूपितत्वेऽपि स्वविषयकज्ञाने विषयितया प्रकारीभवतो वह्नेर्महानसीयवह्निज्ञानोपलक्षितत्वेऽपि महानसीयवह्निज्ञाने प्रकारत्व-विरहेण विवक्षितायाः प्रकारतात्वावच्छिन्ननिरूपकतायास्तत्राभावात्।

उक्तप्रकारके हेत्वधिकरणपदार्थे महानसीयवह्निविषयक-वह्निविषयक-ज्ञानान्यतरद्वह्निमदित्याकारकं ज्ञानमादाय उक्तस्थले वह्निज्ञानत्वसाध्यकविषयितया वह्निहेतुकस्थले महानसीयवह्निज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तेर्निस्तारासम्भवेन तथाविवक्षायाः सम्भवाभावात्।

तादृशज्ञानस्थले अन्यतरत्वेन महानसीयवह्निज्ञानविशेष्यतानिरूपितत्वस्यापि प्रमीयहेतुतावच्छेदकविषयित्वसम्बन्धावच्छिन्नवह्निनिष्ठप्रकारतायां सत्त्वात्।

उक्तविवक्षान्तर्गतविशेष्यतायामुभयावृत्तिधर्मावच्छिन्नत्वं निवेश्य तत्रान्यत-रत्वावच्छिन्नविशेष्यतायाः सत्त्वेन तादृशत्वविरहात् अथवा तद्धटकप्रकारतायां विशेष्यतावच्छेदकव्यापकविधेयप्रतियोगिकसंसर्गावच्छिन्नत्वं निवेश्य तत्र विशेष्य-तावच्छेदकस्य महानसीयवह्निज्ञानेऽपि सत्त्वेन तत्र विधेयस्य वह्नेरभावेन प्रकारतायां विवक्षितसंसर्गावच्छिन्नत्वविरहाद्दोषवारणे यादृशसाध्यहेतुकस्थले हेतुमत्ताज्ञानन्नो-भयावृत्तिधर्मावच्छेदेन, न वा अवच्छेदकावच्छेदेन, अर्थाद् यत्र प्रकारता न विशेष्यतावच्छेदकव्यापकविधेयप्रतियोगिकसंसर्गावच्छिन्ना तत्राव्याप्त्यापत्तेरिति प्रकाशः।[१६५]

तत्त्वालोकः– यत्तु— वह्निज्ञानत्वसाध्यकविषयिता-स्वरूपान्यतर-सम्बन्धेन वह्निहेतुकस्थले महानसीयवह्निविषयकज्ञानं विषयिता-स्व-रूपान्यतरसम्बन्धेन प्रमेयविशिष्टवदिति ज्ञानीयप्रमेयावच्छिन्नप्रकारतामादाया-व्याप्तिः, तदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक-त्वस्य तत्तद्द्वित्वैकत्वादिष्वेव सत्त्वादधिकरणतापक्षे च प्रमेयावच्छिन्नाधिकर-णत्वाप्रसिद्ध्या न दोष— इति।

तन्न। प्रमेयावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगिता-वच्छेदकत्वस्य प्रमेयत्व एव कल्पनात्, तादृशप्रकारतावच्छेदकताविशिष्ट-हेतुतावच्छेदकत्वस्य विवक्षया वा दोषासम्भवात्। वैशिष्ट्यञ्च स्वानवच्छेद-कानवच्छिन्नत्व-स्ववृत्तित्वोभयसम्बन्धेनेति।

वस्तुतस्तु प्रमीयप्रकारतावच्छेदकत्वन्न विशेषणम्, प्रकृतहेतुप्रमात्वस्य प्रकृतहेत्वधिकरणत्वघटितत्वेन तस्य चोभयाभावघटितरूपत्वेऽव्याप्ति-तादवस्थ्याद्धेतुतावच्छेदकावच्छिन्नाधिकरणतारूपस्य धूमहेतुकस्थलानुरोधेन त्यक्तत्वाच्च।

भ्रमभिन्नज्ञानीयत्वस्यापि स्वप्रकारताविशिष्टप्रकारत्वरूपस्य न निवेश-

**सम्भवः, वैशिष्ट्यस्य स्वतादात्म्य-स्वावच्छेदकसम्बन्धावच्छिन्न-स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिरूपितप्रकारताभिन्नत्वोभय-सम्बन्धेन वाच्यतया वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे वृत्त्य-नियामकसम्बन्धेन हेतुतास्थले कथञ्चिदपि तत्सम्भवाभावात्, स्वावच्छेदक-सम्बन्धावच्छिन्नस्वावच्छेदकीभूतधर्मावच्छिन्नसम्बन्धित्वाभावघटितसम्बन्धो-पादाने च धूमहेतावव्याप्तेः।[१६६]**

*प्रकाशः* – उपर्युक्त एव प्रसङ्गे मतान्तरं तत्खण्डनञ्च विधातुमुपक्रमते 'यत्तु वह्निज्ञानत्वसाध्यके'त्यादिना। वह्निज्ञानं विषयिता-स्वरूपान्यतरसम्बन्धेन वह्निमदित्यत्र सद्धेतौ हेतुतावच्छेदकगतरूपें तादृशाधिकरणतावद्-यन्निष्ठविशेष्यतानिरूपित-प्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतापर्य्याप्त्यनुयोगिता-वच्छेदकत्वनिवेशे महानसीयवह्निविषयकज्ञानं विषयिता-स्वरूपान्यतरसम्बन्धेन प्रमेयविशिष्टवदिति ज्ञानमादाय 'यत्तु' अव्याप्तिमुपस्थापयति।

महानसीयवह्निविषयकज्ञाने विषयितया महानसीयवह्नेः सत्त्वेन विषयिता-सम्बन्धस्य उक्तान्यतरात्मकहेतुतावच्छेदकसम्बन्धान्तर्गततया महानसीयवह्नेः प्रमेय-(महानसीयत्ववह्नित्वगतप्रमेय)विशिष्टत्वाद्, महानसीयवह्निज्ञानं विषयिता-स्वरूपान्यतरसम्बन्धेन प्रमेयविशिष्टवदित्याकारकज्ञानस्य प्रमात्वेन तदीयहेतुता-वच्छेदकसम्बन्धावच्छिन्नप्रकारतानिरूपितावच्छेदकतायाः प्रमेये = महानसीयत्व-वह्नित्वयोर्द्वयोः केवलेऽपि वह्नित्वे, सत्त्वेन तदवच्छेदकताप्रतियोगिकपर्य्याप्त्य-नुयोगितावच्छेदकत्वस्य तत्तद्द्वित्वैकत्वादिष्वेव (महानसीयत्ववह्नित्वगतद्वित्व-केवलवह्नित्वगतैकत्वादिष्वेव) सत्त्वाद्, अर्थाद् विषयिता-स्वरूपान्यतरसम्बन्धेन प्रमेयविशिष्टवन्महानसीयवह्निविषयकं ज्ञानमित्याकारकज्ञानीयविशेष्यताया महानसीय-वह्निज्ञाननिष्ठत्वेन तादृशविशेष्यतानिरूपितप्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्न-प्रकारतावच्छेदकताया प्रमेयान्तर्गते महानसीयत्ववह्नित्वादौ वह्नित्वे हेतुतावच्छेदके च सत्त्वेन तत्पर्य्याप्त्यनुयोगितावच्छेदकत्वस्य च तत्र हेतुतावच्छेदकवह्नित्वगतैकत्वेऽपि सत्त्वेन, महानसीयवह्निज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावस्य तत्र सत्त्वाद-व्याप्तिः प्रसज्यति।

अधिकरणतापक्षे च प्रमेयावच्छिन्नाधिकरणत्वाप्रसिद्धया न दोषः, अर्थाद् दर्शित[१] – 'हेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपितस्वा-

---

१. प्रकृतग्रन्थः (द्वितीयो भागः), तत्त्वालोकखण्डसङ्ख्या १४५

वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्न-वृत्तितावदधिकरणत्व' निवेशपक्षे प्रमेयावच्छिन्नाधिकरणत्वाप्रसिद्ध्या महानसीय-वह्निज्ञानं विषयिता-स्वरूपान्यतरसम्बन्धेन प्रमेयविशिष्टवदिति ज्ञानमादाय न तत्र महानसीयवह्निज्ञानस्य हेत्वधिकरणत्वापत्तिसम्भवः। प्रमेयावच्छिन्नाधिकरणत्वा-प्रसिद्धिरर्थात्प्रमेयनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वाप्रसिद्धिः, प्रमेयविशिष्ट-वान्, प्रमेयवद्वानित्यादौ प्रमेयत्वस्यैवानुगतस्यैकस्य तत्र अधिकरणतावच्छेदकत्व-स्वीकारादिति 'यत्तु' मतस्याशयः।

उपपादितं 'यत्तु' मतन्निरस्यते 'तन्ने'त्यादिना। हेतुतावच्छेदकगतरूपे तादृश-प्रकारतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वनिवेशे वह्निज्ञानत्वसाध्यकविषयिता-स्वरूपान्यतरसम्बन्धेन वह्निहेतुकस्थले महानसीयवह्निज्ञानधर्मिक-उक्तान्यतरसम्बन्धेन प्रमेयविशिष्टवदिति ज्ञानमादायाव्याप्तिर्भवितुन्नार्हति, प्रमेयावच्छिन्नप्रकारतावच्छेदक-तात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य प्रमेयत्वे एव कल्पनेन तत्तद्द्वित्वैकत्वादौ = महानसीयत्व-वह्नित्वगतद्वित्ववह्नित्वगतैकत्वादौ, तस्याभावात्।

स्वानवच्छेदकानवच्छिन्नत्व, - स्वानवच्छेदकानवच्छिन्नत्व - सावच्छिन्नत्व-सम्बन्धावच्छिन्न-स्ववृत्तित्वोभयसम्बन्धेन तादृशप्रकारतावच्छेदकताविशिष्टहेतुता-वच्छेदकत्वविवक्षया वा उक्तदोषस्य वारणसम्भवात्।

वह्नित्वरूपहेतुतावच्छेदकत्वस्य निरवच्छिन्नत्वेन प्रमेयनिष्ठप्रकारतावच्छेदक-तायास्सावच्छिन्नत्वेन तादृशप्रकारतावच्छेदकताविशिष्टत्वस्य हेतुतावच्छेदकतायान्तत्र विरहात्।

वस्तुतस्तु प्रमीयप्रकारतावच्छेदकत्वमर्थात्तादृशविशेष्यतानिरूपितप्रमीयहेतुता-वच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे अथवा हेतुतावच्छेदकत्वे दर्शितोभयसम्बन्धेन प्रमीय-हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकताविशिष्टत्वन्न विशेषणं = विवक्षितु-न्नैव शक्यम्, प्रकृतहेतुप्रमात्वस्य प्रकृतहेत्वधिकरणघटितत्वात् तद्वद्विशेष्यक-तत्प्रकारकज्ञानस्य प्रमात्वेन प्रकृतहेतुमद्विशेष्यकतत्प्रकारकज्ञानस्यैव प्रमात्वात्, प्रकृतहेत्वधिकरणत्वस्य चोभयाभावघटितरूपत्वे हेतुतावच्छेदकधर्मे स्वाश्रया-धिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदक-त्वस्य च द्वयोर्व्यतिरेकस्तथाविधस्योपादानेऽव्याप्तितादवस्थ्यात्।

वह्निमान् धूमादित्यत्र ह्रदः प्रमेयवद्वानित्याकारकं प्रमेयत्वेन धूमत्वावगाहिज्ञानमादाय हेतुतावच्छेदके धूमत्वे प्रमेयत्वेन धूमत्वाश्रयाधिकरणीभूतह्रदनिष्ठाधिकरणतानवच्छेदकत्वघटितोक्तोभयाभावसत्त्वेन ह्रदस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तितादवस्थ्यात्।

अत्रास्ति मत्पितृचरणकृता टिप्पणी 'अव्याप्तिश्च धूमहेतुके प्रमेयावच्छिन्नाधिकरणत्वमादाय ह्रदस्योभयाभावघटितहेत्वधिकरणत्वसम्पादनेन बोध्या' इति।[1]

अथवा तत्त्वालोके पूर्वदर्शितदिशा[2] वह्निज्ञानत्वसाध्यके वह्नौ सद्धेतौ हेतुतावच्छेदकवह्नित्वस्य स्वाश्रयमहानसीयवह्निविषयकज्ञाननिष्ठमहानसीयवह्नित्वावच्छिन्नाधिकरणतानवच्छेदकत्वविरहेणोक्तोभयाभाववत्त्वेन महानसीयवह्निज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तितादवस्थ्यात्, केवलाव्याप्तिधियापि पूर्वविवेचितरीत्या तादवस्थ्योक्तिसङ्गतिसम्भवात्।

हेतुतावच्छेदकावच्छिन्नाधिकरणतारूपस्य प्रकृतहेत्वधिकरणत्वस्य सामान्यधर्मावच्छिन्नाधिकरणत्वानभ्युपगमेन धूमहेतुकस्थलानुरोधेन त्यक्तत्वाच्च धूमत्वावच्छिन्नाधिकरणत्वविरहेण धूमहेतुकेऽव्याप्तिदोषात्।

प्रकृत हेत्वधिकरणत्वाघटितस्यैव प्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुप्रकारताया स्वतादात्म्य, - स्वावच्छेदकसम्बन्धावच्छिन्न-स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिरूपितप्रकारताभिन्नत्वोभयसम्बन्धेन प्रकारताविशिष्टप्रकारतारूपस्य भ्रमभिन्नज्ञानीयत्वस्यापि निवेशो न सम्भवदुक्तिको वृत्त्यनियामकस्वामित्वादिसम्बन्धेन सद्धेतुकस्थले वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वविरहेण तत्र स्वावच्छेदकसम्बन्धावच्छिन्न-स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या उक्तस्वरूपकभ्रमभिन्नज्ञानीयप्रकारतायाः सम्भवाभावेनाव्याप्तिप्रसङ्गात्।

संयोगसम्बन्धावच्छिन्नधूमत्वरूपसामान्यधर्मावच्छिन्नाधिकरणत्वानभ्युपगमे दर्शितयुक्त्या संयोगसम्बन्धावच्छिन्नधूमत्वरूपसामान्यधर्मावच्छिन्नसम्बन्धित्वस्याप्यभावेन संयोगेन धूमसद्धेतुकस्थलेऽव्याप्त्यापादकत्वाद् वृत्त्यनियामकसद्धेतुकेऽ-

---

१. पण्डितषष्ठीनाथमिश्राणां स्वकीयसिद्धान्तलक्षणतत्त्वालोकपुस्तके (७७ तमे पृष्ठे) उट्टङ्कितेयं टिप्पणी।

२. प्रकृतग्रन्थे (द्वितीयभागे) तत्त्वालोकखण्डसंख्या १५०

व्याप्त्यभावाय स्वावच्छेदकसम्बन्धावच्छिन्न-स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्थाने स्वावच्छेदकसम्बन्धावच्छिन्न-स्वावच्छेदकधर्मावच्छिन्नसम्बन्धित्वाभावं निवेश्यापि स्वप्रकारताविशिष्टप्रकारत्वरूपभ्रमभिन्नज्ञानीयत्वस्य प्रमीयत्वस्य निवेशोऽपि कर्तुमशक्य एवेति भावः।[१६६]

तत्त्वालोकः– **यत्तु — प्रकारतावच्छेदकतायां हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया विषयितया वह्निहेतुके स्वरूपेण प्रमेयत्वविशिष्टवह्निविषयकज्ञानमादायाव्याप्तिरिति।**

**तन्न। प्रकारतायां हेतुतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितत्वस्यैव विशेषणत्वात्।**

**न चैवं महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्निहेतुके व्यभिचारिणि का गतिरिति वाच्यम्, उभयाभावघटकसामान्यतोऽधिकरणतावच्छेदकत्वकोटौ हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रकृतहेतुतावच्छेदकसंसर्गघटकतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वरूपस्य वाच्यत्वात्।**

**तथा च महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वघटकतावच्छेदकप्रतियोगितात्वावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितात्वावच्छिन्नसंसर्गताकाधिकरणतावच्छेदकत्वस्य महानसीयवह्न्यभावनिष्ठाधिकरणतानवच्छेदकत्वस्य च द्वयोर्व्यतिरेकाभावस्यैव वह्नित्वे सत्त्वेन हेत्वधिकरणाप्रसिद्धेर्नातिव्याप्तिः।**

**तद्धर्मावच्छिन्नघटकतावच्छेदकत्वञ्च तदवच्छिन्नविषयत्वाभिन्नविशेष्यतावच्छेदकत्वम्, तेन विषयित्वकालीनसंयोगादिहेतुतावच्छेदकसम्बन्धस्थले न दोषः। तादृशप्रतियोगित्वादीनां तद्व्यक्तित्वादिना संसर्गत्वस्यानुभवातीततया तद्व्यक्तिसंसर्गकस्थलस्यासम्भवादेव नातिव्याप्तिरिति वयं ब्रूमः।[१६७]**

*प्रकाशः*–अपरं 'यत्तु'मतं 'यत्तु प्रकारतावच्छेदकतायामि'त्यादिनोपस्थातुमपाकर्तुञ्चोपक्रमते। अत्र यस्य कस्याप्ययमाक्षेपो यद् वह्निज्ञानत्वसाध्यकविषयितया वह्निसद्धेतुकस्थले कालिकेन हेतुतावच्छेदकताघटकसमवायेतरसम्बन्धेन वह्नित्ववद्विषयकज्ञानस्य हेत्वधिकरणत्वापत्तिवारणाय प्रकारतावच्छेदकतायामर्थाद् 'हेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद् यन्निष्ठप्रमीयहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वम्'[१] इत्येतद्-घटकप्रकारता-

१. प्रकृतग्रन्थे तत्त्वालोकखण्डसंख्या १६५

वच्छेदकतायां हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेशेन तत्र तादृशज्ञानस्य हेत्वधिकरणत्वापत्तिवारणेऽपि तत्र स्वरूपेण प्रमेयत्वविशिष्टवह्नि-ज्ञानस्य अर्थात् स्वरूपेण प्रमेयत्ववतः समवायेन वह्नित्ववतो विषयतया वह्नेर्ज्ञानस्य, हेत्वधिकरणत्वापत्तिः स्यादेव, तादृशप्रमात्मकज्ञानीयहेतुतावच्छेदकसम्बन्धा-वच्छिन्नप्रकारतावच्छेदकतायां हेतुतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नत्व-सत्त्वादिति।

तन्न। हेतुतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नावच्छेदकत्वा-निरूपितत्वस्य प्रकारतायां निवेशेन प्रकारतावच्छेदकतायां हेतुतावच्छेदकताघटक-सम्बन्धावच्छिन्नत्वनिवेशप्रयोजनविरहेण वह्निज्ञानत्वसाध्यक-विषयितया वह्निसद्धेतु-स्थले दर्शिते दर्शितज्ञानद्वयस्य हेत्वधिकरणत्वापत्तेरभावात्।

दर्शितज्ञानद्वयप्रकारताया. हेतुतावच्छेदकताघटकसम्बन्धातिरिक्तकालिक-स्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वनिरूपितत्वेन विवक्षितस्य तादृशावच्छेदकत्वा-निरूपितत्वविरहात्।

अथ वा 'न चैवं महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्निहेतुके व्यभिचारिणि का गतिरि'त्याद्युत्तरग्रन्थानुरोधेनेह 'प्रकारतावच्छेदकतायामि'त्यस्य हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतावच्छेदकत्वसामान्यतो-ऽधिकरणतावच्छेदकत्वोभयाभावस्य प्रथमप्रतियोग्यधिकरणतानवच्छेदकत्वघटका-वच्छेदकत्वपरमर्थात् स्वाश्रयाधिकरणीभूत-यन्निष्ठाधिकरणतानिरूपकतावच्छेदकपरम्, तत्र हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नस्यानिवेशे वह्नित्वज्ञानत्वसाध्यक-विषयितया वह्निसद्धेतुके कालिकेन वह्नित्वविशिष्टस्य विषयितया वह्नेर्ज्ञानस्य हेत्वधिकरणत्वापत्तिः स्याद्, वह्नित्वे हेतुतावच्छेदके स्वाश्रयाधिकरणीभूततादृशज्ञान-निष्ठाधिकरणतावच्छेदकत्वस्य (तादृशाधिकरणतानिरूपकतावच्छेदकत्वस्य) तत्र विवक्षितोभयाभावसत्त्वाद्, हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य तत्राधिकर-णतानिरूपकतावच्छेदकतात्मकप्रकारतावच्छेदकतायां निवेशेऽपि कालिकसमवायो-भयसम्बन्धेन वह्नित्वविशिष्टवह्निविषयकज्ञानस्य तत्समस्य स्वरूपेण प्रमेयत्वविशिष्टस्य समवायेन वह्नित्वविशिष्टस्य वह्नेर्ज्ञानत्वस्य तत्र हेत्वधिकरणत्वापत्तिः स्यादिति 'यत्तु'-पूर्वपक्षः।

तत्र तथाऽनिवेश्य 'तद्घटकनिरूपकतात्मकप्रकारतायां हेतुतावच्छेदकताघटक-सम्बन्धातिरिक्तसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य' निवेशेन कालिकेन वह्नित्वविशिष्टवह्निज्ञानस्य, कालिक-समवायोभयसम्बन्धेन वह्नित्वविशिष्टविषयक-

वह्निज्ञानस्य, एवं स्वरूपेण प्रमेयत्वविशिष्टस्य समवायेन वह्नित्वविशिष्टस्य वह्नेर्ज्ञानस्य च तत्र हेत्वधिकरणत्वनिरासः। एतावता 'यत्तु'मतन्निरस्तमावेदितम्।

अनन्तरं 'न चैवमि'त्यादिना शङ्क्यते यत् स्वाश्रयाधिकरणतानिरूपकतात्मक-प्रकारतायां हेतुतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नावच्छेदकत्वा-निरूपितत्वस्य निवेशे महानसीयवह्न्यभावत्वसाध्यके महानसीयवह्नित्वावच्छिन्न-प्रतियोगित्व(तादृशप्रतियोगितानिरूपकत्व)सम्बन्धेन वह्निहेतुके व्यभिचारिणि का गतिरर्थात्तत्र महानसीयवह्न्यभावस्य हेत्वधिकरणत्वापत्त्या अतिव्याप्तिः स्यात्। तत्र हेतुतावच्छेदके वह्नित्वे धर्मिणि स्वाश्रय(वह्नित्वाश्रय)महानसीयवह्न्यधिकरण-महानसीयवह्न्यभावनिष्ठाधिकरणतानवच्छेदकत्वस्य (तादृशाधिकरणतानिरूपकता-नवच्छेदकत्वस्य) सत्त्वेऽपि महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वरूपहेतुतावच्छेदक-सम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य (सामान्यतोऽधिकरणतानिरूपकतावच्छेद-कत्वस्य) विरहेण विवक्षितोभयाभावसत्त्वान्महानसीयवह्न्यभावस्य हेत्वधिकरणत्वा-पत्त्या साध्याभावस्य लक्षणाघटकत्वात्तत्रातिव्याप्तिः स्यादिति पूर्वपक्षः।

अत्र समाधीयते। उभयाभावघटकसामान्यतोऽधिकरणतावच्छेदकत्वकोटौ हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रकृतहेतुतावच्छेदकसंसर्गघटकतावच्छेदकधर्मा-वच्छिन्नसंसर्गताकत्वरूपस्य वाच्यत्वात्, तथासति महानसीयवह्नित्वावच्छिन्न-प्रतियोगित्व(हेतुतावच्छेदकसंसर्ग)घटकतावच्छेदकप्रतियोगितात्वावच्छिन्न=वह्नित्वा-वच्छिन्नप्रतियोगितात्वावच्छिन्न, - संसर्गताक-अधिकरणतावच्छेदकत्वस्य (तादृश-संसर्गताकाधिकरणतानिरूपकतानवच्छेदकत्वस्य) महानसीयवह्न्यभावनिष्ठाधिकरण-तानवच्छेदकत्वस्य च द्वयोर्व्यतिरेकाभावस्यैव अर्थाद् विवक्षितोभयाभावप्रतियोगिनो-रुभयोः सत्त्वेन हेत्वधिकरणाप्रसिद्धेरतिव्याप्तेरभावात्।

महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्निहेतुके महानसीयवह्न्य-भावत्वसाध्यके पूर्वोक्तस्थलेऽतिव्याप्तिवारणायाश्रितोपायाद् उभयाभावघटकसामान्य-तोऽधिकरणतावच्छेदकत्वकोटौ हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रकृतहेतुता-वच्छेदकसम्बन्धघटकतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वरूपात्मकाद् विषयित्व-कालीनसंयोगेन धूमादिसद्धेतुस्थले पर्वतादेर्नो हेत्वधिकरणत्वानुपपत्तिदोषः।

अन्यथा तत्र धूमत्वात्मकहेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणपर्वतादिनिष्ठा-धिकरणतानवच्छेदकत्वस्य प्रकृतहेतुतावच्छेदकसंसर्गघटकतावच्छेदकविषयित्वत्वा-वच्छिन्नसंसर्गताकाधिकरणतावच्छेदकत्वस्य च द्वयोः सत्त्वेन पर्वतादेर्हेत्वधिकरणत्वन्न स्याद्। अतः प्रकृतहेतुतावच्छेदकसंसर्गघटकतावच्छेदकत्वं तदवच्छिन्नविषयत्वा-

भिन्नविशेष्यतावच्छेदकत्वरूपमेव विवक्षितम्। तेन पूर्वोक्तमहानसीयवह्नित्वावच्छिन्न-प्रतियोगित्वस्य हेतुतावच्छेदकसंसर्गतास्थले वह्नित्वावच्छिन्नप्रतियोगितात्वरूपस्य प्रतियोगितात्वस्य विवक्षितघटकतावच्छेदकत्वोपपत्तिः, विषयित्वकालीनसंयोगस्य हेतुतावच्छेदकसंसर्गतास्थले विषयितात्वस्य तन्निरासश्च भवत इत्यवधेयम्।

अतस्तत्त्वालोककर्त्ता विशेषं वक्ति यत् तादृशप्रतियोगित्वादीनामर्थान्महानसी-यवह्नित्वावच्छिन्नप्रतियोगित्वादीनां तद्व्यक्तित्वविशेषरूपेण संसर्गत्वमनुभवातीतमेव, अतस्तद्व्यक्तिसंसर्गस्थलस्याभावादेव तत्रातिव्याप्तिप्रदानमसङ्गतम्, ततश्च तादृश-स्थलातिव्याप्तिवारणाय हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रकृतहेतुतावच्छेदक-संसर्गघटकतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वरूपस्य विवक्षाया नावश्यकता, न वा तद्धर्मावच्छिन्नघटकतावच्छेदकत्वस्य तदवच्छिन्नविषयत्वाभिन्नविशेष्यतावच्छेदकत्व-रूपस्य विवक्षाया आवश्यकतेति वयं = तत्त्वालोककर्त्तारो, ब्रूम इति भावः।[१६७]

तत्त्वालोकः— अथ हेतुतावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयाश्रयनिष्ठ-निरूपकताकाधिकरणतावद्यन्निष्ठहेतुतावच्छेदकविषयित्वान्यतरसम्बन्धा-वच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वं हेतु-तावच्छेदकगतरूपे विवक्षणीयमुभयाभावो न निवेश्यः, विषयित्वसंयोगान्यतर-सम्बन्धेन धूमवानिति प्रतीतेः पर्वतीयधूमादिज्ञानेऽप्रमात्वेन[१] पर्वतीयधूमत्वाद्य-वच्छिन्नाधिकरणत्वविषयकत्वासम्भवाद्वह्निमान् धूमादित्यादावव्याप्त्यभावा-दिति चेद्।

न। विषयितया घटसाध्यके घटज्ञानवृत्तित्वविशिष्टज्ञानत्वेऽव्याप्त्या-पत्तेः, समवायेन तादृशज्ञानत्वाभिन्नज्ञानत्वाधिकरणीभूतविशिष्टज्ञानत्वविषय-कज्ञाने प्रकृतहेतोर्विषयितया सत्त्वेन तस्य हेत्वधिकरणत्वस्य दुर्वारत्वात्।

स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकर-णताकल्पे च घटज्ञानत्वसाध्यके प्रतियोगितया घटज्ञानाभावहेतुकेऽव्याप्तिः, घटज्ञानाभावत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताक-घटज्ञानाभावविषयकज्ञानाभावत्वावच्छिन्ननिरूपकताकाधिकरणतावद्यत्-पदार्थीभूतघटज्ञानाभावविषयकज्ञाननिष्ठान्यतरसम्बन्धावच्छिन्नाधिकरणता-निरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य घटज्ञाना-

१. ...'ज्ञाने प्रमात्वेने'ति प्राचीनमुद्रितपुस्तके।

भावत्वगतसमुदायत्वे सत्त्वेन घटज्ञानाभावविषयकज्ञानस्य हेत्वधिकरणत्वापत्तेरिति।

वस्तुतोऽन्यतरत्वन्न संसर्गतायामधिकरणतानिरूपितायामवच्छेदकम्, विषयित्वसंयोगान्यतरसम्बन्धेन धूमवान् पर्वत इति ज्ञाने संयोगसम्बन्धावच्छिन्नतत्तद्धूमत्वावच्छिन्नाधिकरणत्वव्यक्तीनामेव विषयत्वात्, तज्ज्ञानं तादृशान्यतरसम्बन्धेन धूमवदिति ज्ञाने च विषयित्वसम्बन्धावच्छिन्नाधिकरणत्वस्यैव विषयत्वादिति वह्निमान् धूमादित्यत्राव्याप्तिर्दुरुद्धरैवेति बोध्यम्।

एवं प्रतियोगित्वहेतुतावच्छेदकान्यतरसम्बन्धावच्छिन्नाधिकरणत्वनिवेशोऽपि हेय इति।

अत एव स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्व-हेतुतावच्छेदकान्यतरसम्बन्धावच्छिन्नाधिकरणत्वनिवेशोऽपि निरस्तः।

नन्वेवं संयोगस्वरूपान्यतरसम्बन्धेन धूमहेतुकस्थलेऽव्याप्तिः, हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वाप्रसिद्धेः।

मैवम्। हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताया निवेश्यत्वात्, रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्व-तादृशानुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदवृत्तित्वान्यतरसम्बन्धेन, एवञ्चान्यतरसम्बन्धेन हेतुतास्थले प्रत्येकधर्मावच्छिन्नसंसर्गतैव रूपवृत्तिर्भविष्यति।[१६८]

*प्रकाशः* – 'अथे'त्याद्युक्तखण्डेन प्रकारान्तरेण लघुभूतहेत्वधिकरणत्वपदार्थमुपस्थातुमुपक्रमते। उपर्युक्तभागेनेदमुच्यते यद् हेतुतावच्छेदकधर्मे स्वाश्रयीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वसामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावस्तस्यैव वाऽग्रिमपरिष्कारान्तर्गतो हेतुतावच्छेदकगतरूपे अर्थाद् हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे 'स्वावच्छिन्नाश्रयाधिकरणयन्निष्ठाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्व-सामान्यतोऽधिकरणतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयाभावो'[१] गुरुत्वान्न विवक्षणीयः, किन्तु हेतुतावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयाश्रयनिष्ठनिरूपकताकाधिकरणतावद् यन्निष्ठ-

१. प्रकृतग्रन्थे (द्वितीयभागे), तत्त्वालोकखण्डसङ्ख्या १५०

हेतुतावच्छेदकविषयित्वान्यतरसम्बन्धावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्न-पर्य्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे, स एवोभयाभावाघटितो हेत्वधिकरणपदार्थतया विवक्षणीयः।

उभयाभावाघटित एवोक्तविवक्षाप्रकारे तादृशयन्निष्ठहेतुतावच्छेदक-विषयित्वान्यतरसम्बन्धावच्छिन्नाधिकरणताघटिते संयोगसम्बन्धावच्छिन्नधूमत्वा-वच्छिन्नाधिकरणत्वविरहेऽपि वह्निमान् धूमादित्यत्राव्याप्तिर्न स्यात्, हेतुतावच्छेदक-(संयोग)विषयित्वान्यतरसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य धूमत्वे सद्भावात्, विषयित्वसंयोगान्यतरसम्बन्धेन धूमवानिति प्रमाप्रतीतेरुक्तान्यतरसम्बन्धावच्छिन्ना-धिकरणतावच्छेदकत्वस्य धूमत्वे सिद्धत्वात्।

विषयित्वसंयोगान्यतरसम्बन्धेन धूमवानिति प्रमात्मकप्रतीतेरुक्तान्यतर-सम्बन्धावच्छिन्नधूमत्वावच्छिन्नाधिकरणत्वविषयकत्वमस्वीकृत्य पर्वतीयधूमत्वाद्य-वच्छिन्नाधिकरणत्वविषयकत्वाङ्गीकारस्तु न सम्भवदुक्तिको येनोक्तान्यतरसम्बन्धा-वच्छिन्नधूमत्वावच्छिन्नाधिकरणत्वस्य सिद्धिर्न स्यात्, विषयित्व-संयोगान्यतर-सम्बन्धेन धूमवानिति प्रतीतेः प्रमात्वेनानुभूतायाः पर्वतीयधूमादिज्ञाने प्रमात्वविरहात्।

अर्थादुक्ताकारिका प्रतीतिर्यदि पर्वतीयधूमत्व-महानसीयधूमत्वादिरूपेण विषयितया धूमावगाहिज्ञानात्मिकाऽभविष्यत्, तदा तत्राप्रमात्वमभविष्यद्, यतो हि पर्वतीयधूमादिविषयकज्ञाने उक्ताकारके धूमत्वादिसामान्यधर्मरूपेणैव धूमादेर्विषयतया भासमानताया अनुभूतत्वेन तेन रूपेण तत्र तदनवगाहनात् पर्वतीयधूमत्वरूपविशेष-रूपेणैव तत्र तद्विषयताया भवता स्वीकृतत्वाद्, यत्र विशेषरूपेण पर्वतीयधूमत्वादिनैव तद्विषयता भवति, तत्र तज्ज्ञानं भिन्नं भिन्नाकारकञ्च भवति, विषयितया उक्तान्यतरसम्बन्धेन वा पर्वतीयधूमवानित्येवमिति। विषयित्वसम्बन्धावच्छिन्न-धूमत्वादिसामान्यधर्मावच्छिन्नाधिकरणतायाः सर्वमतसिद्धत्वादिति उक्तनवकल्पोत्थाप-यितुराशयः।

अत्र तत्त्वालोकान्तर्गतो 'विषयित्वसंयोगान्यतरसम्बन्धेन धूमवानिति प्रतीतेः पर्वतीयधूमादिज्ञानेऽप्रमात्वेन पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणत्वविषयकत्वासम्भवा-दि'त्येवं शुद्धपाठः, सरलापरनामक'सुबोधनी'व्याख्यायाम्[1] तथोपन्यासाभावादिति

---

१. 'विषयित्वसंयोगान्यतरसम्बन्धेन धूमवानिति प्रतीतेः पर्वतीयधूमादिविषयकज्ञाने प्रमात्वेन पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणत्वविषयित्वसम्भवादि'ति।

– सिद्धान्तलक्षणसुबोधनी, पृ. २४९

बुधैर्दृष्टिर्देया। अत एव वह्निज्ञानत्वसाध्यक-विषयितया वह्नेः सद्धेतुता विषयितया महानसीयवह्नेरसद्धेतुता च प्रामाणिकैरनेकत्रोक्ता सङ्गच्छते, वह्निमानिति ज्ञाने महानसीयवह्नित्वादिना वह्नेर्विषयत्वानभ्युपगमात्।

किन्तूपपादिताभिनवः कल्पो विषयितासम्बन्धेन घटसाध्यकघटज्ञानवृत्तित्व-विशिष्टज्ञानत्वसद्धेतुकेऽव्याप्तिदोषग्रस्तत्वादुभयाभावघटितकल्पतो लघुः सन्नपि नोपादातुमर्हः, यतो हि विषयितया घटसाध्यके घटज्ञानत्वविशिष्टज्ञानत्वसद्धेतुके दर्शिताभिनवकल्पे घटज्ञानत्वविशिष्टज्ञानत्वरूपहेतुविषयकज्ञानस्यापि हेत्वधिकरणत्वापत्तिः स्यात्, स्याच्च तदा तत्र साध्याभावमादायाव्याप्तिः, तत्र दर्शितहेतुविषयकज्ञानस्य हेत्वधिकरणत्वापत्तिश्च, हेतुतावच्छेदकगतरूपे घटज्ञानवृत्तित्व-ज्ञानत्वत्वोभय-गतद्वित्वे विवक्षितस्य हेतुतावच्छेदकसम्बन्धावच्छिन्न(समवायसम्बन्धावच्छिन्न)-स्वाश्रयाश्रयघटज्ञानवृत्तित्वज्ञानत्वत्वोभयगतद्वित्वाश्रय(ज्ञानत्वत्व)तदाश्रय-ज्ञानत्व-निष्ठघटज्ञानवृत्तित्वविशिष्टज्ञानत्वाद् ('विशिष्टः शुद्धान्नातिरिच्यते' इति सिद्धान्तवशात्) अभिन्नं यज् ज्ञानत्वन्तदधिकरणीभूतमर्थात्समवायेन ज्ञानत्वाधिकरणीभूतं यद् घटज्ञान-वृत्तित्वविशिष्टज्ञानत्वविषयकं ज्ञानं तत्र ज्ञाने विषयितासम्बन्धेन प्रकृतहेतोस्तादृश-विशिष्टज्ञानत्वस्य सत्त्वेन हेतुतावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयाश्रय(ज्ञानत्व)-निष्ठनिरूपकताकाधिकरणतावत्तादृशविशिष्टज्ञानत्वविषयकज्ञाननिष्ठहेतुतावच्छेदक-(समवाय)विषयित्वान्यतरसम्बन्धावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्नप्रतियो-गिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वात्।

यद्युक्तदोषपरिहारः स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपक-ताकाधिकरणताघटितप्रकारमनुसृत्य क्रियेत — अर्थाद् यथा 'ननु द्रव्यं गुण-कर्मान्यत्वे सत्त्वादित्यत्राव्याप्ति'रित्यादिना[१] उत्थापितदोषपरिहाराय 'स्वावच्छिन्ना-नुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य विवक्षितत्वादि'[२]-त्युल्लिख्यापादिताव्याप्तिवारणं कृतम्, तथैवेहापि हेतुतावच्छेदकगतरूपे हेतुता-वच्छेदकसम्बन्धावच्छिन्नस्वाश्रयाश्रयनिष्ठनिरूपकताकाधिकरणतावद्यन्निष्ठहेतुता-वच्छेदकविषयित्वान्यतरसम्बन्धावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्य-नुयोगितावच्छेदकत्वमनिवेश्य तत्स्थाने हेतुतावच्छेदकसम्बन्धावच्छिन्नस्वा-वच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावद्यन्निष्ठहेतुता-

---

१. प्रकृतग्रन्थे (द्वितीयभागे) तत्त्वालोकः, खण्डसङ्ख्या १५१

२. प्रकृतग्रन्थे (द्वितीयभागे) तत्त्वालोकः, खण्डसङ्ख्या १५२

वच्छेदकविषयित्वान्यतरसम्बन्धावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव हेतुतावच्छेदकगतरूपे निवेशश्चेत्— तदा विषयितासम्बन्धेन घटसाध्यके घटज्ञानत्वविशिष्टज्ञानत्वहेतुकेऽव्याप्तिर्यद्यपि न स्यात्, घटज्ञानत्वविशिष्टज्ञानत्वविषयकज्ञानस्य हेतुतावच्छेदक-समवायसम्बन्धावच्छिन्न-स्वाश्रयाश्रयनिष्ठनिरूपकताकाधिकरणतावत्त्वेऽपि, अर्थाद् घटज्ञानवृत्तित्वज्ञानत्वत्वगतद्वित्वात्मकं यत्स्वं हेतुतावच्छेदकगतरूपम्, तदाश्रयो ज्ञानत्वत्वम्, तदाश्रयो ज्ञानत्वम्, तन्निष्ठहेतुतावच्छेदकसमवायसम्बन्धनिरूपकताकाधिकरणतायास्तत्र सत्त्वेऽपि, उक्तद्वित्वात्मकहेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतायास्तत्राभावात्, घटज्ञानवृत्तित्वविशिष्टज्ञानत्वविषयकज्ञानमादाय ज्ञानत्वे घटज्ञानवृत्तित्वविशिष्टत्वविरहात् शुद्धाधिकरणतातो विशिष्टाधिकरणताया अतिरिक्तत्वात्, गुणकर्मान्यत्वसत्तात्वोभयगतद्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणताया विरहस्य गुणादावुक्तत्वात्।

दर्शितकल्पे विषयितया घटसाध्यके घटज्ञानवृत्तित्वविशिष्टज्ञानत्वहेतुकेऽव्याप्तेरभावेऽपि घटज्ञानत्वसाध्यके प्रतियोगितासम्बन्धेन घटज्ञानाभावहेतुकेऽव्याप्तिः स्यादेव, उक्तकल्पे तत्र घटज्ञानाभावविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या तत्र घटज्ञानत्वविरहेण साध्याभावस्य लक्षणघटकतयाऽव्याप्तेः प्रसक्तेः। घटज्ञानाभावविषयकज्ञानस्य हेत्वधिकरणत्वापत्तिश्च हेतुतावच्छेदकीभूतघटज्ञानाभावत्वगतरूपे हेतुतावच्छेदक(प्रतियोगित्व)सम्बन्धावच्छिन्नस्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणताया घटज्ञानाभावविषयकज्ञाने सत्त्वेन।

घटज्ञानाभावविषयकज्ञानाभावस्य प्रतियोगित्वाख्यहेतुतावच्छेदकसम्बन्धेनाधिकरणं घटज्ञानाभावविषयकज्ञानम्, अतो घटज्ञानाभावविषयकज्ञाननिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नाधिकरणतानिरूपको घटज्ञानाभावविषयकज्ञानाभावः, तन्निष्ठा या निरूपकता, तदवच्छेदकता घटज्ञानाभावविषयकज्ञानाभावत्वनिष्ठा, तादृशावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं घटज्ञानाभावविषयकज्ञानाभावत्वगतं रूपम्, अर्थाद् घटज्ञानाभावविषयकज्ञानाभावत्वगतसमुदायत्वविशेषः यदेव हेतुतावच्छेदकीभूतघटज्ञानाभावत्वगतं रूपं तदेव घटज्ञानाभावविषयकज्ञाननिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकम्।

यद्यपि घटज्ञानाभावविषयकज्ञाननिष्ठप्रतियोगितायास्तत्सम्बन्धावच्छिन्नतन्निष्ठाधिकरणताया वा निरूपकतावच्छेदकं घटज्ञानाभावविषयकज्ञानाभावत्वं

हेतुतावच्छेदकञ्च घटज्ञानाभावत्वमित्यस्ति भेदानुभूतिस्तथापि हेतुतावच्छेदकगत-समुदायत्वविशेषात्तादृशनिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकरूपस्य नास्ति भेदो, द्वयोरैक्यात्, अर्थाद् घटज्ञानाभावत्वरूपहेतुतावच्छेदकघटको यावतां पदार्थानां = घट-घटत्व-विषयत्व-ज्ञान-ज्ञानत्व-अभाव-अभावत्वानां, समूहविशेषः, तावतामेव समूहो घटज्ञानाभावविषयकज्ञानाभावत्वरूपनिरूपकतावच्छेदकघटकोऽपि, नाधिकपदार्थघटितो न वा न्यूनपदार्थघटितः, ज्ञानाभावस्य निरूपकतावच्छेदकशरीरे द्विधा प्रवेशेऽपि तावता तत्र पदार्थाधिक्याभावात्।

तथा च घटज्ञानत्वसाध्यकप्रतियोगितया घटज्ञानाभावहेतुकस्थले हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्य्याप्तिका-वच्छेदकताकनिरूपकताकाधिकरणतावद्घटज्ञानाभावविषयकज्ञाननिष्ठहेतुतावच्छेदक-(प्रतियोगित्व-विषयित्वान्यतर)सम्बन्धावच्छिन्नाधिकरणतानिरूपकतात्वावच्छिन्न-पर्य्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतावच्छेदकघटज्ञानाभावत्वगतसमुदायत्वविशेषा-त्मकरूपे सत्त्वेन घटज्ञानाभावविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभाव-मादायाव्याप्तिः स्यादतो दर्शितो लघुरभिनवकल्पो नैव निर्दुष्टो भवतीति समाधानम्।

दर्शिताभिनवकल्पे उक्तदोषातिरिक्तदोषं दर्शयितुं 'वस्तुतोऽन्यतरत्वन्ने'त्यादि-नोच्यते यद्विषयित्व-संयोगान्यतरसम्बन्धेन धूमवान् पर्वत इति ज्ञाने संयोगसम्बन्धा-वच्छिन्न-तत्तद्धूमत्वावच्छिन्नाधिकरणत्वव्यक्तीनामेव विषयत्वेन, तज्ज्ञानं विषयित्व-संयोगान्यतरसम्बन्धेन [धूमवद्?] इति ज्ञाने च विषयित्वसम्बन्धावच्छिन्नधूमत्वा-वच्छिन्नाधिकरणत्वस्यैव विषयत्वेन, अन्यतरत्वमधिकरणतानिरूपितायां संसर्गताया-मवच्छेदकन्नैव भवति। अतो वह्निमान् धूमादित्यत्र विषयित्वसंयोगान्यतरत्वा-वच्छिन्नाया अधिकरणतानिरूपितसंसर्गताया अप्रसिद्ध्याऽव्याप्तेर्दुरुद्धरत्वादपि दर्शिता-ऽभिनवकल्पो नैवोपादातुमर्हः।

एवं हेतुतावच्छेदकविषयित्वान्यतरसम्बन्धावच्छिन्नाधिकरणत्वघटितदर्शिता-भिनवकल्पो यथा दर्शितदोषवत्त्वाद्धेयस्तथैव तत्रान्यतरसम्बन्धघटकविषयित्वं परिहाय तत्स्थाने प्रतियोगित्वं सन्निवेश्य प्रतियोगित्व-हेतुतावच्छेदकान्यतरसम्बन्धावच्छिन्ना-धिकरणत्वघटितकल्पोऽपि उक्तदोषग्रस्तत्वाद्धेय एव[१], घटज्ञानत्वसाध्यकप्रतियोगितया घटज्ञानाभावहेतुकस्थले घटज्ञानाभावविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तेर-धिकरणतानिरूपितायां संसर्गतायामन्यतरत्वस्यानवच्छेदकत्वाच्च।

---

१. धूमाभावाभावस्य धूमात्मकतया प्रतियोगित्वसम्बन्धावच्छिन्नधूमाधिकरणताया धूमाभावे सत्त्वा-भिप्रायेणान्यतरत्वेन प्रतियोगित्वोक्तिः।

अत एव = उक्तदोषग्रस्तत्वादेव, स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वहेतुतावच्छेदकान्यतरसम्बन्धावच्छिन्नाधिकरणत्वघटितो विषयित्वाघटितः उक्ताभिनवकल्पसमोऽनुपादेयएव। 'स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्व'-इत्येतद्घटक-'स्व'पदं हेतुतावच्छेदकधर्मपरम्। 'स्वावच्छिन्ने'ति प्रतियोगिताविशेषकम्। तथा च हेतुतावच्छेदकधूमत्वधर्मावच्छिन्ना या प्रतियोगिता, तन्निरूपिता या अनुयोगिता, तद्गतानुयोगितात्व-हेतुतावच्छेदकान्यतरसम्बन्धावच्छिन्नेति तदर्थः।

तथा च धूमत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वसम्बन्धेन धूमाधिकरणताया धूमाभावे सत्त्वाभिप्रायेणान्यतरत्वेन स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वस्योल्लेखः, अनुयोगिताया अनुयोगिस्वरूपत्वाद् धूमत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वस्य धूमाभावे सत्त्वात्तत्सम्बन्धावच्छिन्न-तदधिकरणतानिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वस्य धूमत्वगतैकत्वे हेतुतावच्छेदकरूपे सत्त्वसम्भवात्तथोक्तिसत्त्वात्, किन्तु 'वस्तुतोऽन्यतरत्वन्न संसर्गतायामधिकरणनिरूपितायामवच्छेदकमि'ति पूर्वोक्त्या सर्वमिदन्निरस्तमावेदितम्।

अत्र वस्तुतो यदुक्तन्तदाश्रित्यानन्तरं 'नन्वेवमि'त्यादिना शङ्क्यते यदन्यतरत्वस्य अधिकरणतानिरूपितायां संसर्गतायामवच्छेदकत्वविरहे 'अन्यतरत्व'घटितहेत्वधिकरणत्वपदार्थपरिष्काररूपपरित्यागेऽपि हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणताविवक्षायाः सिद्धान्ततः सत्त्वात् संयोग-स्वरूपान्यतरसम्बन्धेन धूमहेतुकस्थले हेतुतावच्छेदकसंसर्गतावच्छेदकान्यतरत्वावच्छिन्नसंसर्गताकहेत्वधिकरणत्वाप्रसिद्धेरव्याप्तिः स्यादिति।

अत्र समाधीयते यद्धेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताया निवेशेन दोषाभावात्। संसर्गताया विवक्षितोक्तरूपवृत्तिता स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वतादृशानुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदवृत्तित्वान्यतरसम्बन्धेन विवक्षिता। एवंसति यत्र संयोगत्वादिकमेकमेव हेतुतानिरूपितसंसर्गतावच्छेदकं तत्र तदवच्छिन्नैव संसर्गता विवक्षितरूपवृत्तिरुक्तान्यतरान्तर्गतप्रथमसम्बन्धेन हेतुतानिरूपितसंसर्गतावच्छेदकता संयोगत्वनिष्ठा, तादृशावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकं रूपं संयोगत्वगतैकत्वं, तत्र संयोगनिष्ठायाः संसर्गतायाः स्वावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वात्।

संयोग-स्वरूपान्यतरसम्बन्धेन धूमवानित्यादौ अन्यतरत्वेन हेतुतानिरूपितसंसर्गतास्थले उक्तान्यतरसम्बन्धान्तर्गतद्वितीयसम्बन्धेन संसर्गताया विवक्षितरूप-

वृत्तिता, यतो हि तादृशस्थले हेतुतानिरूपितसंसर्गतावच्छेदकतापर्य्याप्त्यनुयोगिता-वच्छेदकरूपे संयोगत्वगतैकत्व-स्वरूपत्वगतैकत्वे द्वे, अन्यतमत्वेन संसर्गतास्थले त्रीणि चतुराणि वा तादृशरूपाणि, तादृशरूपवृत्तिप्रतियोगिताकभेदावच्छिन्नस्तादृश-रूपतो भिन्न एव, तादृशभेदावच्छिन्नभेदस्य तादृशयोर्द्वयोर्बहुषु वा सत्त्वाद् भेदा-वच्छिन्नभेदस्य स्वानुयोगि-तादृशसकलानुयोगितावच्छेदकस्वरूपत्वाभिप्रायेण 'तादृशभेदावच्छिन्नभेदवद्वृत्तित्वे'त्यनभिधाय 'तादृशभेदावच्छिन्नभेदवृत्तित्वे'त्युक्तम्। एतदाशयेनैव 'एवञ्चान्यतरसम्बन्धेन हेतुतास्थले प्रत्येकधर्मावच्छिन्नसंसर्गतैव रूपवृत्तिर्भविष्यती'त्युक्तमिति प्रकाशः।[१६८]

तत्त्वालोकः – अथ द्रव्यत्वसाध्यकद्रव्यानुयोगिकसमवायविशिष्टसत्ता-त्वावच्छिन्ननिरूपितविषयितान्यतरसम्बन्धेन सत्ताहेतुकेऽव्याप्तिः, यत्पदेन विशिष्टसत्ताविषयकज्ञानस्यापि धारणसम्भवात्तन्निष्ठाधिकरणतानिरूपकता-वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगिता[न]वच्छेदकत्वस्य सत्तात्वगतैकत्वे सत्त्वेऽपि हेतुतावच्छेदकसंसर्गघटकप्रत्येकसम्बन्धावच्छिन्नाधिकरणतावच्छेद-कतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वविरहेणोभयाभावसत्त्वात्।

यत्तु— यन्निष्ठानुयोगितानिरूपितहेतुतावच्छेदकसंसर्गप्रतियोगिता-वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वं विवक्षणीयम्, तथा च द्रव्यस्यैव यत्[१]-पदार्थतेति नाव्याप्तिरिति।

तन्न। धूमत्वस्य संसर्गीयप्रतियोगितायामप्यनवच्छेदकत्वादन्यथा तावन्मात्रविवक्षायामेव सामञ्जस्ये तदुभयाभावनिवेशस्यानौचित्यापत्तेः।

न च प्रमेयावच्छिन्नप्रतियोगितामादाय ह्रदादीनां धूमहेतुकस्थले हेत्वधिकरणत्वापत्तिरिति वाच्यम्, हेतुतानिरूपितावच्छेदकताविशिष्टान्या-वच्छेदकत्वानिरूपितत्वस्य प्रतियोगिताविशेषणत्वात्।

एवं वह्न्यभावत्वसाध्यके संयोगप्रतियोगितान्यतरसम्बन्धेन वह्निहेतुके व्यभिचारिण्यतिव्याप्तिस्तथापि दुरुद्धरा, यत्पदेन पर्वतस्य धारणासम्भवात्त-न्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोर्वह्नित्वे सत्त्वादिति चेद्।[१६९]

---

१. 'यदि'ति नास्ति प्राचीनमुद्रितपुस्तके।

*प्रकाशः* – पूर्वोक्ते परिष्कृतहेत्वधिकरणपदार्थे 'अथ द्रव्यत्वसाध्यके'त्यादिना द्रव्यत्वसाध्यके द्रव्यानुयोगिकसमवायविशिष्टसत्तात्वावच्छिन्ननिरूपितविषयिताऽन्यतरसम्बन्धेन सत्तासद्धेतुकेऽव्याप्तिमाशङ्कते।

तत्र हेतुतावच्छेदकसत्तात्वगतैकत्वे विशिष्टसत्ताविषयकं ज्ञानं यत्पदार्थतया परिगृह्य विवक्षितोभयाभावस्य सत्त्वाद् विशिष्टसत्ताविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या साध्याभावस्य लक्षणघटकत्वादव्याप्तिः प्रसज्यति, सत्तात्वगतैकत्वे विशिष्टसत्ताविषयकज्ञानमादाय विवक्षितोभयाभावसद्भावश्च, विशिष्टसत्ताविषयकज्ञानस्य हेतुतावच्छेदकोक्तान्यतरसम्बन्धावच्छिन्नस्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावत्त्वात्, तन्निष्ठाधिकरणतावच्छेदकतापर्य्याप्त्यनुयोगितानवच्छेदकत्वस्य तत्र (सत्तात्वगतैकत्वे) सत्त्वेऽपि हेतुतावच्छेदकोक्तान्यतरसंसर्गघटकप्रत्येकसम्बन्धावच्छिन्ना(विशिष्टसत्तात्वावच्छिन्ननिरूपितविषयित्वसम्बन्धावच्छिन्ना)धिकरणतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य द्वितीयप्रतियोगिनो विरहात्।

उक्ताव्याप्तिवारणाय 'यत्तु'-कथ्यमिदमस्ति यद् यन्निष्ठानुयोगितानिरूपितहेतुतावच्छेदकसंसर्गप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे स एव हेत्वधिकरणपदार्थतया विवक्षणीयस्तथासति विशिष्टसत्ताविषयकज्ञाननिष्ठानुयोगितानिरूपितहेतुतावच्छेदकोक्तसंसर्गप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सत्तात्वगतैकत्वे विरहान्नोक्तज्ञानस्य हेत्वधिकरणत्वापत्तिः, द्रव्यनिष्ठानुयोगितानिरूपितोक्तहेतुतावच्छेदकसंसर्गप्रतियोगितावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वस्य तत्र सत्तात्वगतैकत्वे सत्त्वाद् द्रव्यस्यैव तत्र हेत्वधिकरणत्वेनाभिमत-यत्पदार्थतेति नोक्ताव्याप्तिरिति।

अनन्तरं 'तन्ने'त्यादिना निरस्यते उपपादित'यत्तु'मतम्। इदमुच्यते तन्मतनिरासाय यद् धूमत्वं यथा संयोगसम्बन्धावच्छिन्नाधिकरणतावच्छेदकमर्थात्तादृशाधिकरणतानिरूपकतावच्छेदकन्न भवति, तथैव संयोगात्मकसंसर्गीयप्रतियोगितायामप्यवच्छेदकन्नैव भवति, अतस्तथाविवक्षासत्त्वे वह्निमान् धूमादित्यत्र धूमत्वावच्छिन्नाधिकरणताया अनभ्युपगमेन यथाऽव्याप्तिस्तथैव तत्राव्याप्तिस्तदवस्था स्यादन्यथा अर्थाद्धूमत्वस्य संसर्गीयप्रतियोगितायामवच्छेदकत्वे तावन्मात्रविवक्षायामेव(यन्निष्ठानुयोगितानिरूपितहेतुतावच्छेदकसंसर्गप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वमात्रविवक्षायामेव) सामञ्जस्ये तदुभयाभाव(हेतुतावच्छेदकधर्मे स्वाश्रयाश्रयीभूत - यन्निष्ठाधिकरणतानवच्छेदकत्व - सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभाव)निवेशस्यानौचित्यापत्तेः।

न च तावन्मात्रनिवेशे प्रमेयावच्छिन्न-वह्निमान् धूमादित्यत्र धूमहेतुकस्थले प्रमेयावच्छिन्नप्रतियोगितामादाय ह्रदादीनां हेत्वधिकरणत्वापत्त्याऽव्याप्तिः स्यात्। यतो ह्रदः संयोगेन प्रमेयवद्वानित्याकारकज्ञानीयह्रदनिष्ठानुयोगितानिरूपितसंयोगात्मकहेतुतावच्छेदकसंसर्गप्रतियोगिता प्रमेयवन्निष्ठा, तदवच्छेदकता प्रमेयनिष्ठा (प्रमेयान्तर्गततया धूमत्वनिष्ठा), तादृशावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वस्य धूमत्वगतैकत्वे हेतुतावच्छेदकरूपे सत्त्वाद् ह्रदस्य यत्पदार्थतया हेत्वधिकरणत्वापत्तिः।

अत्र समाधीयते। हेतुतानिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य विवक्षितोक्तघटकप्रतियोगिताविशेषणेन प्रमेयावच्छिन्नप्रतियोगिताया निराकरणसम्भवात्। हेतुतानिरूपितावच्छेदकतावैशिष्ट्यन्तत्र प्रसिद्धचतुष्टयसम्बन्धेन स्व-सामानाधिकरण्यादिना विवक्षितं स्यात्। तत्र दर्शितज्ञानीयप्रमेयावच्छिन्नप्रतियोगितायां हेतुतानिरूपितावच्छेदकताविशिष्टान्यप्रमेयत्वनिष्ठावच्छेदकत्वनिरूपितत्वस्यैव सत्त्वेन विवक्षितविशिष्टान्यावच्छेदकत्वानिरूपितत्वविरहाद् व्यावृत्तिः स्यादिति।

उक्ते जगदीशपरिष्कृते हेतुतावच्छेदकधर्मिकोभयाभावघटिते हेत्वधिकरणत्वपदार्थे, तत्त्वालोककृद्भिः परिष्कृते च हेतुतावच्छेदकगतरूपधर्मिकोभयाभावघटिते हेत्वधिकरणत्वपदार्थे द्रव्यत्वसाध्यकद्रव्यानुयोगिकसमवायविशिष्टसत्तात्वावच्छिन्न-निरूपितविषयित्वान्यतरसम्बन्धेन सत्ताहेतुके प्रदत्ताव्याप्तिदोषातिरिक्तदोषो वह्न्यभावत्वसाध्यके संयोग-प्रतियोगितान्यतरसम्बन्धेन वह्निहेतुके व्यभिचारिणि अतिव्याप्तिर्दीयते।

[तथा हि] वह्न्यभावत्वसाध्यकोक्तान्यतरसम्बन्धेन वह्निहेतोरुक्तान्यतर-सम्बन्धान्तर्गतसंयोगेन पर्वतादौ साध्यानधिकरणे सत्त्वाद् व्यभिचारिणा तत्र वह्नित्वरूपे हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतपर्वतादिनिष्ठाधिकरणतानवच्छेदकत्वस्य (वह्नित्वे संयोगसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वविरहात्) सामान्यतोऽधिकरणतोऽधिकरणतावच्छेदकत्वस्य सत्त्वात् (वह्नित्वे प्रतियोगित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वसत्त्वात्) विवक्षितोभयाभावस्य विरहात्पर्वतादेर्हेत्वधिकरणत्वानुपपत्त्या साध्याभावस्य लक्षणघटकत्वाभावादतिव्याप्तिः प्रसज्यतीति।

इयमतिव्याप्तिः यन्निष्ठानुयोगितानिरूपितहेतुतावच्छेदकसंसर्गप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्याधिकस्य हेतुतावच्छेदकगतरूपे कथञ्चिद् विवक्षणेन द्रव्यत्वसाध्यकद्रव्यानुयोगिकसमवायविशिष्टसत्तात्वावच्छिन्ननिरूपितविषयितान्यतरसम्बन्धेन सत्ताहेतुकस्थले पूर्वप्रदत्ताव्याप्तिवारणे सत्यपि स्यादिति प्रकृततत्त्वालोकखण्डघटकेन 'तथापी'त्यनेन विज्ञापितमित्यवधेयम्।

वह्न्यभावत्वसाध्यकत्वसंयोगप्रतियोगित्वान्यतरसम्बन्धेन वह्निहेतुकस्थले जगदीशोक्तोभयाभावघटितस्य परिष्कृते हेतुतावच्छेदकगतरूपधर्मिके उभयाभावघटिते पर्वतादेर्यत्-पदेन धारणासम्भवाद् हेत्वधिकरणत्वानुपपत्तिश्च, हेतुतावच्छेदकगतरूपे वह्नित्वगतैकत्वे पर्वतादिनिष्ठानुयोगितानिरूपितहेतुतावच्छेदकसंसर्गप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य 'तुष्यतु दुर्जन'न्यायेन कथञ्चित् सत्त्वेऽपि स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतावत्पर्वतादिनिष्ठाधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनवच्छेदकत्वस्य, सामान्यतोऽधिकरणतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वयोः प्रतियोगिनोः, संयोग-प्रतियोगित्वरूपहेतुतावच्छेदकसम्बन्धभेदवशात्, सत्त्वेन विवक्षितोभयाभावस्याभावाद्भवतीति बोध्यमिति भावः।[१६९]

तत्त्वालोकः – अत्रोच्यते। हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे स्वाश्रयाश्रयनिष्ठा या हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपितप्रागुक्तान्यतरसम्बन्धावच्छिन्नवृत्तितावत्संसर्गतानिरूपितनिरूपकता, तद्विशिष्टान्यत्वं विवक्षणीयम्। वैशिष्ट्यञ्च स्व[१]विशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्व, - स्वविशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन। प्रथमवैशिष्ट्यञ्च स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकत्व, - स्वनिरूपिताधिकरणतावद्यन्निष्ठाधिकरणतानिरूपितत्वोभयसम्बन्धेन। द्वितीयवैशिष्ट्यञ्च स्वनिरूपितसंसर्गतावच्छेदकावच्छिन्नघटकतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वसम्बन्धेन।

एवञ्च द्रव्यत्वसाध्यके द्रव्यानुयोगिकसमवायविशिष्टसत्तात्वावच्छिन्ननिरूपितविषयितान्यतरसम्बन्धेन सत्ताहेतुके नाव्याप्तिः, सत्तात्वगतैकत्वे स्वाश्रयाश्रयनिष्ठविशिष्टसत्तात्वावच्छिन्ननिरूपितविषयित्वसम्बन्धावच्छिन्नविशिष्टसत्तात्वावच्छिन्ननिरूपकताविशिष्टत्वस्यैव सत्त्वेन तन्निरूपिताधिकरणता[illegible]तो यत्पदार्थत्वाभावात्। उक्तव्यभिचारिणि तु वह्नित्वगतैकत्वे संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकताविशिष्टान्यत्वसत्त्वेन तन्निरूपकतानिरूपिताधिकरणतावतः पर्वतस्य यत्पदार्थत्वसम्भवेन नातिव्याप्तिरपीति।[१७०]

---

१. 'स्वस्ये'ति प्राचीनमुद्रितपुस्तके।

*प्रकाशः* – पूर्वप्रदत्ताव्याप्त्यतिव्याप्तिदोषद्वयपरिहाराय 'अत्रोच्यते' इत्यादिना उक्तखण्डेन हेत्वधिकरणपदार्थस्य परिष्कृतं विवक्षितं स्वरूपमुच्यते— यद् हेतुतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपे वक्ष्यमाणविशेषणविशेषिताया यस्या निरूपकताया वक्ष्यमाणोभयसम्बन्धेन विशिष्टान्यत्वं भवति (विशिष्टत्वन्न भवति), तन्निरूपकतानिरूपिताधिकरणतावान् यत्र यो भवति स एव तत्र हेत्वधिकरणत्वेन विवक्षितः।

वैशिष्ट्यप्रतियोगिनिरूपकताया विशेषकम् = परिचायकम्, वक्ष्यमाणं विशेषणद्वयम्— १. स्वाश्रयाश्रय(हेतुतावच्छेदकगतरूपाश्रयाश्रय)निष्ठत्वम्, २. हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपित-प्रागुक्तान्यतर[१]-सम्बन्धावच्छिन्ना या वृत्तिता, तादृशवृत्तितावती या संसर्गता, तादृशसंसर्गतानिरूपितत्वञ्च।

विशेषितनिरूपकतावैशिष्ट्यनियामकसम्बन्धद्वयञ्च वक्ष्यमाणं स्व(उक्त-निरूपकता)विशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्व-मेकम्, अपरन्तु स्व(उक्तनिरूपकता)विशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्न-पर्य्याप्त्यनुयोगितावच्छेदकत्वम्।

तत्र प्रथमसम्बन्धघटकस्ववैशिष्ट्यनियामकावपि द्वौ सम्बन्धौ। तत्रैकः स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्ग-ताकत्वरूपः, द्वितीयस्तु स्वनिरूपिताधिकरणतावद्-यन्निष्ठाधिकरणतानिरूपितत्वरूपः।

दर्शितद्वितीयसम्बन्धघटकवैशिष्ट्यनियामकस्तु सम्बन्धः स्व(उक्त-निरूपकता)निरूपितसंसर्गतावच्छेदकावच्छिन्नघटकतावच्छेदकधर्मावच्छिन्नसंसर्गता-कत्वात्मक इति।

एवं सति वह्न्यभावत्वसाध्यकसंयोगप्रतियोगित्वा[२]न्यतरसम्बन्धेन वह्निहेतुके व्यभिचारिणि वह्नित्वगतैकत्वे हेतुतावच्छेदकगतरूपे संयोगसम्बन्धावच्छिन्नवह्नित्वा-वच्छिन्ना निरूपकता दर्शितदिशा विशेषितनिरूपकता भवति, तस्या वह्नित्वगतैकत्वा-श्रयाश्रयवह्निनिष्ठत्वात्, हेतुतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगि-तावच्छेदकरूपनिरूपितवृत्तितावत्संसर्गतानिरूपितत्वाच्च, तादृशनिरूपकताविशिष्टा-

---

१. स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वतादृशानुयोगितावच्छेदकरूपवृत्तिप्रतियो-गिताकभेदावच्छिन्नप्रतियोगिताकभेदवृत्तित्वान्यतरेति।

२. प्रतियोगितानिरूपकत्वमत्र प्रतियोगित्वम्।

न्यत्वस्य सत्त्वेन तादृशनिरूपकतानिरूपिताधिकरणतावत्त्वस्य पर्वतादौ सत्त्वेन पर्वतादौ हेत्वधिकरणत्वोपपत्त्यातिव्याप्तेर्निरासः। हेतुतावच्छेदकगतरूपे तादृशनिरूपकतान्यत्वस्य सद्भावश्च तादृशनिरूपकताविशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव वह्नित्वगतैकत्वे सत्त्वेन स्वविशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वरूपस्य प्रथमतो विशेषितनिरूपकताया वैशिष्ट्यनियामकप्रथमसम्बन्धासत्त्वात्।

वह्नित्वे संयोगसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वानभ्युपगमेऽपि, अर्थात्तादृशाधिकरणतानिरूपकतावच्छेदकत्वानभ्युपगमेऽपि, संयोगत्वावच्छिन्नसंसर्गतानिरूपकतावच्छेदकत्वाभ्युपगमाद् वह्नित्वगतैकत्वे तत्र तादृशनिरूपकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वविरहात्, तत्र वह्नित्वगतैकत्वे संयोग[त्वा]वच्छिन्नवह्नित्वावच्छिन्ननिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वं प्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वञ्च वर्तेते।

अत्र संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकतया प्रथमतो विशिष्टा निरूपकता, सैव संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकतैव भवति। संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकतया परतो विशिष्टा निरूपकता प्रतियोगित्वसम्बन्धावच्छिन्ना वह्नित्वावच्छिन्ना निरूपकता भवतीति वस्तुस्थितिः।

एवं द्रव्यत्वसाध्यकद्रव्यानुयोगिकसमवाय-विशिष्टसत्तात्वावच्छिन्ननिरूपितविषयित्वान्यतरसम्बन्धेन सत्ताहेतुकस्थले हेत्वधिकरणत्वेन विशिष्टसत्ताविषयकज्ञानमादायाव्याप्तिरपि नोक्तहेत्वधिकरणपदार्थे, हेतुतावच्छेदकसत्तात्वगतैकत्वरूपे विशिष्टसत्तात्वावच्छिन्ननिरूपितविषयित्वसम्बन्धावच्छिन्नविशिष्टसत्तात्वावच्छिन्ननिरूपकताविशिष्टत्वस्यैव सत्त्वेन विवक्षितस्य निरूपकताविशिष्टान्यत्वस्य विरहात् तादृशनिरूपकतानिरूपिताधिकरणतावतो विशिष्टसत्ताविषयकज्ञानस्य विवक्षान्तर्गतयत्पदार्थतया परिग्रहासम्भवेन विवक्षितहेत्वधिकरणत्वविरहेणाव्याप्तेरभावात्।

तत्र विशिष्टसत्तात्वावच्छिन्ननिरूपितविषयित्वसम्बन्धावच्छिन्नविशिष्टसत्ता-(त्वा)वच्छिन्ननिरूपकता हेतुतावच्छेदकसत्तात्वगतैकत्वाश्रयाश्रयनिष्ठा, विशिष्टस्य शुद्धानतिरिक्तत्वेन् विशिष्टसत्तायां सत्तात्वस्य सत्त्वात्, हेतुतानिरूपितसंसर्गतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदक(विशिष्टसत्तात्वावच्छिन्ननिरूपितविषयितात्वगतैकत्वरूपनिरूपितवृत्तितावत्संसर्गतानिरूपिता च तादृशनिरूपकताविशिष्टा सा एव निरूपकता, तदवच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदक)त्वस्य विशिष्टसत्तात्वगतरूप

एव सत्त्वेन, सत्तात्वगतैकत्वे तदवच्छेदकता(वच्छेदकता ?)पर्य्याप्त्यनुयोगितानवच्छेदकत्वरूपप्रथमवैशिष्ट्यस्य, तादृशनिरूपकताविशिष्टनिरूपकतात्वेन द्रव्यानुयोगिकसमवायसम्बन्धावच्छिन्नसत्तात्वावच्छिन्ननिरूपकतां परिगृह्य, स्वविशिष्टनिरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकत्वरूपद्वितीयवैशिष्ट्यस्य च तत्र सत्तात्वगतैकत्वे सत्त्वेन, विशेषितनिरूपकताविशिष्टत्वस्यैव सत्त्वेन विवक्षितस्य निरूपकताविशिष्टान्यत्वस्य विरहेण तादृशनिरूपकतानिरूपिताधिकरणतावतो विशिष्टसत्ताविषयकज्ञानस्य हेत्वधिकरणत्वविरहेणाव्याप्तेरभावात्।

वह्निमान् धूमादित्यत्र संयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्ननिरूपकताविशिष्टान्यत्वस्य हेतुतावच्छेदकगतधूमत्वगतैकत्वे सत्त्वेन तादृशनिरूपकतानिरूपिताधिकरणतावत्त्वस्य पर्वतादौ धूमाधिकरणे सत्त्वेन पर्वतादेर्हेत्वधिकरणत्वोपपत्त्या लक्षणसङ्गतिः, धूमत्वस्य संयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वेऽपि संयोगत्वावच्छिंन्नसंसर्गतानिरूपितनिरूपकतावच्छेदकत्वादिति न विस्मर्त्तव्यमिति प्रकाशः।[१७०]

तत्त्वालोकः– न च यत्त्वघटितत्वादननुगम इति वाच्यम्। हेतुतावच्छेदकगतरूपवृत्तिभेदप्रतियोगितानिरूपिता या तादृशनिरूपकतात्वावच्छिन्नावच्छेदकता, तन्निरूपिततादृशावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपितोभयत्वावच्छिन्नसंसर्गतानिरूपितावच्छेदकतावदभावीयप्रतियोगितानिरूपितपरम्परीयस्वनिष्ठावच्छेदकतानिरूपिता या तादृशसंसर्गताकत्वत्वनिष्ठावच्छेदकतानिरूपितोभयत्वावच्छिन्नसंसर्गता, तन्निरूपितनिरूपितत्व[१]-सम्बन्धावच्छिन्नाधिकरणत्वनिष्ठावच्छेदकतानिरूपिता या स्वनिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपिताधेयत्वसम्बन्धावच्छिन्नावच्छेदकता, तद्वत्त्वेन यत्पदार्थानुगमादिति।

प्रमीयप्रकारतानिरूपितावच्छेदकत्वस्य हेतुतावच्छेदकविशेषणत्वपक्षे च हेतुतावच्छेदकगतरूपे हेतुताविशिष्टप्रमीयप्रकारताविशिष्टनिरूपकता[२]-निरूपितयन्निष्ठाधिकरणताविशिष्टान्यत्वं स एव हेत्वधिकरणपदार्थः। प्राथमिकं स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व,-स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपितप्रागुक्तान्यतरसम्बन्धावच्छिन्नवृत्तितावत्संसर्गताकत्वोभयसम्बन्धेन।

---

१. 'तन्निरूपितत्वे'त्येव प्राचीनमुद्रितपुस्तके।
२. 'विशिष्टनिरूपकते'ति पाठो मुद्रितप्राचीनपुस्तके नास्ति।

द्वितीयञ्च स्वावच्छेदकतात्त्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्व, - स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकत्वोभयसम्बन्धेन।

तृतीयञ्च स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्व-स्वनिरूपितनिरूपकतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेनेति बोध्यम्।[१७१]

*प्रकाशः* – उक्तपरिष्कारप्रकारेऽव्याप्त्यादिदोषराहित्येऽपि यत्त्वघटितत्वेनाननुगमदोषाशङ्का-तत्परिहारावुच्येते 'नचे'त्याद्युक्तखण्डे प्रथमभागेन।

उक्तपरिष्कारेण हेतुतावच्छेदकगते यन्निष्ठाधिकरणतानिरूपकताविशिष्टान्यता, तस्यैव हेत्वधिकरणपदार्थत्वोक्त्या यत्त्वघटितत्वादनुगमाभावशङ्का सुस्पष्टैव, परिग्राह्याशेषहेत्वधिकरणगतानुगतरूपदर्शनात्मक-तत्परिहारस्तु , हेतुतावच्छेदकगतरूपवृत्तिभेदीयप्रतियोगितावच्छेदकतामारभ्य [अर्थान्निरूपकताविशेषविशिष्टस्य भेदो हेतुतावच्छेदकगतरूपवृत्तिर्भेदो यथा वह्न्यभावत्वसाध्यकसंयोग-प्रतियोगित्वान्यतर-सम्बन्धेन वह्निहेतुकस्थले संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकताविशिष्टान्यत्वरूपो भेदो वह्नित्वगतैकत्ववृत्तिः, तादृशनिरूपकताविशिष्टान्यत्वरूपभेदीयप्रतियोगिता निरूपकताविशिष्टनिष्ठा, तन्निरूपितावच्छेदकता निरूपकतायां प्रतियोगिविशेषणीभूतायां (संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपकतायाम्) अतो निरूपकतात्वावच्छिन्नां निरूपकतानिष्ठां हेतुतावच्छेदकगतरूपवृत्तिभेदीयप्रतियोगितानिरूपितामाद्यामवच्छेदकतामारभ्य] तदग्रिमक्रमिकतत्तदवच्छेदकतानिरूपिता चरमा या आधेयत्वसम्बन्धावच्छिन्ना अधिकरणत्वनिष्ठावच्छेदकतानिरूपिताया अवच्छेदकता, तद्वत्त्वेन यत्पदार्थस्य (हेत्वधिकरणपदार्थस्य) अनुगमः, उक्तभेदस्य प्रतियोगी (विशिष्टो ?) निरूपकतया विशेषोऽस्ति, अतस्तन्निष्ठप्रतियोगितावच्छेदकता निरूपकता निष्ठा, निरूपकता निरूपकतात्वविशेषिता, अतो निरूपकतानिष्ठावच्छेदकता निरूपकतात्वावच्छिन्ना।

निरूपकता येन संसर्गेण विशिष्टे प्रतियोगिनि विशेषणं, तन्निष्ठा संसर्गता निरूपकतानिष्ठनिरूपकतात्वावच्छिन्नावच्छेदकतानिरूपिता भवति। निरूपकतायाश्च विशिष्टे प्रतियोगिनि संसर्गद्वयम्। तत्र स्वविशिष्टनिरूपकताद्यनवच्छेदकत्वान्तमेकम्, अपरं स्वविशिष्टनिरूपकताद्यवच्छेदकत्वान्तम्। अतो निरूपकतानिरूपिता उभय-

त्वावच्छिन्ना या संसर्गता, तन्निरूपिता या अवच्छेदकता, तादृशावच्छेदकतावती अभावीयप्रतियोगिता, अर्थादुक्तोभयसंसर्गघटकप्रथमसंसर्गात्मकाभावीयप्रतियोगिता, तादृशावच्छेदकत्वनिष्ठा तादृशावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपिता, तादृशावच्छेदकतात्वेन तादृशावच्छेदकत्वस्य अभावात्मकसंसर्गप्रतियोगित्वात्। तथा परम्परान्तर्गत(अर्थात्तदग्रिमोभयसंसर्गान्तर्गत-प्रथमसम्बन्धशरीरप्रथमावयवात्मक)स्वनिष्ठावच्छेदकता तन्निरूपिता या तादृशसंसर्गताकत्वत्वरूप (स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकत्वत्वरूप)स्ववैशिष्ट्यनियामकसंसर्गद्वयान्तर्गतप्रथमसंसर्गगतधर्मनिष्ठावच्छेदकता निरूपिता उभयत्वावच्छिन्ना संसर्गता, तन्निरूपितनिरूपितत्व(संसर्गतानिरूपिता निरूपकता, तन्निरूपिता अधिकरणता)सम्बन्धावच्छिन्ना अधिकरणत्वनिष्ठावच्छेदकता, तादृशाधिकरणत्वनिष्ठावच्छेदकतानिरूपिता या आधेयत्वसम्बन्धावच्छिन्ना अवच्छेदकता, तादृशचरमावच्छेदकतावानेव यत्पदार्थः (हेत्वधिकरणपदार्थः) इत्युक्तानुगमप्रकारस्य विश्लेषणं विज्ञापितं विज्ञेयम्।

अनन्तरं प्रकृतखण्डस्योत्तरभागेन 'प्रमीयप्रकारतानिरूपितावच्छेदकत्वस्य हेतुतावच्छेदकविशेषणत्वपक्षे चे'त्यादिनाऽपरथा परिष्कृतो हेत्वधिकरणपदार्थो विज्ञाप्यते तत्त्वालोककृद्भिः, यद्घटकं वैशिष्ट्यत्रयं मूले क्रमशो विनिर्दिष्टमस्ति। त्रिषु वैशिष्ट्येषु प्रथमं प्रमीयप्रकारतायां हेतुतावैशिष्ट्यम्, द्वितीयं पुनः निरूपकतायां प्रकारतावैशिष्ट्यम्, तृतीयन्तु हेतुतावच्छेदकगतरूपवृत्तितया विवक्षितनिरूपकतानिरूपितयन्निष्ठाधिकरणताविशिष्टान्यत्वघटकमन्तिमम्।

अत्र कल्पे वह्न्यभावत्वसाध्यकसंयोगप्रतियोगित्वान्यतरसम्बन्धेन वह्निहेतुकस्थले हेतुतया विशिष्टा [स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्वनिरूपितसंसर्गावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपनिरूपितप्रागुक्तान्यतर(स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वतादृशानुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकभेदावच्छिन्नभेद-वृत्तित्वान्यतर)-सम्बन्धावच्छिन्नवृत्तितावत्संसर्गताकत्वोभयसम्बन्धेन हेतुताविशिष्टा] प्रमीयप्रकारता = संयोगसम्बन्धावच्छिन्ना वह्नित्वावच्छिन्ना प्रकारता, तादृशप्रकारतया स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकतात्वस्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकत्वोभयसम्बन्धेन विशिष्टा निरूपकता = संयोगसम्बन्धावच्छिन्ना वह्नित्वावच्छिन्ना निरूपकता, तया निरूपकतया निरूपिता यन्निष्ठा (पर्वतादिनिष्ठा)

अधिकरणता, तया स्व(अधिकरणता)निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्न-पर्य्याप्त्यनुयोगितानवच्छेदकत्व,- स्वनिरूपितनिरूपकतानिरूपितसंसर्गतावच्छेदकतां-त्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकनिरूपकतावच्छेदकतात्वा-वच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन विशिष्टतो भिन्नत्वं हेतुता-वच्छेदकगतरूपे भवति स एव हेत्वधिकरणपदार्थस्ततश्च उक्तस्थले पर्वतादि-यत्पदार्थनिष्ठाधिकरणताविशिष्टतो भिन्नत्वं हेतुतावच्छेदकवह्नित्वगतैकत्वे तत्र भवति। अतस्तत्र पर्वतादिर्हेत्वधिकरणपदार्थत्वेन सङ्गृहीतो भवति। तत्र पर्वतादि-यत्पदार्थनिष्ठाधिकरणताविशिष्टान्यत्वप्रयोजकस्तद्वैशिष्ट्यनियामकतयोक्तसम्बन्ध-द्वयान्तर्गतप्रथमसम्बन्धस्य विरहः, तदधिकरणनिरूपितनिरूपकतावच्छेदकतात्वा-वच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वस्यैव वह्नित्वगतैकत्वे हेतुतावच्छेदकगतरूपे सत्त्वेन विवक्षितस्य तादृशानुयोगितानवच्छेदकत्वस्याभावात्।

द्रव्यत्वसाध्यकद्रव्यानुयोगिकसमवायविशिष्टसत्तात्वावच्छिन्ननिरूपितविष-यित्वान्यतरसम्बन्धेन सत्ताहेतुके सद्धेतुस्थले विशिष्टसत्ताविषयकज्ञाननिष्ठाधिकरणता-विशिष्टतैव सत्तात्वगतैकत्वे, अतो न तत्र तादृशज्ञानस्य हेत्वधिकरणत्वापत्तिः।

वह्निमान् धूमादित्यादौ पर्वतादिनिष्ठाधिकरणतामादाय विवक्षितविशिष्टान्यत्व-सत्त्वात्पर्वतादेरधिकरणत्वोपपत्तिरिति सर्वं समञ्जसमिति प्रकाशः।[१७१]

तत्त्वालोकः – **''व्याप्तेरैक्यव्यवहार'' इति[१]। तथा च ''एका व्याप्तिरि''[२]-त्यत्रैकपदमेकधर्मावच्छिन्ननिरूपकताकैकधर्मावच्छिन्नानुयोगिताकपरमिति भावः। ''नन्वेवमि''ति[३]। एवं = पक्षधर्मांशे विशेषणतयाऽनुमितिजनकता-वच्छेदकत्वरूपव्याप्तित्वस्य सामानाधिकरण्यमात्रे स्वीकारेऽप्यैक्यव्यवहारो-पपादने। ''इत्याशङ्कायामि''त्यादि[४]। तथा च सामानाधिकरण्यावच्छिन्न-प्रकारकज्ञानस्यैव कारणत्वेन तस्य पक्षधर्मे दृष्टान्तसाधारणे महावाय्वादावुप-नीतसामानाधिकरण्यविषयकत्वेन सम्भवितया पक्षधर्मधूमादिविषयकपरामर्ष-स्यासम्भवेऽपि क्षत्यभावेन परामर्षासम्भवशङ्काया एवानुत्थानात्सिद्धान्ता-भिधानमनुचितमिति। अत्र यथा तत्सङ्गतिस्तथा तामादायैवेत्याद्यग्रिमग्रन्थे व्यक्तीभविष्यतीति भावः।[१७२]**

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७
२. तदेव, पृ. ७
३. तदेव, पृ. ७
४. तदेव, पृ. ७

*प्रकाशः* – पूर्वप्रसङ्गपरिसमाप्त्यनन्तरं = लक्षणघटकहेत्वधिकरणपदार्थविचारानन्तरम् 'प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरि'ति चिन्तामणेः, 'प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं, तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थ' इति दीधितेश्चोपर्येव तद्दीधित्यग्रिमां 'सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद् व्याप्तेरैक्यमि'[1]ति दीधितिमाश्रित्य विचारपरकजागदीशीभागविचार आरभ्यते। तत्र 'सामानाधिकरण्यव्यक्तीनां भेदेऽपी'त्याद्युक्तदीधितेरवतरणरूपां व्याख्यां 'ननु सामानाधिकरण्यस्य व्याप्तित्वे तस्य प्रतिधूमं भिन्नत्वेन धूमसामान्ये वह्निसामान्यस्यैका व्याप्तिरिति व्यवहारोऽनुपपन्न इत्यत आह सामानाधिकरण्यव्यक्तीनां भेदेऽपीत्यादि'[2] इत्युल्लिख्य जगदीशेन विधाय 'तथा च वह्नित्वधूमत्वाद्यनुगमादेव तत्र व्याप्तेरैक्यव्यवहारो न तु वस्तुगत्याऽपि व्याप्तेरैक्यमिति भाव'[3] इत्युपन्यासेन तद्दीधितिप्रतिपाद्याशयस्तेन व्यक्तीकृतः।

अत्र 'व्याप्तेरैक्यव्यवहार' इति जागदीशीं प्रतीकरूपेण परिगृह्य तत्त्वालोककृद्भिरुच्यते— 'एका व्याप्तिरि'त्येतद्घटकम् 'एक'पदमेकधर्मावच्छिन्ननिरूपकताकैकधर्मावच्छिन्नानुयोगिताकपरम् अर्थाद् यस्य सामानाधिकरण्यविशेषस्य एक एव धर्मो निरूपकतावच्छेदकः (प्रतियोगितावच्छेदकः), तदनुयोगितावच्छेदकोऽपि एक एव धर्मस्तादृशं सामानाधिकरण्यं व्याप्तिः, तथा च स्वनिरूपकतावच्छेदकवह्नित्वधर्मगतैकत्वं स्वानुयोगितावच्छेदकं धूमत्वगतैकत्वं स्वस्मिन् सामानाधिकरण्यात्मकव्याप्तौ आरोप्य एकत्वव्यवहारो भवतीति तदर्थः।

अनन्तरम्— 'नन्वेवं सामान्यलक्षणाऽस्वीकारे महानसीयवह्निसामानाधिकरण्यस्य स्मृतस्य (पूर्वमनुभूततया स्मृतस्य) पक्ष(पर्वत)वृत्तिधूमादावसत्त्वात् पर्वतीयवह्निसामानाधिकरण्यस्य च प्रागननुभवात् कुतः (कथं) परामर्शः (कथं धूमव्यापकवह्निसमानाधिकरणधूमवान्पर्वत एवंविधः परामर्शः)' इत्याशङ्कायाः परिहाराय 'एकैव हि सा व्याप्तिरिति परामर्शीयसिद्धान्तग्रन्थोऽसङ्गतः (तत्तद्धूमनिष्ठतत्त-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ.७

२. तत्रैव, जागदीशीमूलम्, पृ.७

३. तदेव, पृ.७

द्वह्निसामानाधिकरण्यस्य भिन्नतया सामानाधिकरण्यात्मकव्याप्त्यावेकत्वासम्भवात्) इत्यत आह वस्तुतस्त्विति'[१] इत्येतज्जागदीशीघटकं 'नन्वेवमि'ति परिगृह्य तत्रत्यस्य 'एवमि'त्यस्य व्याख्या क्रियते—

'पक्षधर्मांशे विशेषणतयाऽनुमितिजनकतावच्छेदकत्वरूपव्याप्तित्वस्य (व्याप्तिज्ञानमनुमितिजनकं तत्र विषयितया विशेषणीभूता व्याप्तिः सामानाधिकरण्यरूपा धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यरूपा तत्सामानाधिकरण्यं पक्षधर्मे = पर्वतात्मकपक्षस्य धर्मे = धूमे विशेषणम् अत उक्तं पक्षधर्मांशे विशेषणतयाऽनुमितिजनकतावच्छेदकत्वरूपव्याप्तित्वस्य) इति, सामानाधिकरण्यमात्रे = अत्र 'मात्र'पदेन सामानाधिकरण्यसम्बन्धेन धूमत्वादिविशिष्टव्यापकवह्न्यादिसामानाधिकरण्यवतो धूमत्वादेर्व्यवच्छेदः। स्वीकारेऽपि, एवमैक्यव्यवहारोपपादने = निरूपकतावच्छेदकानुयोगितावच्छेदकगतैक्यारोपेण व्याप्तेरैक्यव्यवहारोपपादने इत्यर्थः।

''इत्याशङ्कायामि''त्यादिजागदीशीग्रन्थः।[२] सामान्यलक्षणाऽस्वीकारे धूमत्वविशिष्टव्यापकवह्निसामानाधिकरण्यस्य प्रतिधूमं भिन्नत्वेन पर्वतीयधूमे पर्वतीयवह्निसामानाधिकरण्यस्य प्रागननुभूतत्वेन स्मरणासम्भवाद् धूमत्वविशिष्टव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः इति परामर्शासम्भवादित्याशङ्कायां सत्याम् 'एकैव हि सा व्याप्तिरि'[३]ति परामर्शीयसिद्धान्तोऽसङ्गतः।

अत्र जगदीशोपस्थापितशङ्कादलस्याशयो दर्श्यते तत्त्वालोककृद्भिः 'तथा चे'त्यादिना। तथा च = सामानाधिकरण्यस्य व्याप्तित्वे च, सामानाधिकरण्यावच्छिन्नप्रकारकज्ञानस्यैव[४] 'कारणत्वेन तस्य पक्षधर्मे दृष्टान्तसाधारणे महावाय्वादावुपनीतसामानाधिकरण्यविषयकत्वेन सम्भवितया पक्षधर्मधूमादिविषयकपरामर्शस्यासम्भवेऽपि क्षत्यभावेन परामर्शासम्भवशङ्काया एवानुत्थानात् सिद्धान्ताभिधानमनुचितमि'ति उक्ततत्त्वालोकान्तर्गतस्य 'तस्ये'त्यस्य सामानाधिकरण्यावच्छिन्नप्रकारकज्ञानस्येत्यर्थः, 'पक्षधर्मे दृष्टान्तसाधारणे' इत्यस्य दृष्टान्त(महानस)पक्ष(पर्वत)साधारणे रासभसत्तादौ न तु पर्वतीयधूमे एवेत्यर्थः, 'महावाय्वादावुपनीतसामानाधिकरण्य-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.७

२. तदेव, पृ.७

३. तत्त्वचिन्तामणौ अनुमानखण्डे परामर्शप्रकरणम्

४. अत्र 'एव'पदेन सामानाधिकरण्यसम्बन्धेन सामानाधिकरण्यविशिष्टधूमत्वादिप्रकारकज्ञानस्य व्यवच्छेदः।

विषयकत्वेन सम्भवितये'त्यस्यायमर्थो यद् महावायौ = झंझावाते = सर्वदिगुत्थिते शक्तिविशेषवति वायुविशेषे प्रवहति दूरदूरस्थितविभिन्नदिगवस्थितासमानाधिकरणानामपि पदार्थानां यत्सामानाधिकरण्यमुपनीतम् = अनुभूतं = विज्ञातं, तादृशसामानाधिकरण्या[य]विषयकं तादृशसामानाधिकरण्यावच्छिन्नदृष्टान्तसाधारणपक्षधर्मप्रकारकम् अर्थाद् धूमव्यापकवह्निसमानाधिकरणरासभवान् अथवा 'धूमव्यापकवह्निसमानाधिकरणसत्तावान् पर्वतः' एवंविधं दृष्टान्तसाधारणपक्षधर्म = महानसपर्वतोभयवृत्तिरासभसत्तादिपदार्थ, - प्रकारकम्, तादृशसामानाधिकरण्यावच्छिन्नविषयकं ज्ञानं सम्भवितुमर्हत्येव, सम्भवतस्तादृशज्ञानस्यापि सामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वरूपोक्तकारणतावच्छेदकधर्मवत्तयानुमितिकारणत्वसम्भवात्, पक्षधर्मधूमादिविषयकपरामर्षस्यासम्भवेऽपि पर्वतीयवह्नेः सामानाधिकरण्यस्य पर्वतीयधूमे प्रागननुभूतत्वेन धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः (पर्वतीयवह्निसमानाधिकरणपर्वतीयधूमवान् पर्वतः) एवंविधस्य पक्षधर्मधूमादिविषयकपरामर्शस्यासम्भवेऽपि क्षत्यभावेन उक्तपरामर्शासम्भवशङ्काया उत्थानासम्भवः, तदुत्थानासम्भवे च उक्तसिद्धान्ताभिधानस्यौचित्याभावादिति पूर्वपक्षस्याशयः।

अत्र सिद्धान्ताभिधानस्य = 'एकैव हि सा व्याप्तिरि'त्यभिधानस्य, यथा सङ्गतिस्तथा तामादायैव (तथा च ताम् = तद्वति = तादृशसामानाधिकरण्यवति, धूमत्वादिकं व्याप्तिरितीमां द्वितीयां व्याप्तिमादायैव) [तामभिप्रेत्यैव] 'परामर्शीयसिद्धान्तग्रन्थ' इत्यग्रिमग्रन्थे[१] व्यक्तीभविष्यति = स्पष्टीभविष्यतीति प्रकाशः।[१७२]

तत्त्वालोकः – **केचित्तु — "नन्वेवमि"त्ति[२]। एवम् 'एक'पदस्य भाक्तैक्यपरत्वे। इत्याशङ्कायामित्यादि। तथा च व्याप्तौ भाक्तमेवैक्यं व्यवह्रियेत चेत्कथं सामान्यप्रत्यासत्त्यनङ्गीकारपक्षे व्याप्तिज्ञानासम्भवमाशङ्क्य व्याप्त्यैक्यमुच्येत तादृशैक्यसद्भावेऽपि व्याप्तिज्ञानासम्भवस्यानुद्धारादिति भावः।**

**अथैवं 'वस्तुतस्त्वि'त्यादिग्रन्थेऽनेकस्वरूपसामानाधिकरण्यात्मकव्याप्त्यभिधानं सन्दर्भविरुद्धं स्यादिति चेत्।**

**सत्यम्, 'यद्रूपविशिष्टसमानाधिकरणे'त्यादिना प्रथमं सामानाधिकरण्यमात्रस्य व्याप्तित्वमभिधायैक्यव्यवहारं च तत्र कथञ्चिदुपपाद्य तत्र दूषणपूर्वकं सामान्यलक्षणप्रत्यासत्त्यङ्गीकारानङ्गीकारमतभेदेन सिद्धान्तभूतं**

---

१. प्रकृतग्रन्थः, (प्रथमो भागः), जागदीशीमूलम्, पृ. ८

२. तदेव, पृ. ७

भाक्तमुख्यैक्यव्यवहारविषयं व्याप्तिद्वयं बोधयतो'वस्तुतस्त्वि'त्यादिग्रन्थस्य न हि सन्दर्भविरोधः।

एवञ्च सामानाधिकरण्यमात्रव्याप्तिपक्षविशिष्टव्याप्तिपक्षयोः प्रथमे सदोषत्वस्य द्वितीयपक्षाभिधायकग्रन्थ एव व्यक्तत्वात्परामर्षीयसिद्धान्तग्रन्थसङ्गतिरूपतद्ग्रन्थाप्रकाशितद्वितीयपक्षानुगुण्यप्रकाशनमात्रतात्पर्यकस्य 'नन्वेवमि'-त्यादिग्रन्थस्यापि द्वितीयेऽपि पक्षे द्वितीय एवोक्तानुगुण्यं सर्वथा निर्दोषत्वञ्चेति प्रकटयितुं 'ननु हेतुनिष्ठे'त्याद्यपि[1] वक्ष्यतीति— वदन्ति।[१७३]

*प्रकाशः* – 'केचित्त्वा'दि 'वदन्ती'त्यन्तोपर्य्युक्ततत्त्वालोकखण्डेन तत्त्वालोककृद्भिः पूर्वमालोकिततत्त्वा 'नन्वेवमि'त्यादिजागदीशी मतान्तरतयाऽपरथा व्याक्रियते।

तत्र 'केचिदि'त्यस्य अन्तिमेन 'वदन्ती'त्यनेनान्वयः। 'नन्वेवमि'ति जागदीशीघटकस्य 'एवमि'त्यस्य एकपदस्य भाक्तैक्यपरत्वे इत्यर्थः, तदग्रिमजागदीशीघटकीभूता 'इत्याशङ्कायामि'[2]त्यादिजागदीशीपङ्क्तिः। तदभिप्रायः 'तथा चे'त्यादिना 'व्याप्तिज्ञानासम्भवस्यानुद्धारादिति भाव'इत्यन्तेन दर्श्यते यद् 'व्याप्तौ भाक्तमेवैकत्वं यदि व्यवह्रियेत तदा सामान्यलक्षणाप्रत्यासत्त्यनङ्गीकारपक्षे दर्शितदिशा शङ्कां (सामानाधिकरण्यस्य प्रतिधूमं भिन्नत्वेन पर्वतीयादिधूमे पर्वतीयादिवह्निसामानाधिकरण्यस्यानुभूतत्वस्मृतत्वविरहाद् 'धूमो वह्निव्याप्य' इत्येवं व्याप्तिज्ञानासम्भवशङ्कां) विधाय तच्छङ्कापनोदाय कथं व्याप्त्यैक्यमुच्येत ? तादृशव्याप्त्यैक्यसद्भावेऽपि (व्याप्तौ दर्शितदिशा आरोपितैक्यसत्त्वेऽपि) दर्शितस्वरूपायाः सामानाधिकरण्यात्मिकाया व्याप्तेर्ज्ञानासम्भवात्मकदर्शितदोषस्य तावतोद्धाराभावादिति तदाशय इति।

अत्र 'अथैवम्' इत्युपक्रम्य नवः पूर्वपक्षो यद् एवंस्थितौ सत्यामर्थात् सामानाधिकरण्यात्मकव्याप्तौ सत्यां, तत्रैक्यव्यवहारस्य भाक्तत्वे = निरूपकतावच्छेदकतानुयोगितावच्छेदकगतैकत्वारोपमूलकत्वे, व्याप्तिज्ञानासम्भवदोषस्योद्धारासम्भवे सति 'वस्तुतस्त्वित्य्. दिग्रन्थे = 'वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वाद्धूमत्वादिमति तादृशसामानाधिकरण्यम्, तद्वति धूमत्वादिकं वा व्याप्तिः, आद्या भिन्ना द्वितीया त्वभिन्नैवे'त्येतद्ग्रन्थे[3], अनेकस्वरूपसामानाधिकरण्यात्मकव्याप्त्यभिधानं सन्दर्भविरुद्धम् = अनेकस्वरूपसामाना-

---

१. प्रकृतग्रन्थः, (प्रथमो भागः), जागदीशीमूलम्, पृ. ७-८

२. तत्रैव, जागदीशीमूलम्, पृ. ७

३. तत्रैव, दीधितिमूलम्, पृ.७

धिकरण्यात्मकव्याप्तौ पूर्वं सदोषत्वदर्शने पूर्वदर्शितदोषवतस्तस्यैव तदुत्तरं 'वस्तुतस्त्वि'ति निर्दिश्य अभिधानस्य सन्दर्भविरुद्धत्वादिति।

तत्र 'सत्यं, यद्रूपविशिष्टे'त्यादिना समाधीयते — यत् प्रथमं सामानाधिकरण्यमात्रस्य न तु धूमत्वादिमति धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य, न वा धूमत्वविशिष्टव्यापकवह्निसामानाधिकरण्य, - अर्थात् तादृशवह्निसामानाधिकरण्यसम्बन्धेन तादृशवह्निसामानाधिकरण्यविशिष्टधूमत्वस्य, 'यद्रूपविशिष्टसमानाधिकरणे'-त्यादि-दीधित्या व्याप्तित्वमभिधाय तत्र ऐक्यव्यवहारञ्च कथञ्चिद् = लक्षणात्मकभक्त्याश्रयणेन, उपपाद्य सामान्यलक्षणाप्रत्यासत्त्यङ्गीकारानङ्गीकारमतभेदेन सिद्धान्तभूतं भाक्तमुख्यैक्यव्यवहारविषयं व्याप्तिद्वयं बोधयतो [सामान्यलक्षणाप्रत्यासत्त्यङ्गीकारमते भाक्तैक्यव्यवहारविषयां धूमत्वादिमति धूमत्वादिविशिष्टव्यापकवह्न्यादिसामानाधिकरण्यरूपां व्याप्तिं (तादृशसामानाधिकरण्यरूपां व्याप्तिं) सामान्यलक्षणाप्रत्यासत्त्यनङ्गीकारमते तद्वति = धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यवति, धूमत्वादिरूपां व्याप्तिं बोधयतो] दर्शितस्य 'वस्तुतस्त्वि'त्यादिग्रन्थस्य सन्दर्भविरोधविरहादिति 'अथैवमा'दिनोत्थापितसन्दर्भविरोधाशङ्कासमाधानम्।

एवञ्च = 'वस्तुतस्त्वि'त्यादिग्रन्थस्य उक्तमतभेदेन भाक्तमुख्यैक्यव्यवहारविषयसिद्धान्तभूतोक्तव्याप्तिद्वयबोधकत्वेन सन्दर्भविरोधाभावे च, सामानाधिकरण्यमात्रव्याप्तिपक्षात्मकप्रथमपक्ष(यद्रूपविशिष्टेत्यादिना वस्तुतस्तुतः पूर्वदर्शितपक्ष), - विशिष्टव्याप्तिपक्ष, - 'वस्तुतस्तु' इत्यादिना दर्शितद्वितीयपक्षयोः प्रथमपक्षे सदोषत्वस्य दर्शितद्वितीयपक्षाभिधायकग्रन्थ एव = 'वस्तुतस्तु' ग्रन्थ एव, व्यक्तत्वात् = वस्तुतस्तु धूमत्वादिविशिष्टवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वादित्युक्त्या व्यक्तत्वात्, परामर्शीयसिद्धान्तसङ्गतिरूपे तद्ग्रन्थाप्रकाशिते = द्वितीयपक्षाभिधायकग्रन्थाप्रकाशिते, यद् द्वितीयपक्षानुगुण्यप्रकाशनं, तन्मात्रतात्पर्य्यको यो 'नन्वेवमि'त्यादिजागदीशीग्रन्थस्तस्यापि द्वितीयेऽपि पक्षे = 'वस्तुतस्तु'पक्षेऽपि, द्वितीय एव = तद्वति धूमत्वादिकम्वा व्याप्तिरित्यस्मिन्नेव, उक्तानुगुण्यं = परामर्शीयसिद्धान्तग्रन्थ = 'एकैव हि सा व्याप्तिरि'तिग्रन्थसङ्गतिरूपतद्ग्रन्थाप्रकाशितानुगुण्यं, सर्वथा निर्दोषत्वञ्चेति प्रकटीकर्तुं "ननु हेतुनिष्ठ(ननु साधननिष्ठेति)[१]सामानाधिकरण्यस्य व्याप्तित्वे 'एकैव हि सा व्याप्तिरि'ति ग्रन्थासङ्गतिस्तदवस्थैव, तथा विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः साधनस्य [सत्त्वस्य] गुणादौ परामर्शाद् गुणादौ द्रव्यत्वानुमितेः

१. अधुनोपलब्धसंस्करणेषु ( ) कोष्ठकान्तर्गत एव पाठः।

प्रमात्वं स्यादत आह तद्वती''ति[१] जगदीशोऽवतरणिकां वक्ष्यतीति केचिद् वदन्ति = व्याकुर्वते इत्याशयोऽवधेयः।[१७३]

तत्त्वालोकः– ''अनुमितिः स्यादित्यापत्तिरि''ति[२]। तथा चोक्तसामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वरूपकारणतावच्छेदकावच्छिन्नस्य रासभपरामर्षस्थलेऽपि सत्त्वेन तत्रानुमित्यनुत्पत्त्याऽन्वयव्यभिचार इति भावः।

सामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वेन परामर्षस्य न सामानाधिकरण्यमात्रे व्याप्तित्वस्वीकारेऽपि कारणता, स्वरूपासिद्धेस्तादृशाखिलज्ञानाविरोधितया हेत्वाभासतानुपपत्तेः, किन्तु तादृशसामानाधिकरण्यात्मकव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वघटितधर्म्मेणैव, तथा च रासभपरामर्षान्नानुमित्यापत्तिः, न चैवमपि रासभे व्याप्यत्वव्यवहारो न वारित इति वाच्यम्, तद्धर्म्मावच्छिन्ने व्याप्यत्वव्यवहारे तद्धर्मावच्छिन्नव्यापकसामानाधिकरण्यस्यैव प्रयोजकत्वादित्याशयेनाह ''नचे''त्यादि[३]। धूमत्वादेस्तत्र प्रवेशे तद्धटितस्यैवेति 'एव'कारेण सामानाधिकरण्यमात्रस्य व्यवच्छेदः।

तथा च सामानाधिकरण्यस्य व्याप्तित्ववादिभिस्तदुपपत्तये हेतुव्यापकसाध्यसामानाधिकरण्यमात्रप्रकारकज्ञानस्य कारणत्वं वाच्यम्। एवञ्च पक्षे धूमदर्शनेऽसति सति च रासभदर्शने उपनीतधूमव्यापकवह्निसामानाधिकरण्यप्रकारेण रासभस्य वह्निधूमविरहिणि पक्षे प्रमापरामर्षाद्धूमलिङ्गकानुमित्यापत्तिः। न चैवं रासभवानिति ज्ञानाकारलेखनमसङ्गतमिति वाच्यम्, यथाश्रुताभिप्रायेण तल्लेखनात्। 'सामानाधिकरण्यमात्रप्रकारके'त्यनेन तदतिरिक्तहेतुतावच्छेदकप्रकारकत्वस्य कारणतावच्छेदकघटकत्वस्यैव व्यवच्छेदात्तावतैव सामानाधिकरण्यमात्रस्य व्याप्तित्वसिद्धेः नहि ज्ञानेऽतिरिक्तप्रकारकत्वस्य, वैफल्यादित्यत्र वा तात्पर्यात्। नचासिद्धेराभासत्वानुपपत्तिः, अनुभवसिद्धप्रतिबन्धकत्वान्तरस्य तैरप्यङ्गीकरणादिति भावः।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, ७-८

२. 'अनुमितिः स्यादिति भाव' इति पाठान्तरम्। – तदेव, पृ. ७

३. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.७

कश्चिदेतद्ग्रन्थस्य धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानस्य कारणत्वे पक्षधर्मांशे सामानाधिकरण्यधूमत्वोभयोः प्रकारतया व्याप्तित्वेन मदिष्टसिद्धिरित्येतदर्थकतया 'धूमत्वादिमति तादृशसामानाधिकरण्यमि'ति[1] दीधितेर्धूमत्वविशिष्टविशेषणतापन्नसामानाधिकरण्यस्यैक[2]-धर्मिविशेषणतापन्नसामानाधिकरण्यहेतुतावच्छेदकोभयार्थकतया च व्याख्यानं कुरुते।

तन्न सर्वथा चारु। तदुभयोर्व्याप्तित्वे हेतुव्यापकसाध्यसमानाधिकरण-प्रकृतहेतुतावच्छेदकावच्छिन्नवत्ताज्ञानस्यैव कारणत्वप्रसङ्गेन 'सत्त्वस्य गुणेऽपी'त्यादि[3] ग्रन्थोऽसङ्गतः स्यादिति।

अथ 'धूमत्वादिमती'त्यादिना[4] लब्धस्य धूमत्वसामानाधिकरण्यापन्नस्य सामानाधिकरण्यसम्बन्धेन धूमत्वविशिष्टस्य वा तादृश[5]सामानाधिकरण्यस्य धूमत्वत्वप्रवेशप्रयुक्तगौरवेण विषयितया कारणतानवच्छेदकत्वेऽप्याधेयतया धूमविशिष्टतादृशसामानाधिकरण्यस्य तत्त्वं तात्पर्येण वाच्यन्तदप्यनुपपन्न-मवच्छिन्नत्वसम्बन्धेन धूमत्वविशिष्टस्यैव तस्य तथात्वौचित्याद्धूमस्याप्रवेशेन लाघवादिति चेद्।

न। सम्बन्धसामान्येन प्रकारत्वाद्व्यतिरिक्तेन स्वातन्त्र्येणोल्लिखिततया भासमानस्य स्वरूपतो भानानङ्गीकारे विपरीतगौरवात्।

धूमत्वावच्छिन्नत्वस्य रासभादिवृत्तित्वसाधारण्यवारणाय समवाय-सम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकत्वरूपस्य वाच्यतया गौरवादिति केचित्। तन्न। आधेयत्वस्यापि स्वरूपसम्बन्धावच्छिन्नस्यैव संसर्गताया वाच्यतया तत्प्रयुक्तगौरवस्याभावादिति।[१७४]

*प्रकाशः*— अनुपदव्याख्यातजागदीश्यग्रिमां 'रासभादीति। तथा च धूम-व्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादित्यापत्तिरिति'[6] इमां जागदीशीं व्याचष्टे।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ७-८
२. 'सामानाधिकरण्यरूपैके'ति पाठो मुद्रितप्राचीनपुस्तके।
३. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७-८
४. तत्रैव, दीधितिमूलम्, पृ. ७
५. 'तादृशे'ति पाठो नास्ति प्राचीनमुद्रितपुस्तके।
६. 'स्यादिति भाव' इति पाठान्तरम्। — प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७

तथा चोक्तसामानाधिकरण्यावच्छिन्नप्रकारकज्ञानस्य कारणत्वे सति कारणतावच्छेदकस्य तादृशज्ञानत्वस्य धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति परामर्शेऽपि सत्त्वेन तादृशपरामर्शतोऽनुमित्युत्पादविरहादन्वयव्यभिचारः स्यादतो व्यभिचारदोषयुक्तसामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वेन कारणता न, यत उक्तरूपेण न कारणता अत उक्तसामानाधिकरण्यमात्रन्न व्याप्तिः।

अत्र 'न च धूमादिव्यापकवह्न्यादिसमानाधिकरणधूमादिमत्तानिश्चयत्वेनैव परामर्शस्य धूमादिलिङ्गकानुमितिहेतुत्वादि'त्यादिजागदीशीग्रन्थेन[१] शङ्का क्रियते यदुक्तसामानाधिकरण्यमात्रे व्याप्तित्वस्वीकारेऽपि उक्तसामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वेन परामर्षस्य नैव कारणता, तथासति तादृशनिखिलज्ञानविरोधित्वविरहेण स्वरूपासिद्धेर्हेत्वाभासत्वन्न स्यात्, किन्तु परामर्षस्य तादृशसामानाधिकरण्यात्मकव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वघटितधर्मेणैव, अतो धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इत्यस्य विवक्षितकारणतावच्छेदकधर्माश्रयत्वविरहादेवान्वयव्यभिचारासम्भवादुक्तसामानाधिकरण्यमात्रे व्याप्तित्वस्वीकारेऽपि क्षत्यभावः, उक्तसामानाधिकरण्यमात्रस्य व्याप्तित्वे यथोक्तदिशा धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति रासभपरामर्षतो नानुमित्यापत्तिदोषस्तथैव रासभे धूमव्यापकवह्निसामानाधिकरण्यतो वह्निव्याप्यत्वव्यवहारापत्तिदोषोऽपि न सम्भवति, तद्धर्मावच्छिन्ने व्याप्यत्वव्यवहारम्प्रति तद्धर्मावच्छिन्नव्यापकसामानाधिकरण्यस्यैव प्रयोजकत्वेन तत्र तादृशप्रयोजकस्यासत्त्वादिति 'न चे'त्यादिना जगदीशकथनाशयस्तत्त्वालोककृद्भिः प्रकटीकृतः।

उक्तशङ्कासमाधायिका तदग्रिमा जागदीशी 'पक्षधर्मांशे विषयतया अनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्र निवेशे तद्घटितस्यैव व्याप्तित्वादि'ति[२]।

पक्षधर्मांशे विषयतया अनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्र निवेशे, अर्थाद् धूमव्यापकवह्निसमानाधिकरणधूमादिमत्तानिश्चयत्वेन परामर्षस्य कारणत्वे तद्घटितस्यैव = धूमत्वादिहेतुतावच्छेदकधर्मघटितस्यैव, न तु तादृशसामानाधिकरण्यमात्रस्य ('एव'कारेण जागदीशीघटकेन तादृशसामानाधिकरण्यमात्रस्य व्यवच्छेदात्), व्याप्तित्वं स्यात्। 'व्याप्तित्वादि'त्यस्य व्याप्तित्वं स्यादित्यर्थः।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.७

२. तदेव, पृ. ७

तथा च सामानाधिकरण्यमात्रस्य व्याप्तित्ववादिभिस्तदुपपत्तये = पक्षधर्मांशे विषयतया अनुमितिजनकतावच्छेदके एव व्याप्तिपदार्थत्वोपपत्तये, हेतुव्यापकसाध्य-सामानाधिकरण्यमात्रप्रकारकज्ञानत्वेनैव कारणता वाच्या, ततश्च पक्षे = पर्वते, धूमदर्शनासत्त्वे, सति च तत्र रासभदर्शने, वह्निधूमविरहिणि पर्वते उपनीतं (स्मृतं) यद् धूमव्यापकवह्निसामानाधिकरण्यं, तादृशसामानाधिकरण्यप्रकारेण रासभस्य परामर्षाद् 'धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत' एवंविधज्ञानाद्धूमलिङ्गका-नुमित्यापत्तिः स्यादिति दीधितिव्याख्यातुर्जगदीशस्याशयस्तत्त्वालोककृद्भिः प्रकटीकृतः।

न चैवं = तादृशसामानाधिकरण्यमात्रस्य व्याप्तित्ववादिभिः हेतुव्यापकसाध्य-सामानाधिकरण्यमात्रप्रकारकज्ञानस्य कारणत्वे वाच्ये सति, रासभवानिति (धूम-व्यापकवह्निसमानाधिकरणरासभवानिति)[1] रासभघटितज्ञानाकारलेखनं जगदीशस्या-सङ्गतम्, धूमव्यापकवह्निसमानाधिकरणवानेतावन्मात्रस्य रासभाघटितज्ञानाकारलेखन-स्यैवौचित्यादिति, शङ्कया यथाश्रुताभिप्रायेण = प्रकृतदीधितौ 'वस्तुतस्तु धूमत्वा-दिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वादि' त्यत्र[2] 'रासभ-पदोल्लेखदर्शनेन, तल्लेखनाद् = रासभवानिति ज्ञानाकारोल्लेखनादित्येकं समाधानम्।

'सामानाधिकरण्यमात्रप्रकारके' त्यनेन तदतिरिक्तहेतुतावच्छेदकप्रकारत्वे स्वकारणतावच्छेदकघटकत्वस्य व्यवच्छेदस्तावतैव तादृशसामानाधिकरण्यमात्रे व्याप्तित्वसिद्धिसम्भवात्। 'सामानाधिकरण्यमात्रप्रकारके' त्येतद्घटक 'मात्र' पदेन कारणीभूतज्ञाने अतिरिक्त = हेतुतावच्छेदकप्रकारकत्वेतर, - प्रकारकत्वव्यवच्छेदस्य वैफल्यादित्यत्र वा तत्र रासभवानिति ज्ञानाकारोल्लेखनतात्पर्य्यादिति द्वितीयं समाधानम्।

पुनरत्र शङ्कते— यत् तादृशसामानाधिकरण्यमात्रप्रकारकज्ञानत्वेन परामर्षस्य कारणत्वे तादृशनिखिलज्ञानविरोधित्वविरहेण स्वरूपासिद्धेर्हेत्वाभासतोपपत्तिर्न स्यादिति। अत्र समाधीयते— प्रतिबन्धकत्वान्तरस्य तैरप्यङ्गीकरणादिति स्वरूपा-सिद्धेस्तादृशनिखिलज्ञानाविरोधित्वेऽपि तत्र प्रतिबन्धकत्वान्तरस्य 'मणिमन्त्रादि' न्यायेन अतिरिक्तप्रतिबन्धकतायास्तैस्तादृशसामानाधिकरण्यमात्रस्य प्रतिबन्धकत्ववादिभिरपि अङ्गीकरणादिति।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.७

२. तत्रैव, दीधितिमूलम्, पृ.७

कश्चिद् एतद्ग्रन्थस्य = उक्तजागदीशीग्रन्थस्य, व्याख्यानमेवं कुरुते यद् धूमव्यापकवह्निसमानाधिकरणधूमवानिति ज्ञानस्य कारणत्वे तत्र धूमे हेतौ पक्षधर्मांशे तादृशसामानाधिकरण्य-धूमत्वयोर्द्वयोः प्रकारत्वेन = पक्षधर्मांशे विषयतया अनुमिति-जनकतावच्छेदकत्वेन, मदिष्टसिद्धिः अर्थाद् धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इत्यतोऽनुमितेरनुत्पादेन अन्वयव्यभिचाराभावः, तादृशसामानाधिकरण्यस्य व्याप्तित्वञ्च सिद्ध्यतः – इत्येतदर्थतया, तथा 'धूमत्वादिमति तादृशसामानाधिकरण्य-मि'ति दीधितेः[1] धूमत्वविशिष्टविशेषणतापन्नसामानाधिकरण्यस्य (तादृशसामाना-धिकरण्यस्य) एकधर्मिविशेषणतापन्नसामानाधिकरण्य(तादृशसामानाधिकरण्य)हेतुता-वच्छेदकोभयार्थकतया च व्याख्यानं कुरुते, [वह्न्यनुमितिकारणीभूतधूमव्यापक-वह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञाने धूमे यतस्तादृशसामानाधिकरण्यं धूमत्वञ्च प्रकारीभूय भासेते तथा 'धूमत्वादिमति तादृशसामानाधिकरण्यमि'ति दीधितिघटक-तादृशसामानाधिकरण्यस्य (धूमत्वविशिष्टविशेषणतापन्नतादृशसामानाधिकरण्यस्य) एकधर्मिविशेषणतापन्नतादृशसामानाधिकरण्यधूमत्वरूपहेतुतावच्छेदकोभयार्थकतया च व्याख्यां विधाय स्वाभीष्टसिद्धिं दर्शयति, अर्थाद् रासभपरामर्शस्थले पूर्वापादिता-न्वयव्यभिचाराभावं साधयति, तादृशसामानाधिकरण्यधूमत्वादिहेतुतावच्छेदकयो-र्व्याप्तित्वात्] इति।

तन्न सर्वथा मनोहरम्। यतो हि तदुभयोर्व्याप्तित्वे हेतुव्यापकसाध्यसमाना-धिकरणप्रकृतहेतुतावच्छेदकावच्छिन्नवत्ताज्ञानस्यैव कारणत्वं स्यात्। तस्यैव कारणत्वे च गुणे 'विशिष्टसत्तात्वावच्छिन्नवत्त्वविरहाद् विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामाना-धिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद्गुणेऽपि द्रव्यत्वानुमितेः प्रमात्वं स्यादि'ति[2] जगदीशोक्तिरसङ्गता स्यादिति।

अनन्तरम् 'अथे'त्यादिना 'धूमत्वादिमती'ति ग्रन्थासङ्गतिं शङ्कते— तत्रेद-मुच्यते यद् 'धूमत्वादिमति तादृशसामानाधिकरण्यमि'त्यतः[3] धूमत्वसमानाधिकरणस्य तादृशसामानाधिकरण्यस्य अथवा सामानाधिकरण्यसम्बन्धेन धूमत्वविशिष्टस्य तादृश-सामानाधिकरण्यस्य व्याप्तित्वमायाति, तच्चायुक्तम्, तत्र धूमत्वत्वस्य प्रवेशेन गुरुभूतधूमत्वत्वघटितस्य तस्य विषयितया कारणतावच्छेदकत्वासम्भवात्,

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ.७
२. तत्रैव, जागदीशीमूलम्, पृ. ७-८
३. तत्रैव, दीधितिमूलम्, पृ. ७

उक्तग्रन्थस्य आधेयतासम्बन्धेन धूमविशिष्टतादृशसामानाधिकरण्यस्यैव व्याप्तित्व-तात्पर्य्यकत्वे यद्यपि धूमत्वत्वस्य तत्र प्रवेशाभावाद्गौरवाभावः स्यात्, तथापि तदपि प्रकारान्तरेण गौरवग्रस्ततत्वादनुपपन्नमेव, अवच्छिन्नत्वसम्बन्धेन लघुभूतधूमत्वविशिष्ट-तादृशसामानाधिकरण्यस्यैव व्याप्तित्वस्वीकारौचित्यादिति शङ्का।

अत्र समाधीयते— सामान्यसम्बन्धेन प्रकारत्वाद्यतिरिक्तेन (अवच्छिन्नत्व-सम्बन्धेन) स्वातन्त्र्येणोल्लिखिततया भासमानस्य स्वरूपतो भानानङ्गीकारेण तत्र धूमत्वस्य धूमत्वत्वेन भाने विपरीतगौरवं स्यादिति।

केचिदत्र कथयन्ति यद् धूमत्वावच्छिन्नत्वस्य कालिकादिना रासभादिवृत्तित्व-रूपसाधारण्यवारणाय समवायसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकत्वरूपतैव धूमत्वावच्छिन्नत्वस्य मन्तव्या स्यात्तदा गौरवं स्यादिति।

तन्न। आधेयत्वसम्बन्धेन धूमविशिष्टतादृशसामानाधिकरण्यस्य व्याप्तित्व-स्वीकारेऽपि आधेयत्वस्यापि साधारण्यवारणाय स्वरूपसम्बन्धावच्छिन्नस्यैव संसर्गता-यास्तत्र स्वीकरणीयतया तत्प्रयुक्तगौरवाभावादिति प्रकाशः।[१७४]

**तत्त्वालोकः– धूमनिष्ठतादृशसामानाधिकरण्यस्य व्याप्तिरूपत्वे मूल-लभ्यतान्दर्शयति— "तस्येती"त्यादि।[१] तथा च तेन समं तस्य व्याप्तिस्तेन समं तस्य सामानाधिकरण्यमिति मूलयोजनयैव धूमनिष्ठसामानाधिकरण्यस्य व्याप्तित्वं लभ्यत इति भावः।**

**अत्र तेन समं तस्य व्याप्तिरितीतरभेदानुमित्युद्देश्यरूपलक्ष्यपदार्थप्रति-पादकमूलभागव्याख्यानरूप'तद्रूपविशिष्टस्ये'त्यादिदीधितिव्याख्यानावसर एव 'द्रव्यत्वादिरूपेणे'त्यादिग्रन्थेन लक्ष्ये तत्पदार्थप्रवेशफलमभिहितम्, लक्षणे तत्प्रवेशफलं रासभादिसाधारण्यवारणन्दीधितावेवोक्तं तेन च रासभसामाना-धिकरण्यस्यानुमितिजनकतानवच्छेदकत्वेन तत्रोक्तसामानाधिकरण्यरूप-हेतोस्सत्त्वेन व्यभिचारप्रदर्शनं कृतमित्यवधेयम्।**

**"ग्रन्थानुपपत्ती"ति[२]। यद्यपि द्वितीयव्याप्तिज्ञानस्य सामान्यलक्षणा-सत्त्वासत्त्वयोरेव सम्भवात्सामान्यप्रत्यासत्त्यभावे प्रथमव्याप्तिज्ञानसम्भवा-नुपपत्तिरेव दोषत्वेनोद्भावयितुमुचिता, तथापि सामान्यप्रत्यासत्त्यभावेऽपि**

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७

२. तदेव, पृ. ७

विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्यैव कारणत्वमङ्गीकार्यन्न तु विशिष्टबुद्धौ विशेषणज्ञानस्येति व्यवस्थाप्योक्तव्याप्तिज्ञानस्योपपाद्यत्वाद्विशेषणज्ञानकारणत्वावलम्ब्युक्तग्रन्थानुपपत्तिरेवोद्भावितेति बोध्यम्।

पक्षे साध्यसन्देहे साध्यसामानाधिकरण्यविशिष्टस्य तत्र परामर्शासम्भवात्सामानाधिकरण्यांशस्योपलक्षणतयैव विषयत्वाङ्गीकारेण विशिष्टसत्त्ववृत्तितादृशसामानाधिकरण्यावच्छिन्नप्रकारकगुणविशेष्यकप्रमयाऽनुमित्यापत्तिरित्याह — "किञ्चे"ति[1]। किम्वेत्यर्थः, वाकारोऽनास्थायाम्। तथा च 'धूमत्वादिमति सामानाधिकरण्यमि'त्यस्योभयव्याप्त्यर्थकतां स्वीकृत्य तादृशसामानाधिकरण्यहेतुतावच्छेदकोभयधर्मावच्छिन्नप्रकारताशालिज्ञानत्वेन कारणत्वोक्तावुक्तदोषासम्भवेऽपि न क्षतिरिति केचित्।

परे तु — 'धूमत्वादिमती'त्यस्य यथाश्रुतार्थलभ्या धूमादिविशिष्टसामानाधिकरण्यरूपव्याप्तिरेव दूषिता 'किञ्चे'त्यादिना, तात्पर्य्योपवर्णितोभयात्मकव्याप्तौ विशिष्टव्याप्तौ च ग्रन्थानुपपत्तिरेव दोषो बोध्य — इत्याहुः।

अन्ये — तूभयत्वस्यैकविशिष्टापरत्वरूपतयोभयस्य व्याप्तित्वं सामानाधिकरण्यविशिष्टधूमत्वे धूमत्वविशिष्टसामानाधिकरण्ये वा पर्य्यवस्यतीति तत्रैकत्र दूषणमुक्तं सङ्गच्छत एवेति — वदन्ति।

तत्रोभयव्याप्तिज्ञानकारणतानन्तर्भूततादृशसामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नकारणताया 'न चे'त्यादिपूर्वग्रन्थोक्ताया अनिराकृतत्वप्रसङ्गेन सन्दर्भविरोधो नातिदोषतामासादयतीत्यलम्।[१७५]

*प्रकाशः* – 'धूमत्वादिमती'ति दीधित्यंशं प्रतीकत्वेन परिगृह्य "तथा च 'तस्ये'ति मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्रैवान्वितमिति भावः" इति जागदीशोग्रन्थो धूमनिष्ठतादृश(धूमव्यापकवह्नि)सामानाधिकरण्यस्य व्याप्तित्वं मूल(चिन्तामणि)लभ्यमिति दर्शयितुम्। धूमनिष्ठतादृशसामानाधिकरण्यमूललभ्यता च 'तेन समं तस्य व्याप्तिः' (वह्निना समं धूमस्य व्याप्तिः) 'तेन समं तस्य सामानाधिकरण्यम्' (वह्निना समं धूमस्य सामानाधिकरण्यम्) इत्येवं मूलयोजनया

१. तत्त्वालोककृदुपलब्धसंस्करणस्थोऽयं पाठः।

भवति। दर्शितमूलयोजनाभिप्रायेणैव जगदीशेन "मूलस्थं 'तस्ये'ति घटकं 'तत्'पदं लक्ष्ये लक्षणे चोभयत्रान्वितमि"त्युक्तम्[१]।

अत्र दर्शितमूलयोजनान्तर्गतः 'तेन समं तस्य व्याप्तिरि'ति पूर्वो भागः इतरभेदानुमित्युद्देश्यात्मकस्य लक्ष्यस्य प्रतिपादकः। तस्य दर्शितमूलयोजनान्तर्गतपूर्वभागस्य व्याख्यानं दीधितिकृता'तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरि'ति विहितम्, जगदीशेन तु 'तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरि'ति दीधितिव्याख्यावसर एव 'द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये वा तत्तद्वह्निव्याप्यत्वस्य च वारणार्थं विशिष्ट लक्ष्यं निर्दिशति तद्रूपविशिष्टस्येत्यादिना'[२] इत्युल्लिख्य लक्ष्ये 'तत्'पदार्थफलमभिहितम्, अर्थात् 'तेन समं तस्य व्याप्तिरि'ति पूर्वभागे यदि 'तस्ये'ति न दीयेत तदा धूमव्यापकद्रव्यत्वावच्छिन्नद्रव्यनिष्ठसामानाधिकरण्यस्यापि लक्ष्यान्तर्गतत्वप्रसङ्गात्तत्र धूमत्वावच्छिन्ननिष्ठधूमव्यापकवह्निसामानाधिकरण्यात्मकहेतोरभावाद् भागासिद्धिदोषः स्यात्, पक्षत्वाक्रान्ते पक्षैकदेशे हेतोरसत्त्वादिति। अतो लक्ष्ये 'तत्'पदार्थस्य प्रवेश आवश्यकः।

लक्षणे अर्थाद्दर्शितमूलयोजनोत्तरभागे 'तत्'पदार्थप्रवेशफलं रासभादिसाधारण्यवारणं दीधितावेव 'वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वादि'त्यनेनाभिहितम्[३], दर्शितफलकस्य 'तस्ये'त्यस्य लक्षणे (दर्शितयोजनोत्तरभागे) प्रवेशासत्त्वे लक्ष्ये 'तस्ये'त्यस्य प्रवेशे रासभसामानाधिकरण्यस्य (रासभनिष्ठधूमव्यापकवह्निसामानाधिकरण्यस्य) लक्ष्याप्रविष्टतया विषयतया अनुमितिजनकतावच्छेदकत्वविरहेण तत्र विषयविधया अनुमितिजनकतावच्छेदकरूपव्याप्तीतरत्वस्यैव सत्त्वेन स्वेतरभेदरूपसाध्याभावेन उक्तसामानाधिकरण्यरूपहेतोः सत्त्वेन[४] व्यभिचारः स्यादिति दर्शितं 'धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वादि'त्युक्त्या दीधितिकृतेत्यवधेयम्।

ग्रन्थानुपपत्तीति = "ननु साधननिष्ठसामानाधिकरण्यस्य व्याप्तित्वे 'एकैव हि (सा व्याप्तिः) इति ग्रन्थानुपपत्तिस्तदवस्थैव" इति जागदीशीपंक्तिः।[५] तत्र 'यद्यपी'-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.७

२. तत्रैव, जागदीशीमूलम्, पृ.३

३. तत्रैव, दीधितिमूलम्, पृ. ७

४. लक्षणभागे 'तस्ये'त्यस्याप्रवेशे रासभनिष्ठस्य धूमव्यापकवह्निसामानाधिकरण्यस्य हेत्वन्तर्गतत्वादिति भावः।

५. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७

त्यादिना तत्त्वालोककृद्भिः शङ्क्यते यद् द्वितीयव्याप्तिज्ञानस्य = तद्वति धूमत्वादिमति धूमत्वादिकम्वा व्याप्तिरिति ग्रन्थदर्शितव्याप्तिज्ञानस्य, सामान्यलक्षणाप्रत्यासत्त्य-स्वीकारपक्षे तत्स्वीकारपक्षे च सम्भवात्साधननिष्ठसामानाधिकरण्यस्य (धूमत्वादिमति तादृशसामानाधिकरण्यमिति ग्रन्थोक्तस्य) व्याप्तित्वे तादृशप्रथमव्याप्तिज्ञानसम्भवा-नुपपत्तिरेव दोषत्वेनोद्भावयितुमुचिता = सामानाधिकरण्यात्मकव्याप्तेः साध्यहेतुव्यक्ति-भेदेन भिन्नतया पर्वतीयधूमे पर्वतीयवह्निसामानाधिकरण्यस्य प्रागननुभूतत्वेन स्मृतत्वा-सम्भवात् इत्थं प्रथमव्याप्तिज्ञानस्यैवानुपपत्तौ व्याप्तिगतैकत्वव्यवहारानुपपत्तिशङ्कौ-चित्यविरहात्, इति शङ्का।

अत्र 'तथापी'त्यादिना समाधीयते— यद् विशिष्टवैशिष्ट्यावगाहिबुद्धिम्प्रति विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणमित्येकः पक्षः, विशिष्टबुद्धिम्प्रति विशेषणज्ञानं कारणमित्यपरः पक्षः। तत्र प्रथमपक्षे 'धूमो वह्निव्याप्य' इत्याकारकं धूमे धूमत्वविशिष्टव्यापकवह्निसामानाधिकरण्यत्वविशिष्टतादृशसामानाधिकरण्यवैशिष्ट्या-वगाहिज्ञानं सामान्यलक्षणाप्रत्यासत्त्यसत्त्वेऽपि भवितुमर्हत्येव, पूर्वतस्तत्र तादृश-सामानाधिकरण्यत्वरूपविशेषणतावच्छेदकप्रकारकज्ञानस्य विद्यमानत्वात्, प्राग-नुभूतस्य महानसीयधूमनिष्ठमहानसीयवह्निसामानाधिकरण्यविशेषस्य तेनैव सामाना-धिकरण्यत्वसामान्यधर्मप्रकारेणानुभूतत्वात्, विशिष्टबुद्धिम्प्रतिविशेषणज्ञानस्य कारणत्वपक्षे तु पर्वतीयधूमे पर्वतीयवह्निसामानाधिकरण्यविशेषात्मकविशेषणस्य पूर्वतो ज्ञानविरहाद् 'धूमो वह्निव्याप्य' इति व्याप्तिज्ञानासम्भवात्। 'एकैव हि सा व्याप्तिरि'ति ग्रन्थानुपपत्तिस्तु विशिष्टबुद्धिम्प्रति विशेषणज्ञानस्य कारणतापक्षीया, तत्पक्षे सामाना-धिकरण्यात्मकव्याप्तावेकत्वविरहेण तादृशसामानाधिकरण्यात्मकव्याप्तिविशेषणस्यै-कत्वविशेषस्य पूर्वतो ज्ञानविरहात्। विशिष्टवैशिष्ट्यावगाहिबुद्धिम्प्रति विशेषणता-वच्छेदकप्रकारकज्ञानस्य कारणत्वपक्षे तु नोक्तग्रन्थानुपपत्तिर्भवितुमर्हति, विशेषणस्य एकत्वविशेषस्य व्याप्तिनिष्ठस्याज्ञातत्वेऽपि ज्ञातैकत्वान्तरमादाय एकत्वत्वरूपविशेषण-तावच्छेदकप्रकारकज्ञानस्य तत्र पूर्वतः सत्त्वात्।

एतदाशयेनैव तत्त्वालोककृद्भिः 'यद्यपि द्वितीयव्याप्तिज्ञानस्ये'त्यादि 'विशेषण-ज्ञानकारणत्वावलम्ब्युक्तग्रन्थानुपपत्तिरेवोद्भाविततेति बोध्यमि'त्यन्तमुल्लिखितम्।

इतः परम् 'एकैव हि सा व्याप्तिरिति ग्रन्थानुपपत्तिस्तदवस्थैवे'ति जागदीशी-ग्रन्थाग्रिमां 'किञ्चे'त्यादिजागदीशीमवतारयद्भिरुच्यते यत् पक्षे पर्वतादौ साध्यसन्देह-दशायां हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टस्य हेतोः पक्षे परामर्शसम्भवात् (तादृशसामानाधिकरण्यविशिष्टहेतुप्रकारकपक्षविशेष्यकनिश्चयासम्भवात्) तत्र

प्रविष्टस्य तादृशसामानाधिकरण्यांशस्य विशेषणत्वमस्वीकृत्योपलक्षणतयैव दर्शित-निश्चयात्मकपरामर्षविषयत्वाङ्गीकारेण साधननिष्ठतादृशसामानाधिकरण्यस्य व्याप्तित्वे 'एकैव हि सा व्याप्तिरि'ति ग्रन्थानुपपत्त्यतिरिक्तदोषो विशिष्टसत्त्ववृत्तितादृशसामाना-धिकरण्यावच्छिन्नप्रकारकगुणविशेष्यकप्रमात्मकज्ञानतः (विशिष्टसत्ताव्यापकद्रव्यत्व-समानाधिकरणसत्तावान् गुणः इत्येवं प्रमात्मकपरामर्षाद्) गुणे द्रव्यत्वानुमितेः प्रमा-पत्तिरित्याह जगदीशः 'किञ्चे'त्यादिदर्शितग्रन्थेन।[1]

तत्र किञ्चेति किम्वेत्यर्थकः। किम्वाघटको 'वा' शब्दोऽनास्थाबोधकः। अतो 'धूमत्वादिमति तादृशसामानाधिकरण्यमि'ति दीधितिग्रन्थस्य तादृशसामानाधिकरण्य-हेतुतावच्छेदकोभयस्य व्याप्तित्वाभिधायकत्वे तादृशसामानाधिकरण्यहेतुतावच्छेदको-भयधर्मावच्छिन्नप्रकारताशालिज्ञानत्वेनैव परामर्षस्य कारणता स्यात्तदा विशिष्टसत्त्व-व्यापकीभूतद्रव्यत्वसमानाधिकरणसत्तावानित्युक्तप्रमात्मकज्ञानस्य कारणत्वासम्भवा-त्तादृशप्रमातो गुणे द्रव्यत्वानुमितेः प्रमात्वापत्तेरभावेऽपि नास्ति क्षतिरिति केचित् कथयन्ति।

परेऽत्र वदन्ति यद् 'धूमत्वादिमति तादृशसामानाधिकरण्यमि'ति यथाश्रुत-दीधितिलभ्या धूमादिहेतुविशिष्टा तादृशसामानाधिकरण्यरूपैव व्याप्तिः, सैव व्याप्तिः 'किञ्चे'त्यादिना दोषोपस्थापनेन दूषिता जगदीशेन। 'धूमत्वादिमति तादृशसामाना-धिकरण्यमि'ति दीधितिग्रन्थतात्पर्य्यस्य तादृशसमानाधिकरणहेतुतावच्छेदकोभयात्म-कव्याप्तौ विशिष्टव्याप्तौ च 'एकैव हि सा व्याप्तिरि'ति ग्रन्थानुपपत्तिरेव दोषो बोध्यः, विशिष्टस्य विशेषणविशेष्योभयात्मकत्वेन एकत्वस्य तत्पक्षे तत्रासम्भवाद्, न तु द्वितीयो दोषः, उभयावच्छिन्नस्य विशिष्टावच्छिन्नस्य च हेतोर्गुणे प्रमापरामर्शविरहात्।

अन्ये पुनरत्र वदन्ति यद् उभयत्वस्यैकविशिष्टापरत्वरूपतया तादृश-सामानाधिकरण्यधूमत्वोभयत्वं = तादृशसामानाधिकरण्यधूमत्वस्वरूपं, धूमत्वविशिष्ट-तादृशसामानाधिकरण्यस्वरूपम्वा, पर्य्यवसितं भवेत्, तयोरुभयत्वस्वरूपयोर्द्वयोरे-कस्मिन् हेतुतावच्छेदकविशिष्टतादृशसामानाधिकरण्ये उक्तदूषणं (विशिष्टसत्त्वव्यापक-द्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणे परामर्शाद् गुणे द्रव्यत्वानुमितेः प्रमात्वापत्ति-र्दूषणं) सङ्गच्छत एवेति, विशिष्टसत्तात्वविशिष्टविशिष्टसत्त्वव्यापकद्रव्यत्वसामाना-धिकरण्यरूपव्याप्तिमतः सत्त्वस्य गुणे परामर्शसम्भवात्। तादृशसामानाधिकरण्य-विशिष्टसत्तात्वस्य व्याप्तित्वे न दूषणं, तादृशसामानाधिकरण्यविशिष्टसत्तात्वावच्छिन्न-वत्त्वस्य गुणेऽभावात्।

---

१. 'किञ्चे'ति पाठोऽधुनोपलब्धजागदीशीसंस्करणेषु नोपलभ्यते।

अत्र या तादृशसामानाधिकरण्यहेतुतावच्छेदकोभयात्मकव्याप्तिज्ञाननिष्ठा कारणता अर्थात्तादृशसामानाधिकरण्यहेतुतावच्छेदकोभयधर्मावच्छिन्नप्रकारताशालि-ज्ञानत्वेन कारणता, तदन्तर्गततादृशसामानाधिकरण्यावच्छिन्नप्रकारतानिरूपितधूमत्वा-वच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नकारणता, न भवति, अतो यथा तादृश-कारणताकपक्षे— 'न च धूमादिव्यापकवह्न्यादिसमानाधिकरणधूमादिमत्तानिश्चयत्वे-नैव परामर्शस्य धूमादिलिङ्गकानुमितिहेतुत्वादुक्तव्याप्तेः (हेतुव्यापकसाध्यसामाना-धिकरण्यरूपव्याप्तेः) रासभादिसाधारण्येऽपि न क्षतिरि'ति[१] जगदीशग्रन्थोक्तकारणताया निराकृतिर्न तथा अनुपदोक्ते 'अन्ये तु'मते उभयत्वस्य एकविशिष्टापरत्वरूपतोक्त्या तादृशसामानाधिकरण्यावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यताशालि-निश्चयत्वावच्छिन्नकारणताया एकविशिष्टापरत्वरूपोभयत्ववद्व्याप्तिघटितकारणता-न्तर्गतत्वसम्भवेन तदनिराकृतत्वप्रसक्त्या सन्दर्भविरोधस्य सद्भावात्, स च सन्दर्भ-विरोधोऽतिदोषतान्नासादयतीति बोध्यमिति प्रकाशः।[१७५]

तत्त्वालोकः— ''गुणेऽपि द्रव्यत्वानुमितिः प्रमा स्यादि''ति[२]। अथात्र तादृशानुमितौ प्रमात्वम्वाऽऽपाद्यत आहोस्वित्प्रमात्वविशिष्टानुमितिर्वा? नाद्यः, विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणविशिष्टसत्तावान् गुण इतिपरामर्शोत्तरे तत्रापादकाभावात्, तादृशसामानाधिकरण्यवत्सत्तावान् गुण इति ज्ञानोत्तरेऽनु-मितित्वस्यैव विरहेणापादकासत्त्वादनुमितेरुद्देश्यत्वासम्भवाच्च। न द्वितीयः, प्रमात्वविशिष्टतादृशानुमितिरूपापाद्याप्रसिद्धेः।

एवं प्रथमे च यत्र यत्र प्रमापरामर्षजन्यत्वं तत्र प्रमात्वमिति व्याप्तिसिद्धा-पादकत्वकप्रमापरामर्षजन्यानुमितित्वमापादकमभिमतन्तदपि प्रमापरार्षजन्य-त्वस्य समूहालम्बनानुमितावांशिकभ्रमरूपायां व्यभिचारित्वेनासम्भवि। न च तद्वति तत्प्रकारकत्वमेव व्यापकमिष्टापत्तेः। न च प्रमापरामर्षमात्रजन्यत्वं व्याप्यम्, प्रमापरामर्षमात्रजन्यायां लाघवज्ञानादिजन्यभ्रमानुमितौ व्यभि-चारात्। प्रकारतावच्छेदक एव तत्र विधेयतावच्छेदकत्वपक्षस्य युक्तत्वात्, अत एव विधेयताविशिष्टोद्देश्यताकत्वमेव व्यापकम्, वैशिष्ट्यञ्च स्व-निरूपितत्व, - स्वविशिष्टनिरूपकताकाधिकरणतावद्वृत्तित्वोभयसम्बन्धेन, स्ववैशिष्ट्यञ्च प्रसिद्धचतुष्टयसम्बन्धेनेति निरस्तम्, वह्नित्वेन घटावगाहि-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७
२. तदेव, पृ. ८

वह्निमान् पर्वत इति भ्रमानुमितेः, प्रमासमानाकारकत्वे उक्तस्य व्यापकत्व-सम्भवेपि तस्या तथात्वे तत्रैव व्यभिचाराच्च। न च प्रमासजातीयत्वं व्यापकम्, तत्त्वञ्चोक्तोद्देश्यताविशिष्टोद्देश्यताकत्वम्, वैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितविधेयताविशिष्टविधेयकत्वोभयसम्बन्धेनेति वाच्यम्, सामानाधिकरण्यघटितप्रसिद्धचतुष्टयस्य संसर्गत्व उक्तदोषतादवस्थ्यम्, तद्विकलस्य त्रितयस्य तथात्वे सन् गुण इति प्रमीयसत्त्वनिष्ठनिरवच्छिन्नविधेयताविशिष्टत्वस्य गुणो द्रव्यमित्यनुमितीयनिरवच्छिन्नद्रव्यत्वनिष्ठविधेयत्वे सत्त्वेनेष्टापत्तेः, स्वावच्छेदकावच्छिन्नत्वघटितस्य संसर्गत्वे च सन् गुण इति प्रमायां व्यभिचारः। उक्तदोषैरेव च द्वितीयकल्पाभिमतं यत्र यत्र प्रमापरामर्षाव्यवहितोत्तरत्वं तत्र प्रमानुमित्यधिकरणत्वमिति व्याप्तिसिद्धापादकताकमप्यापादकन्निरस्तमिति चेद्?

उच्यते। उक्तपरामर्षो यदि भ्रमत्वनिरूपितद्रव्यत्वविधेयताप्रयोजकस्वातिरिक्तदोषघटितसामग्रीविरहविशिष्टत्वे सति द्रव्यत्वविधेयताकानुमितिपूर्वत्वविशिष्टप्रमापरामर्षत्ववान् स्यात्, प्रमात्वनिरूपितद्रव्यत्वविधेयताकानुमित्यव्यवहितपूर्वत्ववान् स्यादित्यत्रापत्तौ तात्पर्यान्न कश्चिद्दोषः। भ्रमत्वप्रयोजकलाघवज्ञानघटितसामग्रीसमवहितप्रमापरामर्षे आपाद्यव्यभिचारवारणाय सत्यन्तम्, पक्षे आपादकप्रसिद्ध्यर्थमतिरिक्तान्तम्, समूहालम्बनस्थले व्यभिचारवारणाय विधेयत्वविशेषप्रवेशः, अत एव प्रमापरामर्षदेवोत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यनुमितेः स्वीकारेऽपि न क्षतिः, प्रतियोगिव्यधिकरणाभाववदवृत्तित्वादिघटितप्रमात्वस्यापि निर्वाच्यत्वाच्चेत्यभिसन्धिरिति।[१७६]

*प्रकाशः*– 'तद्वति धूमत्वादिकम्वा व्याप्तिरि'ति दीधितिग्रन्थावतरणोत्तरभागात्मकजागदीशीं व्याख्यातुमुपर्युक्तः खण्डः। तत्र 'विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद्गुणेऽपि द्रव्यत्वानुमितिः प्रमा स्यादि'त्यस्या[१] जागदीश्या अन्तर्हितं तात्पर्य्यमुपस्थापयितुमादौ तत्र विकल्पमुपस्थापयति — अथाऽत्र तादृशानुमितौ (निर्दिष्टसामानाधिकरण्यवतः सत्त्वस्य गुणे परामर्शाद् गुणे द्रव्यत्वानुमितौ) प्रमात्वमापाद्यते आहोस्विद् गुणे प्रमात्वविशिष्टा द्रव्यत्वानुमितिरापाद्यते इति। तत्राऽऽद्यो भवितुन्नार्हति, प्रमापरामर्शजन्यत्वस्यैवानुमितौ प्रमात्वापादकत्वसम्भवेन विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणविशिष्टसत्तावान्

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७-८

गुण इति परामर्शोत्तरे आपादकाभावात् = प्रमापरामर्शजन्यत्वाभावात्। विशिष्टसत्त्व-व्यापकद्रव्यत्वसमानाधिकरणविशिष्टसत्तावान् गुण इत्यस्य स्वाव्यवहितपूर्ववर्तिनः परामर्शस्य प्रमात्वविरहाद् गुणे विशिष्टसत्तावत्त्वविरहात्।

विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण इति ज्ञानोत्तरेऽनु-मितित्वस्यैव विरहेणापादकासत्त्वात् (अत्र विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरण-सत्तावान् गुण इत्यस्य विशिष्टसत्त्वात्मकद्रव्यत्वव्याप्यप्रकृतहेतुविषयकत्वविरहेण परामर्शात्मकत्वाभावात् 'परामर्शोत्तरमि'त्यनभिधाय 'ज्ञानोत्तरमि'त्युक्तम्। विशिष्ट-सत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण इत्यस्य परामर्शत्वविरहादेव च तदुत्तरेऽनुमितित्वस्य विरहः, तत्रानुमितित्वविरहे च प्रमापरामर्शजन्यानुमितित्वरूपा-पादकस्य विरहः) तादृशज्ञानोत्तरेऽनुमितित्वाभावे प्रमात्वरूपापाद्यात्मकविधेयस्यो-द्देश्यतापि अनुमितावसम्भवैव स्यात्। एतदेव 'तादृशसामानाधिकरण्यवत्सत्तावान् गुण इति ज्ञानोत्तरेऽनुमितित्वस्यैव विरहेणापादकासत्त्वादनुमितेरुद्देश्यत्वासम्भवाच्चे'-त्युपन्यस्य बोधितम्।

विकल्पयोर्द्वयोः प्रथमन्निरस्य द्वितीयन्निरस्यति 'नापि द्वितीय' इत्यादिना। तत्र प्रमात्वविशिष्टानुमितिरप्यापादयितुन्नैव शक्या, प्रमात्वविशिष्टतादृशानुमितिरूपस्य आपाद्यस्य प्रसिद्धेरभावात्, प्रसिद्धस्यैवापादयितुं शक्यत्वात्, अप्रसिद्धस्य सामग्री-विरहात्, विना सामग्रीमापादनासम्भवात्।

सिंहावलोकनन्यायेन पुनः प्रथमविकल्पम् 'एवं प्रथमे'इत्यादिना दूषयितुमुच्यते यद् यदोक्तस्थले प्रमात्वमेवापाद्यं तत्रापादकं 'यत्र यत्र प्रमापरामर्षजन्यत्वं तत्र प्रमात्वमि'ति नियमसिद्धमापादकत्वं यस्य तादृशं प्रमापरामर्षजन्यानुमितित्वमभिमतम्। तदपि आपादकम् आंशिकभ्रमात्मकसमूहालम्बनात्मकानुमितौ (पर्वतो वह्निमान् ह्रदो वह्निमान् इत्याद्याकारिकायामांशिकभ्रमात्मिकायां समूहालम्बनात्मिकानुमितौ) प्रमा-परामर्षजन्यायामप्रमात्ववत्यां प्रमापरामर्षजन्यत्वस्य प्रमात्वरूपस्वसाध्यव्यभिचारितया न सम्भवदुक्तिकम्। भ्रमभिन्नत्वरूपं प्रमात्वमनादाय तद्वति तत्प्रकारकत्वरूपस्यैव प्रमात्वस्य तत्र व्यापकतया परिग्रहे प्रमापरामर्षजन्यांशिकभ्रमात्मिकायामनुमितौ भ्रमभिन्नत्वविरहेऽपि तद्वति तत्प्रकारकत्वरूपप्रमात्वस्य सत्त्वेन प्रमापरामर्ष-जन्यत्वेन प्रमात्वरूपस्वसाध्यव्यभिचारितेति तु वक्तुमशक्यम्, इष्टापत्तेः = गुणे द्रव्यत्वानुमितावपि भ्रमभिन्नत्वविरहेऽपि गुणत्ववति गुणत्वप्रकारकत्वस्य सत्त्वेना-पत्तेरिष्टत्वात्।

न च प्रमापरामर्षमात्रजन्यत्वं तत्र व्याप्यम्, व्यापकन्तु भ्रमभिन्नत्वमेव, ततश्चापत्तिर्नेष्टा भवितुं शक्या, न वा प्रमापरामर्षजन्यसमूहालम्बनात्मिकायामांशिकभ्रमानुमितौ व्यभिचारो भवितुं शक्नोतीति वाच्यम्, तथा सत्यपि लाघवज्ञानादिसहकारेण प्रमापरामर्षमात्रजन्यायां भ्रमानुमितौ व्यभिचारात् तत्र प्रमापरामर्षमात्रजन्यत्वस्य सत्त्वेन भ्रमभिन्नत्वरूपप्रमात्वविरहात्।

स्पष्टीकृतश्चैतद्गदाधरेणानुमितिसङ्गति-नामके स्वकीये ग्रन्थे[१]। तथाहि तत्र 'न च बाधितवह्नौ लाघवज्ञानसत्त्वे (वह्न्यपेक्षया महानसीयवह्निर्लघुरिति ज्ञानसत्त्वे) सल्लिङ्गकपरामर्षादपि (वह्निव्याप्यधूमवान् पर्वत इति परामर्षादपि) बाधितो वह्निः = महानसीयो वह्निः, पक्षे = पर्वते भासते इति सर्वेषामेवानुमतम्, परन्तु तादृशानुमितेर्व्यापकतानवच्छेदकविशेषधर्म(महानसीयवह्नित्व)प्रकारकत्वं प्राचीना न मन्यन्ते, अत एव सामान्यधर्मावच्छिन्ननिरूपितव्याप्तिबलात्प्रवृत्तानुमाने विशेषबाधस्य (महानसीयवह्न्यभाववत्पर्वतात्मकबाधस्य) अदोषत्वं समानप्रकारकत्वेन विरोधित्वं व्यवस्थाप्य व्युत्पादितमुपाध्यायैर्बाधग्रन्थे, तावतापि च बाधितविषयलाघवज्ञानजन्यानुमितेस्तदभाववति तत्प्रकारकत्वरूपभ्रमत्वावच्छिन्नभेदघटितप्रमात्वं दुरुपपादमेव'[२] इति।

प्रसङ्गेऽस्मिन् 'प्रमापरामर्षमात्रजन्यायां लाघवज्ञानादिजन्यभ्रमानुमितौ व्यभिचारात्, प्रकारतावच्छेदक एवानुमितिविधेयतावच्छेदकत्वपक्षस्य युक्तत्वादि'ति यदुक्तं तत्त्वालोककृद्भिस्तेनोक्तग्रन्थे प्राचीनासम्मततया सूचितपक्षस्यैव युक्तता सूचिता, अर्थात् प्रमापरामर्षमात्रजन्यायां बाधितवह्नौ लाघवज्ञानादिजन्यभ्रमानुमितौ प्रकारतावच्छेदकमहानसीयवह्नित्वे विधेयतावच्छेदकत्वपक्षस्य नवीनाभिमतस्यैव युक्तता, न तु प्राचीनाभिमतव्यापकतावच्छेदकधर्मे एव विधेयतावच्छेदकत्वपक्षस्य, अत एव = तत्र प्रकारतावच्छेदक एव विधेयतावच्छेदकत्वपक्षस्य युक्तत्वादेव, वक्ष्यमाणवैशिष्ट्यघटितस्य विधेयताविशिष्टोद्देश्यताकत्वस्य व्यापकतया विवक्षापि निरस्ता।

अर्थात् प्रमापरामर्षमात्रजन्यत्वेन हेतुना (व्याप्येन) विधेयताविशिष्टोद्देश्यताकत्वात्मकव्यापकमेव साधनीयन्न तु प्रमात्वम्, तत्रोद्देश्यतायां विधेयतावैशिष्ट्यं — स्वनिरूपितत्व,-स्वविशिष्टनिरूपकताकाधिकरणतावद्वृत्तित्वोभयसम्बन्धेन। उक्तद्वितीयसम्बन्धघटकस्ववैशिष्ट्यञ्च प्रसिद्धचतुष्टयसम्बन्धेनेति पक्षः, तत्सङ्गतिश्च —

---

१. गादाधरी (प्रथमो भागः, वाराणसी, १९७०), अनुमितिप्रकरणे सङ्गतिनिरूपणम्, पृ. ३४

२. 'दुरपवादमेवे'ति पाठो मुद्रितानुमानगादाधर्याम्।

वह्निव्याप्यधूमवान् पर्वत इति प्रमापरामर्षमात्रजन्यायां पर्वतो वह्निमानित्यनुमितौ, तत्र दर्शितसम्बन्धद्वयेन वह्निनिष्ठविधेयताविशिष्टत्वस्य पर्वतनिष्ठोद्देश्यतायां सद्भावात्, तत्र पर्वतनिष्ठाधिकरणतानिरूपकता या वह्नौ सा स्वसामानाधिकरण्यादिप्रसिद्धचतुष्टय-सम्बन्धेन वह्निनिष्ठविधेयताविशिष्टा भवत्येव, तादृशनिरूपकताकाधिकरणतावत्पर्वत-निष्ठोद्देश्यताकत्वस्योक्तानुमितौ = पर्वतो वह्निमानित्यत्र, सत्त्वात् सङ्गतिः। किन्तु पूर्वनिर्दिष्टायां प्रमापरामर्षमात्रजन्यायां लाघवज्ञानादिजन्यभ्रमानुमितौ यत्र प्रकारता-वच्छेदक एवानुमितिविधेयतावच्छेदकत्वपक्षस्य युक्ततोक्ता, तत्र महानसीयत्वे प्रकारतावच्छेदके अनुमितिविधेयतावच्छेदकत्वपक्षे विधेयताविशिष्टोद्देश्यताकत्वरूप-व्यापकविरहाद्दोषः स्यात्, व्यापकविरहश्चोद्देश्यतायां विधेयताविशिष्टनिरूपकताका-धिकरणतावद्वृत्तित्वविरहात्।

वह्नित्वेन घटावगाहिवह्निमान् पर्वत इति भ्रमानुमितेः प्रमासमानाकारकत्वे उक्तस्य = विधेयताविशिष्टोद्देश्यताकत्वस्य व्यापकत्वसम्भवेऽपि (वह्नित्वा-वच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वस्य तत्र पर्वतनिष्ठोद्देश्यतायां सत्त्वेन उक्तस्य व्यापकत्वसम्भवेऽपि) तस्या तथात्वे (अत्र तस्या = वह्नित्वेन घटावगाहिवह्निमान् पर्वत इति भ्रमानुमितेः, अतथात्वे प्रमासमानाकारकत्वविरहे) तत्रैव = 'एवे'त्यस्याप्य-र्थकतया तत्रापि, व्यभिचाराच्च, उक्तव्यापकाभाववति प्रमापरामर्षमात्रजन्यत्वरूप-साधनस्य सत्त्वात्। तस्या प्रमासमानाकारकत्वविरहे तत्र व्यापकाभाववत्ता च विधेयताविशिष्टोद्देश्यताकत्वविरहात्। तस्याः प्रमासमानाकारकत्वाभावे वह्नित्वातिरि-क्तरूपेणैव घटानुमितिस्तत्र कथं वह्निव्याप्यधूमवान् पर्वत इति प्रमापरामर्षजन्येति तु चिन्तनीयम्, लाघवज्ञानादिसहकारिविशेषवशात्पूर्वदर्शितबाधितवह्निविषयकभ्रमा-नुमितिवदेव वा तदुपपत्तिः कार्य्या।

अत्र तत्त्वालोके 'अत एवे'त्यारभ्य 'तत्रैव व्यभिचाराच्चे'त्यन्तमूलपाठे पूर्वापरसन्दर्भपर्य्यालोचनया 'तत्रैव व्यभिचाराच्चे'त्यत्र चकारोपन्यासेन च 'एवे'त्यस्य अप्यर्थकता तथा 'तस्या तथात्वे' इत्यत्र 'तस्या अतथात्वे' इति अकारस्य योजना, एवम् 'अत एव' इत्यस्य तत्र प्रकारतावच्छेदक एव विधेयतावच्छेदकत्वपक्षस्य युक्तत्वादेवेत्यर्थता च दर्शिता, तत्र युक्तायुक्तत्वे सुधीभिरवधारणीये।

यत्र यत्र प्रमापरामर्षजन्यत्वं तत्र प्रमासजातीयत्वमित्येवं किञ्चित्परिवर्तनं विधाय प्रथमे विकल्पे प्रमापरामर्षमात्रजन्यत्वेनापादकात्मकसाधनेन प्रमासजातीयत्व-रूपमेव व्यापकं यदि साध्येत, तत्र प्रमासजातीयत्वं च उद्देश्यताविशिष्टोद्देश्यताकत्व-रूपम्, वैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितविधेयताविशिष्टविधेयता-

कत्वाभ्यां सम्बन्धाभ्याम्, तदापि अयुक्तत्वमेव, स्वसामानाधिकरण्यघटितैः प्रसिद्धै-श्चतुर्भिः सम्बन्धैरुक्ते द्वितीयसम्बन्धघटकविधेयतावैशिष्ट्यस्य विवक्षितत्वे उक्तदोषता-दवस्थ्यप्रसङ्गात्। दर्शितायां प्रमापरामर्षमात्रजन्यायां लाघवज्ञानादिजन्यपर्वते बाधित-महानसीयवह्न्यनुमितौ तथा वह्नित्वेन घटावगाहिवह्निमान् पर्वत इत्यनुमितौ च उक्तस्य प्रमासजातीयत्वस्य साधनवति विरहेण व्यापकत्वासम्भवात् तत्र व्यभिचारादित्याशयः।

स्वसामानाधिकरण्यरहितैः प्रसिद्धचतुष्टयसम्बन्धान्तर्गतैस्त्रिभिरेव सम्बन्धैरुक्ते विधेयतावैशिष्ट्यस्य विवक्षणे तु यद्यपि उक्तदोषो न स्यात्, बाधितवह्निनिष्ठविधेयताया अबाधितवह्निनिष्ठविधेयताविशिष्टत्वसम्भवात्, वह्नित्वावच्छिन्नवह्निनिष्ठविधेयता-विशिष्टत्वस्य घटनिष्ठायां वह्नित्वावच्छिन्नविधेयतायामपि सम्भवाच्च, किन्तु 'सन् गुण' इति प्रमीयसत्त्वनिष्ठनिरवच्छिन्नविधेयताविशिष्टत्वस्य 'गुणो द्रव्यमि'त्यनुमितीय-निरवच्छिन्नद्रव्यत्वनिष्ठविधेयतायां सत्त्वेन तादृशव्यापकरूपस्यापाद्यस्यापत्तेस्तत्रेष्टता स्याद् अर्थात्तथासति दर्शितापत्तिर्न स्यात्।

दर्शितरीत्या प्राप्तेष्टापत्तिवारणार्थं यदि उक्ते विधेयतावैशिष्ट्यनियामकसम्बन्धेषु स्वावच्छेदकावच्छिन्नत्वसम्बन्धस्य प्रवेशः क्रियेत तदा 'सन् गुण' इति प्रमीयसत्त्वनिष्ठनिरवच्छिन्नविधेयताया अवच्छेदकविरहेण तद्वैशिष्ट्यस्य 'गुणो द्रव्य-मि'त्यनुमितीयद्रव्यनिष्ठनिरवच्छिन्नविधेयतायामभावादिष्टापत्तिपरिहारेऽपि 'सन् गुण' इति प्रमायां व्यभिचारप्रसङ्गात्, प्रमापरामर्षमात्रजन्यायां तत्रानुमितौ स्वावच्छेदका-वच्छिन्नत्वसम्बन्धेन विधेयताविशिष्टविधेयताकत्वविरहात्।

एवं यत्र यत्र प्रमापरामर्षाव्यवहितोत्तरत्वं तत्र प्रमानुमित्यधिकरणत्वमिति नियमसिद्धमापादकत्वं यस्य तादृशापादकमपि आंशिकभ्रमरूपायां समूहालम्बनानुमितौ व्यभिचारदोषग्रस्ततयाऽसम्भवि, उक्ते प्रमानुमित्यधिकरणत्वघटकप्रमात्वं भ्रमभिन्नत्व-रूपमनिवेश्य तद्वति तत्प्रकारकत्वरूपमेव यदि विवक्ष्येत तदोक्तव्यभिचारस्य वारणेऽपि इष्टापत्तिप्रसङ्गात्, 'गुणो द्रव्यमि'त्यनुमितौ गुणत्ववति गुणत्वप्रकारत्वस्य तत्रेष्टत्वेना-निष्टत्वविरहात्। एवं प्रमापरामर्षमात्राव्यवहितोत्तरत्वस्य द्वितीयविकल्पान्तर्गतनियम-घटकस्य व्याप्यत्वे प्रमापरामर्षमात्रजन्यायां लाघवज्ञानादिजन्यभ्रमानुमितौ पूर्वमुप-पादितायां व्यभिचारः स्यात्।

एवं द्वितीयविकल्पाभिमतनियमकोटौ व्यापकतया विधेयताविशिष्टोद्देश्यताका-नुमित्यधिकरणत्वस्य पूर्वोक्तस्वघटकवैशिष्ट्यनियामकसम्बन्धघटितस्योपादाने प्रमा-परामर्षमात्रजन्यायां लाघवज्ञानादिजन्यभ्रमानुमितौ = वह्नित्वेन घटावगाहिवह्निमान् पर्वतः इति भ्रमानुमितौ, तस्याः प्रमासमानाकारकत्वाभावपक्षे व्यभिचारः स्यात्।

एवं द्वितीयविकल्पाभिमतनियमान्तर्गतव्यापकभागे प्रमास्थाने प्रमासजातीयस्य उक्त-स्वरूपस्य प्रवेशे = तदन्तर्गततया प्रसिद्धचतुष्टयसम्बन्धस्य प्रवेशे, स्वसामानाधिकरण्यरहितत्रितयस्यैव प्रवेशे, स्वावच्छेदकावच्छिन्नघटितस्य संसर्गत्वे क्रमशः पूर्वदर्शिता व्यभिचारेष्टापत्तिव्यभिचारा दोषाः प्रसज्येरन्।

अत्र समाधीयते– 'उच्यते' इत्यादिना। उक्तपरामर्शः = विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण इति परामर्शः, यदि भ्रमत्वनिरूपितद्रव्यत्वविधेयताप्रयोजकस्वातिरिक्तदोषघटितसामग्रीविरहविशिष्टत्वे सति द्रव्यत्वविधेयताकानुमितिपूर्वत्वविशिष्टप्रमापरामर्शत्ववान् स्यात्, तर्हि प्रमात्वनिरूपितद्रव्यत्वविधेयताकानुमित्यव्यवहितपूर्वत्ववान् स्यादित्यत्र आपत्तौ उक्तग्रन्थस्य = विशिष्टव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद् गुणेऽपि द्रव्यत्वानुमितेः प्रमात्वं स्यादिति जागदीशीग्रन्थस्य, तात्पर्य्यसत्त्वेन कस्यापि दोषस्याभावात्। उक्तवाक्यघटकस्य 'भ्रमत्वनिरूपिते'त्यस्य द्रव्यत्वविधेयतायामन्वयः, भ्रमत्वनिरूपिता अर्थाद् भ्रमात्मकज्ञानीया या द्रव्यत्वनिष्ठा विधेयता तादृशविधेयताप्रयोजिका या स्वातिरिक्ता दोषघटिता सामग्री, तद्विरहविशिष्टत्वे सतीति 'भ्रमत्वनिरूपितद्रव्यत्वविधेयताप्रयोजकस्वातिरिक्तदोषघटितसामग्रीविरहविशिष्टत्वे सती'त्यस्यार्थः।

अत्र आपादकघटकं सत्यन्तं यदि नोपादीयेत तदा पूर्वदर्शिते भ्रमत्वप्रयोजकलाघवादिज्ञानघटितसामग्रीसमवहितपरामर्शे द्रव्यत्वविधेयताका(व्यापकीभूतविधेयताका)नुमितिपूर्वत्वविशिष्टप्रमापरामर्शत्वरूपापादकस्य सत्त्वेन प्रमात्वनिरूपितद्रव्यत्व(व्यापकीभूत)विधेयताकानुमित्यव्यवहितपूर्वत्वरूपापाद्यविरहाद् व्यभिचारः स्यादतस्तत्र सत्यन्तस्य प्रवेशः, लाघवज्ञानस्य सूर्यकान्तमणेरिवोत्तेजकत्वेन तत्कालीनबाधज्ञानस्य प्रतिबन्धकत्वविरहाद् गुणे बाधितस्यापि द्रव्यत्वस्य लाघवादिज्ञानसहकृतप्रमापरामर्शेण भ्रमानुमित्युत्पादात्। भ्रमप्रमासाधारणलाघवज्ञानत्वेनैव तत्रोत्तेजकताङ्गीकाराद् वस्तुतो लघुत्वस्य तत्रानपेक्षणात्, अनुमितिग्रन्थे गदाधरदर्शितलाघवज्ञानजन्यपर्वतधर्मिकमहानसीयवह्न्यनुमितिस्थलस्य प्रमापरामर्शप्रयुक्तस्य तादृशान्यस्थलोपलक्षकत्वात्, पक्षे आपादकस्य प्रसिद्ध्यर्थमतिरिक्तान्तम् = भ्रमत्वनिरूपितद्रव्यत्वविधेयताप्रयोजकस्वातिरिक्तेत्यन्तम्, अन्यथा = दोषघटितसामग्रीविरहविशिष्टत्वे सति द्रव्यत्वविधेयताकानुमितिपूर्वत्वविशिष्टप्रमापरामर्शत्वमात्रस्यापादकत्वे, स्वस्यापि दोषत्वेन उक्तपरामर्शात्मकपक्षे दोषघटितसामग्रीविरहविशिष्टत्वघटितद्रव्यत्वविधेयताकानुमितिपूर्वत्वविशिष्टप्रमापरामर्शत्वरूपापादकस्य प्रसिद्धिर्न स्यात्।

समूहालम्बनभ्रमानुमितिस्थले पूर्वदर्शिते व्यभिचारवारणाय विधेयत्वविशेष-प्रवेशः अर्थाद् भ्रमत्वनिरूपितद्रव्यत्वविधेयताप्रवेशः।

आपादककोटौ द्रव्यत्वविधेयतायामर्थात्तत्र व्यापकीभूतपदार्थविधेयतायां, भ्रमत्वनिरूपितत्वं यदि नोपादीयेत तदा समूहालम्बनानुमितावांशिकभ्रमरूपायामनुमितौ (घटधर्मिकविशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तापरामर्षतो यत्रोद्बोधकादि-विशेषवशाद् द्रव्यत्वातिरिक्तयत्किञ्चिदंशे भ्रमात्मिका समूहालम्बनरूपानुमितिस्तत्रत्य प्रमापरामर्षे) द्रव्यत्वविधेयताप्रयोजकस्वातिरिक्तदोषघटितसामग्रीविरहादापादकस्य सत्त्वादापाद्याभावाद् व्यभिचारः स्यादतो द्रव्यत्वविधेयतायां भ्रमत्वनिरूपितत्वस्य निवेशः। तत्र तथानिवेशे तु नोक्तव्यभिचारः, भ्रमत्वनिरूपितद्रव्यत्वविधेयताप्रयोजक-स्वातिरिक्तदोषघटितसामग्र्याः सत्त्वेन तद्विरहविशिष्टघटितद्रव्यत्वविधेयताकानुमिति-पूर्वत्वविशिष्टप्रमापरामर्षत्वरूपापादकस्य तत्राभावेन आपाद्यविरहेऽपि व्यभिचाराभावात्।

इदमत्र तत्त्वं — यत्तत्र द्रव्यत्वविधेयताप्रयोजिका नोक्तप्रमापरामर्षातिरिक्तदोष-घटिता सामग्री, तादृशप्रमापरामर्षमात्रस्यैव द्रव्यत्वविधेयताप्रयोजकत्वात्, किन्तु द्रव्यत्वविधेयत्वविशेषणीभूतभ्रमत्वनिरूपितत्वांशस्य प्रयोजिका, उक्तप्रमापरामर्षा-तिरिक्ता दोषघटितसामग्री भवत्येव, यदि उक्तपरामर्षातिरिक्ता दोषघटिता सामग्री तत्र नाभविष्यत्तदा तत्रत्यद्रव्यत्वविधेयतायां भ्रमनिरूपितत्वं नाभविष्यत्, 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामत' इति न्यायात्।

अत एव = तत्रापादककोटौ भ्रमत्वनिरूपितत्वस्य व्यापकविधेयताप्रवेशादेव, प्रमापरामर्षादेव = पृथिवीत्वत्वविशिष्टव्यापकगन्धसमानाधिकरणपृथिवीत्वानुत्पत्ति-कालावच्छिन्नो घट इति प्रमापरामर्षादेव, उत्पत्तिकालावच्छिन्नो घटो गन्ध-वानित्यनुमितेः स्वीकारेऽपि न क्षतिः।

उक्तप्रमापरामर्षे भ्रमत्वनिरूपितव्यापकीभूतगन्धविधेयताप्रयोजकस्वातिरिक्त-दोष(बाधात्मकदोष)घटितसामग्रीसमवहितत्वसत्त्वेन तद्विरहविशिष्टत्वघटितगन्ध-विधेयताप्रयोजकप्रमापरामर्षत्वरूपापादकविरहेण = प्रमात्वनिरूपितगन्धविधेयताकानु-मित्यव्यवहितपूर्वत्वापाद्यविरहेऽपि क्षतेरभावात्।

अन्यथा = भ्रमत्वनिरूपितत्वरूपव्यापकविधेयताविशेषणानुपादाने, तत्रा-पादकसत्त्वप्रसक्त्या आपाद्यविरहेण व्यभिचारः स्यात्, तत्र विशेष्यांशप्रयोजकस्वाति-रिक्तदोषघटितसामग्रीविरहेऽपि विशेषणांश(भ्रमत्वनिरूपितत्व)प्रयोजकस्वातिरिक्त-

दोषघटितसामग्रीसद्भावात् 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामत' इति न्यायात्। तत्र प्रमापरामर्षे आपादकविरहे आपाद्यविरहस्य धूमाभाववति ह्रदे वह्न्यभावस्येवादोषत्वात्।

प्रतियोगिव्यधिकरणतदभाववदवृत्तित्वघटितप्रमात्वस्यापि निर्वक्तुं शक्यतया उक्तानुमितौ = उत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यनुमितौ, तादृशप्रमात्वसम्भवेन आपाद्यस्य = प्रमात्वनिरूपितव्यापकीभूतग्रन्थविधेयताकानुमित्यव्यवहितपूर्वत्वरूपापाद्यस्यापि तत्र सद्भावसम्भवाच्चेत्याशयात्।

अत्र समाधानोपक्रमे उक्त'परामर्ष'पदं विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणसत्तावान् गुण एतत्परामर्षातिरिक्तस्य तत्तत्स्थलीयतत्तदनुमितिपूर्ववर्तितत्तत्परामर्षस्याप्युपलक्षकं तथा आपादकापाद्यघटकद्रव्यत्वपदमपि तत्तत्स्थलीयव्यापकस्योपलक्षकम्।

'अत एव प्रमापरामर्षादेव उत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यनुमितेः स्वीकारेऽपि न क्षतिरि'त्युत्तरग्रन्थस्य नासङ्गतिरिति प्रकाशः।[१७६]

तत्त्वालोकः– "तत्प्रकारिकैवे"ति[१]। 'एव'कारेण धूमत्वावच्छिन्ने तादृशसामानाधिकरण्यप्रकारकत्वव्यवच्छेदः। नन्वेवं तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवान् पर्वत इति ज्ञानस्य कारणत्वं पर्य्यवसितम्, तन्न युज्यते, लाघवेन तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इति ज्ञानस्यैव कारणत्वौचित्यात्।

सामानाधिकरण्यविशिष्टधूमत्ववद्वानितिज्ञानस्यकारणत्वन्तुधूमत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववद्ध्रदादिरूपस्वरूपासिद्धिज्ञानस्य प्रतिबन्धकत्वानुपपत्त्याऽसम्भवि, हेतुतावच्छेदकावच्छिन्नविशेष्यत्वस्य कारणतावच्छेदकगर्भे निवेशादेव न गुणे द्रव्यत्वानुमितेः प्रमात्वप्रसङ्गः, सामान्यप्रत्यासत्त्यभावेऽपि तादृशसामानाधिकरण्योपलक्षितधूमत्वस्य स्मृतस्य पर्वतीयधूमे विशेषणत्वसम्भवेन तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इति ज्ञानापेक्षया गुरुधर्मावच्छिन्नकारणताकस्य तज्ज्ञानस्य न कारणत्वसम्भवः।

न चैवं विरोधस्य हेत्वाभासतानुपपत्तिः, अनुमितावेव तस्य विरोधित्वात्, अनुभवसिद्धप्रतिबन्धकत्वस्य व्याप्तिबुद्धावेव ग्राह्याभावानवगाहिनोऽपि

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ८

तज्ज्ञानस्य वा कल्पनादित्याशङ्कामिष्टापत्त्या परिहरति— "तत्र च नील-घटत्वे''त्यादिना[१]। सामानाधिकरण्यसम्बन्धेन नैल्यप्रकारेण घटत्वज्ञाने उल्लिख्यमानस्यापि घटत्वस्य घटत्वत्वेनानुल्लेखाद् यथा न तेन भानम् तथा तादृशसामानाधिकरण्यप्रकारेण भासमानस्यापि धूमत्वस्य न धूमत्वत्वेन भानम्। तथा च तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इति ज्ञानस्यैव तादृशसामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वपक्षे कारणत्वमभिमतं न तु तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवानिति ज्ञानस्य यतो गौरवमिति भावः।

"स्वरूपत एवे''[२]त्यत्रैवकारेण धूमत्वांशे स्वातन्त्र्येण सामानाधिकरण्यस्य प्रकारत्वव्यच्छेदभ्रान्तिं प्रसक्ताम्वारयितुमाह— "न तु धूमत्वत्वे''ति[३]। दृश्यते चेदृशी व्याख्या दीधितावप्यनौपाधिकत्वमात्रव्यवच्छेदाय यद्वक्ष्यतीत्यादौ।[१७७]

*प्रकाशः*– तद्वति = तादृशसामानाधिकरण्यवति, धूमत्वादिकं व्याप्तिरिति दीधितेर्व्याख्यानं "तथा च तादृशसामानाधिकरण्यविशिष्टं धूमत्वं व्याप्तिः, तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुरि''ति[४] जगदीशेन कृतम्। तद्घटकैवकारेण व्यवच्छेद्यं दर्शयति तत्त्वालोककारः— 'एवकारेण धूमत्वावच्छिन्ने तादृशसामानाधिकरण्यावच्छिन्नप्रकारकत्वव्यवच्छेद' इति। तदेव द्रढयितुं तदग्रिमजागदीशीग्रन्थमवतारयितुं 'नन्वेवमि'त्यादिना शङ्कते यत् तादृशसामानाधिकरण्यविशिष्टधूमत्वप्रकारकस्यैव पक्षधर्मताज्ञानस्यानुमितिहेतुत्वोक्त्या धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवान् पर्वत इति ज्ञानस्यानुमितिकारणत्वमायाति।

तन्न युज्यते, तदपेक्षया लघुभूतस्य तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इत्यस्य उल्लिख्यमानधूमत्वाघटितस्यैव लाघवेनानुमितिकारणत्वौचित्यात्। तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्वानिति ज्ञानस्य कारणत्वं सम्भावनार्हमपि न, धूमाभाववान् ह्रद इत्येवंविधस्य निरवच्छिन्नधूमत्वनिष्ठा अवच्छेदकता यस्यास्तादृशप्रतियोगिताकाभाववद्ध्रदविषयकस्य स्वरूपासिद्धिज्ञानस्य प्रतिबन्धकत्वासम्भवात्,

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.८

२. तदेव, पृ. ८

३. तदेव, पृ. ८

४. तदेव, पृ. ८

उल्लिख्यमानधूमत्वविषयक(सावच्छिन्नधूमत्वविषयक)धूमत्वविशिष्टवत्ताज्ञानस्य निरवच्छिन्नधूमत्वविशिष्टप्रतियोगिकाभाववत्ताज्ञानम्प्रति प्रतिबन्धकत्वानङ्गीकारात्तथाऽननुभवाच्च।

तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इति ज्ञानस्यैव उल्लिख्यमानधूमत्वाविषयकस्य धूमलिङ्गकवह्न्यनुमितिकारणत्वस्वीकारे विशिष्टसत्तालिङ्गकद्रव्यत्वविधेयकानुमितिस्थलेऽपि उल्लिख्यमानहेतुतावच्छेदकाघटितस्यैव कारणतया गुणे द्रव्यत्वानुमितेः प्रमात्वापत्तिसम्भवस्तु न, कारणतावच्छेदककोटौ हेतुतावच्छेदकावच्छिन्नविशेष्यत्वस्य निवेशात्, अर्थात् तादृशसामानाधिकरण्यविशिंष्टनिरवच्छिन्नहेतुतावच्छेदकप्रकारतानिरूपितनिरवच्छिन्नहेतुतावच्छेदकनिष्ठावच्छेदकताकविशेष्यताया कारणतावच्छेदकगर्भे निवेशाद्, गुणे विशिष्टसत्त्वव्यापकद्रव्यत्वसामानाधिकरण्यविशिष्टहेतुतावच्छेदकप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वाभिन्नप्रकारताकज्ञानस्य प्रमात्वासम्भवात्तत्र द्रव्यत्वानुमितेः प्रमात्वापत्तिर्न स्यात्, विशिष्टसत्त्वव्यापकद्रव्यत्वसामानाधिकरण्यविशिष्टवद्विशिष्टसत्तावान् गुण इत्येवंविधज्ञानस्य प्रमात्वविरहात्।

तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इत्यस्य धूमलिङ्गकवह्निविधेयकानुमितिं प्रति यथा कारणता तथोपपत्तिं दर्शयति 'सामान्यप्रत्यासत्त्यभावेऽपी'-त्यादिना।

सामान्यप्रत्यासत्त्यभावे पर्वतीयधूमे तादृशसामानाधिकरण्यस्य प्रागनुभूतत्वविरहेण तादृशसामानाधिकरण्यविशिष्टस्य धूमत्वस्य विशेषणत्वासम्भवेऽपि महानसीयधूमे तादृशसामानाधिकरण्यस्य प्रागनुभूततया स्मृततादृशसामानाधिकरण्योपलक्षितधूमत्वस्य पर्वतीयधूमे विशेषणत्वसम्भवेन तादृशसामानाधिकरण्यवद्धूमवान् पर्वतः (तादृशसामानाधिकरण्यविशिष्टवद्वान् पर्वतः) इति ज्ञानापेक्षया धूमत्वत्वघटितत्वेन गुरुधर्मावच्छिन्नकारणताकस्य तज्ज्ञानस्य (तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवानिति ज्ञानस्य) न कारणत्वसम्भव इति।

अत्र 'न चैवम्' इत्यादिना शङ्कते— यदनुमितिकारणतया दर्शितपरामर्षात्मकज्ञाने हेतुतावच्छेदकस्य धूमत्वादेरुल्लेखविरहे विरोधस्य हेत्वाभासता न स्यादिति। अयं गौरश्वत्वादित्यादौ अश्वत्वत्व(हेतुतावच्छेदक)विशिष्टं गोत्वत्व(साध्यतावच्छेदक)विशिष्टाधिकरणावृत्ति इत्येवं सावच्छिन्नहेतुतावच्छेदक(उल्लिख्यमानहेतुतावच्छेदक)विषयकविरोधज्ञानस्य सावच्छिन्न(उल्लिख्यमान)हेतुतावच्छेदकाविषयकपरामर्षात्मकज्ञानविरोधित्वासम्भवादिति तदाशयात्।

उक्तशङ्कायाः समाधानम् 'अनुमितावेव तस्य विरोधित्वादि'त्युपन्यस्य विहितम्, अनुमिति-तत्कारणान्यतरविरोधिज्ञानविषयस्य हेत्वाभासत्वेन विरोधज्ञानस्योक्तदिशाऽनुमितिकारणोक्तपरामर्शात्मकज्ञानविरोधित्वासम्भवेऽपि तत्रत्यानुमितिविरोधित्वसम्भवेनानुपपत्त्यसम्भवात्, अथवा विरोधज्ञानस्य तत्र प्रतिबन्धका अनुभवसिद्धाः, तस्य तत्रानुभवसिद्धप्रतिबन्धकत्वोपपत्त्यर्थं केवलव्याप्तिबुद्धावेव ग्राह्याभावानवगाहिनोऽपि तज्ज्ञानस्य (विरोधज्ञानस्य) प्रतिबन्धकतास्वीकारेण विरोधस्य अनुमितिकारणविरोधिज्ञानविषयत्वेनापि हेत्वाभासत्वोपपत्तिसम्भवात्।

इत्थमुपपादितां शङ्कां = तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवान् पर्वत इत्यस्य धूमलिङ्गकवह्निविधेयकानुमितिकारणत्वानौचित्यविषयामिष्टापत्त्या परिहरति 'नीलघटत्वे'त्यादिना— तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इत्येवं परामर्शात्मकज्ञानस्यैव धूमत्वत्वाविषयकस्य तत्रानुमितौ मम जगदीशस्योक्तग्रन्थाभि[मत]ता, न तु धूमत्वत्वघटितस्योक्तानौचित्यवतः, यथा नीलो घट इत्यत्र नीलघटत्वप्रकारकबुद्धौ सामानाधिकरण्यसम्बन्धेन नैल्यप्रकारेण नैल्यवत्तया घटत्वज्ञाने सामानाधिकरण्यसम्बन्धेन नैल्यवत्तया घटत्वस्योल्लिख्यमानत्वेऽपि घटत्वत्वेन गुरुभूतेन घटत्वस्य तत्रोल्लिख्यमानत्वविरहात्, तेन घटत्वत्वेन रूपेण तत्र घटत्वस्य नैव भानम्, तथैव तादृशसामानाधिकरण्यविशिष्टवद्धूमवानिति परामर्शात्मकज्ञानस्थलेऽपि सामानाधिकरण्यसम्बन्धेन तादृशसामानाधिकरण्यप्रकारेण तादृशसामानाधिकरण्यवत्तया धूमत्वस्योल्लिख्यमानत्वेऽपि धूमत्वत्वेन गुरुभूतेनोल्लिख्यमानत्वविरहान्न तत्र धूमत्वस्य धूमत्वत्वेन भानम्, अतो न तत्र धूमत्वत्वस्य प्रवेशः, न च तत्प्रयुक्तं तत्र गौरवमिति समाधानस्य निष्कर्षः; एतद्बोधक एव 'सामानाधिकरण्यसम्बन्धेन नैल्यप्रकारेणे'त्य दं 'न तु तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवानिति ज्ञानस्य यतो गौरवमिति भाव' इत्यन्तस्तत्त्वालोकः।

प्रसङ्गेऽ. नन् जगदीशतर्कालङ्कारेण 'नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव स्वरूपत एव धूमत्वस्य भानमि'ति[१] दीधितिव्याख्यानरूपस्वग्रन्थे'एवे'ति यत्प्रयुक्तम्, तेन स्वप्रयुक्तेन 'एव'कारेण धूमत्वांशे यत्स्वातन्त्र्येण तादृशसामानाधिकरण्यस्य प्रकारत्वम्, तस्य व्यवच्छेदभ्रमः कस्यापि मा भवतु— एतदर्थं प्रसक्तां धूमत्वांशे स्वातन्त्र्येण तादृशसामानाधिकरण्यस्य प्रकारत्वव्यवच्छेदभ्रान्तिं वारयितुमनन्तरम् 'न धूमत्वत्वेने'ति उपन्यस्तम्। 'धूमत्वस्य स्वरूपत एव भानम्' इति प्रयुज्य 'न तु धूमत्वत्वेने'त्यस्य प्रयोगविरहे धूमत्वे तादृशसामानाधिकरण्यस्य प्रकारत्वव्यवच्छेद-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ८

भ्रान्तिः स्यादतो 'न तु धूमत्वत्वेने'त्यस्य प्रयोगः कृतः। दीधितेर्यादृशी व्याख्या 'धूमत्वस्य स्वरूपत एव भानं न तु धूमत्वत्वेने'ति घटिता अत्र जगदीशतर्कालङ्कारेण कृता तादृशी व्याख्या दीधितावपि चिन्तामणेर्मूलस्य व्याख्यानरूपा दृश्यते 'ग्रन्थस्तु [अन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुरित्यादिचिन्तामणिग्रन्थस्तु] उपलक्षणपरोऽनौपाधिकत्वमात्रव्यवच्छेदाय यद्वक्ष्यति अनौपाधिकत्वन्तु तल्लक्षणमि'त्यादौ[१] इति भावः।[१७७]

तत्त्वालोकः – केचित्तु — तादृशवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इति ज्ञानकारणत्वाभिप्रायकमुक्तग्रन्थमिच्छन्ति। तथा च ननु तादृशसामानाधिकरण्यविशिष्टवद्धूमवानिति परामर्षस्य विरोधज्ञानाविरोधित्वेन न कारणत्वन्तादृशधूमत्ववद्धूमवानिति ज्ञानस्य च धूमत्वत्वविषयकत्वेन गौरवेणैव न तथात्वं, तादृशसामानाधिकरण्यवद्धूमवानिति बुद्धेश्च तादृशसामानाधिकरण्यविशिष्टधूमत्वाप्रकारकत्वादेव न तत्त्वमित्याशङ्कायामाह 'तत्र चे'त्यादि[२]।

यथा नीलो घट इति बुद्धौ घटत्वविशिष्टे नैल्यभाने सामानाधिकरण्येन घटत्वेऽपि तस्य भासमानतया सामानाधिकरण्येन नैल्यप्रकारतानिरूपितविशेष्यत्वाभिन्नघटत्वनिष्ठप्रकारताकत्वरूपं नीलघटत्वप्रकारकत्वं तस्यास्तथा तादृशसामानाधिकरण्यवद्धूमवानिति ज्ञानेऽपि धूमत्वविशिष्टे तादृशसामानाधिकरण्यभाने सामानाधिकरण्येन तत्रापि तस्य भासमानतया सामानाधिकरण्येन तादृशसामानाधिकरण्यप्रकारतानिरूपितधूमत्वनिष्ठविशेष्यत्वाभिन्नधूमत्वनिष्ठप्रकारतानिरूपकत्वरूपतादृशसामानाधिकरण्यविशिष्टधूमत्वप्रकारताकत्वमव्याहतम्, अनन्तराभासमानैकज्ञानीयपारतन्त्रीय-स्वातन्त्रीयविषयत्वयोरप्यभेदस्वीकारात्। यथा च नीलो घट इति बुद्धौ तादृशप्रकारता न घटत्वत्वावच्छिन्ना तथोक्तधूमत्वज्ञानेऽपि धूमत्वप्रकारता न धूमत्वत्वावच्छिन्नेति न गौरवम्।

एवञ्च कारणता च सामानाधिकरण्यनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितावच्छेदकत्वाभिन्ननिरवच्छिन्नतादृशधूमत्वविशेष्यत्वाभिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन।

---

१. जागदीशी (सोमनाथोपाध्यायसम्पादिता), व्याप्त्यनुगमप्रकरणे दीधितिः, पृ. ४२३

२. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ८

प्रथमाभिन्नत्वोपादानं तादृशसामानाधिकरण्यमात्रप्रकारेण धूमत्व-प्रकारकज्ञानस्य कारणतावारणाय वस्तुतस्त्ववच्छेदकत्वाभिन्नेत्यन्तं नोपादेयम्, तादृशधूमत्वविशेष्यत्वाभिन्नप्रकारतायां निरवच्छिन्नत्वोपादानादेव तद्वारणात्, उक्तज्ञानीयप्रकारतायाः सामानाधिकरण्यावच्छिन्नत्वात्, तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इति ज्ञाने च तादृशविशेष्यत्वाभिन्नायाः धर्मितावच्छेदकतात्मकधूमत्वप्रकारताया एव निरवच्छिन्नत्वात्।

अत एव तादृशसामानाधिकरण्यप्रकारतानिरूपितधूमत्वावच्छिन्न-विशेष्यत्वाभिन्नप्रकारताकज्ञानत्वेन कारणत्वाद् "न चे"[1]त्यादिनोक्ताद्भेदस्य गौरवाभावस्य चोक्तकारणत्वे सिद्धिः, तस्य सामानाधिकरण्यसम्बन्धावच्छिन्न-सामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नधूमत्वनिष्ठप्रकारता-निरूपितधूमनिष्ठप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणत्व एव पर्यवसानात्।

एवञ्च परामर्शीयजनकतानिरूपितपक्षविशेष्यत्वनिष्ठावच्छेदकता-निरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताश्रयत्वरूप-व्याप्तित्वस्य धूमांशे सामानाधिकरण्यस्य प्रकारत्वेऽपि धूमत्व एव सत्त्वेन न व्याप्तेरैक्यहानिः।

न च सामानाधिकरण्यस्य धूमे भासमानस्यैव धूमत्वे भासमानतया सामान्यप्रत्यासत्त्यभावे पक्षीयधूमे तद्भानानुपपत्तिः धूमत्वस्य व्याप्तित्वञ्च तत्पक्ष एवेति वाच्यम्, सामान्यप्रत्यासत्तिम्विनापि व्याप्तेर्लौकिकसन्निकर्षादि-ग्राह्यत्वसम्भवे लाघव एव च तात्पर्यान्मूलस्य, "नन्वेवं स्मृतस्ये"त्यादि-ग्रन्थस्य[2] सामान्यप्रत्यासत्त्यनङ्गीकर्तृमीमांसकमतावलम्बित्वादिति व्याख्यां च कुर्वन्ति।

तदपरे न मन्यन्ते, "तथा च तामुपादायैवे"[3]त्यग्रिमग्रन्थपर्यालोचनया पूर्वापरमूलपर्य्यालोचनया च 'एकैव ही'त्यादिमूलस्य सामान्यप्रत्यासत्त्य-भावपक्षीयत्वावधारणात्, सामान्यलक्षणाग्रन्थे तद्व्यवस्थापनस्य सामानाधिकरण्यव्याप्तिपक्षीयत्वप्रतिपादनाच्च सन्दर्भविरोधापत्तेरिति।[१७८]

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७
२. तदेव, पृ. ७
३. तदेव, पृ. ८

**प्रकाशः–** उपर्युक्तखण्डेन तत्त्वालोककृत् प्रासङ्गिकजागदीशीग्रन्थस्य व्याख्यानपरं तत् केचित्तुमतं सविस्तरमुपपाद्य दूषयिष्यति, यत्र केचित्तु'मते 'तद्वति धूमत्वादिकं व्याप्तिरि'ति दीधितिव्याख्यानरूप, - 'तथा च तादृशसामानाधिकरण्य-विशिष्टधूमत्वं व्याप्तिः, तत्प्रकारिकैव पक्षधर्मताधीरनुमितिहेतुरि'ति जागदीशीग्रन्थ-स्तादृशवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इति ज्ञानस्य धूमलिङ्गकवह्नि-विधेयकानुमितिकारणत्वाभिप्रायकः।

तादृशवह्नित्वावच्छिन्न(धूमत्वावच्छिन्नसमानाधिकरणप्रतियोगिव्यधिकरणा-त्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न)समानाधिकरणधूमवान् पर्वत इति ज्ञानस्यानुमितिकारणत्वदाढर्याय तत्र ननु तादृशसामानाधिकरण्यविशिष्टवद्धूमवान् पर्वत इति परामर्षस्य उल्लिख्यमानधूमत्वा(हेतुतावच्छेदका)घटिततया विरोधज्ञान-(उल्लिख्यमानहेतुतावच्छेदकघटितविरोधज्ञान)विरोधित्वासम्भवात्कारणत्वासम्भवः, तादृशसामानाधिकरण्यविशिष्टधूमत्ववद्धूमवानिति ज्ञानस्य गुरुभूतधूमत्वत्वविषयकत्वेन गौरवात्कारणत्वासम्भवः, तादृशसामानाधिकरण्यवद्धूमवान् (तादृशवह्नित्वावच्छिन्न-सामानाधिकरण्यवद्धूमवान्) इति बुद्धेश्च तादृशसामानाधिकरण्यविशिष्टधूमत्व-प्रकारकत्वाभावादेव (सिद्धान्तीकृतस्वरूपकव्याप्तिप्रकारकत्वविरहादेव) न कारणत्व-सम्भव इत्याशङ्कोत्थापनात् 'तत्र च नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव धूमत्वस्य स्वरूपत एव भानम्, न तु धूमत्वत्वेन, नातो गौरवमि'[१]त्युत्तरजागदीशीग्रन्थं दृष्टान्तोपस्थापकमवतार्य्य अनुमितिकारणतया स्वदर्शिते तादृशवह्नित्वावच्छिन्न-समानाधिकरणधूमवान् पर्वत इति ज्ञाने तादृशसामानाधिकरण्यधूमत्वप्रकारकत्वं 'ननु' इत्यादिग्रन्थान्तिमभागेन पूर्वप्रतिषिद्धं दृष्टान्ततया 'नीलो घटः' इति बुद्धिमुपस्थाप्य साधु समर्थितम्।

यथा 'नीलो घट' इति बुद्धौ तादृशप्रकारता = नैल्यसामानाधिकरण्यविशिष्ट-घटत्वप्रकारता, न घटत्वावच्छिन्ना तथा तथोक्तधूमत्वज्ञानेऽपि तादृशसामाना-धिकरण्यविशिष्टधूमत्वप्रकारता न धूमत्वत्वावच्छिन्नेति न गौरवमिति परस्तान्निष्कर्ष-प्रदर्शनसहितं तत्र तादृशवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इति ज्ञाने तादृशसामानाधिकरण्यविशिष्टधूमत्वप्रकारकत्वं तत्पूर्वमेव यथा नीलो घट इति बुद्धौ घटत्वविशिष्टे नैल्यभाने घटत्वेऽपि सामानाधिकरण्यसम्बन्धेन नैल्यस्य भासमानतया सामानाधिकरण्यसम्बन्धेन नैल्यप्रकारतानिरूपितविशेष्यत्वाभिन्नघटत्वप्रकारताकत्वं

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ८

तस्याः (नीलो घट इति बुद्धेः) तथा तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इति ज्ञानेऽपि धूमत्वविशिष्टे तादृशसामानाधिकरण्यभाने सामानाधिकरण्यसम्बन्धेन धूमत्वेऽपि तादृशसामानाधिकरण्यस्य भासमानतया सामानाधिकरण्यसम्बन्धेन तादृश-सामानाधिकरण्यप्रकारतानिरूपितधूमत्वनिष्ठविशेष्यत्वाभिन्नधूमत्वनिष्ठप्रकारता-निरूपकत्व(धूमत्वनिष्ठप्रकारताकत्व)रूपतादृशसामानाधिकरण्यविशिष्टधूमत्व-प्रकार[ताक]त्वमव्याहतम् = निर्बाधमिति।

अत्र दृष्टान्तीभूतनीलो घट इत्यत्र बुद्धौ सामानाधिकरण्यसम्बन्धावच्छिन्ननैल्य-निष्ठप्रकारतानिरूपितघटत्वनिष्ठविशेष्यत्वाभिन्नघटत्वप्रकारताकत्वं तथा दार्ष्टान्तिके तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इति ज्ञाने सामानाधिकरण्यसम्बन्धावच्छिन्न-तादृशसामानाधिकरण्यनिष्ठप्रकारतानिरूपितधूमत्वनिष्ठविशेष्यत्वाभिन्नधूमत्वप्रकारता-कत्वञ्च यदभिहितन्तदुपपत्तिः 'अनन्तराभासमानैकज्ञानीयपारतन्त्रीयस्वातन्त्रीयविषयत-योरप्यभेदस्वीकारादि'त्युपन्यस्य विहिता।

जगदीशमते एकज्ञानीयसमानाधिकरणविषयताद्वयस्य यथाऽभेदोऽभिमतस्तथा अनन्तरा = व्यवधानमन्तरा, भासमानयोः पारतन्त्रीयस्वातन्त्रीययोरेकज्ञानीयसमाना-धिकरणविषयतयोरपि अभेदोऽभिमतः। नीलो घट इत्यत्र पारतन्त्रीया समानाधिकरण-विषयता सामानाधिकरण्यसम्बन्धावच्छिन्ननैल्यप्रकारतानिरूपितघटत्वनिष्ठा विशेष्य-ताख्या, स्वातन्त्रीया च घटत्वनिष्ठा प्रकारतारव्याऽतस्तयोरभेदो युक्त एव। एवं दार्ष्टान्तिके तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इत्यत्रापि पारतन्त्रीया सामानाधिक-रण्यसम्बन्धावच्छिन्नतादृशसामानाधिकरण्यप्रकारतानिरूपितधूमत्वनिष्ठविशेष्यत्वाख्या विषयता, स्वातन्त्रीया च तत्र धूमत्वप्रकारताख्या विषयता, तयोरपि समानाधिकरण-योर्द्वयोरभेद उचित एवेत्युपपाद्य— अनन्तरं तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इत्यस्य धूमलिङ्गकवह्निविधेयकानुमितिकारणतया दर्शितज्ञानस्य येन रूपेण कारणता तद्दर्शयति-'एवञ्चे'त्यादिना। तादृशसामानाधिकरण्यनिष्ठस्वरूपसम्बन्धावच्छिन्न-प्रकारतानिरूपितविशेष्यतानिरूपिता या अवच्छेदकता, तदभिन्ना निरवच्छिन्नतादृश-धूमत्वनिष्ठविशेष्यत्वाभिन्न[१] प्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन [कारणतेत्याशयः]।

---

१. पारतन्त्रीया सामानाधिकरण्यसम्बन्धावच्छिन्नतादृशसामानाधिकरण्यनिष्ठप्रकारतानिरूपिता धूम-त्वनिष्ठा विशेष्यता निरवच्छिन्नैव भवति।

अत्र कारणतावच्छेदकतया दर्शितनिश्चयत्वकुक्षौ द्वितीयप्रकारतायां प्रथमाभिन्नत्व(सामानाधिकंरण्यनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितावच्छेदकत्वाभिन्नत्वरूप)विशेषणं यदुक्तं तस्य प्रयोजनं 'प्रथमाभिन्नत्वोपादानं तादृशसामानाधिकरण्यमात्रप्रकारेण धूमत्वप्रकारकज्ञानस्य कारणतावारणाय' इत्युपन्यस्य बोधितम्। तादृशसामानाधिकरण्यमात्रप्रकारेण धूमत्वप्रकारकं ज्ञानं सामानाधिकरण्यसम्बन्धेन तादृशसामानाधिकरण्यविशिष्टधूमत्वनिष्ठस्वाश्रयवत्त्वसम्बन्धावच्छिन्नप्रकारताकपर्वतत्वावच्छिन्नविशेष्यताकं ज्ञानं, तादृशज्ञानस्य कारणत्ववारणाय 'प्रथमाभिन्नत्वो'पादानम्, तादृशज्ञानीयधूमत्वप्रकारतायामुक्तावच्छेदकत्वाभिन्नत्वविरहात्तादृश प्रकारताकज्ञानस्य व्यावृत्तिर्जायते।

अनन्तरं वस्तुतः सामानाधिकरण्यमात्रप्रकारेण धूमत्वप्रकारकज्ञानस्य कारणत्ववारणाय 'अवच्छेदकत्वाभिन्नेत्यन्तमावश्यकन्नास्ती'त्युक्तम्। तादृशधूमत्वनिष्ठविशेष्यत्वाभिन्नधूमत्वप्रकारतायां निरवच्छिन्नत्वोपादानेनैव तादृशज्ञानस्य कारणता व्यवच्छिद्यते, तदीयतादृशधूमत्वप्रकारतायां तादृशसामानाधिकरण्यावच्छिन्नत्वस्य सत्त्वेन निरवच्छिन्नत्वविरहात्। तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इति सङ्ग्राह्यज्ञानीयतादृशधूमत्वविशेष्यत्वाभिन्नायां धर्मितावच्छेदकतात्मकधूमत्वप्रकारतायां निरवच्छिन्नत्वस्य सत्त्वात्तादृशप्रकारकताकसङ्ग्राह्यज्ञानस्य कारणत्वोपपत्तौ बाधकाभावात्।

अत एव = तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इति ज्ञानस्य दर्शितनिश्चयत्वरूपेण कारणत्वादेव, 'न च धूमादिव्यापकवह्न्यादिसमानाधिकरणधूमादिमत्तानिश्चयत्वेनैव परामर्शस्य धूमादिलिङ्गकानुमितौ हेतुत्वादि'त्यादिनोक्तात्[1] कारणत्वाद् वर्णितकारणतायां भेदो गौरवाभावश्च सिद्धौ जातौ। 'न चे'त्यादिनोक्तकारणत्वे तादृशधूमत्वविशेष्यत्वाभिन्ननिरवच्छिन्नधर्मितावच्छेदकतात्मकधूमत्वप्रकारत्वाघटितत्वात् सङ्ग्राह्योक्तकारणत्वस्य तद्घटितत्वाद् धूमत्वत्वाघटितत्वेनागुरुत्वाच्च दर्शितनिश्चयत्वावच्छिन्नकारणतायाः सामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नधूमत्वप्रकारतानिरूपितधूमनिष्ठप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणत्वे एव पर्य्यवसानं भवति।

एवञ्च = दर्शितनिश्चयत्वेन तादृशसामानाधिकरण्यवद्धूमवान् पर्वत इत्येवं परामर्षस्य कारणत्वे च, न व्याप्तेरैक्यहानिः, यतो हि परामर्षीयजनकतानिरूपितपक्ष-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.७

निष्ठविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताश्रयत्वमेव व्याप्तित्वम्, तच्चोक्तनिश्चयत्वेन कारणत्वे सति धूमांशे तादृशसामानाधिकरण्यस्य प्रकारत्वेऽपि धूमत्व एव समायाति, पर्वतीयविशेष्यतानिष्ठावच्छेदकतानिरूपितधूमीयप्रकारतानिष्ठावच्छेदकतानिरूपितावच्छेदकताख्यप्रकारताया पक्षनिष्ठविशेष्यत्वनिष्ठाच्छेदकताया प्रथमावच्छेदकतात्वेन परिग्रहे धूमत्वे एव प्राप्तत्वेन तस्यैकत्वात्।

अनन्तरं दर्शितनिश्चयत्वेन कारणत्वपक्षे 'न च सामानाधिकरण्यस्ये'त्यादिना शङ्कते— यद्दर्शितकारणतायां धूमे भासमानस्यैव तादृशसामानाधिकरण्यस्य धूमत्वे भासमानता, तदयुक्तम्, सामान्यप्रत्यसत्त्यभावपक्षे पक्षीयधूमे = पर्वतीयधूमे, तस्य = तादृशसामानाधिकरण्यस्य पूर्वाननुभूतस्य, भानासम्भवात्, धूमत्वस्य व्याप्तित्वं च सामान्यप्रत्यासत्त्यभावपक्षीयमेवेति।

अत्र समाधीयते— धूमत्वे सामान्यप्रत्यासत्त्यभावपक्षीयव्याप्तित्वकथनस्य लाघवे एव तात्पर्य्यसत्त्वात् सामान्यप्रत्यासत्तिम्विनापि लौकिकसन्निकर्षादितो व्याप्तेग्रह्यित्वसम्भवात्। 'नन्वेवं सामान्यलक्षणाऽस्वीकारे महानसीयवह्निसामानाधिकरण्यस्य स्मृतस्य पक्षवृत्तिधूमादावसत्त्वादि'ति पूर्वग्रन्थस्य[१] सामान्यलक्षणानङ्गीकर्तृमीमांसकमतावलम्बित्वादिति— केचित्तु व्याख्यां कुर्वन्ति।

इत्थमुपपादितं 'केचित्तु'मतं 'तदपरे न मन्यन्ते' इत्यादि 'सन्दर्भविरोधापत्तेरि'-त्यन्तेन निरस्यते— तथा च तामुपादायैव = तादृशसामानाधिकरण्यरूपां व्याप्तिमुपादायैव, 'पर्वतीयवह्निधूमयोरसन्निकर्षात्तयोः कथं व्याप्तिग्रहः' इत्याद्यग्रिमग्रन्थ[२]-पर्यालोचनया पूर्वापरमूल(दीधिति)पर्यालोचनया च 'एकैव हि सा व्याप्तिरि'ति[३]-मूलस्य सामान्यलक्षणाप्रत्यासत्त्यभावपक्षीयत्त्वावधारणात्, सामान्यलक्षणाग्रन्थे सामान्यप्रत्यासत्तिव्यवस्थापनस्य तादृशसामानाधिकरण्यरूपव्याप्तिपक्षीयत्वप्रतिपादनाच्च सन्दर्भविरोधापत्तेरि'त्युपन्यासेन उपपादित'केचित्तु'मते सामान्यप्रत्यासत्त्यभावपक्षीयधूमत्वव्याप्तौ पक्षीयधूमे तादृशसामानाधिकरण्यभानासम्भवाद् धूमत्वे धूमद्वारिकतादृशसामानाधिकरण्यभानस्य दूरोत्सारितत्वेन सन्दर्भविरोधदोषोऽनिवार्य एवेति बोधितमिति प्रकाशः।[१७८]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ७

२. तदेव, पृ. ८

३. अनुमानखण्डे सिद्धान्तपरामर्शप्रकरणे तत्त्वचिन्तामणिमूलम्

तत्त्वालोकः– "मन्तव्यमि"ति।[१] चिन्तनीयमित्यर्थः। अथ हेतुतावच्छेदकस्य तादृशस्य व्याप्तित्वस्वीकारस्य सामान्यप्रत्यासत्त्यभावपक्षीयतया दण्डिहेतुकस्थले साध्यसमानाधिकरणवृत्तित्वेन सपक्षवृत्तिधर्मदण्डादीनामेव प्राग्गृहीततया स्मृतस्य तस्य पक्षधर्म्मविशेषणत्वानुपपत्त्या व्याप्तिज्ञानानुपपत्तिः स्यादिति दण्डत्वस्यैव हेतुतावच्छेदकत्वं व्याप्तित्वं च स्वीकार्यम्, तथासति रूपत्वव्याप्यजातिमदादिहेतुकस्थलेऽपि तादृशजातित्वस्यैव स्वीकरणीयतया द्वितीयाया न कुत्रापि नानात्वप्रसङ्ग इति चिन्ताबीजम्।

ननु भवेदेतदेवं भिन्नत्वमभिन्नत्वं च यदि नानात्वैकत्वरूपे स्यातां, किन्तु भेदतदभावरूपे, भेदश्चानुमितिजनकतावच्छेदकप्रतियोगिकः, स चानुमितिजनकतावच्छेदकादिति पूरणाल्लभ्य इति नासङ्गतिरित्याह "केचिदि"त्यन्तेन[२]। अपिना[२]ऽस्वरसाभिव्यक्तिः[३], स च सामान्यप्रत्यासत्त्यभावे दुर्ज्ञेयताया स्थलविशेषे उभयोरपि तुल्यत्वे नैकस्य जनकतावच्छेदकत्वमन्यस्यातथात्वमित्यभ्युपगम इति।[१७९]

*प्रकाशः*–'आद्या भिन्ने'ति दीधितिव्याख्यानात्मक, - "तथा च तामुपादायैव 'पर्वतीयवह्निधूमयोरसन्निकर्षात्तयोः कथं व्याप्तिग्रह' इति परामर्शीयपूर्वपक्षग्रन्थ इति" इति, तथा 'द्वितीया त्वभिन्नैवे'ति दीधितिव्याख्यानरूप, - "तथा च तामुपादायैव 'एकैव हि सा व्याप्तिरि'ति परामर्शीयसिद्धान्तग्रन्थ इति" इति जागदीशी[४]ग्रन्थानन्तरवर्ति'यत्रैकमेव साध्याधिकरणं तत्र तद्रूपवान् तद्रसादित्यादावाद्याऽप्यभिन्नैव, यत्र च द्रव्यत्वादौ साध्ये रूपत्वव्याप्यजातिमतो हेतुत्वं तत्र हेतुतावच्छेदकीभूतनीलत्वादिजातीनां नानात्वेन द्वितीयाऽपि क्वचिद् भिन्नैवेति मन्तव्यमि'ति[५] जागदीशीघटकं 'मन्तव्यमि'ति परिगृह्योक्तखण्डेन व्याख्यानमारभ्यते। तत्र 'मन्तव्यमि'ति 'चिन्तनीयमि'त्यर्थकं व्याख्यातम्। उक्तजगदीशोक्तौ चिन्ताकारणं च 'अथ हेतुतावच्छेदकस्य तादृशस्य (तादृशसामानाधिकरण्यविशिष्टस्य) व्याप्तित्वस्वीकारस्ये'त्यादि 'द्वितीयाया न कुत्रापि नानात्वप्रसङ्ग'इत्यन्तेन दर्शितम्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ८

२. 'इत्यपि कश्चिदि'ति पाठः। – तदेव, पृ. ८

३. 'अपिंना स्वरसाभिव्यक्तिरि'ति पाठः प्राचीनमुद्रितपुस्तके।

४. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ८

५. तदेव, पृ. ८

तादृशसामानाधिकरण्यविशिष्टहेतुतावच्छेदकस्य व्याप्तित्वस्वीकारः सामान्यलक्षणाप्रत्यासत्त्यभावपक्षीय एव, तत्र च पक्षे दण्डिहेतुकस्थले दण्डिसंयोगवान् दण्डिमत्त्वादित्यत्र हेतुतावच्छेदकस्य दण्डस्य नानात्वेन साध्यसमानाधिकरणहेतुवृत्तित्वेन सपक्ष(दृष्टान्त)वृत्तिधर्मदण्डादीनामेव प्राग्गृहीततया स्मृतस्य तस्य पक्षधर्म-(पक्षवृत्तिहेतुदण्डिविशेष)विशेषणत्वानुपपत्त्या तादृशसामानाधिकरण्यविशिष्टहेतुतावच्छेदकरूपव्याप्तिज्ञानं न स्यादतस्तत्रानुगतस्य दण्डत्वस्यैव हेतुतावच्छेदकत्वं व्याप्तित्वं च स्वीकार्यम्, तथासति द्रव्यत्वसाध्यकरूपत्वव्याप्यजातिमत्ताहेतुतास्थलेऽपि उक्तयुक्त्या अनुगतस्य रूपत्वव्याप्यजातित्वस्य हेतुतावच्छेदकत्वं व्याप्तित्वं चाङ्गीकार्यम्। ततो द्वितीयाया न कुत्रापि नानात्वप्रसङ्गसम्भव इति तत्र नानात्वोपपादकजगदीशोक्तौ चिन्ताबीजम् भवति।

अनंन्तरं 'ननु भवेदेतदेवमि'त्यादि'नासङ्गतिरित्याह केचिदि'त्यन्ततत्त्वालोकग्रन्थो यादृशजागदीशीग्रन्थस्यावतारकस्तादृशः पाठ इदानीमुपलब्धमुद्रितपुस्तके मत्पितृपितामहभ्रात्रा मिथिलाक्षरलिखितातिप्राचीनपुस्तके च मत्सविधस्थिते नोपलभ्यते, किन्तु वृद्धगुरुवराणां तत्त्वालोकविधातॄणां तदा सविधस्थितपुस्तके तथापाठस्य सत्त्वात्तदनुसारं 'ननु भवेदेतदेवमि'त्यादिरग्रिमस्तत्त्वालोकः।

तत्त्वालोककृत्सविधस्थितजागदीशीसिद्धान्तलक्षणपुस्तकस्थिततदग्रिमव्याख्येयजागदीशीग्रन्थः ''भिन्नत्वाभिन्नत्वे न नानात्वैकत्वरूपे, किन्तु भेदाभेदरूपे एव, 'आद्या भिन्ना द्वितीया त्वभिन्नैवे'ति दीधितिग्रन्थाभिप्रेते भेदश्चानुमितिजनकतावच्छेदकप्रतियोगिकः, स चानुमितिजनकतावच्छेदकादिति पूरणाल्लभ्य इति 'नासङ्गतिरित्यपि केचिदि''ति सम्भाव्यते।[१]

'आद्या भिन्ना द्वितीया अभिन्ना' इति दीधित्यभिप्रेतभिन्नत्वाभिन्नत्वे यदि नानात्वैकत्वरूपे स्यातां तदैव तद्रूपवान् तद्रसादित्यत्र आद्याया नानात्वविरहेण तथा द्रव्यत्ववान् रूपत्वन्यूनवृत्तिजातिमत्त्वादित्यत्र द्वितीयाया एकत्वविरहेण तद्दीधित्यसङ्गतिः स्याद्, भेदाभेदयोरेव भिन्नत्वाभिन्नत्वरूपतया क्रमशस्तद्दीधितिग्रन्थाभिप्रेतत्वे तु आद्यायाः तादृशसामानाधिकरण्यरूपव्याप्तेः सामान्यलक्षणाप्रत्यासत्त्यभावे दुर्विज्ञेय-

१. 'आद्या भिन्ना अनुमितेर्विषयविधया जनकतावच्छेदकाद् भिन्ना किन्तु व्यवहारौपयिकीति, द्वितीया त्वभिन्ना विषयतयाऽनुमितिजनकतावच्छेदकादभिन्नैवेत्यर्थ इत्यपि कश्चिदि'त्यधिको जागदीशीपाठ उपलभ्यते।
द्रष्टव्यम्— प्रकृतग्रन्थेऽपि (प्रथमभागे) जागदीशीमूलम्, पृ. ८ (टिप्पण्याम्)

तया पक्षधर्मांशे विशेषणतयाऽनुमितिजनकतावच्छेदकत्वरूपव्याप्तित्वासम्भवात्तादृशा नुमितिजनकतावच्छेदकाद्भिन्नत्वकथनोपपत्तिः। तद्वति धूमत्वादिरूपव्याप्तेः सामान्य-लक्षणाम्विनापि लौकिकसन्निकर्षादितो ज्ञातुं शक्यत्वेनानुमितिजनकतावच्छेदकत्वेना-नुमितिजनकतावच्छेदकात्तस्या अभिन्नत्वकथनोपपत्तिरित्यपि 'केचिदि'ति तदाशयः।

तत्र 'अपिना' अस्वरसोऽभिव्यज्यते। स चास्वरसः सामान्यप्रत्यासत्त्यभावे स्थलविशेषे उभयोरपि दुर्विज्ञेयतायास्तुल्यत्वेन एकस्य जनकतावच्छेदकत्वमन्यस्या-तथात्वमित्यभ्युपगम इति। अर्थाद् वह्निमान् धूमादित्यादौ अनेकहेतुकस्थले आद्याया दुर्विज्ञेयता इव द्रव्यत्ववान् रूपत्वव्याप्यजातिमत्त्वात्, दण्डिसंयोगवान् दण्डिमत्त्वा-दित्यादौ द्वितीयाया हेतुतावच्छेदकरूपाया अपि दुर्विज्ञेयतैव, दण्डिहेतुकदण्डहेतुता-वच्छेदकस्थलविशेषस्थले एकत्रैवोभयोर्दुर्विज्ञेयता सामान्यलक्षणाप्रत्यासत्त्यभावे, ततो द्वितीयाया अनुमितिजनकतावच्छेदकरूपता, आद्यायास्तु न तथेति कथं सङ्गतं स्यादित्यस्वरसस्तत्र 'केचित्तु'मते दीधितिव्याख्याने 'अपिना' सूचित इति प्रकाशः।[१७९]

तत्त्वालोकः— ननु प्रथमोपात्तत्वात् प्रतियोग्यसमानाधिकरणत्व-विशेषणस्य हेतुसामानाधिकरण्यघटक-यद्रूपविशिष्टत्वव्यावृत्त्यभिधाना-नन्तर्भावाभिधानमनुचितमिति चेन्न, सूचीकटाहन्यायाद् यद्रूपविशिष्टसामाना-धिकरण्यस्य स्वोक्ततया तद्व्यावृत्तिजिज्ञासाया एव प्रथममुदितत्वाच्चेति।

''भ्रमखण्डनार्थमयमिती''ति[१]। ननु भ्रमनिरासार्थतायाः पक्षनिर्देशस्यात्र प्राङ् निराकृततयेदमसङ्गतमिति चेद्, भवेदेतदेवं यदि कथामात्रेण तन्निराकृतं स्यात्, किन्तु तत्र पक्षनिर्देशेऽपि भ्रमस्यानिवार्यतया तात्पर्याद्यवधारणादेव तन्निवृत्तिः स्वीकरणीयेति पक्षनिर्देशम्विनापि तस्मात्तन्निवृत्तिर्भवत्येवातो न तदर्थता, प्रकृते चायम्पदोपादानेऽयं कपिसंयोग्येतदित्युद्देश्यविधेयभावो न सम्भवति, उद्देश्यतावच्छेदकविधेययोरैक्यात्। एतदयं कपिसंयोग्येतदपि विधेयांशेऽधिकावगाहिज्ञानं न सम्भवति, विधेयवाचकपदपूर्ववर्तिताया उद्देश्यवाचकपदे नियमात्, तात्पर्यनिर्णयम्विना पौर्वापर्यभेदकल्पनाया अन्याय्यत्वादयमेतदिति सामानाधिकरण्यासम्भवाच्चेति भ्रमनिरासार्थता युज्यत एवेति।[१८०]

---

१. 'भ्रमनिरासार्थमयमिती'त्यपि पाठः। – प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

***प्रकाशः*** – 'अयं कपिसंयोग्येतद्वृक्षत्वादित्यादिसङ्ग्रहायासमानाधिकरणान्तमि'ति[1]दीधिति-तद्व्याख्यानरूपजागदीशीग्रन्थव्याख्यानपर उपर्युक्तः खण्डः। तत्र 'नन्वि'त्यादिना प्रथममिदमाशङ्कते यच्चिन्तामणिकृदुक्तव्याप्तिलक्षणे दीधितिकृदुक्ततल्लक्षणे च प्रतियोग्यसमानाधिकरणत्वस्यैव प्रथमोपात्तत्वसत्त्वाद् यद्रूपविशिष्टत्वस्य प्रतियोग्यसमानाधिकरणोपादानानन्तरमेवोपात्तत्वसत्त्वाद्दीधितिकृता 'इत्थञ्च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वाद्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः, साधनस्य विशिष्टसत्त्वादेर्गुणादाववृत्तेरि'[2]त्यनेन इतः पूर्वमेव यद्रूपविशिष्टत्वव्यावृत्तिमभिधाय इदानीम् परतः 'अयं कपिसंयोग्येतद्वृक्षत्वादि'त्यादिना प्रतियोग्यसमानाधिकरणत्वविशेषणस्य प्रथमोपात्तस्य व्यावृत्तिरभिधीयतेऽभिहिता वा, तन्न युक्तम्, प्रथमोपात्तस्य व्यावृत्तेः प्रथममेवाभिधानौचित्यादिति।

एतदेव 'ननु प्रथमोपात्तत्वात्प्रतियोग्यसमानाधिकरणत्वविशेषणस्य हेतुसामानाधिकरण्यघटकयद्रूपविशिष्टत्वव्यावृत्त्यभिधानानन्तर्भावाभिधानमनुचितमि'त्युपन्यस्य तत्त्वालोककृता बोधितम्। तत्र यद्रूपविशिष्टत्वव्यावृत्त्यभिधाने अनन्तर्भावो यस्य (यद्रूपविशिष्टत्वस्य व्यावृत्त्यभिधाने यन्नान्तर्भूतम्) एतादृशमभिधानं प्रतियोग्यसमानाधिकरणत्वविशेषणव्यावृत्त्यभिधानमनुचितमित्येवं विग्रहवाक्ययोजनया तदर्थोऽवधेयः।

उत्थापितशङ्कायाः समाधानं तदग्रिमभागेन द्विधा कृतम्, तत्रैकं 'सूचीकटाहन्यायादि'त्युपन्यासमुखेन, प्रथमोपात्तप्रतियोग्यसमानाधिकरणत्वविशेषणव्यावृत्तिपरकविचारस्य कटाहस्येव बहुकालसाध्यत्वेन अल्पकालसाध्यपश्चादुपात्तयद्रूपविशिष्टत्वविशेषणव्यावृत्त्यभिधानानन्तरमभिहितत्वादिति तदाशयः। द्वितीयञ्च समाधानम् — यद्रूपविशिष्टसमानाधिकरणस्य स्वोक्ततया यद्रूपविशिष्टत्वव्यावृत्तिजिज्ञासाया एव प्रथमोदितत्वेन तदभिधानं प्रथमं कृतम्, जिज्ञासाक्रम एवेह व्यावृत्त्यभिधानक्रमनियामकत्वेनाश्रित इति। एतदेव 'यद्रूपविशिष्टसमानाधिकरणस्य स्वोक्ततया = दीधितिकृतैवोक्ततया, चिन्तामणिकृतानुक्ततया, तद्व्यावृत्तिजिज्ञासाया एव प्रथममुदितत्वाच्चे'त्युपन्यस्य बोधितम्।

प्रासङ्गिकदीधित्युपरि उक्तशङ्कासमाधाने विधाय प्रासङ्गिकजागदीशीं व्याख्यातुं 'भ्रमखण्डनार्थमयमिती'त्युपन्यस्तम्। जगदीशेन 'अयं कपिसंयोग्येतद्वृक्षत्वादि'त्यत्र

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ.८

२. तत्रैव, दीधितिमूलम्, पृ.६

दीधितौ 'अयमि'त्युल्लेखस्य कपिसंयोगिन्येतत्पदार्थस्य साध्यताभ्रमनिरासार्थत्वं यदुक्तम्, तत्रानौचित्यं 'ननु भ्रमनिरासार्थताया पक्षनिर्देशस्यात्र प्राङ् निराकृततयेदम-सङ्गतमि'त्युपन्यस्याशङ्कितम्। तत्र पक्षनिर्देशस्य प्राङ् निराकृतता न स्पष्टीकृता। सा पक्षनिर्देशस्य प्राङ्निराकृतता 'भवेदेतदेवं यदि कथामात्रेण तन्निराकृतं स्यात् किन्तु तत्र पक्षनिर्देशेऽपि भ्रमस्यानिवार्यतया तात्पर्य्यावधारणादेव तन्निवृत्तिः स्वीकरणीयेति पक्षनिर्देशम्विनापि तस्मात्तात्पर्य्यावधारणात्तन्निवृत्तिर्भवत्येवे'त्युत्तरग्रन्थेन स्पष्टा भवति, अर्थाद् भ्रमनिवृत्तिस्तात्पर्य्यावधारणादेव भवति, न तु पक्षनिर्देशात्, भ्रमनिवर्तकतात्पर्य्यावधारणस्य पूर्वमजाततया भ्रमनिवृत्तेरर्थतो भ्रमनिवृत्तेः प्राङ् निराकृतता इति पक्षनिर्देशस्य भ्रमनिवारकत्वोक्तेरसङ्गतिशङ्काशयः।

उक्तासङ्गतिशङ्कायाः समाधानं 'प्रकृते चायं पदोपादाने' इत्यादिना तदग्रिम-तत्त्वालोकेन क्रियते— 'अयम्'-पदोपादानेन प्रकृते कपिसंयोगिनि एतत्पदार्थ-साध्यताभ्रमो भवितुन्न शक्नोति, इदन्त्वैतत्त्वयोः इदमेतदोर्वा अभिन्नार्थकतया उद्देश्यतावच्छेदकविधेययोरेकत्वात्ततो घटो घट इत्यत्रेवोद्देश्यविधेयभावेन बोधासम्भवात्। इदमभिन्नकपिसंयोगिरूपोद्देश्ये एतदो विधेयत्वासम्भवादिति यावत्।

परवर्ति-'एतदि'ति उद्देश्यतया स्वीकृत्य पूर्ववर्ति-'अयं कपिसंयोगी'इति विधेयतया च स्वीकृत्य घटो नीलघट इतीव विधेयांशेऽधिकावगाहिबोधसम्भव इत्यपि न ह्येव सम्भवति, विधेयवाचकपदपूर्ववर्तिताया उद्देश्यवाचकपदे नियमात्तात्प-र्य्यनिर्णयम्विना पौर्वापर्यव्यत्यासकल्पनाया अन्याय्यत्वाद्, अतः 'अयमि'त्यस्योपादा-नेन गत्यन्तरासम्भवाद् 'एतदि'ति पक्षसाध्यबहिर्भूतमेव हेतुघटकमित्यायातम्, अयमे-तदिति सामानाधिकरण्यस्य (अभेदस्य) समानलिङ्गकत्वविरहेण घटो नीलमित्यत्रेवा-सम्भवाच्च, 'अयमि'ति पक्षनिर्देशेन कपिसंयोगिन्येतत्पदार्थसाध्यताभ्रमो दूरोत्सारितः।

'कपिसंयोगिन्येतत्पदार्थसाध्यताभ्रमंखण्डनार्थ(निरासार्थ)मयमिति पक्ष-निर्देशः'[१]इति जागदीशीग्रन्थ 'अयं कपिसंयोग्येतद्वृक्षत्वादि'[२]त्येवं दीधितिपाठं बुध्वैव। यणात्मकसन्धिरहित 'अयं कपिसंयोगी एतद्वृक्षत्वादि'त्येव दीधितिपाठबोधे तु 'अयमि'त्येतद्रहितकपिसंयोगी एतद्वृक्षत्वादिति स्थितावसमानलिङ्गकपदद्वयसत्त्वेन तथा साध्यताभ्रमासम्भवात्तदसङ्गतिः स्यादिति भावयामि इति प्रकाशः।[१८०]

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

२. तत्रैव, दीधितिमूलम्, पृ. ८

तत्त्वालोकः– "अग्रे समाधास्यमानत्वादि"ति[१]। लक्षणान्तरतयेति शेषः। इदञ्चाभावाभावस्यातिरिक्ततामभ्युपेत्य, तेन विशिष्टसत्ताभाववान् गुणत्वादित्यत्र साध्याभावस्य विशिष्टसत्तारूपस्य सत्तात्मकतया गुण-वृत्तित्वेऽपि नाव्याप्तिः, न वा स्वरूपेण वृत्तित्वस्य घटत्वादौ विरहेण घटत्वाभावसाध्यके व्यभिचारिण्यतिव्याप्तेर्विवक्षितुमशक्यतया स्वप्रतियोगि-मत्ताग्रहविरोधिताघटकसम्बन्धेन वृत्तित्वस्य विवक्षणीयतया प्रतियोगि-वैयधिकरण्यघटितकल्पापेक्षया गौरवम्।

यद्यपि विशिष्टसत्ताभावाभावस्य स्वरूपत्वेऽपि द्रव्यत्वस्यैवेति तत्रा-व्याप्तिविरहेऽपि पूर्वक्षणविशिष्टधूमाभाववान् वह्नेरित्यत्र धूमस्वरूपसाध्या-भावस्य हेत्वधिकरणवृत्तित्वादव्याप्तिः।

गगनाभावस्य कालिकेन योऽभावस्तस्य साध्यतायामात्मत्वादौ साध्या-भावस्य गौरवेण जन्यत्वरूपताविरहेण गगनाभावात्मकस्य हेत्वधिकरण-वृत्तित्वसत्त्वादव्याप्तिश्चेति तयोर्वारणं हेत्वधिकरणनिरूपितवृत्तितावच्छेदकता-पर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकनिरूपकतानिरूपितनिरूप्यतावत्प्रति-योगितानवच्छेदकत्वविवक्षया यत्प्रतियोगिताकाभावत्वावच्छिन्नाधिकरणत्वं हेतुमति तत्प्रतियोगितानवच्छेदकत्वविवक्षया वा कार्य्यम्।

यत्तु— हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगितानिरूपित-प्रतियोगित्वस्य धूमाभावत्वाभावसाध्यकवह्न्यादिसद्धेतावयोगोलकनिरूपित-वृत्तितावच्छेदकधूमाभावत्वस्य साध्याभावात्मकत्वेनाव्याप्त्या धूमाभावत्व-धूमाभावोभयाभावसाध्यकवह्न्यादिसद्धेतावव्याप्त्या स्वनिरूपितत्व,-स्वा-श्रयनिरूपितत्वोभयसम्बन्धेन, तादृशानुयोगिताविशिष्टत्वस्य च हेयत्वेऽपि स्वनिरूपितत्व, - स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन तादृशानुयोगि-ताविशिष्टप्रतियोगित्वनिवेशे न दोष— इति।

तन्न। समवायेन प्रमेयाभावसाध्यकसत्त्वे व्यभिचारिण्यतिव्याप्तेः, साध्याभावप्रतियोगितायां स्वनिष्ठानुयोगितात्मकसाध्याभावनिरूपितत्वस्यैव सत्त्वेन प्रतियोगितान्तरस्यैव लक्षणघटकत्वात्। भावभेदत्वाभावसाध्यके साध्याभावप्रतियोगित्वे साध्यप्रतियोगिकत्वविशिष्टाभावत्वस्य भावभेदात्म-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

कतया तन्निष्ठभावभेदत्वरूपसाध्याभावस्वरूपानुयोगितानिरूपितत्वस्यैव सत्त्वेन च व्यभिचारिण्यतिव्याप्तेः।

वस्तुतोऽनुयोगित्वस्य तत्तत्प्रतियोगिकत्वविशिष्टाभावत्वरूपतया विशिष्टस्य निरूपकत्वे विशेष्यस्यापि तत्त्वेन प्रतियोगितामात्रे स्वनिष्ठानुयोगितानिरूपितत्वस्यैव सत्त्वेनासम्भव एव, तद्वारणप्रयासश्च दुरूह एव।

तथापि प्रतियोगिवैयधिकरण्यापेक्षया गौरवमेव स्यादिति, निरवच्छिन्नस्वरूपेण कपिसंयोगाभावसाध्यकवृक्षत्वे साध्याभावस्य कपिसंयोगात्मनो निरवच्छिन्नहेत्वधिकरणवृत्तित्वविरहादतिव्याप्तिस्तद्वारणाय साध्यवन्निरूपितत्व,-सावच्छिन्नत्वोभयाभावनिवेशनञ्च न युज्यते, सर्वावयवावच्छेदेन तादृशाभावप्रतीतेरनुभवसिद्धत्वेन कपिसंयोगरूपताया एवासत्त्वादिति।[१८१]

*प्रकाशः* – 'अग्रे तस्य समाधास्यमानत्वादि'ति तत्त्वालोकपरिगृहीतप्रतीकबोध्यो 'न चाऽभावे हेतुसामानाधिकरण्यस्यैव हेत्वधिकरणे निरवच्छिन्नवृत्तित्वरूपस्य निवेशादुक्ताव्याप्तिव्युदाससम्भवात्प्रतियोगिवैयधिकरण्यनिवेशो मूलकृतोऽनुचित इति वाच्यम्, अग्रे तस्य समाधास्यमानत्वादि'ति[१] पूर्वापरजागदीशीग्रन्थः। तत्र 'अग्रे तस्य समाधास्यमानत्वादि'त्यनन्तरं शेषमवशिष्टं 'लक्षणान्तरतये'ति तत्त्वालोककृता स्पष्टीकृतम्।

अभावे स्वतन्त्रतया प्रतियोगिवैयधिकरण्यविशेषणे सति 'संयोगी सत्त्वादि'त्यादावतिव्याप्तिः स्यात्, प्रतियोगिसामानाधिकरण्यवतः संयोगाभावस्य (साध्याभावस्य) प्रतियोगिवैयधिकरण्यासम्भवात् 'संयोगाभावे गुणे न संयोगसामानाधिकरण्यमि'ति प्रतीतेः संयोगाभावनिष्ठसंयोगसामानाधिकरण्यस्य गुणे अवच्छेदकत्वाभावावगाहित्वात् संयोगानधिकरणीभूतगुणवृत्तित्वस्य वा संयोगाभावेऽवगाहित्वादित्यर्थकेन 'सामानाधिकरण्यवतो न तदभाववत्त्वं प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात्प्रतियोगिवैयधिकरण्येत्यादिविशेषणं वक्ष्यति (मूलकारो गङ्गेशः), तच्च हेत्वधिकरणे बोध्यम्, प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः' इत्यग्रिमेण दीधितिग्रन्थेन[२] तस्य = उक्तस्य अभावे हेतुसामानाधिकरण्यस्य हेत्वधिकरणे निरवच्छिन्नवृत्तित्वरूपनिवेशघटितलक्षणस्य लक्षणान्तरताऽग्रे स्पष्टीभविता। अर्थान्निरवच्छिन्नहेत्वधिकरणवृत्तित्वविशेषितात्यन्ताभावघटितप्रतियोगिवैय-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

२. तत्रैव, दीधितिमूलम्, पृ. २५

धिकरण्यविशेषणाघटितलक्षणान्तरे दर्शितकपिसंयोगसाध्यकैतद्वृक्षत्वसद्धेतुकस्थलेऽ-व्याप्तिर्नैव भवतीत्यर्थः।

इदञ्च = निरवच्छिन्नहेत्वधिकरणवृत्तित्वघटितप्रतियोगिवैयधिकरण्याघटित-लक्षणान्तरेऽव्याप्त्यभावकथनञ्च, अभावाभावस्यातिरिक्ततामभ्युपेत्य। अभावा-भावस्यानतिरिक्तत्वे = प्रतियोगिस्वरूपत्वे, तु उक्तलक्षणान्तरेऽपि विशिष्टसत्ता-भावसाध्यकगुणत्वसद्धेतुकस्थले विशिष्टसत्तात्मकसाध्याभावस्य सत्तानतिरिक्ततया गुणात्मकहेत्वधिकरणे निरवच्छिन्नवृत्तिकतया तदादायाव्याप्तिः स्यात्, तथा घटत्वा-भावसाध्यकघटपटान्यतरत्वे व्यभिचारिणि हेतौ घटत्वात्मकसाध्याभावस्य स्वरूपेण = स्वरूपसम्बन्धेन हेत्वधिकरणवृत्तित्वासम्भवादतिव्याप्त्यभावाय उक्तलक्षणान्तरे स्वरूपसम्बन्धेन हेत्वधिकरणवृत्तित्वविवक्षायाः सम्भवाभावात् स्व(लक्षणघटका-भाव)प्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेनैव अभावे निरवच्छिन्नहेत्वधिकरण-वृत्तित्वविवक्षाया आवश्यकत्वे प्रतियोगिवैयधिकरण्यघटितलक्षणापेक्षया गौरवञ्च स्यात्। अभावाभावस्यातिरिक्तत्वे तु पूर्वत्र विशिष्टसत्ताभावाभावस्य विशिष्ट-सत्तात्मकत्वाभावात्तत्र घटत्वाभावाभावस्य घटत्वात्मकत्वविरहान्नोक्तदोषौ स्याताम्।

अत्र 'इदञ्चाभावाभावस्यातिरिक्ततामभ्युपेत्ये'ति यदुक्तमुपपादितञ्च तत्त्वालोक-कृता तत्र 'यद्यपी'त्यादिनाऽभावाभावस्यानतिरिक्तत्वेऽपि दोषाभावोपाय उपपाद्यते 'दुरुह एवे'त्यन्तभागेन। 'तथापि प्रतियोगिवैयधिकरण्यापेक्षया गौरवमेव स्यादि'त्या-दिना पश्चात्तत्समाधानं विधास्यते।

अभावाभावस्यानतिरिक्तत्वे दर्शितलक्षणान्तरे दोषाभावोपायश्च विशिष्ट-सत्ताभावसाध्यकगुणत्वसद्धेतुकस्थले विशिष्टसत्ताभावाभावस्य विशिष्टसत्तात्मकता-मनङ्गीकृत्य द्रव्यत्वरूपताङ्गीकारस्तदात्मकस्य साध्याभावस्य गुणात्मकहेत्वधिकरण-वृत्तित्वविरहेणाव्याप्त्यसम्भवात्, उक्तरीत्या विशिष्टसत्ताभावसाध्यकगुणत्वसद्धेतुक-स्थलेऽव्याप्त्यभावेऽपि पूर्वक्षणवृत्तित्वविशिष्टधूमाभावसाध्यकवह्निसद्धेतुकस्थले अभावाभावस्यानतिरिक्तत्वे पूर्वक्षणवृत्तित्वविशिष्टधूमाभावाभावरूपसाध्याभावस्य पूर्वक्षणवृत्तित्वविशिष्टधूमात्मकप्रतियोगिरूपत्वात्तस्य धूमानतिरिक्तत्वाद्धूमस्य वह्न्या-त्मकहेत्वधिकरणवृत्तित्वात्तदादायाव्याप्तिः स्यात् तथाऽभावाभावस्यानतिरिक्तत्वे उक्तलक्षणान्तरे गगनाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावः स्वरूपसम्बन्धेन तत्साध्यकात्मत्वसद्धेतुकस्थलेऽप्यव्याप्तिः स्यात्, तत्र साध्याभावस्य गौरवदोषात् प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वरूपजन्यत्वस्वरूपत्वासम्भवाद् गगनाभावरूपप्रतियोगिस्वरूपत्वात्तस्यात्मात्मकहेत्वधिकरणवृत्तित्वात्तदादायाव्याप्तिः स्यात्।

तयोरव्याप्त्योर्वारणं, हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतापर्य्याप्त्यधिकरणधर्मपर्य्याप्ता या अवच्छेदकता तादृशावच्छेदकताका(तादृशावच्छेदकतावद्धर्मावच्छिन्ना)या निरूपकता तादृशनिरूपकतानिरूपिता या निरूप्यता तादृशनिरूप्यतावती या प्रतियोगिता तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकीभूतधर्मे विवक्षया, स्यात्। अथवा हेतुमति यत्प्रतियोगिताकाभावत्वावच्छिन्नाधिकरणत्वं, साध्यतावच्छेदकधर्मे तत्प्रतियोगितानवच्छेदकत्वविवक्षया तयोरव्याप्त्योर्वारणं स्यात्।

पूर्वत्र पूर्वक्षणवृत्तित्वविशिष्टधूमाभावसाध्यकवह्निसद्धेतुकस्थले धूमस्वरूपसाध्याभावीयप्रतियोगितायां विवक्षितप्रतियोगितान्तर्गतत्वविरहात्तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेऽपि विवक्षितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकेऽक्षतत्वान्नाव्याप्तिः, यतो हि धूमत्वन्न हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतापर्य्याप्त्यधिकरणम्, अयोगोलकात्मकवह्न्यधिकरणे धूमस्य वृत्तित्वविरहात्, किन्तु पूर्वक्षणवृत्तित्वविशिष्टधूमाभावत्वमेव हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतापर्य्याप्त्यधिकरणम्, तत्पर्य्याप्तावच्छेदकताकनिरूपकतानिरूपितनिरूप्यतावती प्रतियोगिता पूर्वक्षणवृत्तित्वविशिष्टधूमनिष्ठैव प्रतियोगिता, न तु पूर्वक्षणवृत्तित्वविशिष्टधूमाभावात्मकसाध्यनिष्ठा प्रतियोगिता, अतस्तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके न क्षतिर्दर्शितेति प्रथमे विवक्षाप्रकारे।

द्वितीयेऽपि हेतुमति यत्प्रतियोगिताकाभावत्वावच्छिन्नाधिकरणत्वं साध्यतावच्छेदके तत्प्रतियोगितानवच्छेदकत्वघटिते प्रकारे हेतुमत्ययोगोलके साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावत्वावच्छिन्नाधिकरणत्वविरहात्पूर्वक्षणवृत्तित्वविशिष्टधूमत्वावच्छिन्नतादृशधूमनिष्ठप्रतियोगिताकाभावत्वावच्छिन्नाधिकरणत्वस्यायोगोलके सत्त्वेऽपि तादृशप्रतियोगितावच्छेदकत्वस्य तादृशधूमत्व एव सत्त्वेन साध्यतावच्छेदके तदनवच्छेदकत्वसत्त्वेन नाऽव्याप्तिः।

एवमेवोक्तविवक्षाप्रकारद्वये गगनाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावसाध्यकात्मत्वसद्धेतुस्थलेऽपि नाऽव्याप्तिः स्यात्, यतो हि साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठा प्रतियोगिता न विवक्षितप्रतियोगितान्तर्गता, गगनाभावत्वावच्छिन्नगगनाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्यात्मात्मकहेत्वधिकरणनिरूपितवृत्तितावच्छेदकतापर्य्याप्त्यधिकरणधर्मत्वविरहात्। गगनाभावनिष्ठकालिकसम्बन्धावच्छिन्नगगनाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वस्यात्मात्मकहेत्वधिकरणनिरूपितवृत्तितावच्छेदकतापर्य्याप्त्यधिकरणधर्मत्वेऽपि तादृशप्रतियोगितावच्छेदकत्वस्य गगनाभावत्व

एव सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन नाऽव्याप्तिः।

एवं द्वितीयेऽपि विवक्षाप्रकारे साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगिताया 'यत्प्रतियोगिता'पदेन परिग्रहासम्भवान्नाव्याप्तिस्तत्प्रतियोगिताकाभावत्वावच्छिन्नाधिकरणत्वस्य हेतुमत्यात्मन्यभावात्।

अनन्तरं प्रक्रान्तप्रसङ्गे 'यत्तु'-इत्यादिना मतान्तरमुपपाद्य 'तन्ने'त्यादिना निराकरिष्यते तत्त्वालोककृता। तन्मतान्तरमित्थमस्ति यद्—

यद्यपि उक्ताव्याप्तिद्वयस्य वारणं हेत्वधिकरणनिरूपितवृत्तितावच्छेदकरूपा या अनुयोगिता तादृशानुयोगितानिरूपिता या प्रतियोगिता, तदनवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षया कर्तुं शक्यते, वह्निमान् धूमादित्यत्र प्रसिद्धस्थले घटाद्यभावत्वस्य हेत्वधिकरणपर्वतादिनिष्ठवृत्तितावच्छेदकत्वेन तद्रूपानुयोगितानिरूपितघटादिनिष्ठप्रतियोगितानवच्छेदकत्वस्य वह्नित्वे साध्यतावच्छेदके सत्त्वाल्लक्षणसङ्गतिः स्यात्, किन्तु तथाविवक्षायां धूमाभावत्वाभावसाध्यकवह्न्यादिसद्धेतावव्याप्तिः स्यात्, तत्र तृतीयाभावस्य प्रथमाभावरूपत्वेन साध्याभावात्मकधूमाभावत्वस्य हेत्वधिकरणीभूतायोगोलकनिरूपितवृत्तितावच्छेदकत्वेन तद्रूपानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वस्यैव धूमाभावत्वाभावत्वरूपे साध्यतावच्छेदके सत्त्वात्।

एवं पूर्वापादिताव्याप्तिद्वयवारणाय स्व(हेत्वधिकरणनिरूपितवृत्तितावच्छेदकरूपानुयोगिता)निरूपितत्व,-स्वाश्रय(तादृशानुयोगिताश्रय)निरूपितत्वोभयसम्बन्धेन तादृशानुयोगिताविशिष्टप्रतियोगितानवच्छेदकत्वविवक्षाऽपि साध्यतावच्छेदके कर्तुमशक्यैव, तथाविवक्षायां पूर्वापादिताव्याप्तिद्वयस्य धूमाभावत्वाभावसाध्यकवह्निहेतुकस्थलीयाव्याप्तेश्च वारणसम्भवेऽपि धूमाभावत्व, - धूमाभावैतदुभयाभावसाध्यकवह्न्यादिसद्धेतावव्याप्तिः स्याद्, यतो हि तत्र दर्शितोभयाभावात्मकसाध्यनिष्ठा या प्रतियोगिता सा हेत्वधिकरणनिरूपितवृत्तितावच्छेदकधूमाभावत्वरूपानुयोगितानिरूपिता तथा तादृशानुयोगिताश्रयधूमाभावनिरूपिताऽपि, तदुभयप्रतियोगिकस्याभावस्य साध्यत्वात्, तादृशप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके धूमाभावत्व,-धूमाभावोभयाभावत्वरूपे सत्त्वादतस्तथाविवक्षापि कर्तुमशक्यैव, किन्तु स्वनिरूपितत्व,-स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन तादृशानुयोगिता(हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिता)विशिष्टप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षायां न कोऽपि दोषो भवेदिति।

धूमाभावत्वधूमाभावोभयाभावसाध्यकवह्निसद्धेतुकस्थले साध्यतावच्छेदकावच्छिन्नप्रतियोगितायां धूमाभावत्वरूपहेत्वधिकरणनिरूपितवृत्तितावच्छेदकरूपानुयोगितानिरूपितत्वसत्त्वेऽपि तादृशानुयोगितानिष्ठोभयत्वरूपानुयोगित्वानिरूपितत्वविरहेण परिग्रहाभावेन नाव्याप्तिसम्भवः, तत्रोभयत्वरूपस्व(धूमाभावत्वरूपहेत्वधिकरणनिरूपितवृत्तितावच्छेदकरूपानुयोगिता)निष्ठानुयोगित्वनिरूपितत्वस्य सत्त्वात्।

एवं धूमाभावत्वाभावसाध्यकवह्निहेतुकस्थले तृतीयाभावस्य प्रथमाभावस्वरूपत्वेन धूमाभावत्वस्वरूपसाध्याभावीयसाध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगितायां हेत्वधिकरणीभूतायोगोलकनिरूपितवृत्तितावच्छेदकधूमाभावत्वरूपानुयोगितानिरूपितत्वसत्त्वेऽपि तादृशानुयोगितानिष्ठसाध्याभावरूपतृतीयाभावत्वरूपानुयोगित्वानिरूपितत्वविरहेण परिग्रहाभावान्नाव्याप्तिसम्भवः, तत्र तृतीयाभावत्वरूपतादृशानुयोगितानिष्ठानुयोगित्वनिरूपितत्वस्य सत्त्वात्।

एवमेव पूर्वक्षणवृत्तित्वविशिष्टधूमाभावसाध्यकवह्निसद्धेतुस्थले तथा गगनाभावस्य कालिकेन योऽभावस्तत्साध्यकात्मत्वसद्धेतुकस्थले च नाऽव्याप्तिसम्भवः, तत्र साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकरूपानुयोगिताया दर्शितोभयसम्बन्धेन विशिष्टत्वविरहात्, उत्तरत्र गगनाभावत्वस्यात्मात्मकहेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वेन तद्रूपानुयोगितानिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगितायां सत्त्वेऽपि तादृशानुयोगितानिष्ठतृतीयाभावात्मकसाध्याभावत्वरूपानुयोगित्वानिरूपितत्वविरहात्तत्र तादृशानुयोगितानिष्ठानुयोगित्वनिरूपितत्वस्य सत्त्वात्।

पूर्वत्र पूर्वक्षणवृत्तित्वविशिष्टधूमाभावसाध्यकवह्निसद्धेतुकस्थलेऽपि साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टत्वविरहान्नाव्याप्तिः स्यात्, साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकधूमत्वरूपानुयोगितानिरूपितत्वस्य सत्त्वेऽपि तादृशानुयोगितानिष्ठपूर्वक्षणवृत्तित्वविशिष्टधूमाभावाभावत्वरूपसाध्याभावत्वस्वरूपानुयोगित्वानिरूपितत्वविरहात्, तत्र तादृशानुयोगितानिष्ठानुयोगितानिरूपितत्वस्य सत्त्वादिति 'यत्तु'मतात्मकं मतान्तरम्।

तदिदं 'यत्तु'मतं 'तन्न, समवायेन प्रमेयाभावसाध्यकसत्त्वे व्यभिचारिण्यतिव्याप्तेः, साध्याभावप्रतियोगितायां स्वनिष्ठानुयोगितात्मकसाध्याभावनिरूपितत्वस्यैव सत्त्वेन प्रतियोगितान्तरस्यैव लक्षणघटकत्वादि'त्युपन्यासेन निराक्रियते —

समवायसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकः सत्तात्मको हेतुर्व्यभिचारी, सत्ताधिकरणे द्रव्यादित्रये समवायेन प्रमेयस्य सत्त्वेन तदभावरूपसाध्यस्य तत्रासत्त्वात्, तत्र साध्याभावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताया विवक्षितप्रतियोगितान्तर्गतत्वविरहेण साध्यतावच्छेदके विवक्षितप्रतियोगितानवच्छेदकत्वसत्त्वेनातिव्याप्तिः स्यात्, तत्र साध्यतावच्छेदकावच्छिन्नसाध्याभावीयप्रतियोगिताया विवक्षितप्रतियोगितान्तर्गतत्वविरहश्च — तत्र द्रव्यादित्रिकात्मकहेत्वधिकरणनिरूपितवृत्तितावच्छेदकसमवायसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वरूपानुयोगिताया वैशिष्ट्यनियामकतयोक्तसम्बन्धद्वयान्तर्गतस्वनिरूपितत्वरूपप्रथमसम्बन्धस्य सत्त्वेऽपि स्वनिष्ठानुयोगित्वानिरूपितत्वरूपद्वितीयसम्बन्धस्य विरहात्, तत्र द्वितीयसम्बन्धविरहश्च — हेत्वधिकरणनिरूपितवृत्तितावच्छेदकदर्शितसाध्याभावत्वरूपानुयोगितानिष्ठानुयोगितात्मकसाध्याभावनिरूपित्वस्य सत्त्वात्, स्वनिष्ठानुयोगित्वानिरूपितत्वासम्भवात्, निरुक्तसाध्याभावः प्रमेयाभावाभावः प्रमेयात्मकोऽनुयोगिताविशेषस्तस्य प्रमेयस्य निरुक्तसाध्याभावत्वरूपत्वहेत्वधिकरणवृत्तितावच्छेदकानुयोगितात्मकस्वनिष्ठत्वात्तदात्मकसाध्याभावनिरूपितत्वस्यैव तत्र सत्त्वेन तदनिरूपितत्वविरहात्।

उपपादित'यत्तु'मते समवायेन प्रमेयाभावसाध्यकसत्त्वात्मव्यभिचारिस्थलातिव्याप्त्यतिरिक्ताऽप्यतिव्याप्तिर्भवति भावभेदत्वाभावसाध्यकभावभेदभावसंसर्गाभावान्यतरत्वरूपव्यभिचारिहेतुकस्थले, हेतुमति भावभेदे भावभेदत्वस्यैव सत्त्वेन भावभेदत्वाभावात्मकस्य साध्यस्यासत्त्वादुक्तहेतोर्व्यभिचारिता, तत्र साध्यतावच्छेदकावच्छिन्नसाध्याभावप्रतियोगितायां हेत्वधिकरणभावभेदनिरूपितवृत्तितावच्छेदकभावभेदत्वाभावाभावत्वरूपानुयोगितायाः स्वनिरूपितत्वरूपवैशिष्ट्यनियामकसम्बन्धस्य सत्त्वेऽपि स्वनिष्ठानुयोगित्वानिरूपितत्वसम्बन्धस्य विरहात्परिग्रहाभावात्प्रतियोगित्वान्तरानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तिः स्यात्।

तत्र वैशिष्ट्यनियामकहेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगितानिष्ठानुयोगित्वानिरूपितत्वरूपद्वितीयसम्बन्धस्य विरहः, भावभेदत्वाभावरूपसाध्यप्रतियोगिकत्वविशिष्टाभावत्वस्य भावभेदात्मकतया भावभेदनिष्ठभावभेदत्वरूपसाध्याभावस्वरूपानुयोगित्वनिरूपितत्वस्यैव सत्त्वात्।

भावभेदो भावातिरिक्तपदार्थे तिष्ठेद्, भावे भावभेदत्वन्नैव तिष्ठेद्, भावभेदत्वस्य भावभेदमात्रवृत्तित्वाद्, अतो भावभेदत्वाभावरूपं साध्यं भावे तिष्ठेत्, तादृशसाध्यप्रतियोगिकत्वविशिष्टमभावत्वन्तु अभावे एव तिष्ठेद्, भावभेदोऽपि तत्रैव। तस्मात्

साध्यप्रतियोगिकत्वविशिष्टाभावत्वस्य भावभेदस्वरूपता युक्तैव। ततश्च हेत्वधिकरण-निरूपितवृत्तितावच्छेदकसाध्यप्रतियोगिकत्वविशिष्टाभावत्वस्वरूपभावभेदात्मका-नुयोगितात्मकस्वनिष्ठभावभेदत्वस्वरूपसाध्याभाव[1]स्वरूपानुयोगित्वनिरूपितत्वस्यैव सत्त्वात्।

अनन्तरमुच्यते यदुपपादित-'यत्तु'-मते वस्तुतोऽसम्भव एव प्रबलो दोषो यतो हि अनुयोगित्वस्य तत्तत्प्रतियोगिकत्वविशिष्टाभावत्वरूपता भवति, घटाभावनिष्ठा-नुयोगिताया घटप्रतियोगिकत्वविशिष्टाभावत्वरूपत्वाद् विशिष्टस्य निरूपकत्वे विशिष्टस्य विशेषणविशेष्योभयात्मकतया विशेष्यस्यापि तत्त्वं निरूपकत्वं भवत्येव। ततश्च प्रतियोगितामात्रे अखिलप्रतियोगित्वे स्व(हेत्वधिकरणनिरूपितवृत्तिता-वच्छेदकानुयोगिता)निष्ठानुयोगितानिरूपितत्वस्यैव सत्त्वेन विवक्षितस्य तादृशानुयोगि-तानिष्ठानुयोगित्वानिरूपितत्वस्य विरहादसम्भव एव स्यात्।

अत्रासम्भवोपपादके 'अनुयोगित्वस्य तत्तत्प्रतियोगिकत्वविशिष्टाभावत्वरूप-तया विशिष्टस्य निरूपकत्वे विशेष्यस्यापि तत्त्वेन प्रतियोगितामात्रे स्वनिष्ठानुयोगिता-निरूपितत्वस्यैव सत्त्वेने'ति तत्त्वालोकस्याशयावधारणाय विशेषध्यानमावश्यकम्—

तत्रानुयोगित्वस्य तत्तत्प्रतियोगिकत्वविशिष्टाभावत्वरूपता यद्दर्शिता तत्किमनु-योगित्वमात्रमभिप्रेत्य, आहोस्वित्प्रकृतमेव हेत्वधिकरणवृत्तितावच्छेदकमनुयोगित्व-विशेषमभिप्रेत्य, किम्वा प्रकृतं तादृशानुयोगित्वस्य प्रतियोगितायां वैशिष्ट्यनियामक-द्वितीयसम्बन्धघटकस्वनिष्ठानुयोगित्वमभिप्रेत्य।

तत्र प्रथमो न सम्भवार्हो भूतलादिनिष्ठघटादिप्रतियोगिकसंयोगाद्यनुयोगित्वस्य तत्तत्प्रतियोगिकत्वविशिष्टाभावत्वरूपत्वासम्भवात्। द्वितीयश्चेत्तत्रोदेत्ययं संशयो यत् तत्तत्प्रतियोगिकत्वविशिष्टो योऽभावस्तद्गताऽभावत्वरूपता तदर्थोऽभिप्रेत आहो-स्विदभावत्वे एव सामानाधिकरण्यसम्बन्धेन तत्तत्प्रतियोगिकत्वविशिष्टता अभिप्रेता, स्वरूपसम्बन्धेन तत्तत्प्रतियोगिकत्वविशिष्टताया अभावे एव सम्भवो नत्वभावत्वे। तृतीयश्चेद् हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिता वह्निमान् धूमादित्यादौ घटाद्यभावत्वादिरूपा तादृशानुयोगितानिष्ठाया घटाद्यभावत्वत्वप्रमेयत्ववाच्यत्वाद्य-नुयोगिताया अनुयोगिताया अनुयोगिस्वरूपत्वस्वीकारे एव तत्तत्प्रतियोगिकत्व-विशिष्टाभावत्वरूपता सम्भवेत्। तथासति घटाद्यभावत्वरूपानुयोगितानिष्ठायाः

---

१. भावभेदत्वाभावाभावस्य भावभेदत्वरूपप्रतियोगिस्वरूपतया भावभेदत्वस्य साध्याभावस्वरूपतेति यावत्।

स्वात्मकानुयोगिस्वरूपत्वेन घटाद्यभावप्रतियोगितायां घटाद्यभावत्वानुयोगितानिरूपितत्वस्य स्वात्मकस्वनिष्ठानुयोगित्वनिरूपितत्वस्य च स्वत एव सम्भवेन विशिष्टस्य निरूपकत्वे विशेष्यस्यापि तत्त्वेनेति कथनस्य नावश्यकता स्यात्।

व्यवहारे तु घटाद्यभावप्रतियोगित्वेषु घटाद्यभावत्वनिरूपितत्वस्य घटाद्यभावनिरूपितत्वस्य चानुभवः। तद्रीत्या असम्भवस्याभिप्रेतत्वे घटाद्यभावत्वरूपानुयोगितानिष्ठानुयोगित्वरूपता घटाद्यभावस्योपपादनीया। तत्र 'विशिष्टस्य निरूपकत्वे विशेष्यस्यापि तत्त्वेने'त्युपपादकग्रन्थोपपत्तिश्च करणीया। घटाद्यभावस्य हेत्वधिकरणनिरूपितवृत्तितावच्छेदकघटाद्यभावत्वरूपानुयोगितानिष्ठानुयोगितारूपता आधेयत्वसम्बन्धेन घटाद्यभावस्य घटाद्यभावत्वनिष्ठत्वसम्भवेनोपपादयितुं शक्या 'विशिष्टस्य निरूपकत्वे विशेष्यस्यापि तत्त्वेने'त्यस्योपपत्तिस्तु।

उपपादितासम्भवदोषवारणप्रयासो दुरूह एव, अतो 'यत्तु'-मतमसङ्गतमेव। तथापि अभावाभावस्यानतिरिक्तत्वेऽपि यत्तुतः पूर्वदर्शितविवक्षाद्वये सति प्रतियोगिवैयधिकरण्याघटितदर्शितलक्षणान्तरे दोषासम्भवेऽपि प्रतियोगिवैयधिकरण्यापेक्षया दर्शितविवक्षयोर्गौरवमेव दोषः स्यादिति।

निरवच्छिन्नहेत्वधिकरणवृत्तित्वघटितलक्षणान्तरे कपिसंयोगसाध्यकैतद्वृक्षत्वसद्धेतुकस्थले एतद्वृक्षात्मके हेत्वधिकरणे कपिसंयोगाभावात्मकसाध्याभावस्य निरवच्छिन्नवृत्तित्वविरहेणाव्याप्तिवारणेऽपि निरवच्छिन्नस्वरूपसम्बन्धेन कपिसंयोगाभावसाध्यकवृक्षत्वरूपव्यभिचारिहेतुकस्थले कपिसंयोगात्मकसाध्याभावस्य निरवच्छिन्नहेत्वधिकरणवृत्तित्वासम्भवात् साध्याभावपरिग्रहासम्भवादभावान्तरमादायातिव्याप्तिः स्यात्।

तदतिव्याप्तिवारणाय हेत्वधिकरणवृत्तित्वे साध्यवन्निरूपितत्व, - सावच्छिन्नत्वोभयाभावस्य निवेशो निरवच्छिन्नकपिसंयोगाभावसाध्यकवृक्षत्वे व्यभिचारिणि कपिसंयोगात्मकसाध्याभावनिष्ठहेत्वधिकरणवृत्तित्वे सावच्छिन्नत्वस्य सत्त्वेऽपि साध्यवन्निरूपितत्वविरहेण विवक्षितोभयाभावस्य सत्त्वादिति तु नोचितं स्यात्, निरवच्छिन्नस्वरूपेण कपिसंयोगाभावविरहिणि वृक्षे अर्थात् कपिसंयोगवति वृक्षे सर्वावयवावच्छेदेन तादृशाभाव = कपिसंयोगाभाव,-प्रतीतेरनुभवसिद्धतया तदभावरूपसाध्याभावस्य तत्राभावात् कपिसंयोगस्य तत्र सत्त्वात् साध्याभावस्य कपिसंयोगरूपत्वासम्भवादतिरिक्ताभावरूपताया एव तत्र साध्याभावेऽङ्गीकार्यतया तादृशसाध्याभावस्य कपिसंयोगभिन्नत्वस्य तत्र कपिसंयोगवृत्तिवृक्षे हेत्वधिकरणे निरवच्छिन्नवृत्तित्वसम्भवेन तत्रातिव्याप्तेरसम्भवात्। तथा च निरवच्छिन्नहेत्वधिकरणवृत्तित्वघटितलक्षणान्तरे

कपिसंयोगसाध्यकैतद्वृक्षत्वसद्धेतावव्याप्तिर्न स्यादित्युक्तखण्डस्य प्रकाशः।[१८१]

तत्त्वालोकः– ''गगनादिसंयोगस्ये''ति।[१] यत्र च द्रव्ये यदवयवावच्छेदेन च न संयोगान्तरस्य सम्भवस्तत्रापि तदवच्छेदेनापि च गगनादिसंयोगस्यैव सम्भव इति सूचयितुं 'संयोगस्ये'त्यत्र एकत्वमविवक्षितं तत्तदवच्छेदेन तत्तत्संयोगानां सत्त्वस्यैव विवक्षितत्वात्।

''वृक्षत्वावच्छेदेने''ति।[२] न च वृक्षत्वावच्छेदेन तत्तत्संयोगत्वावच्छिन्नस्यासत्त्वेन तदभावावच्छेदकत्वमस्तु वृक्षत्वस्य संयोगत्वावच्छिन्नस्य वृक्षत्वावच्छिन्न एव सत्त्वेन तदवच्छिन्नाभावावच्छेदकत्वं कथं वृक्षत्वे स्यादिति वाच्यम्, विशेषातिरिक्तस्य सामान्यस्याभावेन यत्किञ्चिदवच्छेदकत्वस्यैव सामान्यावच्छेदकत्वेन तदभाववतो वृक्षत्वस्य सामान्याभावावच्छेदकत्वं युज्यत एवेतीदानीमभिप्रायात्।[१८२]

*प्रकाशः*– प्रासङ्गिकसाम्प्रदायिकमतं दीधितिकृता ''यत्तु'-इदं संयोगि द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत् (असमानाधिकरणान्तम्)''[३] इत्यनेन दर्शितमुपपादितञ्च तत् 'संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभाववृत्ताविरोधादि'त्यादिना।[४] व्याख्यातञ्च तज्जगदीशतर्कालङ्कारेण 'ननु शाखामूलादिसर्वावयवावच्छेदेन सर्वत्र द्रव्ये गगनादिसंयोगस्य सत्त्वात् कुतस्तत्सामान्याभावस्य द्रव्ये सम्भवः' इत्यादि 'शाखाद्यवच्छेदेन तत्तत्संयोगसत्त्वेऽपि वृक्षत्वावच्छेदेन कस्याश्चिदपि संयोगव्यक्तेरसत्त्वात्तदवच्छेदेनैव संयोगसामान्याभावसम्भवोऽवच्छेदकभेदेनैकत्र भावाभावयोः समावेशादि''[५]त्यन्तेन।

तत्रावतरणपरकजागदीशीघटकं 'गगनादिसंयोगस्ये'ति परिगृह्य तत्त्वालोककृतोच्यते यद् 'गगनादिसंयोगस्ये'त्यत्र एकत्वमविवक्षितम्, तत्तदवच्छेदेन तत्तत्संयोगानां सत्त्वमेव विवक्षितं यतो हि यत्र द्रव्ये यदवयवावच्छेदेन संयोगान्तरस्य आत्मगगनादिव्यापकीभूतद्रव्यसंयोगेतरसंयोगस्य = कप्यादिसंयोगस्य, सम्भवो न भवति, तत्रापि द्रव्ये तदवयवावच्छेदेनापि गगनादिव्यापकीभूतद्रव्यस्य संयोगः

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.९

२. तत्रैव, जागदीशीमूलम्, पृ.९

३. तत्रैव, दीधितिमूलम्, पृ. ८

४. तत्रैव, दीधितिमूलम्, पृ. ८

५. तत्रैव, जागदीशीमूलम्, पृ. ९

सम्भवितुमर्ह एव, 'गगनादिसंयोगस्ये'त्यत्र 'आदि'पदोपादानादेव गगनादिसंयोगपद-प्रकृतिकैकवचनार्थैकत्वस्याविवक्षितत्वाभिव्यक्तेः, गगनादिव्यापकीभूतद्रव्यप्रति-योगिकसंयोगानुयोगिन एकत्वेऽपि प्रतियोगिनां गगनात्मादिविभुद्रव्याणां भिन्नत्वेन तत्र तादृशसंयोगानां नानात्वेनैकत्वविरहादित्याशयात्।

अनन्तरमुत्थितशङ्कासमाधानपरकग्रन्थेन दीधितिव्याख्याकृता जगदीशेन साम्प्रदायिकमतमनुसृत्य समाहितं यत्— तत्तदवयवावच्छेदेन तत्तत्संयोगानां वृक्षात्मकद्रव्ये सम्भवेऽपि वृक्षत्वावच्छेदेन कस्याश्चिदपि संयोगव्यक्तेर्वृक्षात्मकद्रव्ये सम्भवाभावेन वृक्षे वृक्षत्वावच्छेदेन संयोगसामान्याभावसत्त्वे बाधकाभावेन लक्षण-घटकाभावे प्रतियोग्यसमानाधिकरणत्वविशेषणविरहे उक्तसद्धेतुस्थले संयोग-सामान्याभावात्मकसाध्याभावमादायाव्याप्तिः स्यादिति(समाहितं दीधितिव्याख्यात्रा जगदीशेन)।

तद्ग्रन्थ(जागदीशी)घटकं 'वृक्षत्वावच्छेदेने'ति परिगृह्य तत्त्वालोककृता 'न चे'त्यादिनेदमाशङ्क्यते यद् वृक्षे वृक्षत्वावच्छेदेन तत्तत्संयोगत्वावच्छिन्नस्यार्थाद् विशेष-विशेषधर्मावच्छिन्नसमस्तसंयोगविशेषस्यासत्त्वेन तत्तत्संयोगविशेषाभावा-वच्छेदकत्वमेव वृक्षत्वेऽस्तु, संयोगत्वसामान्यधर्मावच्छिन्नस्य वृक्षत्वावच्छेदेन वृक्षे सत्त्वेन संयोगत्वरूपसामान्यधर्मावच्छिन्नाभावावच्छेदकत्वं वृक्षत्वे न स्यादिति।

अत्र समाधीयते यद्— विशेषातिरिक्तस्य सामान्यस्याभावेन यत्किञ्चिद-वच्छेदकत्वस्यैव सामान्यावच्छेदकत्वेन अर्थात्तत्तत्संयोगविशेषावच्छेदकतत्तदवयवा-नामेव विशेषातिरिक्तसामान्याभावेन संयोगसामान्यस्यावच्छेदकत्वेन तत्तत्संयोग-विशेषावच्छेदकत्वाभाववतो वृक्षत्वस्य संयोगसामान्याभावावच्छेदकत्वसम्भवादिति तदभिप्रायादिति प्रकृतखण्डस्य प्रकाशः।[१८२]

तत्त्वालोकः– ''कुतो नाध्यक्षमि''ति।[१] ननु चक्षुःसंयुक्तसमवेतरूपादि-विशेषणतया परिमाणरसादिषु अभावप्रत्यक्षस्यानुदयेन रूपपरिमाणादिचक्षुर्ग्रा-ह्यविशेष्यकसंयोगाद्यभावचाक्षुषे = चक्षुःसंयुक्तसमवेतरूपादिविशेषणत्वादीनां विशिष्यैव कारणत्वस्य वाच्यतया द्रव्ये संयोगसामान्याभावप्रत्यक्षस्यालीक-तया संयोगसामान्याभावप्रत्यक्षे, द्रव्यविशेषणतायाः कारणत्वाकल्पनात्कथ-मापत्तिरापादकाभावाद्?

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

यदि च लाघवेन प्रकारतासम्बन्धेन संयोगसामान्याभावचाक्षुषे चक्षुः-संयुक्तसमवेतविशेषणत्वस्य कारणत्वं, विशेष्यविधया रूपपरिमाणादेर्भाने तत्तल्लौकिकप्रत्यक्षप्रयोजकसामग्र्या अपेक्षिततत्वेन यत्र सन्निकर्षो नास्ति न तस्य विशेष्यत्वमुभयोस्सन्निकृष्टत्वे चोभयोरेवैकस्य सन्निकृष्टत्वे एकत्रैव विशेष्यत्वमित्युक्तापत्तेरभावात्, एवञ्च चक्षुस्संयुक्तशाखादिसमवेतवृक्ष-विशेषणत्वरूपसंयोगाभावप्रकारकत्वप्रयोजकसामग्र्या चक्षुःसंयोगस्य च द्रव्यभासकस्य सत्त्वेनापत्तिसम्भव इत्युच्यते।

तदपि न, उपनीतभानात्मकेऽधिकरणग्रहे परमाणुपरिमाणरूपाधिकर-णान्तर्भावेण रूपत्वाभावादौ सन्निकर्षे घटपरिमाणाद्यन्तर्भावेण महत्त्वादि-सम्बन्धे रूपत्वाभावप्रत्यक्षवारणाय चक्षुःसंयुक्ते योग्यत्वप्रवेशस्य कारणता-वच्छेदकशरीरे आवश्यकत्वे द्रव्यान्यनिष्ठविशेष्यतानिरूपितप्रकारत्वस्यैव त्रस-रेणुवृत्त्यभावप्रत्यक्षस्थलीयव्यभिचारवारणाय लाघवेनाभावविशेषविषयकत्व-मनन्तर्भाव्य कार्यतावच्छेदकसम्बन्धत्वस्य वाच्यत्वाद्, रूपत्वाभावस्य परि-माणविशेषणत्वरूपसन्निकर्षे चक्षुःसंयुक्तसमवेतरूपे सन्निकर्षरूपगुणाद्दोषविग-मदशायामपि प्रत्यक्षापत्तेस्तत्तद्विशेष्यकाभावप्रत्यक्षे च चक्षुःसंयुक्तसमवेततत्त-द्विशेषणत्वस्यैव सन्निकर्षतया प्रकृतेऽपि तदनुसारेणैव वर्त्तनीयत्वादिति नापत्ति-सम्भव इति चेद्।

न। संयोगाभावनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषप्रत्यक्ष-त्वावच्छिन्नम्प्रति संयोगाभावनिष्ठविशेषणत्वनिरूपकत्वे सति चक्षुःसंयुक्त-समवायस्य कारणत्वकल्पनात्, सामान्यतोऽभावविषयकत्वस्यासन्निकृष्टा-भावप्रत्यक्षापत्तिभयेन वक्तुमशक्यत्वात्, त्रसरेणौ संयोगसामान्याभावप्रत्यक्ष-स्यानुत्पन्नतया व्यभिचारप्रसक्तिविरहेण द्रव्यान्यत्वस्यानुपादेयत्वादापत्ति-सम्भवात्।

यद्वा द्रव्यनिष्ठविशेष्यतानिरूपिताभावीयप्रकारतासम्बन्धेन घटाद्यभाव-चाक्षुषोपपत्तये चाक्षुषत्वावच्छिन्नम्प्रत्येव लाघवेन चक्षुस्संयुक्तविशेषणतायाः कारणत्वस्य वाच्यतया संयोगाभाव उक्तसम्बन्धेन प्रत्यक्षापत्तेर्दुर्वारत्वादिति भावः। एतदभिप्रायेणैव च 'कथञ्चिदापत्तिसम्भवेऽपी'[१]त्युक्तं भट्टाचार्येण। [१८३]

---

१. गादाधरी (प्रथमो भागः), सिद्धान्तलक्षणप्रकरणम्, पृ. ३१९

*प्रकाशः* – द्रव्ये = वृक्षादौ, संयोगसामान्याभावाभ्युपगन्तारं साम्प्रदायिकम्प्रति 'तत्र चातीन्द्रियस्य संयोगस्य सत्त्वात् परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इत्यादि नाध्यक्षमि'ति[१] दीधितिग्रन्थावतरणरूपेण 'नन्वेवं वृक्षे संयोगसामान्याभावस्य कुतो नाध्यक्षमि'ति[२] जगदीशेन यद् व्याख्यातं तद्घटकं 'कुतो नाध्यक्षमि'ति परिगृह्य तत्त्वालोककृता 'ननु चक्षुःसंयुक्ते'त्यादिना व्याख्यायते।

तत्र प्रथममिदं शङ्क्यते यद् वृक्षे संयोगसामान्याभावस्य कुतो नाध्यक्षमिति यदाशङ्कितं तन्न युक्तम्, यतो हि चक्षुःसंयुक्तसमवेतवृत्त्यभावप्रत्यक्षम्प्रति चक्षुःसंयुक्तसमवेतविशेषणतासन्निकर्षस्य यदि सामान्यतया कारणता भवेत्तदैव चक्षुः-संयुक्तशाखासमवेतवृक्षवृत्तिसंयोगसामान्याभावप्रत्यक्षं चक्षुःसंयुक्तशाखासमवेतवृक्ष-विशेषणतासन्निकर्षेणापतेत्, किन्तु उक्तप्रकारकः सामान्यकार्य्यकारणभावोऽङ्गीकर्तुं नैव शक्यो यतो हि उक्तप्रकारककार्य्यकारणभावसत्त्वे चक्षुःसंयुक्तसमवेतरूपादिविशेषणतया सन्निकर्षेण चक्षुःसंयुक्तसमवेतपरिमाणरसादिगताभावप्रत्यक्षमनिष्टमापन्नं स्यादर्थाच्चक्षुः-संयुक्तसमवेतरूपविशेषणतया चक्षुःसंयुक्तसमवेतरूपविशेष्यकमेवाभावप्रत्यक्षं यदिष्टं तन्न स्यात्। चक्षुःसंयुक्तसमवेते स्वस्मिन् परिमाणे रसादौ वा चक्षुःसंयुक्तसमवेतस्वाति-रिक्तरूपादिविशेषणतासन्निकर्षेण प्रत्यक्षमापतिष्यति। अतो चक्षुःसंयुक्तसमवेतरूपादि-विशेषणतया चक्षुःसंयुक्तसमवेतपरिमाणरसादिषु अभावप्रत्यक्षापत्त्यभावाय विशि-ष्यैव कार्यकारणभावोऽभ्युपेयः, अर्थाच्चक्षुःसंयुक्तसमवेतरूपविशेषणतासन्निकर्षस्य चक्षुःसंयुक्तसमवेतरूपधर्मिकसंयोगाद्यभावप्रत्यक्षम्प्रत्येव कारणताङ्गीकार्य्या, एवं विशिष्टस्यैव कार्य्यकारणभावसत्त्वे द्रव्ये संयोगाभावप्रत्यक्षस्य बन्ध्यापुत्रवदलीकतया तादृशप्रत्यक्षम्प्रति चक्षुःसंयुक्तसमवेतविशेषणतायाः कारणत्वाकल्पनात् कथं स्यादा-पत्तिरर्थान्न स्यादापादकाभावाद्, आपादकसत्त्व एवापत्तेर्दातुमुचितत्वादिति पूर्वपक्षः।

अनन्तरं 'यदि चे'त्यादिना प्रकारान्तरेणापत्तिसम्भवः शङ्क्यते— लाघवेन कार्यकोटौ विशेष्यत्वमनन्तर्भाव्यैव प्रकारतासम्बन्धेन संयोगसामान्याभावचाक्षुषम्प्रति चक्षुःसंयुक्तसमवेतविशेषणतासन्निकर्षस्य कारणता अभ्युपेया, तादृश(प्रकारतासम्बन्धेन संयोगसामान्याभावचाक्षुष)प्रत्यक्षे प्रकारस्य = संयोगसामान्याभावस्य, चक्षुःसंयुक्त-समवेतविशेषणतासन्निकर्षतो भानेऽपि विशेष्यविधया चक्षुःसंयुक्तसमवेतरूपपरिमाणर-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

२. तत्रैव, जागदीशीमूलम्, पृ. ९

सादीनां भानं किम्प्रयुक्तं स्यादिति जिज्ञासायामुच्यते 'विशेष्यविधया रूपपरिमाणादेर्भाने तत्तल्लौकिकप्रत्यक्षप्रयोजकसामग्र्या अपेक्षितत्वेने'ति।

अर्थात्तत्र विशेष्यतया तस्यैव भानं स्याद् यस्येन्द्रियसन्निकृष्टत्वं भवेत्, यस्य तु इन्द्रियसन्निकृष्टत्वं न भवेत् तस्य तत्र विशेष्यविधया भानं न भवेद्, रूपपरिमाणयोरुभयोरिन्द्रियसन्निकृष्टत्वे उभयोरेव तयोस्तत्र विशे[ष्य]तया भानं स्यादेकस्यैवेन्द्रियसन्निकृष्टत्वे एकस्यैव विशेष्यविधया तत्र भानं स्यादेवं स्वीकारे उक्तापत्तिरर्थाच्चक्षुःसंयुक्तसमवेतरूपविशेषणतासन्निकर्षेण चक्षुःसंयुक्तसमवेतपरिमाणरसादिषु अभावप्रत्यक्षापत्तिः = संयोगसामान्याभावप्रत्यक्षापत्तिः, न स्यात्। चक्षुःसंयुक्तसमवेतत्वसन्निकर्षस्य रूपमात्रे सत्त्वे तस्यैव तत्र संयोगसामान्याभावप्रकारकप्रत्यक्षे विशेष्यविधया भानं रूपपरिमाणयोरुभयोरिन्द्रियसन्निकृष्टत्वे तयोरुभयोस्तत्र विशेष्यतया भानं भवेत्, किन्तु चक्षुःसंयुक्तसमवेतरूपविशेषणतया तादृशपरिमाणरसादिषु अभावप्रत्यक्षन्नापद्येत, लाघवमूलकस्यैवंविधस्य कार्यकारणभावस्य स्वीकारे चक्षुस्संयुक्तशाखादिसमवेतवृक्षविशेषणतायाः संयोगसामान्याभावप्रकारताप्रयोजिकायाः विशेष्यविधया वृक्षात्मकद्रव्यभासकस्य च चक्षुरिन्द्रियसंयोगस्य सत्त्वे संयोगसामान्याभावप्रकारकवृक्षविशेष्यकच।क्षुषप्रत्यक्षस्यापत्तिः सम्भवत्येवेत्युच्यते।

तदपि न, यतो हि चक्षुस्संयुक्तसमवेते रूपादौ संयोगसामान्याभावप्रत्यक्षस्थले तादृशाधिकरणस्य रूपादेर्ग्रहो लौकिकेनैव सन्निकर्षेण चक्षुस्संयुक्तसमवायेन, किन्तु यत्राधिकरणग्रहो न लौकिकसन्निकर्षेण, किन्तु अलौकिकेनैव ज्ञानलक्षणात्मकसन्निकर्षेण, तत्रोपनीतभानात्मकाधिकरणग्रहस्थले परमाणोः परिमाणं रूपादिकम्वा तदीयं पूर्वानुभूततया (प्रत्यक्षेतरानुमानादिप्रमाणप्रमितया) यत्र स्मर्यमाणं तत्रोपनीतभानात्मकेऽधिकरणग्रहे परमाणुपरिमाणात्मकं परमाणुरूपात्मकम्वा यदधिकरणं तदधिकरणान्तर्भावेण रूपत्वाभावादौ सन्निकर्षे, अर्थात् परमाणुपरिमाणगतरूपत्वाभावे चक्षुस्संयुक्तसमवेतविशेषणतया सन्निकर्षे, परमाणुरूपगतपरिमाणत्वाभावे चक्षुस्संयुक्तसमवेतविशेषणतासन्निकर्षे सति घट[परि]माणाद्यन्तर्भावेण स्वाश्रय(महत्त्वाश्रय)-समवेतविशेषणतासम्बन्धेन तत्रैव परमाणुपरिमाणादिगतरूपत्वाभावादौ महत्त्वसम्बन्धे च सति परमाणुपरिमाणादिगतरूपत्वाभावादेः प्राप्तप्रत्यक्षस्य वारणाय अभावस्य प्रकारतया भानप्रयोजकतयाऽङ्गीकृतसन्निकर्षघटकचक्षुस्संयुक्ते योग्यत्वनिवेशस्य कारणतावच्छेदकशरीरे आवश्यकतायां जातायां त्रसरेणुवृत्त्यभावप्रत्यक्षस्थलीयप्राप्तव्यभिचारवारणाय, अर्थात् पार्थिवत्रसरेणुगतरूपत्वाभावादेः प्रकारतया प्रत्यक्षं भवति तत्र योग्यत्वविशेषणविशेषितचक्षुस्संयुक्तत्वघटितचक्षुस्संयुक्तसमवेतविशेषणतात्मकसन्निकर्षरूपकारणाभावेऽपि तत्र तादृशाभावस्य प्रकारताया भानेनान्वय-

व्यभिचारः स्यात्तद्व्यभिचारवारणाय, द्रव्यान्यनिष्ठविशेष्यतानिरूपिताया एव प्रकारताया एव, न त्वविशेषितप्रकारताया, कार्यतासम्बन्धतया स्वीकार्य्यत्वात्, तथासति त्रसरेणुवृत्त्यभावप्रत्यक्षस्थलीयव्यभिचारवारणसम्भवात्, तत्स्थलीयप्रत्यक्षे द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतयैव त्रसरेणुगतरूपत्वाभावादीनां भानात्, यद्यपि त्रसरेणुवृत्त्यभावप्रत्यक्षस्थलीयस्य व्यभिचारस्य वारणं कार्य्यतावच्छेदसम्बन्धम-विशिष्यापि कार्य्यतावच्छेदककोटौ अभावविशेषमन्तर्भाव्यापि, अर्थात् त्रसरेणौ यादृशाभावस्य प्रत्यक्षं भवति तदतिरिक्ताभावमेव कार्य्यतावच्छेदककोटौ प्रवेश्यापि, भवितुं शक्नोति, किन्तु तथाप्रवेशे गौरवं स्यादतो द्रव्यान्यवृत्तिविशेष्यतानिरूपित-प्रकारताया एव तत्र कार्यतावच्छेदकसम्बन्धतया प्रवेश उचितः।

रूपत्वाभावस्य परिमाणविशेषणत्वरूपसन्निकर्षे सति, अर्थाच्चक्षुस्संयुक्तसमवेतं यत्परिमाणं तादृशपरिमाणविशेषणत्वसन्निकर्षे रूपत्वाभावेन सह विद्यमाने सति, यथा चक्षुस्संयुक्तपरिमाणविशेष्यकं रूपत्वाभावप्रकारकं प्रत्यक्षं भवति तथा चक्षुस्संयुक्त-समवेतपरिमाणविशेषणत्वसन्निकर्षेण चक्षुस्संयुक्तसमवेतरूपे रूपत्वाभावप्रत्यक्षं न भवति, यतो हि तत्तद्विशेष्यकाभावप्रत्यक्षे चक्षुस्संयुक्तसमवेततत्तद्विशेषणतैव सन्निकर्षः, न तु विशेष्यीभूतान्यविशेषणतासन्निकर्षत्वेनाभ्युपगतः, अन्यथा चक्षु-स्संयुक्तसमवेतरूपे सन्निकर्षात्मकगुणतो दोषविनाशदशायामपि चक्षुस्संयुक्तसमवेत-परिमाणविशेषणत्वसन्निकर्षतो रूपत्वाभावप्रत्यक्षापत्तिः स्यात्। प्रकृतेऽपि तथैव वर्तनीयतया चक्षुस्संयुक्तसमवेतरूपविशेषणतासन्निकर्षेण चक्षुस्संयुक्तसमवेतरूपे एव संयोगसामान्याभावप्रत्यक्षम्, न तु चक्षुस्संयुक्तसमवेतरूपविशेषणतासन्निकर्षेण चक्षु-स्संयुक्तशाखादिसमवेतवृक्षविशेष्यकसंयोगसामान्याभावप्रत्यक्षं, भवितुमर्हतीति।

द्रव्यान्यनिष्ठविशेष्यत्वनिरूपितप्रकारताया एव कार्य्य[ता]वच्छेदकसम्बन्धतया स्वीकाराच्च वृक्षात्मकद्रव्यवृत्तिविशेष्यतानिरूपितप्रकारताया वृक्षे संयोगसामान्या-भावाध्यक्षापत्तिसम्भवासम्भवादिति पूर्वपक्षस्थापनम्।

अत्र समाधीयते— 'इति चेन्ने'त्यग्रिमंतत्त्वालोकभागेन। संयोगाभाव-निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषप्रत्यक्षत्वावच्छिन्नम्प्रति संयोगाभाव-निष्ठप्रकारतानिरूपकत्वे सति चक्षुस्संयुक्तसमवायस्य कारणत्वकल्पनावच्चक्षु-स्संयुक्तशाखादिसमवेतवृक्षविशेष्यकसंयोगसामान्याभावप्रत्यक्षापत्तिसम्भवात्, तत्रत्य प्रत्यक्षे चक्षुस्संयुक्तसमवेतरूपादिविशेष्यकसंयोगसामान्याभावचाक्षुषप्रत्यक्ष इव संयोगाभावनिष्ठप्रकारतानिरूपितविशेष्यतया चाक्षुषप्रत्यक्षत्वरूपकार्यतावच्छेदकस्य संयोगाभावनिष्ठप्रकारतानिरूपकत्वे सति चक्षुस्संयुक्तसमवायस्य च कारणस्य चक्षु-

स्संयुक्तसमवेतरूप इव चक्षुस्संयुक्तशाखासमवेतवृक्षे सत्त्वात्, असन्निकृष्टाभावविषयकप्रत्यक्षापत्तिभयेन कार्य्यतावच्छेदककोटौ सामान्यतोऽभावविषयकत्वस्य प्रवेशयितुमशक्यत्वात्।

अर्थात्संयोगाभावनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन अभावविषयचाक्षुषप्रत्यक्षत्वावच्छिन्नम्प्रति संयोगाभावनिष्ठप्रकारतानिरूपकत्वे सति चक्षुस्संयुक्तसमवायस्य कारणता यदि स्यात्तदा असन्निकृष्टाभावप्रत्यक्षापत्तिः स्यात्, चक्षुस्संयुक्तसमवेते रूपादौ संयोगाभावप्रत्यक्षो यथा भवति तथा तादृशरूपादौ रूपत्वाभावादेरसन्निकृष्टस्यापि प्रत्यक्षमापद्येत, अतः सामान्यतोऽभावविषयकत्वस्य तत्र प्रवेशो वक्तुमशक्य इति त्रसरेणौ संयोगसामान्याभावप्रत्यक्षोत्पत्तिविरहेण तत्र व्यभिचारवारणाय संयोगाभावनिष्ठप्रकारतानिरूपितविशेष्यतायां कार्यतावच्छेदकसम्बन्धान्तर्गतायां द्रव्यान्यनिष्ठत्वविशेषणस्य प्रयोजनाभावाद् वृक्षात्मकद्रव्यनिष्ठसंयोगसामान्याभावप्रत्यक्षापत्तौ आपादकाभावस्य वक्तुमशक्यत्वेनापत्तेः सम्भवात्।

त्रसरेणौ संयोगसामान्याभावप्रत्यक्षोत्पत्तौ तत्र तत्प्रयोजकसंयोगाभावनिष्ठविशेषणत्वनिरूपकचक्षुस्संयुक्तसमवायात्मककारणस्य विरहादन्वयव्यभिचारः स्यात्तद् वारणाय कार्य्यतावच्छेदकसम्बन्धघटकविशेष्यतायां द्रव्यान्यनिष्ठत्वनिवेश आवश्यकः स्यात्।

अथवा द्रव्यनिष्ठविशेष्यतानिरूपिताभावीयप्रकारतासम्बन्धेन भूतलादिविशेष्यकघटाभावादिप्रकारकचाक्षुषोपपत्तये चाक्षुषत्वावच्छिन्नम्प्रत्येव लाघवाच्चक्षुस्संयुक्तविशेष[ण]तासन्निकर्षस्य कारणत्वकल्पनाद् भूतले घटाभावादेः प्रत्यक्षस्येव वृक्षे संयोगसामान्याभावे चक्षुस्संयुक्तविशेषणतायाः सत्त्वेन द्रव्यनिष्ठविशेष्यतानिरूपिताभावीयप्रकारतासम्बन्धेन प्रत्यक्षापत्तेर्दुर्वारत्वादेतदाशयेनैव च 'कथञ्चिदापत्तिसम्भवेऽपी'ति[१] गदाधरभट्टाचार्येणोक्तत्वादित्युक्तखण्डस्य प्रकाशः।[१८३]

तत्त्वालोकः— **ननु योग्यमात्रप्रतियोगिकत्वस्य कारणत्वपक्षेऽपि योग्यमात्रवृत्तिसंयोगसामान्याभावप्रत्यक्षापत्तिवारणाय 'परित'[२] इत्यादिग्रन्था-**

---

१. 'इदमापाततो द्रव्यरूपाधिकरणविषयकसंयोगाभावविषयकप्रत्यक्षस्य कदाचिदप्यनुदयेन तादृशप्रत्यक्षसामग्र्या एवाकल्पनेनापादकाभावादेवातिप्रसङ्गवारणसम्भवेन तादृशप्रतिबन्धकताकल्पनस्यायुक्तत्वात्। कथञ्चिदापत्तिसम्भवेऽपि लाघवात्तादात्म्यसम्बन्धेन द्रव्यत्वेनैव तादृशसम्बन्धेन संयोगाभावलौकिकप्रत्यक्षं प्रति प्रतिबन्धकत्वौचित्यादि'त्यादिस्तत्रत्यो ग्रन्थः। — गादाधरी (प्रथमो भागः), सिद्धान्तलक्षणप्रकरणम्, पृ. ३१९

२. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

वतारणम् यद्यपि सम्भवति, तथापि द्रव्ये संयोगसामान्याभावस्य प्राचीनैरेव स्थितिकालेऽपि स्वीकृततया तन्मते गुणे संयोगसामान्याभावस्य प्रत्यक्षत्वेन तदनुरोधेन योग्यमात्रप्रतियोगिकत्वस्य परित्याज्यतया संयोगसामान्याभाव-प्रत्यक्षस्यैवापत्त्या तादृशग्रन्थावतारणं कर्त्तुमुचितमित्याशयेनाह ''ननु प्रति-योगितावच्छेदकविशिष्टे''त्यादि[1]।

अथ गुरुत्वरूपोभयाभावस्य तेजसि कथन्न प्रत्यक्षत्वम्? प्रतियोगिता-वच्छेदकविशिष्टयत्किञ्चिद्रूपात्मकप्रतियोगिनो योग्यत्वात्, कथम्वा गुरुत्व-विशिष्टरूपाभावस्य न तथात्वमिति चेद्, न, प्रतियोगितावच्छेदकतापर्य्याप्त्य-धिकरणधर्मयोग्यत्वस्यैव हेतुतया विवक्षितत्वादिति भावः।

नन्वेतत्पक्षे योग्यानुपलब्धेः कारणत्वविरहेऽप्यनुपलब्धेः कारणत्वस्य स्वीकृततया गुणे प्रतियोग्युपलब्धिविरहात्तस्य प्रत्यक्षत्वेऽपि द्रव्ये प्रतियोग्यु-पलब्धिसद्भावान्न प्रत्यक्षतासम्भव इति कथं प्रतियोग्युपलब्धेर्दोषविधया प्रकृते प्रतिबन्धकतान्तरकल्पनमिति चेन्न, एकशाखावच्छेदेन कपिसंयोगोपलब्धावपि शाखान्तरावच्छेदेन कपिसंयोगाभावप्रत्यक्षदर्शनात्तदवच्छेदेनाभावप्रत्यक्षे तद-वच्छेदेन प्रतियोग्युपलम्भविरहस्यैव हेतुत्वस्य स्वीकरणीयतया वृक्षत्वावच्छेदेन संयोगसामान्याभावप्रत्यक्ष[2]कारणस्य वृक्षत्वावच्छेदेन संयोगोपलब्ध्यभावस्य सत्त्वाच्छाखामूलादिसर्वावयवावच्छेदेन प्रतियोग्युपलब्धेर्दोषविधयैव प्रति-बन्धकत्वस्य युक्तत्वादित्यभिप्रेत्याह ''प्रतियोगिग्रहात्मकदोषाद्वे''ति[3]।

अथान्धकारवायुपरमाण्वादौ घटाद्यभावचाक्षुषस्य जलादौ गन्धाभाव-चाक्षुषस्य च वारणाय अन्धकारे तेजोऽभावप्रत्यक्षस्य वायावुद्भूतरूपाभाव-प्रत्यक्षस्य परमाणौ महत्त्वाभावप्रत्यक्षस्य चोपपत्तये च तत्सत्त्वप्रसञ्जन-प्रसञ्जितप्रतियोगिकत्वलक्षणयोग्यत्वविशिष्टानुपलब्धेः कारणत्वस्य वाच्यतया कथं गुणे संयोगसामान्याभावस्य प्रत्यक्षत्वमत्र यदि संयोगः स्यात्तदोपलभ्येते-त्यापादनस्यासम्भवात्संयोगस्यातीन्द्रियस्य सत्त्वेऽपि तदुपलम्भकाभावादिति चेद्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

२. 'प्रत्यक्षे'ति नास्ति प्राचीनमुद्रितपुस्तके।

३. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

मैवम्। गुणे संयोगसत्त्वे योग्यसंयोगस्यापि सत्त्वावश्यकत्वेन कदाचिदपि कुत्रापि गुणे कस्याप्युपलब्धिस्स्यादित्येवं योग्यत्वस्य सम्पादनीयत्वात्।

यद्वालोकसम्बन्धस्य सर्वत्रैव तेजोऽभावान्यचाक्षुषे महत्त्वाभावान्यचाक्षुषमात्रे महत्त्वस्य रूपाभावान्यचाक्षुषमात्रे चोद्भूतरूपस्य विशिष्यैव हेतुत्वादुक्तदोषाणामसम्भवेन योग्यत्वस्यानुपलब्धिविशेषणत्वानावश्यकत्वादत एव प्रतियोगियोग्यत्वाद्यपेक्षापि घटत इति भावः।

एषा च कुसृष्टिकल्पना न भट्टाचार्यव्याख्यायाम्, तेन गुणे संयोगसामान्याभावस्य प्रत्यक्षतामभ्युपेत्य ग्रन्थावतारणस्याकृतत्वादिति बोध्यम्।[१८४]

*प्रकाशः*—साम्प्रदायिक(प्राचीन)मते द्रव्ये संयोगसामान्याभावस्स्वीकृतोऽस्ति, किन्तु तत्र तत्प्रत्यक्षन्न भवति, यतो हि तस्यैवाभावस्य प्रत्यक्षं भवति यो योग्यप्रतियोगिको भवति, द्रव्ये संयोगसामान्याभावस्यातीन्द्रियसंयोगप्रतियोगिकत्त्वेनायोग्यप्रतियोगिकत्वादिति 'तत्र चातीन्द्रियस्य संयोगस्य सत्त्वादि'[१]त्यनया दीधित्या तद्व्याख्यात्मकजागदीश्या च बोधितम्। तदनन्तरं 'परितः प्रतियोग्युपलब्धेर्दोषाद्वे'ति[२] दीधित्या द्रव्ये संयोगसामान्याभावस्याध्यक्षाभावेऽपरो हेतुरुक्तस्तत्र द्रव्ये संयोगसामान्याभावस्याध्यक्षाभावप्रयोजकतया प्रथमतो निर्दिष्टे अतीन्द्रियसंयोगप्रतियोगिकत्त्वेनापेक्षितयोग्यप्रतियोगिकत्वविरहेऽस्वारस्यं 'ननु प्रतियोगितावच्छेदकविशिष्टस्य (प्रतियोगितावच्छेदकवतः) यत्किञ्चित्प्रतियोगिन एव योग्यत्वमत्यन्ताभावप्रत्यक्षे तन्त्रम् (अपेक्षितम्), न तु योग्यमात्रप्रतियोगिकत्वम् (अशेषस्य प्रतियोगितावच्छेदकाश्रयस्य योग्यत्वम्), अन्यथा गुणेऽपि संयोगसामान्याभावस्य तादृशप्रत्यक्षन्न स्यादि'त्युपन्यस्य बोधितं जगदीशेन।[३]

तत्र तत्त्वालोककृद्भिः 'ननु योग्यमात्रप्रतियोगिकत्त्वस्य कारणत्वपक्षेऽपि' इत्यादिनेदं शङ्क्यते यदत्यन्ताभावप्रत्यक्षे अशेषस्य प्रतियोगितावच्छेदकाश्रयस्य योग्यताया अपेक्षापक्षेऽपि योग्यमात्रवृत्तिसंयोगसामान्याभावस्याध्यक्षं प्रसज्येत एव, तत्राशेषस्य प्रतियोगितावच्छेदकाश्रयस्य योग्यत्वसत्त्वात्, तत्र योग्यस्यैव संयोगस्य प्रतियोगितावच्छेदकाश्रयत्वात्, अतो यद्यपि 'परितः प्रतियोग्युपलब्धेर्दोषाद्वे'ति

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

२. तदेव, पृ. ८

३. तत्रैव, जागदीशीमूलम्, पृ. ९

ग्रन्थस्यावतारणम् (पूर्वनिर्दिष्टहेतौ = तत्रातीन्द्रियस्य संयोगस्य सत्त्वादित्यत्रास्वरस-बोधनं) योग्यमात्रवृत्तिसंयोगसामान्याभावस्य प्रत्यक्षापत्तिप्रदर्शनेन सम्भवति, तथापि योग्यमात्रवृत्तिसंयोगसामान्याभावस्य प्रत्यक्षापत्तिप्रदर्शनमकृत्वा संयोगसामान्याभाव-प्रत्यक्षस्यैवापत्त्या तादृश-'परितः प्रतियोग्युपलब्धेर्दोषाद्वे'ति ग्रन्थस्यावतारणं यत्कृतन्तत्रास्तीदमौचित्यं यदत्यन्ताभावप्रत्यक्षे योग्यमात्रप्रतियोगिकत्वस्य (अशेषस्य प्रतियोगितावच्छेदकाश्रयस्य योग्यत्वस्य) कारणत्वस्थितौ प्राचीनाभिमतं गुणे संयोग-सामान्याभावस्याध्यक्षन्न स्यात्तत्रापि अतीन्द्रियस्य संयोगस्य प्रतियोगितानिरूपकत्व-सम्बन्धेन सत्त्वादशेषस्य प्रतियोगितावच्छेदकाश्रयस्य योग्यत्वविरहात्।

प्राचीन(साम्प्रदायिक)मते द्रव्ये द्रव्योत्पत्तिसमये यथा संयोगसामान्याभावोऽ-भिमतस्तथैव द्रव्यस्थितिकालेऽपि तत्र संयोगसामान्याभावोऽभिमतः, किन्तु तदध्यक्षं तत्र कदापि तन्मतेऽपि नाभिमतम्, गुणे तु तन्मते संयोगसामान्याभावस्याध्यक्षमभिमत-मेवेति वस्तुस्थितिः। अतो गुणे संयोगसामान्याभावस्योपपत्त्यर्थमत्यन्ताभावस्याध्यक्षेऽ-शेषप्रतियोगिनो योग्यत्वापेक्षाया वक्तुमशक्यत्वेन द्रव्ये प्राप्तस्य संयोगसामान्याभावाध्य-क्षस्य वारणाय गुणे संयोगसामान्याभावाध्यक्षस्योपपत्तये च 'परितः प्रतियोग्यु-पलब्धेर्दोषाद्वे'ति ग्रन्थोऽवतारित इति।

अनन्तरम् 'अथे'त्यादिनेदं शङ्क्यते यदत्यन्ताभावप्रत्यक्षे प्रतियोगितावच्छेद-काश्रययत्किञ्चित्प्रतियोगिन एव योग्यत्वस्यापेक्षितत्वे प्रतियोगितावच्छेदकाश्रयाशेष-प्रतियोगियोग्यत्वस्यानपेक्षितत्वे तेजसि गुरुत्वरूपोभयाभावस्य प्रत्यक्षापत्तिः स्यात्, तत्प्रतियोगितावच्छेदकीभूतोभयत्वाश्रयस्य गुरुत्वस्यायोग्यत्वेऽपि तादृशोभयत्वाश्रयस्य रूपस्य योग्यत्वात् तेजसि गुरुत्वविशिष्टरूपाभावस्य प्रत्यक्षापत्तिश्च स्यादिति।

अत्रेदं समाहितं यदत्यन्ताभावप्रत्यक्षे प्रतियोगितावच्छेदकतापर्य्याप्त्याश्रयधर्म-योग्यतैवापेक्षिता, प्रतियोगितावच्छेदकविशिष्टयोग्यत्वापेक्षायाः पूर्वोक्तायास्तत्रैव तात्पर्यात्, तथासति द्रव्ये संयोगसामान्याभावप्रत्यक्षप्रसक्तिसम्भवात् तत्र प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणधर्मस्य योग्यत्वात्, तेजसि गुरुत्वरूपोभया-भावस्य गुरुत्वविशिष्टरूपाभावस्य वा प्रत्यक्षापत्त्यसम्भवाच्च तत्र प्रतियोगितावच्छेद-कतापर्याप्त्यधिकरणधर्मयोर्गुरुत्वत्वंरूपत्वयोरुभयोर्योग्यत्वविरहादिति।

पुनरत्र 'नन्वेतत्पक्षे' इत्यादिना शङ्क्यते यत्प्रतियोगितावच्छेदकतापर्याप्त्य-धिकरणधर्मयोग्यताया एवात्यन्ताभावप्रत्यक्षे अपेक्षापक्षे योग्यानुपलब्धेः कारणत्व-विरहेऽपि तादृशप्रत्यक्षेऽनुपलब्धेः कारणत्वस्य स्वीकृततया गुणे संयोगानुपलब्धिसत्त्वेन संयोगसामान्याभावप्रत्यक्षस्योपपत्तावपि द्रव्ये संयोगोपलब्धिसत्त्वेन तत्र संयोग-

सामान्याभावप्रत्यक्षाप्रसक्त्या द्रव्ये संयोगसामान्याभावप्रत्यक्षवारणाय 'परित' इत्यादिना द्रव्ये प्रतियोग्युपलब्धेर्दोषविधया प्रतिबन्धकत्वान्तरकल्पना नोचितेति।

अत्र समाधीयते — यत्तदवच्छेदेनात्यन्ताभावप्रत्यक्षम्प्रति तदवच्छेदेनैव प्रतियोग्युपलब्धिविरहो हेतुर्यतो हि एकशाखावच्छेदेन वृक्षे कपिसंयोगस्योपलब्धिसत्त्वेऽपि तदन्यशाखावच्छेदेन कपिसंयोगाभावप्रत्यक्षं भवति, एवंसति वृक्षत्वावच्छेदेन संयोगानुपलब्धिरूपकारणस्य सत्त्वाद् वृक्षत्वावच्छेदेन संयोगसामान्याभावप्रत्यक्षप्रसक्तिसम्भवात् 'परित' इत्यादिना शाखामूलादिसर्वावयवावच्छेदेन संयोगात्मकप्रतियोग्युपलब्धेर्दोषविधया प्रतिबन्धकत्वान्तरकल्पनायास्समुचितत्वादित्येवाभिप्रेत्य प्रतियोगिग्रहात्मकदोषाद्वा वृक्षेन संयोग इति नाध्यक्षमित्युक्तत्वादिति।

अनन्तरं पुनरिदं शङ्क्यते यत् तत्सत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वस्वरूप-[तत्सत्त्वप्रसञ्जनेन (घटाद्यभावप्रतियोगिनो घटादेस्सत्त्वप्रसञ्जनेन) प्रसञ्जितः = आपादित उपलब्धिरूपः प्रतियोगी यस्यास्तादृशत्वरूप]योग्यत्वविशिष्टैवानुपलब्धिरत्यन्ताभावप्रत्यक्षे कारणतयाऽवश्यमन्तव्या, अन्यथा अन्धकारे वायौ परमाण्वादौ च घटाद्य[भाव]चाक्षुषप्रत्यक्षापत्तिः जलादौ गन्धाभावचाक्षुषापत्तिश्च स्याताम्, अविशेषितानुपलब्धिरूपकारणस्य तत्र सत्त्वात्, दर्शितस्वरूपकयोग्यत्वविशेषिताया अनुपलबन्धेरत्यन्ताभावप्रत्यक्षहेतुत्वे अन्धकारे तेजोऽभावप्रत्यक्षस्य वायौ उद्भूतरूपाभावप्रत्यक्षस्य परमाणौ महत्त्वाभावप्रत्यक्षस्य चोपपत्तिरन्धकारवायुपरमाण्वादौ घटाद्यभावचाक्षुषस्य जलादौ गन्धाभावचाक्षुषस्य चानापत्तिश्च भवतः, एवंसति वृक्षादौ द्रव्ये संयोगसामान्याभावप्रत्यक्षप्रसक्तिसम्भवेऽपि गुणे संयोगसामान्याभावप्रत्यक्षमिष्टं यदस्ति तन्नोपपन्नं भवेत्, अत्र यदि संयोगः स्यात्तदोपलभ्येत इत्येवमापादनस्य तत्र कर्तुमशक्यत्वात्तत्रातीन्द्रियस्य संयोगस्य सत्त्वेऽपि तदुपलम्भकचक्षुस्संयुक्तसमवायविरहाद्गुणस्य चक्षुस्संयुक्तत्वाभावादिति शङ्का।

अत्र समाधीयते— गुणे संयोगसत्त्वे योग्यसंयोगस्यापि सत्त्वावश्यम्भावेन कदाचिदपि कुत्रापि गुणे कस्यापि पुरुषस्योपलब्धिस्स्यादित्येवं योग्यत्वेन सहिताया अनुपलब्धेस्तत्र सद्भावेन गुणे संयोगसामान्याभावप्रत्यक्षसम्भवाद् गुणे योग्यसंयोगस्य सत्त्वे संयुक्तसमवायसन्निकर्षस्यापि तत्र सम्भवात्।

अथवा तेजोऽभावान्यचाक्षुषप्रत्यक्षे सर्वत्रैव आलोकसंयोगस्य, महत्त्वाभावान्यचाक्षुषप्रत्यक्षे सर्वत्रैव महत्त्वस्य तथा रूपाभावान्यचाक्षुषे सर्वत्रैवोद्भूतरूपस्य विशिष्य विशिष्य एव हेतुतायाः स्वीकारेण अन्धकारवायुपरमाण्वादौ घटाद्यभावप्रत्यक्षापत्त्यादिदोषाणाम् आलोकसंयोगाभावेन अन्धकारे, वायौ उद्भूतरूपाभावेन,

परमाणौ महत्त्वाभावेन, घटाद्यभावप्रत्यक्षप्रसक्त्यसम्भवेन अत्यन्ताभावप्रत्यक्ष-कारणीभूतानुपलब्धौ योग्यत्वविशेषणस्योक्तदोषवारकतयानावश्यकता, अत एव= अनुपलब्धौ योग्यत्वविशेषणविरहादेव, अत्यन्ताभावप्रत्यक्षे प्रतियोगिनो योग्यताया अपेक्षापि संघटते इति।

गदाधरभट्टाचार्येण तु 'परित' इत्यादि ग्रन्थस्यावतार इत्थमुपपादितो यद् अत्यन्ताभावप्रत्यक्षे यावत्प्रतियोगियोग्यत्वापेक्षां स्वीकृत्य द्रव्ये वृक्षादौ यावत्प्रतियो-ग्यन्तर्गतातीन्द्रियसंयोगे योग्यत्वविरहेण संयोगसामान्याभावप्रत्यक्षं यदि वार्येत तदा गुणे संयोगसामान्याभावप्रत्यक्षं यदिष्टमस्ति तन्नोपपद्येत, तत्रापि संयोगसामान्या-भावप्रतियोग्यन्तर्गतातीन्द्रियसंयोगे योग्यत्वाभावादित्याशयेन 'परितः प्रतियोग्युपलब्धे-र्दोषाद्वे'त्युक्तं दीधितिकृता[1]।

तत्र भट्टाचार्यव्याख्यायामत्यन्ताभावप्रत्यक्षकारणीभूतानुपलब्धौ योग्यत्व-विशेषणावश्यकताऽनावश्यकतादि दर्शितकुसृष्टिकल्पना, अर्थाद्गुणे संयोगसत्त्वे योग्य-सन्निकर्षस्य सत्त्वावश्यकत्वेन कदाचिदपि कुत्रापि गुणे कस्यापि पुरुषस्य योग्यसंयोगो-पलब्धिः स्यादित्येवं योग्यानुपलब्धिकल्पनारूपकुसृष्टिकल्पना, नावश्यिका भवती-त्युक्तखण्डस्य प्रकाशः।[१८४]

**तत्त्वालोकः– ''प्रतियोगिग्रहोत्पत्ती''ति[2] यथाकथञ्चिद्वृक्षरूपाधिकरण-ज्ञान इत्यादिः। यद्यपि वृक्षे संयोगोपलब्धिदशायां गुणे संयोगाभावप्रत्यक्षस्यो-त्पन्नतया द्रव्यत्वावच्छिन्नविशेष्यकसंयोगसामान्याभावप्रकारकप्रत्यक्षस्याली-कत्वेन तत्तद्धर्म्मावच्छिन्नप्रत्यक्षे प्रतिबन्धकत्वस्य वक्तुमशक्यतया च लौकिक-सन्निकर्षप्रयोज्यविशेष्यतासम्बन्धेन विशेष्यत्वमात्रेण वा संयोगाभावप्रत्यक्षे लौकिकविशेष्यतासम्बन्धेन संयोगोपलब्धेः प्रतिबन्धकत्वं वाच्यम्, तथासति तादृशोपलब्धित्वस्येश्वरप्रत्यक्षसाधारणतया तस्य विशेष्यतासम्बन्धेन सर्वदैव सर्वत्रैव च द्रव्ये सत्त्वेन कथं प्रत्यक्षापत्तेर्दुर्वारतेति वक्तुं शक्यते, तथापि**

---

१. ''प्रतियोगितावच्छेदकयोग्यत्वस्य तन्त्रत्वे त्वाह 'परित' इति। यद्वा ननु संयोगसामान्याभावस्य वृक्षे सत्त्वे महत्त्वोद्भूतरूपवन्मात्रसमवेतसंयोगसामान्याभावोऽप्यावश्यकस्तद्व्यापकधर्मावच्छि-न्नाभावस्य तद्धर्मावच्छिन्नाभावनियतत्वादिति योग्यमात्रप्रतियोगिकोऽयमभावः कथं वृक्षे साक्षा-त्क्रियते इत्यत आह 'परित' इति। प्रतियोग्युपलब्धेर्विभिन्नावच्छेदेनाभावग्रहं प्रति विरोधिज्ञानमु-द्रया प्रतिबन्धकत्वं न सम्भवतीति तस्या दोषत्वकथनं दोषविधया प्रतिबन्धकत्वलाभाये''त्यादि। – गादाधरी (प्रथमो भागः), सिद्धान्तलक्षणप्रकरणम्, पृ. ३१८

२. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

लौकिकसन्निकर्षप्रयोज्यविशेष्यत्वातिरिक्तस्य विलक्षणजन्यप्रत्यक्षनित्यज्ञान-साधारणानुगतरूपविशेषावच्छिन्नविषयित्वनिरूपकत्वस्य मानाभावेन संसर्ग-त्वासम्भवादुक्तविशेष्यत्वस्य चेश्वरज्ञाननिरूपकत्वासम्भवान्नेश्वरज्ञानसंसर्ग-त्वसम्भव इति भवत्येवोक्तापत्तिः।

यद्वा— द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षे चक्षुः-संयुक्तविशेषणत्वरूपकारणबलादेव संयोगाभावे तादृशप्रत्यक्षस्यापादिततया तद्वारणाय तदन्तर्भावेणैव प्रतिबन्धकत्वं कल्पनीयम्, तथा ह्युक्तविशेष्यता-निरूपितप्रकारतासम्बन्धेन प्रत्यक्षे द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेद-कावच्छिन्नप्रतियोगिताकत्वसंसर्गेण प्रत्यक्षस्य प्रतिबन्धकत्वम्, तत्रैकस्य दोष-विशेषात्प्रतियोगिविशेषग्रहेऽन्यस्य तदभावप्रत्यक्षोपपत्तये तत्पुरुषीयत्वनिवेश-स्यावश्यकतया परमेश्वरप्रत्यक्षजन्यप्रत्यक्षदोषविशेषजन्यज्ञानानां साक्षात्कारि-त्वव्यञ्जकविषयितानिरूपितत्वघटितस्य स्वविषयसंयोगवत्त्वस्य वा संसर्गत्व-सम्भवेऽपि न परमात्मप्रत्यक्षादुक्तापत्तिवारणसम्भवः। लौकिकप्रत्यक्षवदेव च दोषविशेषजन्यस्याप्यनुभवानुरोधादभावबुद्धिविरोधित्वमास्थेयमेवेति।

भट्टाचार्यस्येश्वरप्रत्यक्षसाधारण्येन प्रतिबन्धकत्वकल्पना च ज्ञाना-करणकज्ञानत्वरूपं प्रत्यक्षत्वमभ्युपेत्य, प्रत्यक्षे च सर्वत्र दोषविशेषजन्ये चानुभवबलात्साक्षात्कारित्वव्यञ्जकविषयितां स्वीकृत्य, अत एव सत्प्रति-पक्षग्रन्थे दोषविशेषाद्यजन्यत्वस्योक्तविषयिताशून्यत्वरूपतामभिधायेश्वरप्रत्य-क्षस्य तत एवाप्रतिबध्यत्वमुपपादितम्, तदुक्तप्रतिबध्यप्रतिबन्धकभावे च तत्पुरुषीयत्वं नोपादेयम्, द्रव्ये च संयोगाभावस्य योग्यसंयोगाभावस्य च कदाचिदपि प्रत्यक्षत्वासम्भवाद्गुणे तस्य प्रत्यक्षत्वेऽपि दोषविशेषजन्यसंयोग-ज्ञानस्य तत्रानभ्युपगमादभ्युपगमेऽपि तत्पुरुषस्य तत्सत्त्वे दोषप्रतिबन्धकता-वच्छेदकस्य प्रमीयलौकिकविशेष्यत्वस्य स्वविषयसंयोगवत्त्वस्य वा सम्बन्धस्य तत्रासत्त्वेन दोषविधया प्रतिबन्धकत्वासम्भवेऽप्युपलब्धिरूपप्रतियोगिसत्त्वेन तदभावरूपकारणविरहादापत्तिविरहात्।

'कथञ्चिदापत्तिसम्भवेऽपी'त्यादितद्ग्रन्थ आपत्तिश्च विशेष्यनिष्ठप्रत्या-सत्त्या सन्निकर्ष[1]कार्य्यकारणभावाभिप्रायेणेति।[१८५]

---

१. 'सन्निकर्षेण' इत्यर्थकः।

*प्रकाशः* – वृक्षे संयोगसामान्याभावस्य सत्त्वेऽपि 'वृक्षे न संयोग' इत्येवं प्रत्यक्षाभावे संयोगरूपप्रतियोगिनो ज्ञानस्य प्रतिबन्धकता पूर्वमुक्ता, अर्थात् संयोगात्मकस्वप्रतियोगिज्ञानात्मकदोषवशाद् 'वृक्षे न संयोग' इत्येवं प्रत्यक्षात्मकं ज्ञानन्न भवतीति पूर्वमुक्तम्। तदनन्तरं संयोगरूपप्रतियोगिज्ञानाव्यवहितप्राक्काले प्रतियोगिग्रहात्मकदोषासत्त्वेन संयोगरूपप्रतियोगिग्रहोत्पत्तिवेलायां वृक्षे संयोगसामान्याभावप्रत्यक्षं भवितुं शक्नोतीति यदाशङ्कितन्तदङ्गतया 'प्रतियोगिग्रहोत्पत्ती'ति[1] प्रतीकं परिगृह्य 'यथाकथञ्चिद् वृक्षरूपाधिकरणज्ञाने इत्यादिरि'ति तत्त्वालोककृतोक्तम्।

संयोगात्मकस्वप्रतियोगिग्रहात्मकदोषविरहस्य प्रतियोगिग्रहाव्यवहितप्राक्काले सत्त्वेऽपि वृक्षात्मकस्य अधिकरणस्य ज्ञानं प्रतियोगिग्रहाव्यवहितप्राक्काले न भवेत्तदा 'तत्काले (प्रतियोगिग्रहोत्पत्तिकाले) वृक्षाधिकरणकसंयोगसामान्याभावप्रत्यक्षमधिकरणज्ञानरूपकारणविरहेणोत्पत्तुन्न शक्नुयाद्, वृक्षात्मकाधिकरणज्ञानं च तदा चक्षुस्संयोगात्मकलौकिकसन्निकर्षासत्त्वेन न स्यादि'त्याशङ्कासमाधानायोक्तं यच्चक्षुस्सन्निकर्षरूपकारणस्य तदाऽसत्त्वेऽपि ज्ञानलक्षणात्मकालौकिकसन्निकर्षेण वृक्षात्मकाधिकरणज्ञानन्तदा भवितुं शक्नोत्येवेत्याशयेन 'यथाकथञ्चिद् वृक्षात्मकाधिकरणज्ञाने इत्यादिरि'ति तत्त्वालोककृतोक्तम्।

अनन्तरं 'यद्यपी'त्यादिना 'कथं प्रत्यक्षापत्तेर्दुर्वारतेति वक्तुं शक्यते' इत्यन्तेन संयोगात्मकस्वप्रतिग्रहोत्पत्तिकाले आपादितस्य वृक्षे संयोगसामान्याभावप्रत्यक्षस्यानुपपन्नता शङ्क्यते। तत्रेदमुच्यते यद्वृक्षे संयोगोपलब्धिदशायां गुणे संयोगसामान्याभावप्रत्यक्षोत्पत्तेर्जायमानत्वेन द्रव्यत्वावच्छिन्नविशेष्यकसंयोगसामान्याभावप्रकारकप्रत्यक्षमेवाप्रसिद्धन्न तु संयोगसामान्याभावप्रत्यक्षसामान्यम्, अतो गुणे संयोगसामान्याभावप्रत्यक्षानुपपत्त्यभावाय सामान्यतया संयोगसामान्याभावप्रत्यक्षत्वावच्छिन्नम्प्रति प्रतिबन्धकत्वकल्पना नैव सम्भवति, अलीककार्यम्प्रति प्रतिबन्धकत्वकल्पना न भवति, अतो द्रव्यत्वावच्छिन्नविशेष्यकसंयोगसामान्याभावप्रकारकप्रत्यक्षम्प्रत्यपि प्रतिबन्धकत्वकल्पनापि कर्तुमशक्यैव, तत्तद्वृक्षत्वादिरूपतत्तद्धर्मावच्छिन्नविशेष्यकसंयोगसामान्याभावप्रकारकप्रत्यक्षस्य प्रसिद्धत्वेऽपि अननुगतानन्ततत्तद्धर्मावच्छिन्नविशेष्यकसंयोगसामान्याभावप्रत्यक्षे प्रतिबन्धकतापि वक्तुमशक्यैव, तस्मादापत्त्यनुपपत्त्यभावाय लौकिकसन्निकर्षप्रयोज्यविशेष्यतासम्बन्धेन विशेष्यत्वमात्रेणैव वा संयोगाभावप्रत्यक्षे लौकिकविशेष्यतासम्बन्धेन संयोगरूपस्वप्रतियोग्युपलब्धिः प्रति-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

बन्धिकेत्येव कल्पना युक्ता। गुणे लौकिकविशेष्यतासम्बन्धेन संयोगोपलब्धिरूपप्रतिबन्धकविरहेण तत्र विशेष्यतासम्बन्धेन संयोगसामान्याभावप्रत्यक्षस्य नानुपपत्तिः।

एवंसति संयोगाभावप्रत्यक्षंप्रतिबन्धकतावच्छेदकस्य संयोगोपलब्धित्वस्य ईश्वरप्रत्यक्षेऽपि सत्त्वेन प्रतिबन्धकतावच्छेदकधर्माक्रान्तेश्वरप्रत्यक्षस्य विशेष्यतासम्बन्धेन सर्वत्रैव वृक्षादौ द्रव्ये सर्वदैव सत्त्वेन वृक्षे संयोगरूपप्रतिग्रहोत्पत्तिदशायां संयोगसामान्याभावप्रत्यक्षस्यापत्तिस्तदव्यवहितप्राक्काले तत्पुरुषीयस्य प्रतियोगिग्रहस्य विरहेऽपि नैव भवितुं शक्नोतीति पूर्वपक्षोपपादकस्य 'यद्यपी'त्यादिग्रन्थस्याशयः।

'यद्यपी'त्यादिना पूर्वोपपादितपूर्वपक्षस्य समाधानं 'तथापी'त्यादिना 'भवत्येवोक्तापत्तिरि'त्यन्तेनोच्यते। अत्रेदमुच्यते यत्त्वया संयोगाभावप्रत्यक्षम्प्रति संयोगोपलब्धेर्या प्रतिबन्धकता आपादितपूर्वपक्षस्थापनाय दर्शिता तत्र प्रतिबन्धकतावच्छेदकः सम्बन्धो जन्यप्रत्यक्ष-नित्यज्ञान(ईश्वरप्रत्यक्ष)साधारणानुगतरूपविशेषावच्छिन्नविषयित्वनिरूपको लौकिकसन्निकर्षप्रयोज्यविशेष्यत्वातिरिक्तो भवितुन्नार्हति, तत्र मानविरहात्, लौकिकसन्निकर्षप्रयोज्यविशेष्यत्वस्य संसर्गत्वसम्भवेऽपि तस्येश्वरप्रत्यक्षनिष्ठविषयित्वनिरूपकत्वविरहेण तादृशेन सम्बन्धेनेश्वरीयसंयोगोपलब्धेः विशेष्यतासम्बन्धेन संयोगाभावप्रत्यक्षाधिकरणे वृक्षे वृत्तित्वासम्भवेन (ईश्वरीयप्रत्यक्षस्य लौकिकसन्निकर्षाप्रयोज्यत्वात्) प्रतिबन्धकत्वासम्भवात्प्रदत्तापत्तेर्दुर्वारत्वादित्येव लौकिकसन्निकर्षप्रयोज्यविशेष्यत्वस्य 'ईश्वरज्ञानसंसर्गत्वासम्भव इति भवत्येवोक्तापत्तिरि'त्यन्तस्याशयादिति।

'यद्यपी'त्यादि'कथं प्रत्यक्षापत्तेर्दुर्वारतेति वक्तुं शक्यते' इत्यन्तेन विहितपूर्वपक्षस्य 'तथापी'त्यादिनोक्तसमाधानातिरिक्तं समाधानं 'यद्वे'त्यादिना तत्त्वालोककृता दर्श्यते— यद् द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षम्प्रति चक्षुःसंयुक्तविशेषणत्वरूपसन्निकर्षस्य कारणत्वबलादेव वृक्षात्मकद्रव्यस्थितसंयोगाभावे द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षंस्यापादिततया तत्र आपादितप्रत्यक्षवारणाय तदन्तर्भाविणैव (द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धान्तर्भाविणैव) प्रतिबन्धकत्वं कल्पनीयम्, द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षम्प्रति प्रकारतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रत्यक्षस्य प्रतिबन्धकतोच्यते।

एवंसति द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकावच्छिन्न(संयोगत्वावच्छिन्न)प्रतियोगिताकत्वसम्बन्धेन संयोगोपलब्धेः (संयोगप्रत्यक्षस्य) वृक्षात्मकद्रव्यनिष्ठसंयोगाभावे संयोगात्मकस्वप्रतियोगिग्रहकाले सत्त्वान्न तत्काले संयोगसामान्याभावस्य प्रत्यक्षम्, तत्र = उक्तप्रतिबध्यप्रतिबन्धकभावे, एकस्य दोषविशेषाधीनसंयोग-

विशेषात्मकस्वप्रतियोगिविशेषग्रहकालेऽन्यपुरुषस्य तत्र संयोगसामान्याभावप्रत्यक्षोपपत्तये तत्पुरुषीयत्वस्य निवेशः प्रतिबध्यप्रतिबन्धककोटावावश्यकः, तत्र तत्पुरुषीयत्वस्य निवेशावश्यकत्वे सति परमेश्वरीयसंयोगप्रत्यक्षस्य संयोगात्मकस्वप्रतियोगिग्रहाव्यवहितप्राक्काले सत्त्वेऽपि तेन परमेश्वरातिरिक्तपुरुषस्यास्मदादेः प्रतिबन्धासम्भवात्प्रतियोगिग्रहोत्पत्तिकाले तत्काले वृक्षात्मकद्रव्यस्थितसंयोगसामान्याभावे द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षस्य दुर्वारता युक्तैवेति द्वितीयसमाधानस्याशयः।

एतदेव 'तत्पुरुषीयत्वनिवेशस्यावश्यकतया परमेश्वरप्रत्यक्षजन्यप्रत्यक्षदोषविशेषजन्यज्ञानानां साक्षात्कारित्वव्यञ्जकविषयितानिरूपितत्वघटितस्य (द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षम्प्रति प्रत्यक्षस्य प्रतिबन्धकत्वे प्रतिबन्धकतावच्छेदकसम्बन्धस्य) स्वविषय(प्रतिबन्धकीभूतप्रत्यक्षविषय)संयोगवत्त्वस्य वा संसर्गत्वसम्भवेऽपि न परमेश्वरप्रत्यक्षादुक्तापत्तिवारणसम्भव' इत्युपन्यस्य सूचितं तत्त्वालोककृद्भिः।

'यद्वो'क्तसमाधानतः पूर्वोक्तसमाधानपक्षे जन्यप्रत्यक्षनित्यज्ञानसाधारणानुगतरूपविशेषावच्छिन्नविषयितानिरूपकत्वे मानाभाव उक्तः, इदानीं 'यद्वा'समाधानपक्षे परमेश्वरप्रत्यक्षजन्यप्रत्यक्षदोषविशेषजन्यज्ञानसाधारणसाक्षात्कारित्वव्यञ्जकविषयिताविशेषनिरूपकत्वसम्भवेऽपि प्रतिबध्यप्रतिबन्धकभावे तत्पुरुषीयत्वनिवेशावश्यकत्ववशात्परमेश्वरप्रत्यक्षस्यास्मदादिप्रत्यक्षम्प्रति प्रतिबन्धकता न स्यादित्यावेदितम्, लौकिकप्रत्यक्षवदेव दोषविशेषजन्यस्यापि स्वप्रतियोगिग्रहस्याभावबुद्धिम्प्रति अनुभवानुरोधात्प्रतिबन्धकत्वमिति च स्पष्टीकृतम्।

'यद्वा'कल्पे द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन प्रत्यक्षम्प्रति प्रतिबन्धकीभूतप्रत्यक्षनिष्ठप्रतिबन्धकतावच्छेदकसम्बन्धतया 'परमेश्वरप्रत्यक्षजन्यप्रत्यक्षदोषविशेषजन्यज्ञानानां साक्षात्कारित्वव्यञ्जकविषयित्वनिरूपितत्वघटितस्य स्वविषयसंयोगवत्त्वस्य वा संसर्गत्वसम्भवेऽपी'ति यदुक्तम्, तत्र स्वविषयसंयोगवत्त्वरूपसम्बन्धघटकसंयोगवत्ता द्रव्यनिष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन बोध्या।

गदाधरभट्टाचार्येण— स्वप्रतियोगिप्रत्यक्षस्याभावप्रत्यक्षम्प्रति ईश्वरप्रत्यक्षसाधारण्येन या प्रतिबन्धकता उक्ता सा ज्ञानाकरणकज्ञानत्वरूपं प्रत्यक्षत्वमीश्वरप्रत्यक्षसाधारणमभ्युपेत्यैव, न तु इन्द्रियार्थसन्निकर्षजन्यज्ञानत्वमीश्वरप्रत्यक्षव्यावृत्तं प्रत्यक्षत्वमभ्युपेत्य, तथा प्रत्यक्षे सर्वत्र दोषविशेषजन्यज्ञाने च साक्षात्कारित्वव्यञ्जकविषयितां स्वीकृत्यैव, जन्यप्रत्यक्षदोषविशेषजन्यज्ञानयोरिवानुभवबलादीश्वरप्रत्यक्षेऽपि साक्षा-

त्कारित्वव्यञ्जकविषयित्वस्वीकारात्। साक्षात्कारित्वव्यञ्जकविषयितायाः सर्वत्र प्रत्यक्षे सर्वत्र दोषविशेषजन्येऽनुभवबलात्स्वीकारादेव च दोषविशेषाद्यजन्यत्वस्य साक्षात्कारित्वव्यञ्जकविषयिताशून्यत्वरूपता सत्प्रतिपक्षग्रन्थे दर्शिता। सत्प्रतिपक्षगादाधर्य्यां 'दोषविशेषादीत्यादिना लौकिकसन्निकर्षपरिग्रहः। दोषविशेषजन्यज्ञानेऽपि साक्षात्कारित्वव्यञ्जकविषयिता[१]विशेषोपगमात्तच्छून्यत्वं निवेश्यैव दोषविशेषजन्यलौकिकसन्निकर्षजन्ये ज्ञाने व्यावर्तनीये, एवञ्च परमेश्वरबुद्धावपि तादृशविषयिताया[२] एव (साक्षात्कारित्वव्यञ्जकविषयिताया एव) स्वीकारान्न नित्यसाधारण्यमि'त्यादिनिर्दिष्टमस्ति[३]।

तदुक्त(भट्टाचार्य्योक्त)प्रतिबध्यप्रतिबन्धकभावे तत्पुरुषीयत्वनिवेशस्यावश्यकता नैव भवति, यतो हि द्रव्ये संयोगाभावस्य योग्यसंयोगाभावस्य च कदाचिदपि प्रत्यक्षत्वसम्भवो नास्ति, गुणे संयोगाभावस्य प्रत्यक्षत्वेऽपि तत्र गुणे दोषविशेषजन्यसंयोगात्मकस्वप्रतियोगिज्ञानस्यानभ्युपगमेन तेन तस्य प्रतिबन्धासम्भवात्, यत्र संयोगाभावस्य प्रत्यक्षत्वसम्भवोऽस्ति तत्र गुणे दोषविशेषजन्यसंयोगज्ञानस्य अभ्युपगमेऽपि तत्पुरुषस्य तत्सत्त्वे तदीयप्रतिबन्धकतावच्छेदकसम्बन्धस्य प्रमीयलौकिकविशेष्यत्वरूपस्य स्वविषयसंयोगवत्त्वरूपस्य वा तत्र गुणेऽसत्त्वात्तेन तस्य प्रतिबन्धासम्भवाद् दोषविशेषजन्यतत्पुरूषीयसंयोगज्ञानस्य दोषविधया प्रतिबन्धकत्वासम्भवोऽपि, गुणधर्मिकदोषविशेषजन्यसंयोगज्ञानस्य तत्पुरुषीयस्य सत्त्वेऽपि तदीयप्रतिबन्धकतावच्छेदकसम्बन्धस्य प्रमीयलौकिकविशेष्यत्वरूपस्य स्वविषयसंयोगवत्त्वरूपस्य वाऽसत्त्वेन दोषविधया तस्य तत्र प्रतिबन्धकत्वासम्भवेऽपि उपलब्धिरूपस्य (दोषविशेषजन्यसंयोगोपलब्धिरूपस्य) अनुपलब्धेः प्रतियोगिनः सत्त्वेन तदभावरूप(उपलब्ध्यभावरूप)कारणस्य विरहात्तत्पुरुषस्यापत्तिविरहात् (गुणे तत्काले संयोगसामान्याभावप्रत्यक्षस्यापत्तिविरहात्, अनुपलब्धिरूपस्वकारणविरहात्) अन्यपुरुषस्य (पुरुषान्तरस्य) गुणधर्मिकदोषविशेषजन्यसंयोगज्ञानस्य सत्त्वे च तत्पुरुषस्य योग्याया अनुपलब्धेः कारणस्य गुणे सत्त्वेन गुणे संयोगसामान्याभावप्रत्यक्षस्यानुपपत्त्यसम्भवात् (उपर्युक्तग्रन्थः 'तदुक्तप्रतिबध्यप्रतिबन्धकभावे च तत्पुरुषीयत्वं नोपादेयमि'त्युक्तेरुपपादनपरः)।

---

१. 'विषयते'ति मुद्रितानुमानगादाधर्याम्

२. 'विषयताया' इति मुद्रितानुमानगादाधर्याम्

३. गादाधरी (वामाचरणभट्टाचार्यसम्पादिता, १९२२, वाराणसी) द्वितीयो भागः, सत्प्रतिपक्षप्रकरणम्, पृ. १८१४

उपर्युक्तोपपादनेन भट्टाचार्यमते द्रव्ये संयोगसामान्याभावप्रत्यक्षापत्तिविरहः साधितस्तर्हि 'कथञ्चिदापत्तिसम्भवेऽपि'[१] इत्यादिदीधिति[२]ग्रन्थसङ्गतिः कथमिति जिज्ञासायामुत्थितायां समाधीयते— 'कथञ्चिदापत्तिसम्भवेऽपीत्यादितद्ग्रन्थः, आपत्तिश्च विशेष्यनिष्ठप्रत्यासत्त्या सन्निकर्षेण कार्यकारणभावाभिप्रायेणेति' इति।

तस्यायम्भावः— आत्मनिष्ठप्रत्यासत्त्या भट्टाचार्योक्तप्रतिबध्यप्रतिबन्धकभावे तत्पुरुषीयत्वस्योपादानाभावाद् यद्यपि कारणविरहादापत्तिविरहः, तथापि विशेष्यनिष्ठ-प्रत्यासत्त्या सन्निकर्षेण कार्यकारणभावाभिप्रायक एव 'कथञ्चिदापत्तिसम्भवेऽपी'-त्यादिदीधिति[२]ग्रन्थे 'आपत्ति'प्रयोग इति, विशेष्यनिष्ठप्रत्यासत्त्या सन्निकर्षस्याभाव-प्रत्यक्षकारणत्वपक्षे तत्प्रतिबध्यप्रतिबन्धकभावकोटौ तत्पुरुषीयत्वनिवेशस्यावश्यकतया परमेश्वरीयसंयोगप्रत्यक्षस्य प्रतिबन्धकत्वासम्भवात्प्रति[योगि]ग्रहोत्पत्तिदशायां वृक्षे संयोगाभावप्रत्यक्षापत्तिसम्भवादित्याशयः।[१८५]

**तत्त्वालोकः– ननु तादात्म्येन द्रव्यत्वेन प्रतिबन्धकत्वं यद्यपि लघुभूतं तथापि तस्याननुभविकतया प्रकारान्तर्भावेण प्रतिबन्धकत्वे द्रव्येऽभाव-मात्रस्याप्रत्यक्षत्वापत्त्याऽसम्भवितया च स्वप्रयोज्यविषयतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन सामग्र्याः प्रतिबन्धकत्वमाह ''प्रतियोग्युपलम्भ-के''ति[३]। सामग्री च दोषविशेषासम्पृक्तचक्षुःसंयुक्तसमवायादिसन्निकर्षः, दोष-विशेषसमवहितसन्निकर्षस्य प्रतियोगिग्रहणयोग्यत्वाद्दोषासम्पृक्तेति।**

**''प्रस्तुतत्वादि''ति।[४] उक्तत्वादित्यर्थस्तेन तत्सम्बद्धकथाप्रबन्धरूप-प्रस्तावविरहेऽपि न क्षतिः, एतेन— प्रतियोग्युपलम्भकसामग्र्याः प्रतिबन्धक-त्वपक्षस्य निर्दोषत्वेऽपि शिरोमण्युक्तोपलब्धिप्रतिबन्धकतायां न दोषोद्धार— इति शङ्का निराकृता। व्यधिकरणबहुव्रीहेरसार्वत्रिकत्वमाशङ्क्याह— ''प्रति-योग्युपलम्भे''ति[५]।**

**अथ 'कार्यसहभावेने'ति[६] शब्दात्कार्याधिकरणवृत्तितयेत्येव लभ्यते, तच्च प्राक्कालवृत्तितया हेतावप्यस्तीति तत्रापि तद्व्यवहारापत्तिः, यदि कार्य-**

१. गादाधरी (प्रथमो भागः), सिद्धान्तलक्षणप्रकरणम्, पृ. ३१९
२. 'गादाधरी'त्यस्य स्थाने 'दीधिती'ति पाठः प्रकाशकृतामनवधानतयैव सञ्जात इति प्रतिभाति।
३. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९
४. तदेव, पृ. ९
५. तदेव, पृ. ९
६. तदेव, पृ. ९

कालमात्रवृत्तितयेत्यर्थः तदा कार्यसहभावेन हेतौ पूर्ववर्त्तिन्यनुपपत्तिरिति चेन्न, 'कार्यसहभावेन 'हेतुत्वे'[१]त्यतः कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदक-तत्तद्धर्मवत्त्वन्तेन तेन रूपेण हेतुत्वमिति तात्पर्याल्लभ्यते, कारणत्वञ्चोभय-साधारणं स्वाधिकरणस्वपूर्वत्वाधिकरणक्षणद्वयावच्छिन्नस्वसमानाधिकरणा-भावप्रतियोगितानवच्छेदकधर्मवत्त्वमिति दोषाभावादिति।[१८६]

*प्रकाशः* — उपर्युक्तखण्डादिभागेन 'प्रतियोग्युपलम्भकसामग्र्याऽपि दोषत्वो-पगमादि'ति[२] जागदीशीग्रन्थमवतारयति तत्त्वालोककृत्। तत्रोच्यते — यद्यपि प्रतियो-ग्युपलम्भकसामग्र्या दोषत्वोपगमापेक्षया वृक्षे संयोगाभावस्य प्रतियोगिग्रहोत्पत्ति-दशायामपि प्रत्यक्षापत्तिवारणाय तादृशप्रत्यक्षम्प्रति तादात्म्यसम्बन्धेन द्रव्यत्वरूपेण द्रव्यस्य प्रतिबन्धकत्वकल्पनैव लघीयसी स्यात्, तथापि उक्तप्रतिबन्धकत्व-कल्पनाया अनुभवविषयत्वविरहात् प्रकारान्तरेण मणिमन्त्रादिन्यायेन तथाप्रतिबन्धक-तास्वीकारे द्रव्येऽभावमात्रस्य प्रत्यक्षत्वविरहापत्तिः प्रसज्येत। तस्मात् प्रकारान्तरस्या-सम्भवितया प्रतियोग्युपलम्भकसामग्र्याः स्व(उक्तसामग्री)प्रयोज्य(प्रतियोग्युपलम्भक-सामग्रीप्रयोज्य) (प्रतियोग्युपलम्भ)विषय(संयोग)तावच्छेदकावच्छिन्नप्रतियोगिता-कत्वसम्बन्धेन विषयतासम्बन्धेन संयोगाभावप्रत्यक्षम्प्रति प्रतिबन्धकत्वमुच्यते — 'प्रतियोग्युपलम्भकसामग्र्या अपि दोषत्वोपगमादि'त्यनेन। दोषविशेषसमवहित-सन्निकर्षस्य प्रतियोगिग्रहणयोग्यत्वात् 'सामग्री'पदेनात्र दोषविशेषासम्पृक्तैव सामग्री चक्षुःसंयुक्तसमवायादिसन्निकर्षरूपा विवक्षिता।

'प्रतियोगिन उपलब्धिर्यत् इति व्युत्पत्त्या तस्या एव वा प्रस्तुतत्वादि'ति जागदीशीग्रन्थः।[३] तत्र 'प्रस्तुतत्वादि'त्यस्य उक्तत्वादित्यर्थः। तेन = सामग्र्या उक्तत्वेन, तत्सम्बद्ध = सामग्रीसम्बद्ध,-कथाप्रबन्धरूपतत्प्रस्तावविरहेऽपि न क्षतिः, सामग्र्या उक्तत्वेन तत्सम्बद्धकथाप्रबन्धरूपप्रस्तावापेक्षाविरहात्।

एतेन दर्शितव्युत्पत्त्या 'प्रतियोग्युपलब्धेर्दोषाद्वे'ति[४] दीधित्या सामग्र्या उक्तत्वेन, प्रतियोग्युपलम्भकसामग्र्याः प्रतिबन्धकत्वपक्षस्य निर्दोषत्वेऽपि शिरोमण्यु-क्तोपलब्धिप्रतिबन्धकतापक्षे नैव दोषोद्धार इति शङ्काया अवसराभावो बोध्यः।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९
२. तदेव, पृ. ९
३. तदेव, पृ. ९
४. तत्रैव, दीधितिमूलम्, पृ. ८

व्यधिकरणबहुव्रीहेः सार्वत्रिकत्वविरहेण प्रतियोगिन उपलब्धिर्यत इति दर्शित-व्युत्पत्त्यनङ्गीकारपक्षे समाधानम् दर्श्यते— ''प्रतियोग्युपलम्भरूपदोषाभावस्य संयोग-समान्याभावप्रत्यक्षे कार्यसहभावेन हेतुत्वोपगमान्नोक्तदोष इत्यपि वदन्ती''ति[1] जागदीशीग्रन्थेन। अत्र 'अथे'त्यादिना शङ्क्यते यत् 'कार्यसहभावेने'ति शब्दात् कार्याधिकरणवृत्तितयेत्येव लभ्यते, तच्च कार्याव्यवहितप्राक्काले कार्याधिकरणवर्तिनि हेतावपि वर्तते, अतस्तत्रापि तद्व्यवहारस्य = कार्यसहभावेन हेतुत्वव्यवहारस्यापत्तिः स्यात्, यदि च 'कार्यसहभावेने'त्यस्य कार्यकालमात्रवृत्तितयेत्यर्थो विवक्षितो मन्येत तदा कार्यकालावर्तिनि = कार्यप्राक्वर्तिनि तद्व्यवहारापत्तिवारणेऽपि कार्यसहभावेन हेतौ कार्यप्राक्कालेऽपि वर्तिनि कार्यप्रागभावे कार्यसहभावेन हेतुत्व-व्यवहारानुपपत्तिः स्यात्, तस्य कार्यकालमात्रवृत्तित्वविरहादिति।

अत्र समाधीयते— 'कार्यसहभावेन हेतुत्वेत्यत'इत्यादिना। 'कार्यसहभावेन हेतुत्वे'त्यतः तात्पर्यात् कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकतत्तद्धर्मवत्त्वं तेन तेन रूपेण हेतुत्वमिति लभ्यते, कारणत्वञ्चोभयसाधारणम् अर्थात् कार्यकाले यः कार्याधिकरणे वर्तते, स एव कार्यसहभावेन हेतुतया व्यवह्रियते, कारणत्वव्यवहार-विषयौ च केवलकार्यप्राग्वर्ती केवलकार्यकालवर्ती च उभौ। स्वाधिकरण(कार्या-धिकरण)स्व(कार्य)पूर्वत्वाधिकरणक्षणद्वयावच्छिन्न-स्वसमानाधिकरणाभावप्रति-योगितानवच्छेदकधर्मवत्त्वरूपहेतुत्वमेव कारणत्वम्, एतदेवोभयसाधारणं कारणत्वम्, एतन्निर्वचने दोषाभावात्, प्रकृते प्रतियोग्युपलम्भरूपदोषाभावस्य प्रतियोग्युपलम्भ-कालात्मककार्यकालप्राग्वृत्तित्वेऽपि प्रतियोग्युपलम्भकालात्मककार्यकालवृत्तित्व-विरहेण कार्यसहभावेन तादृशदोषाभावस्य हेतुतायां वृक्षे प्रतियोग्युपलम्भकाले संयोग-सामान्याभावप्रत्यक्षापत्तिविरहात्।

यः खलु कार्यप्राक्काले अथवा कार्यकाले तिष्ठति तदभावो न उक्तक्षणद्वया-वच्छिन्नस्वसमानाधिकरणोऽतस्तादृशक्षणद्वयावच्छिन्नस्वसमानाधिकरणाभावप्रतियो-गितानवच्छेदकधर्मवत्त्वरूपं कारणत्वन्तत्र सङ्गच्छत एवेति भावः।[१८६]

तत्त्वालोकः – दीधितौ ''इति व्याप्तेर्यावत्संयोगाभाव एव मानमि''ति।[2] 'इती'ति 'यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानि'त्युदाहरण-स्वरूपज्ञानजन्यज्ञानविषयत्वरूपव्याप्त्यन्वयिनमर्थम्बोधयति। 'व्याप्तेरि'त्यत्र

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

२. तत्रैव, दीधितिमूलम्, पृ. ८

पञ्चमी च मितिकरणत्वान्वितं प्रयोज्यत्वं ज्ञायमानलिङ्गस्य मानत्वपक्षे, 'संयोगयावद्विशेषाभाव'पदं प्रथमान्तम्, ज्ञानस्य करणत्वे विषयत्वार्थकसप्तम्यन्तं 'मान'पदं वा मानविषयलाक्षणिकं बोध्यम्। अत्र 'यत्'पदं यद्धर्माश्रयपरं 'विशेष'शब्दार्थश्चोभयावृत्तिधर्मवान्, तदेकदेशधर्मान्वयिवृत्तित्वन्तद्धितार्थः, प्रतियोगितासम्बन्धेन तस्याभावेऽन्वयः, 'विशेष'शब्दस्य वोभयावृत्तिधर्मावच्छिन्नप्रतियोगितानिरूपके लक्षणा, 'यावत्'पदस्य तात्पर्यादभावपदेन सहासत्तिः कल्प्या, तथा च यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटस्य हेतुत्वं पर्यवसितं, 'तत्'पदस्य तद्धर्मावच्छिन्नपरतया साध्यमपि तद्धर्मावच्छिन्नाभावस्यैवेत्यभिप्रायेणाह "यो यज्जातिसमानाधिकरणे"त्यादि[१]।[१८७]

*प्रकाशः*—द्रव्ये संयोगसामान्याभावं स्वीकुर्वतां प्राचाम्मतं साम्प्रदायिकैर्मानाभावोपन्यासेन 'द्रव्ये संयोगसामान्याभावे मानाभावादि'त्युल्लिख्य[२] दूषितम्। तत्र पुनः प्राचीनैः 'न च यो यदीय-यावद्विशेषाभाववान् स तत्सामान्याभाववानि'ति व्याप्तिप्रदर्शनमुखेनानुमानात्मकमानमुपन्यस्यते। तत्परकदीधितिं व्याख्यातुमुपर्युक्ततत्त्वालोकखण्डोपक्रमः।

तत्र 'इति व्याप्तेः संयोगयावद्विशेषाभावा एव (पाठान्तरम्-'यावत्संयोगाभाव एव) मानमि'ति[३]प्रतीकतया परिगृह्य तद्ग्रन्थघटकम् 'इती'त्यव्ययं लुप्तपञ्चमीकम्। लुप्तपञ्चमीकम् 'इती'ति पदञ्च 'यो यदीय-यावद्विशेषाभाववान् स तत्सामान्याभाववानि'त्युदाहरण (यथा यो यो धूमवान् स वह्निमान् यथा महानसमित्युदाहरण)स्वरूपज्ञानजन्यज्ञांनविषयत्वरूपं (उदाहरणज्ञाप्यत्वरूपम्) व्याप्तौ अन्वयिनमर्थं बोधयति।

अर्थाद्दर्शितोदाहरणस्वरूपज्ञानजन्यज्ञानविषया व्याप्तिरिति लुप्तपञ्चमीकेन 'इति' पदेन आयातम्। 'इती'त्युत्तर'व्याप्तेरि'त्येतद्घटकपञ्चमी च 'मान'शब्दार्थघटकमितिकरणत्वे अन्वितं प्रयोज्यत्वं बोधयति ज्ञायमानलिङ्गस्य मानत्वपक्षे। तेन 'संयोगयावद्विशेषाभावात्मकज्ञायमानलिङ्गात्मकानुमाननिष्ठमितिकरणता दर्शितव्याप्तिप्रयोज्ये'त्यायातम्। 'संयोगयावद्विशेषाभाव'पदं प्रथमाविभक्त्यन्तम्। तस्य सप्तम्यन्तत्वसत्त्वेऽपि सन्धिना 'संयोगयावद्विशेषाभाव एवे'त्यस्य साधुत्वसम्भवात्तद्भ्रमवारणाय 'संयोगयावद्विशेषाभावपदं प्रथमान्तमि'त्युक्तम्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९
२. तत्रैव, दीधितिमूलम्, पृ. ८
३. तत्रैव, दीधितिमूलम्, पृ. ८

लिङ्गज्ञानस्य करणतापक्षे तु 'मान'पदन्नो प्रथमान्तमपि तु विषयत्वार्थक-सप्तम्यन्तमेव स्वीकर्तव्यम्, तेन ज्ञानात्मकमानविषयम् संयोगयावद्विशेषाभावात्मकं लिङ्गमित्यायातं बोध्यम्। विषयत्वार्थकसप्तम्यन्तत्वमस्वीकृत्य 'मान'पदस्य मानविषये लाक्षणिकत्वमेव (वा) स्वीकरणीयम्।

'यो यदीययावद्विशेषाभाववानि'त्यत्र हेतुबोधकवाक्ये 'यदीय'घटक'यत्'पदं यद्धर्माश्रयपरतया विवक्षितम्, तद्वाक्यघटक'विशेष'शब्दार्थश्चोभयावृत्तितत्तद्व्यक्ति-त्वादिधर्मवत्परतया विवक्षितः। 'विशेष'शब्दार्थतया विवक्षितार्थोभयावृत्तिधर्म-वद्घटक'धर्मान्वयि 'वृत्तित्वं' तद्धितार्थः = यत्पदप्रकृतिक'छ'प्रत्ययार्थः, तस्य यत्पद-प्रकृतिकतद्धित'छ'प्रत्ययार्थस्य विशेषपदार्थैकदेशधर्मान्वितस्य प्रतियोगितासम्बन्धेन = प्रतियोगितानिरूपकत्वसम्बन्धेन, अभावेऽन्वयस्तेन 'यो यदीययावद्विशेषाभाव-वानि'त्यस्य 'यो यद्धर्माश्रयवृत्त्युभयावृत्तिधर्मवृत्तित्वविशिष्ट(प्रतियोगितानिरूपकत्व-सम्बन्धेन विशिष्ट)यावदभाववानि'त्यर्थः फलितः।

अथवा 'विशेष'शब्द एव उभयावृत्तिधर्मावच्छिन्नप्रतियोगितानिरूपके लाक्षणिकः स्वीकार्यः।

'यावत्'पदस्य 'अभाव'पदेन सह तात्पर्यवशादासत्तिः कल्पनीया, ततश्च यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटस्य हेतुता पर्यवसिता।

उत्तरवर्तिसाध्यबोधकवाक्यघटक'तत्'पदस्य तद्धर्मावच्छिन्नार्थकतया तद्धर्मा-वच्छिन्नाभावस्यैव साध्यता पर्यवसिता। एतदभिप्रायेणैव जगदीशतर्कालङ्कार उक्तदीधितेः 'यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्न-प्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताका-भाववानि'[१]त्यर्थं व्याख्यातवानित्याशयः।[१८७]

तत्त्वालोकः– अथ लाघवेन यद्धर्मसामानाधिकरण्यमुभयावृत्तित्वञ्च प्रतियोगिताविशेषणमस्त्वलं धर्मविशेषणतया सत्त्वगुणत्वाद्यवच्छिन्नप्रतियो-गित्वादीनामुभयावृत्तित्वविरहेण स्वरूपासिद्ध्यनवकाशात्, अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वेऽपि प्रतियोगिताया भेदात्तत्संयोगाभावस्योभयावृत्ति-प्रतियोगिताकत्वमव्याहतमिति चेन्न, प्रतियोगिभेदेन प्रतियोगिताभेदे संयोगाद्य-भावस्याप्युभयावृत्तिप्रतियोगिताकत्वेनासिद्धिप्रसङ्गात्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

स्वनिरूपितप्रतियोगितावत्त्वसम्बन्धेनोभयावृत्तित्वस्याभावविशेषणत्वे संयोगाद्यभाववारणेऽपि तत्संयोगाभावस्य तत्क्षणविशिष्ट-तत्संयोगाभावाभावाभावरूपतया त्रितयप्रतियोगिताकतया वा स्वनिरूपितप्रतियोगितावत्त्वसम्बन्धेन तस्याप्युभयवृत्तित्वस्यैवापत्तेः।

कूटत्वानुयोगितावच्छेदकानुयोगित्वे च स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वसम्बन्धेनोभयावृत्तित्वविशेषणञ्च यद्धर्मसमानाधिकरणप्रतियोगिताकत्वस्यातिरिक्तस्य प्रवेशेन गौरवादुभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वापेक्षयोक्तसम्बन्धेनोभयावृत्तित्वस्यापि गुरुत्वात्, त्रितयप्रतियोगिकत्वमते दोषतादवस्थ्याच्च हेयम्।

एवमुभयावृत्तिधर्मावच्छिन्नाभावकूटत्वापेक्षया तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वस्य गुरुत्वमप्यालोचनीयम्, तादृशाभावत्वस्यानन्ततत्तत्क्षणविशिष्टतत्तद्व्यक्त्यभावसाधारणत्वात्।

न चोभयावृत्तिधर्मावच्छिन्नाभावत्वस्यापि तत्साधारण्यम्, तद्व्यक्तित्वसत्त्वान्यतरावच्छिन्नाभाववारणायोभयावृत्तिधर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकत्वस्यैव विवक्षणीयत्वात्।

अथापि संयोगत्वसमानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीतिसिद्धाभावस्य न वारणमिति चेदुभयावृत्तिधर्म्मविशिष्टप्रतियोगिताकत्वमेव निवेशनीयम्, वैशिष्ट्यञ्च (स्वनिष्ठावच्छेदकताकत्व) स्वभिन्ननिष्ठावच्छेदकत्वानिरूपितत्वसम्बन्धेन।

यदि चोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकत्वमेव प्रागुक्तदोषद्वयवारणाय निवेश्यम् तथा चात्रापि तादृशाभावत्वस्य तत्क्षणादिविशिष्टतद्व्यक्त्यभावसाधारण्यं दुर्वारमित्युच्यते तदापि तद्व्यक्त्यभावे तद्व्यक्त्यनुयोगिकसमवायादिना संयोगत्वादिविशिष्टाभावेषु च तादृशाभावत्वस्य सत्त्वेन तत्कल्प एव गौरवम्।

लाघवाद्यनुरोधेनैव वेतरवारकपर्याप्तिरादरणीया, उक्तलाघवगौरवस्याकिञ्चित्करत्वे न्यूनवारकमात्रमादरणीयमिति बोध्यम्।[१८८]

*प्रकाशः* – 'यो यज्जातिसमानाधिकरणोभयावृत्ती'[१]त्यादिजागदीशीग्रन्थस्या-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

वतरणप्रदानानन्तरमुपर्युक्तखण्डेन तद्व्याख्यान'मथे'त्यादिनाऽऽरभते। तत्रोच्यते यदुभयावृत्तित्वं यद्धर्मसामानाधिकरण्यमिति च विशेषणद्वयं धर्मविशेषणं मास्तु, लाघववशात्प्रतियोगिताविशेषणमेव तदस्तु, सत्तावदभावस्य गुणाभावस्य च वृक्षेऽसत्त्वेन स्वरूपासिद्धिप्रयोजकस्य यथोक्तद्वयस्य धर्मविशेषणत्वेन वारणं तथा प्रतियोगिताविशेषणत्वेऽपि वारणं भवेदेव, सत्तावदभावीयप्रतियोगिताया गुणाभावीय-प्रतियोगितायाश्चोभयवृत्तित्वेनोभयावृत्तित्वविरहादिति। उक्तद्वयस्य प्रतियोगिताविशेष-णतापक्षे तत्तत्संयोगाभावसङ्ग्रहो न स्यात्, अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वमते तत्तत्संयोग इव तत्तत्संयोगध्वंसे तत्तत्संयोगप्रागभावे च तत्संयोगाभावप्रतियोगितायाः सत्त्वेनोभयावृत्तित्वविरहादिति तु वक्तुमशक्यम्, प्रतियोगिभेदेन प्रतियोगिताया भिन्नत्व-स्वीकारात्, तत्तत्संयोगाभावप्रतियोगिताया उभयावृत्तित्वात्।

अत्र समाधीयते— यत्प्रतियोगिभेदेन प्रतियोगिताभेदस्वीकारे संयोग-सामान्याभावप्रतियोगिताया अपि उभयावृत्तित्वेन हेतुघटकतया संयोगसामान्याभावस्य सङ्ग्रहापत्त्या तस्येदानीं वृक्षात्मकपक्षेऽसिद्धतया स्वरूपासिद्धिप्रसङ्गादिति।

संयोगादिसामान्याभावादिवारणायोक्तद्वयस्यप्रतियोगिताविशेषणत्वं परित्यज्य स्व(उभयावृत्ति)निरूपितप्रतियोगितावत्त्व(उभयावृत्तिनिरूपितप्रतियोगितानिरूप-कत्व)सम्बन्धेन तस्य अभाव(यदीययावद्विशेषाभावघटकाभाव)विशेषणत्वस्वीकारे, अर्थाद् यन्निरूपितप्रतियोगितावच्छेदकतावानुभयावृत्तिस्तादृशस्यैवाभावस्य ग्राह्यत्वे, संयोगसामान्याभावीयसंयोगनिष्ठप्रतियोगितायाः स्वावच्छेदकतया निरूपकस्य संयोग-त्वस्योभयावृत्तित्वविरहेण संयोगसामान्याभावस्य वारणेऽपि तत्संयोगाभावस्य सङ्ग्रा-ह्यस्य परिग्रहाभावप्रसङ्गाद् विशिष्टस्य शुद्धानतिरिक्ततया तत्संयोगाभावस्य तत्तत्क्षण-विशिष्टतत्संयोगाभावाभावाभावरूपतया तत्संयोग-तत्संयोगध्वंस-तत्संयोगप्राग-भावात्मकत्रितयप्रतियोगिकतया च तत्संयोगत्वस्य तत्तत्क्षणविशिष्ट(तत्तत्क्षण-विशिष्ट)[1]तत्संयोगादिसाधारण्येन स्वनिरूपितप्रतियोगितावत्त्वसम्बन्धेन तत्संयोगा-भावस्यापि उभयवृत्तित्वस्यैवापत्तेरुभयावृत्तित्वानुपपत्तेः।

तत्तत्संयोगाभावसङ्ग्रहाय संयोगसामान्याभावपरिग्रहाभावाय चोभयावृत्तित्वं प्रतियोगिताया उक्तसम्बन्धेन अभावस्य वा विशेषणं मास्तु, किन्तु तद् उभयावृत्तित्वं स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वसम्बन्धेन कूटत्वानुयोगिता-वच्छेदकानुयोगिताया एव विशेषणमस्तु।

---

१. ( ) कोष्ठकान्तर्गतः पाठोऽधिकः प्रतिभाति।

अस्यायमाशयः प्रतीयते यद् हेतुभागस्थित'यावद्विशेषाभाव' इत्यस्य हेतुत्वेन विवक्षित अभावकूटो(समुदायो)ऽर्थः, तादृशाभावसमुदाय(हेतुत्वेन विवक्षिताभावसमुदाय)गतं यत्कूटत्वं समुदायत्वविशेषरूपम्, तदवच्छेदकम् अर्थात्तत्कूटत्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकम्, यदनुयोगित्वम् = विवक्षिताभावसमुदायगतं स्वरूपसम्बन्धविशेषात्मकमनुयोगित्वम्, तादृशानुयोगित्वे एव उभयावृत्तित्वम् स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वसम्बन्धेन विशेषणमस्तु। तेन संयोगसामान्याभावतत्तत्संयोगविशेषाभावोभयघटिताभावसमुदायस्य व्यवच्छेदो भवेत्, केवलतत्तत्संयोगविशेषाभावघटितसमुदायस्यैव परिग्रहः स्याद्, यतो हि संयोगसामान्याभावघटिताभावसमुदायगतकूटत्वावच्छेदकानुयोगित्वे उक्तविवक्षितसम्बन्धेनोभयावृत्तित्वं न वर्तते, उभयवृत्तेः संयोगत्वस्यापि तत्रावच्छेदकत्वेन तत्रोभयावृत्तित्वविरहेण उभयावृत्तित्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वस्य तत्र विरहात्, स्वावच्छिन्न(उभयावृत्तित्वावच्छिन्न)निरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वात्मकसम्बन्धो निरूपितत्वरूपो विवक्षितोऽथवा तादृशप्रतियोगित्वं तादृशप्रतियोगितानिरूपितत्वपरतया विवक्षितम्, तादृशानुयोगित्वे उभयावृत्तित्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वस्य स्वरूपेण सत्त्वासम्भवादिति प्रतीमः।

उक्तकल्पस्य निरासः 'यद्धर्मसमानाधिकरणप्रतियोगिताकत्वस्यातिरिक्तस्य प्रवेशे गौरवादि'त्युपन्यस्य कृतः, यज्जातिसमानाधिकरणस्थाने यद्धर्मसमानाधिकरणोक्तौ गौरवविरहेऽपि तस्य उभयावृत्तित्वस्य च कूटत्वावच्छेदकानुयोगित्वस्यैव विशेषणत्वेऽर्थाद्धर्मविशेषणत्वास्वीकारे घटपटोभयाभावसत्तावदभावगुणाभावसंयोगसामान्याभावादीनां वारणेन स्वरूपासिद्ध्यादिदोषासम्भवेऽपि साध्येन तद्धर्मसमानाधिकरणप्रतियोगिताकाभावेन सम्बन्धाय हेतुत्वेन विवक्षिताभावे अतिरिक्तस्य यद्धर्मसमानाधिकरणप्रतियोगिताकत्वस्योपादाने गौरवप्रसङ्गात्, उभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वस्य (अभावविशेषणस्य) अपेक्षया उभयावृत्तित्वस्य उक्तसम्बन्धेन स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वसम्बन्धेन कूटत्वावच्छेदकानुयोगित्वविशेषणताया अपि गुरुत्वात्।

अत्यन्ताभावस्य त्रितयप्रतियोगित्वस्वीकारपक्षे तत्संयोगाभावासङ्ग्रहदोषाच्च तत्पक्षे तत्संयोगत्वस्य तत्संयोग-तत्संयोगध्वंस-तत्संयोगप्रागभावसाधारण्येनोभयावृत्तित्वविरहात् स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगित्वरूपदर्शितसम्बन्धेन कूटत्वावच्छेदकानुयोगित्वे उभयावृत्तित्वासम्भवात्।

गौरवादेव च उभयावृत्तिधर्मावच्छिन्नाभावकूटत्वस्थाने उभयावृत्तिधर्मावच्छिन्नाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिकूटत्वमपि नोपादातुमर्हम्। तत्र गुरुत्वं दर्शितं 'तादृशाभावत्वस्यानन्ततत्तत्क्षणविशिष्टतत्तद्व्यक्त्यभावसाधारणत्वादि'-त्युपन्यासेन तत्त्वालोककृद्भिः।

अत्र 'न चोभयावृत्ती'त्यादिना शङ्क्यते यदुभयावृत्तिधर्मावच्छिन्नाभावनिवेशात्मकसिद्धान्तेऽपि उभयावृत्तिधर्मावच्छिन्नाभावत्वस्य अनन्ततत्तत्क्षणविशिष्टतादृशाभावसाधारण्येन गुरुत्वं समानमेवेति। तत्र समाधीयते — यत् सिद्धान्ते तद्व्यक्तित्व-(तत्संयोगगततद्व्यक्तित्व)सत्ताऽन्यतरावच्छिन्नाभावस्योभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन तद्वारणाय उभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकपदेन (स्वनिष्ठावच्छेदकताकत्व) स्वभिन्ननिष्ठावच्छेदकत्वानिरूपितत्वसम्बन्धेन उभयावृत्तिधर्मविशिष्टप्रतियोगिताकाभावस्यैव विवक्षितत्वात्, दर्शितान्यतरावच्छिन्नप्रतियोगिताकाभावस्य अनन्ततत्तत्क्षणविशिष्टोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्योभयावृत्तिधर्मेतरावच्छिन्नप्रतियोगिताकाभावत्वेनातादृशत्वात्।

यद्यपि अनन्ततत्तत्क्षणविशिष्टतद्व्यक्त्यभावस्य तद्व्यक्तित्वसत्ताऽन्यतरावच्छिन्नप्रतियोगिताकाभावस्य च वारणमुभयावृत्तिधर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावविवक्षयापि भवेत्, किन्तु संयोगत्वसमानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीतिसिद्धाभावस्य तथाविवक्षणेन वारणन्नैव भवेद्, उक्तप्रतीतिसिद्धाभावीयप्रतियोगितायामुभयावृत्तिधर्मेतरधर्मानवच्छिन्नत्वस्य सत्त्वाद्। अतो दर्शितसम्बन्धेनोभयावृत्तिधर्मविशिष्टप्रतियोगिताकत्वस्यैव विवक्षणीयतोक्ता। तथासति संयोगत्वसमानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीतिसिद्धाभावस्य व्यावृत्तिर्भवति, उक्तप्रतीतिसिद्धाभावीयप्रतियोगितायां परम्परयोभयावृत्तिधर्मभिन्ननिष्ठावच्छेदकत्वनिरूपितत्वस्यैव सत्त्वेन स्वभिन्ननिष्ठावच्छेदकत्वानिरूपितत्वविरहात्।

संयोगत्वसमानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीतिसिद्धाभावस्य वारणाभावे का क्षतिरिति चेद्, उच्यते, तादृशप्रतीतिसिद्धाभावस्य प्रकारान्तरेण संयोगसामान्याभावात्मकतया संयोगसामान्याभावस्येव तस्येदानीं वृक्षात्मकद्रव्येऽसिद्ध्या तत्परिग्रहे स्वरूपासिद्धिदोषः स्यात्, स्वस्य स्वसाधकत्वविरहात्, यावत्पदवैयर्थ्यप्रसङ्गाच्चेति प्रतीमः।

तत्संयोगत्ववद्घटोभयाभावस्य तत्प्रतीतिसिद्धाभावतामुपपाद्य तदुभयाभावस्य तत्संयोगवत्यपि सत्त्वं संदर्श्य व्यभिचारदोषो नैव युक्तः, संयोगत्वसमानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीत्या तादृशोभयावृत्तिधर्मेतरधर्मानवच्छिन्नतादृशोभयावृत्तिधर्मा-

वच्छिन्नप्रतियोगिताकाभावस्यैव विषयीकरणाद्, अन्यथा तुल्यन्यायात् संयोगो नास्तीति प्रतीतिविषयताया संयोगघटोभयाभावेऽपि प्रसङ्गात्।

अथेदमुच्यते 'यदि चे'त्यादिना यत् तद्व्यक्तित्वसत्तान्यतरावच्छिन्नाभावावारण = संयोगत्वसमानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीतिसिद्धाभावावारण,-रूपप्रागुक्तदोषद्वयवारणाय उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकत्वमेव निवेश्यम्, न तूभयावृत्तिधर्मविशिष्टप्रतियोगिताकत्वं प्रागुक्तम्। तथा चात्रापि = उभयावृत्तित्वस्य धर्मस्यैव विशेषणतासिद्धान्तेऽपि, तादृशाभावत्वस्य = उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकाभावत्वस्य, अनन्ततत्तत्क्षणविशिष्टतद्व्यक्त्यभावसाधारण्यं भवत्येव, अनन्ततत्तत्क्षणविशिष्टतद्व्यक्त्यभावेऽपि उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकत्वस्य सत्त्वादिति शङ्का।

अत्र समाधीयते— तदापि = उभयावृत्तित्वस्य धर्मविशेषणतासिद्धान्ते प्रागुक्तदोषद्वयवारणाय तद्व्यक्तित्वसत्तान्यतरावच्छिन्नाभावावारणसंयोगत्व-समानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीतिसिद्धाभावावारणात्मकदोषद्वयवारणाय उभयावृत्तिधर्मविशिष्टप्रतियोगिताकत्वमनिवेश्य उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकत्वस्यैव निवेशेऽपि उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वस्यानन्ततत्तत्क्षणविशिष्टतद्व्यक्त्यभावसाधारण्येऽपि, तद्व्यक्त्यभावे तद्व्यक्त्यनुयोगिकसमवायादिना संयोगत्वादिविशिष्टाभावेषु च तादृशाभावत्वस्य = उभयावृत्तिप्रतियोगिताकाभावत्वस्य, सत्त्वेन, उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वस्यासत्त्वेन, तत्कल्प एव = उभयावृत्तित्वस्य धर्मेतरप्रतियोगित्वादिविशेषणताकल्प एव, गौरवमिति, अर्थादुभयावृत्तित्वस्य धर्मेतरप्रतियोगित्वादिविशेषणतापक्षे तद्व्यक्त्यनुयोगिकसमवायादिना संयोगत्वादिविशिष्टाभावानामपि उभयावृत्तिप्रतियोगिताकाभावत्वात्तत्परिग्रहाद्गौरवम्। उभयावृत्तित्वधर्मविशेषणतापक्षे तु तद्व्यक्त्यनुयोगिकसमवायादिना संयोगत्वादिविशिष्टाभावानामुभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वविरहात्तदपरिग्रहाद् गौरवाभाव इति।

लाघवानुरोधेनैव वा उभयावृत्तित्वस्य धर्मविशेषणतासिद्धान्ते तद्व्यक्तित्वसत्तान्यतरावच्छिन्नाभावसंयोग[त्व]समानाधिकरणोभयावृत्तिधर्मवान्नास्तीति प्रतीतिसिद्धाभावानन्ततत्तत्क्षणविशिष्टतद्व्यक्त्यभावानां वारणाय इतरवारकपर्याप्तिरादरणीया, न तूभयावृत्तिधर्मविशिष्टप्रतियोगिताकत्वस्य उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकत्वस्य वा निवेशः कार्यः।

उक्तलाघवगौरवस्याकिञ्चित्करत्वे इतरवारकपर्याप्तिर्नादरणीया, केवलन्यून-वारकपर्याप्तिरेवादरणीया, 'लाघवानुरोधेनैव वा इतरवारकपर्य्याप्तिरादरणीये'त्यत्र 'मात्र'पदानुपन्यासेन 'उक्तलाघवगौरवस्याकिञ्चित्करत्वे न्यूनवारकमात्रमादरणीयमि'-त्यत्र 'मात्र'पदोपन्यासेन च लाघवानुरोधपक्षे न्यूनवारकपर्य्याप्तिरादरे इतरवारकपर्याप्ते-श्चादरे स्वारस्यं प्रतीयते, न्यूनवारकपर्याप्तिरादरः स्वस्वघटकनिष्ठावच्छेदकताकत्व-निवेशात्मकः इतरवारकपर्याप्तिरादरश्च स्वभिन्नस्वघटकभिन्ननिष्ठावच्छेदकत्वानिरूपित-त्वनिवेशात्मकः। 'लाघवानुरोधेनैव वा' इत्युक्तेः स्वारस्यमितरवारकपर्याप्तिरनादरे लाघवाभावादिदोषविरहे प्रतीयते, ततश्चेदं प्रकरणं पूर्णावधानैरैकाग्रचित्तैश्च सुधीभिर-वलोकनीयं यथास्फूर्ति व्याख्यातमिदमिदानीम्मयेति।[१८८]

तत्त्वालोकः— उभयावृत्तित्वञ्च स्वप्रतियोगिवृत्तित्व,-स्वानुयोगि-वृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वं ग्राह्यम्, तद्धटगगनोभयभेदविशिष्ट-त्वस्य तद्धटनिष्ठतद्व्यक्तित्वे सत्त्वेऽपि भेदस्य व्यासज्यवृत्तिधर्मानवच्छिन्नप्रति-योगिताकस्य प्रतियोग्यवृत्तेर्वा विवक्षिततत्वान्न दोषः, उभयभेदस्यातादृशत्वात्। तद्रूपवद्भेदश्च तद्रूपनाशकालावच्छेदेन तद्धटे विद्यमानोऽपि न निरवच्छिन्न-स्वरूपेण, न वा प्रतियोग्यवृत्तिः।

स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वमेव वा सम्बन्धः, न च तद्व्यक्तित्वमुभयत्वावच्छिन्नवृत्ति।

तद्धटभेदाभावाभावस्य तद्धटभेदस्वरूपत्वेन तद्व्यक्तित्वाश्रयतद्धटभेदा-भावस्य तद्धटभेदप्रतियोगित्वानुयोगित्ववत्त्वेऽपि स्वनिरूपितप्रतियोगिता-वच्छेदकावच्छिन्नवृत्तित्व,-स्वावच्छिन्नाधिकरणतावद्[१]वृत्तित्वोभयसम्बन्धेन भेदत्वविशिष्टान्यत्वस्य विवक्षया तत्तद्व्यक्तित्वेऽप्युभयावृत्तित्वमुपपाद्यम्।

तद्धटभेदत्वाभावाभावस्य[२] तद्धटभेदत्वस्वरूपत्वेन तद्धटभेदत्वाभावे तद्धटभेदत्वनिरूपितप्रतियोगित्वाश्रयत्व-तदवच्छिन्नाधिकरणत्वयोः सत्त्वेऽपि स्वनिरूपितत्व,-स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टप्रति-योगितावत्त्वं तु न तत्र वर्तते इति प्रकृते तादृशप्रतियोगितावद्वृत्तित्वमेव सम्बन्धतया विवक्षणीयः।[१८९]

---

१. 'वदि'ति नास्ति प्राचीनमुद्रितपुस्तके।

२. 'तद्धटभेदाभावाभावस्ये'त्येवं पाठः प्राचीनमुद्रितपुस्तके।

*प्रकाशः* —पूर्वखण्डेनोभयावृत्तित्वविशेषणविषये विवेचनं विधायेदानीमुपर्युक्त-खण्डेनोभयावृत्तित्वस्वरूपविचारभारभते 'उभयावृत्तित्वञ्चे'त्यादिना। तत्रोच्यते— स्वप्रतियोगिवृत्तित्व,-स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टो यस्तदन्यत्वमेव 'यो यज्जातिसमानाधिकरणे'त्यादिघटकोभयावृत्तिपदेन विवक्षितम्, तत्संयोगगततद्व्यक्ति-त्वस्य तत्संयोगभेदानुयोगिनि तत्संयोगभिन्ने घटादौ वृत्तित्वविरहेण तत्संयोगभेद-प्रतियोगिनि तत्संयोगे वृत्तित्वेऽपि उक्तोभयसम्बन्धेन भेदविशिष्टत्वविरहात्तदन्यत्व-सत्त्वेनोक्तलक्षणस्य लक्ष्ये सङ्गतिः।

उक्तपरिष्कारे तद्धटगगनोभयभेदमादाय तद्धटगततद्व्यक्तित्वे प्रतियोग्यनुयोग्यु-भयवृत्तित्वस्यैव सत्त्वेनोभयावृत्तित्वमव्याप्तं भवति, तद्धटगगनोभयभेदस्योभयवृत्तिता च कस्याप्युभयात्मकत्वविरहेण तद्धटगगनयोः प्रतियोगित्वानुयोगित्वयोः सत्त्वा-त्तत्रोक्तभेदस्य वृत्तित्वेन भेदविशिष्टत्वात्। तस्मादुक्तदिशा प्रसक्ताव्याप्तिवारणायोक्त-लक्षणघटकभेदे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वं प्रतियोग्यवृत्तित्वम्वा विशेषणं बोध्यमुभयभेदस्य तादृशत्वविरहेण ततो व्यवच्छेदः।

तद्धटगततद्व्यक्तित्वे तद्रूपनाशकालावच्छेदेन तद्धटे तद्रूपवद्भेदस्य सत्त्वेन तद्रूपवत्तद्धटभेदमादायाव्याप्तिस्तु न, उक्तभेदस्य प्रतियोग्यवृत्तित्वविरहात्, उक्तभेदस्य तद्रूपनाशकालावच्छेदेन तद्धटे सत्त्वेन निरवच्छिन्नस्वरूपेण तत्र तस्य वृत्तित्वविरहात्। निरवच्छिन्नस्वरूपेणैव लक्षणघटकभेदे प्रतियोगिवृत्तित्वस्य प्रतियोग्यवृत्तित्वघटकतया प्रविष्टत्वात्। सिंहावलोकनन्यायेन पुनरुच्यते यत् तद्धट-गगनोभयभेदमादाय तद्धटगत-तद्व्यक्तित्वे प्रसक्ताऽव्याप्तिवारणाय लक्षणघटकभेदे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रति-योगिताकत्वं प्रतियोग्यवृत्तित्वं वा विशेषणन्न देयम्, किन्तूक्तोभयभेदव्यावृत्तये लक्षणघटक-स्वप्रतियोगिवृत्तित्वसम्बन्धस्थाने स्वनिरूपितप्रतियोगितावच्छेदका-वच्छिन्नवृत्तित्वमेव सम्बन्धतयोपादेयम्, तद्धटगततद्व्यक्तित्वस्य तद्धटगगनोभयभेद-प्रतियोगितावच्छेदकोभयत्वावच्छिन्नवृत्तित्वविरहेण नोभयभेदमादायोक्ताव्याप्तिसम्भव इति।

अथापि तद्धटगततद्व्यक्तित्वे प्रकारान्तरेणाव्याप्तिं तत्परिहारोपायञ्च दर्शयितुं 'तद्धटभेदाभावाभावस्ये'त्यादिग्रन्थः। इदमुच्यते यत् तद्धटगततद्व्यक्तित्वाश्रयस्तद्धट-भेदाभावः, यतो हि तद्धटभेदाभावाभावस्तद्धटभेदस्वरूपः, अभावाभावस्य प्रतियोगि-रूपत्वात्, तद्धटभेदाभावाभावस्य तद्धटभेदात्मकत्वात्, तद्धटगततद्व्यक्तित्वाश्रयस्त-द्धटभेदाभावः, तद्धटात्मकतद्व्यक्तावेव तद्व्यक्तित्वस्य तद्धटभेदाभावस्य च सत्त्वेन तद्धटभेदाभावे तद्व्यक्तित्वाश्रयत्वोपपत्तेः, स च तद्व्यक्तित्वाश्रयः तद्धटभेदाभावः

तद्घटभेदस्य प्रतियोगी, तद्घटभेदात्मकस्य तद्घटभेदाभावाभावस्य प्रतियोगित्वात् तद्घटभेदस्यानुयोगी च, स्वाभावस्य स्वानुयोगिरूपत्वात् प्रतियोग्यभावयोः प्रतियोग्यनुयोगिभावात्, इत्थञ्च तद्घटगततद्व्यक्तित्वस्य तद्घटभेदप्रतियोग्यनुयोगिवृत्तित्वेन तत्रोक्तोभयावृत्तित्वलक्षणाव्याप्तिः प्रसज्यतीति शङ्का।

अत्रोच्यते— स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्व, - स्वावच्छिन्नाधिकरणतावद्वृत्तित्वोभयसम्बन्धेन भेदत्वविशिष्टान्यत्वविवक्षया तत्तद्व्यक्तित्वेऽप्युभयावृत्तित्वमुपपाद्यमिति। परिवर्तितपरिष्कारे तद्घटगततद्व्यक्तित्वे दर्शितरीत्या नाव्याप्तिः सम्भवति, तद्घटभेदाभावे तद्घटभेदगतभेदत्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वविरहात्, भेदत्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वस्यैव लक्षणान्तर्गतत्वात्, तद्घटभेदाभावाभावस्य तद्घटभेदात्मकत्वेऽपि तद्घटभेदाभावेऽत्यन्ताभावत्वनिरूपितस्यैव प्रतियोगितावच्छेदकावच्छिन्नत्वस्य सत्त्वात्, तद्घटभेदाभावाभावेऽत्यन्ताभावत्वसत्त्वात्तद्व्यक्तित्वस्य तादात्म्येन तद्व्यक्तिस्वरूपतया तद्व्यक्तित्वाश्रये तद्घटभेदाभावे तद्घटभेदत्वावच्छिन्नाधिकरणतावत्त्वस्यापि विरहाच्चेति नोक्तदिशा परिवर्तितपरिष्कारे तद्घटगततद्व्यक्तित्वेऽव्याप्तिरिति।

उक्तपरिवर्तितपरिष्कारेऽपि प्रकारान्तरेण तद्घटगततद्व्यक्तित्वेऽव्याप्तिं तद्वारणोपायञ्च दर्शयितुं 'तद्घटभेदत्वाभावाभावस्ये'त्यादिरग्रिमो भागः। स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्व,-स्वावच्छिन्नाधिकरणतावद्वृत्तित्वोभयसम्बन्धेन भेदत्वविशिष्टान्यत्वरूपपरिवर्तितपरिष्कारेऽपि तद्घटभेदत्वाभावाभावस्य तद्[घट]भेदत्वरूपतया तद्घटभेदत्वाभावे तद्घटभेदत्वनिरूपितप्रतियोगित्वाश्रयत्व(तद्घटभेदत्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नत्व)-तद्घटभेदत्वावच्छिन्नाधिकरणतावत्त्वयोः सत्त्वेन तत्र तद्घटगततद्व्यक्तित्वस्य सत्त्वात् उक्तोभयसम्बन्धेन तद्घटभेदत्वविशिष्टत्वस्यैव तद्घटनिष्ठतद्व्यक्तित्वे सत्त्वाद् भेदत्वविशिष्टान्यत्वविरहादव्याप्तिः प्रसज्यत्येव, तद्घटगततद्व्यक्तित्वस्य तद्घटभेदत्वाभाववृत्तित्वात्, तद्व्यक्तित्वस्य तादात्म्येन तद्व्यक्तिरूपत्वात् तद्घटभेदत्वाभावस्यापि तद्घटव्यक्तिरूपत्वादिति शङ्का।

अत्र समाधीयते— तद्घटभेदत्वाभावाभावस्य तद्घटभेदत्वस्वरूपत्वेन तद्घटभेदत्वाभावे तद्घटभेदत्वनिरूपितप्रतियोगित्वाश्रयत्व,-तदवच्छिन्नाधिकरणत्वयोः सत्त्वेऽपि स्वनिरूपितत्व,-स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टप्रतियोगितावत्त्वन्तु न वर्तत इति प्रकृते तादृशप्रतियोगितावद्वृत्तित्वमेव सम्बन्धतया विवक्षणीयमिति।

उक्त कथनस्यायमाशयो यद्दर्शितायां भेदत्वविशिष्टान्यविवक्षायां वैशिष्ट्य-नियामकप्रथमसम्बन्धघटकप्रतियोगिता न केवलं स्वनिरूपिता विवक्षणीया, अपि तु स्वनिरूपिता स्वनिष्ठानुयोगित्वानिरूपिता च विवक्षणीया। तेन प्रसक्ताव्याप्ति-र्निवारिता भवति, यतो हि तद्घटभेदत्वाभावाभावस्य तद्घटभेदत्वरूपत्वेन तद्घट-भेदत्वाभावे तद्घटभेदत्वनिरूपिता प्रतियोगिता यथा वर्तते तथा तद्घटभेदत्वस्य तद्घटभेदत्वाभावाभावरूपतया तद्घटभेदत्वनिष्ठानुयोगितानिरूपितापि प्रतियोगिता वर्तते। ततश्च तद्घटभेदत्वाभावनिष्ठप्रतियोगितामादाय नाव्याप्तिः स्यात्तत्परिग्रहा-भावादित्युक्तखण्डस्य प्रकाशः।[१८९]

तत्त्वालोकः – **अथात्र वृत्तित्वं न स्वरूपेण, सत्त्वस्योभयावृत्तित्वप्रसङ्गात्, नापि संयोगेन समवायेन वा, वाच्यत्वादीनान्तथात्वप्रसङ्गात्, नापि तेषाम-न्यतमसम्बन्धेन स्वरूपेणोभयवृत्तेर्द्रव्यत्वस्यातथात्वापत्तेः, नापि येन सम्बन्धे-नोभयावृत्तित्वं विवक्षितं तेन सम्बन्धेन तत्, तथासति तत्पर्वतानुयोगिक-सम्बन्धेन वह्नेरुभयावृत्तित्वाप्रसङ्गात् तत्सम्बन्धावच्छिन्नवृत्तिताद्वयस्याप्रसिद्धेः, एवं वाच्यत्वतद्व्यक्तित्वान्यतरत्वादिना तद्व्यक्तित्वस्याप्युभयवृत्तित्वेन तत्राऽ-व्याप्तिः। घटत्वेन संयोगेनोभयावृत्तेर्वह्नेर्वह्नित्वेनोभयवृत्तितया तत्राप्यव्याप्तिश्चेति चेद्।**

**भेदत्वविशिष्टवृत्तित्वाभाववत्त्वमुभयावृत्तित्वमिति गृहाण। वैशिष्ट्यञ्च स्वावच्छिन्नाधिकरणतावन्निरूपितत्व,-स्वविशिष्टप्रतियोगितावच्छेदका-वच्छिन्ननिरूपितवृत्तितावत्त्वोभयसम्बन्धेन, वृत्तितावत्ता च स्वावच्छेदक-सम्बन्धावच्छिन्नत्व,-स्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, वृत्तिता च येन रूपेणोभयावृत्तित्वं विवक्षितं तद्रूपावच्छिन्ना। अभावश्च येन सम्बन्धेनोभया-वृत्तित्वं विवक्षितं तत्सम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्न-प्रतियोगिताकः।**

**एवञ्च भेदत्वविशिष्टा वृत्तिता तद्व्यक्तित्वनिष्ठा कालिकसम्बन्धा-वच्छिन्नैव संयोगादिसम्बन्धावच्छिन्नैव च, न वह्निनिष्ठा, तद्व्यक्तित्वनिष्ठान्यत-रत्वावच्छिन्नवृत्तिता च न तद्व्यक्तित्वत्वावच्छिन्ना, घटत्वावच्छिन्नवृत्तिता च न वह्निनिष्ठेति नैकस्यापि दोषस्यावकाशः।**

**कालिकेनापि गगनादीनामवृत्तित्वे गगनत्वे नोभयावृत्तित्वसम्पत्तये वृत्तितास्थाने सम्बन्धिता निवेशनीया।**

वाच्यत्वावच्छिन्नवृत्तिताविशिष्टत्वं स्वरूपसम्बन्धावच्छिन्नतद्व्यक्तित्व-निष्ठवृत्तिताया वर्त्तते इत्युभयावृत्तित्वसम्पत्तये स्वावच्छेदकावच्छिन्नत्वस्य कालिकसम्बन्धावच्छिन्नतद्व्यक्तित्वनिष्ठवृत्तितावत्त्वस्य स्वरूपसम्बन्धा-वच्छिन्नवृत्तितायां सत्त्वेनोभयावृत्तित्वानुपपत्तिवारणाय स्वावच्छेदकसम्बन्धा-वच्छिन्नत्वस्य च निवेशः।

यद्वा वस्तुमदन्यत्वमुभयावृत्तित्वम्, वस्तुमत्ता च स्ववृत्तित्व,-स्वनिष्ठप्रतियोगिताकभेदवद्वृत्तित्वोभयसम्बन्धेन। अत्रापि पूर्ववद्दोषवारणाय भेदः प्रतियोग्यवृत्तित्वेन विशेषणीयः। स्वनिरूपितत्व,-स्वनिरूपक- वृत्तित्वो-भयसम्बन्धेन स्वनिष्ठप्रतियोगिताविशिष्टानुयोगित्वावच्छिन्नाधिकरणत्वं स्व-निष्ठप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदकधर्मा-वच्छिन्नाधिकरणत्वं वा निवेशनीयम्।

अस्यापि च येन रूपेणोभयावृत्तित्वम्विवक्षितं वस्तुविशिष्टतद्धर्मा-वच्छिन्नसम्बन्धित्वाभाव एव तात्पर्यम्, वैशिष्ट्यञ्च स्वनिरूपितत्व,-स्वनिष्ठप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदका-वच्छिन्नाधिकरणतावन्निरूपितसम्बन्धिताविशिष्टत्वोभयसम्बन्धेन, वैशिष्ट्यम-भावप्रतियोगित्वञ्च पूर्वोक्तसम्बन्धैरेव ग्राह्यमिति।

अथवा द्वित्वावच्छिन्ननिरूपितवृत्तित्वसामान्ये यन्निष्ठत्व,-यत्सम्बन्धा-वच्छिन्नत्व,-यद्धर्मावच्छिन्नत्वैतत्त्रितयाभावस्तत्त्वं तेन सम्बन्धेन तेन रूपेण चोभयावृत्तित्वम्बोध्यम्। सर्वञ्चेदं शब्दानुगमानुरोधेनोक्तम्। प्रकृते च स्व-प्रतियोगिनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्व,-स्वानुयोगिनिरूपितस्वरूप-सम्बन्धावच्छिन्नवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वे सति स्वरूपसम्बन्धेन वृत्तित्वादिकमेव तद्वाच्यमित्यलम्।[१९०]

*प्रकाशः* – पूर्वपरिष्कृतोभयावृत्तित्वोपरि उपर्युक्तखण्डेन प्रकारान्तरेण पुन-र्विचारमारभते। तत्र 'अथात्रे'त्यादिनेदमुच्यते — यदुभयावृत्तित्वघटक'वृत्तित्वं' यदि स्वरूपसम्बन्धेन विवक्षितं स्यात्तदा सत्तायां जातिरूपायाम् उभयावृत्तित्वप्रसङ्गः स्यात्, तस्याः स्वरूपसम्बन्धेनोभयवृत्तित्वविरहात्। एवं संयोगेन समवायेन वाऽपि तद्घटक-वृत्तित्वविवक्षा वक्तुमशक्या, वाच्यत्वप्रमेयत्वज्ञेयत्वादीनां संयोगेन समवायेन वोभय-वृत्तित्वविरहेणोभयावृत्तित्वापत्तिः स्यात्।

उक्तापत्तिवारणाय स्वरूपसंयोगसमवायान्यतमसम्बन्धेनापि तद्घटकवृत्तित्वं नो विवक्षितुं शक्यम्, तथासति स्वरूपेणोभयावृत्तेर्द्रव्यत्वस्य स्वरूपेण तथात्वापत्तिः स्यात्, अर्थादुभयवृत्तेर्द्रव्यत्वस्य स्वरूपेणोभयावृत्तित्वं यदिष्टं तन्नोपपद्येत, स्वरूप-संयोगसमवायान्यतमान्तर्गतसमवायेन द्रव्यत्वे उभयवृत्तित्वस्यैव सत्त्वेनोभयावृत्तित्वा-सम्भवात्।

अनुपदोक्त-तथात्वापत्तिवारणाय अथवा दर्शिताशेषापत्तिवारणाय यत्र येन सम्बन्धेनोभयावृत्तित्वमिष्टं तत्र तद्घटकवृत्तित्वं तेनैव सम्बन्धेन विवक्षितुं शक्यम्, द्रव्यत्वे समवायेनोभयवृत्तित्वसत्त्वेऽपि तत्र स्वरूपेणैवोभयावृत्तित्वस्येष्टतया स्वरूपेण च तेन तत्रोभयवृत्तित्वविरहादुक्तदोषस्य वारणेऽपि तत्पर्वतानुयोगिकसम्बन्धेनोभया-वृत्तेर्वह्नेस्तत्पर्वतानुयोगिकसम्बन्धेनोभयावृत्तित्वविरहप्रसङ्गात्, तत्पर्वतानुयोगिक-सम्बन्धेनोभयवृत्तित्वप्रसिद्धेरभावादप्रसिद्धप्रतियोगिकाभावानङ्गीकारात्।

एवं वाच्यत्व,-तद्व्यक्तित्वान्यतरत्वादिरूपेण तद्व्यक्तित्वस्योभयवृत्तितया तत्रोभयावृत्तित्वविरहेणाऽव्याप्तिः। घटत्वरूपेण संयोगसम्बन्धेनोभयावृत्तौ वह्नौ वह्नित्वेन संयोगेनोभयवृत्तित्वस्य सत्त्वेन तत्राप्यव्याप्तिश्च।

अत्र 'इति चेदि'त्यनन्तरं समाहितं 'भेदत्वविशिष्टवृत्तित्वाभाववत्त्वमुभया-वृत्तित्वमिति गृहाण' इति।

तत्र भेदत्वविशिष्टत्वं वृत्तित्वे विशेषणं भेदत्वविशिष्टस्य वृत्तित्वस्याभाववत्त्व-मुभयावृत्तित्वलक्षणम्। वृत्तित्वे भेदत्ववैशिष्ट्यनियामकसम्बन्धौ द्वौ यत्र स्वा-वच्छिन्नाधिकरणतावन्निरूपितत्वमेको द्वितीयश्च स्व(भेदत्व)विशिष्टा या प्रतियोगिता, तदवच्छेदकावच्छिन्ननिरूपितवृत्तितावत्त्वरूपः। एतद्द्वितीयसम्बन्ध-घटकप्रतियोगितायां भेदत्ववैशिष्ट्यनियामकघटकप्रतियोगितायां भेदत्ववैशिष्ट्य-नियामकसम्बन्धावपि द्वौ इदानीं तत्त्वालोककृतानुक्तौ पूर्वोक्तावेव स्वनिरूपितत्व,-स्वनिष्ठानुयोगित्वानिरूपितत्वरूपौ।

स्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्ननिरूपितवृत्तितावत्त्वरूपोक्तद्वितीय-सम्बन्धघटकवृत्तितावत्तानियामकसम्बन्धावपि द्वौ स्वावच्छेदकसम्बन्धावच्छिन्नत्व,-स्वावच्छेदकावच्छिन्नत्वरूपौ। एतत्सम्बन्धद्वयप्रतियोगिनी वृत्तिता च येन रूपेण यस्योभयावृत्तित्वमिष्टं तद्रूपावच्छिन्ना विवक्षिता।

भेदत्वविशिष्टत्वेन विशेषितस्य वृत्तित्वस्याभावश्च यस्य येन सम्बन्धेनोभया-वृत्तित्वमिष्टं तत्सम्बन्धावच्छिन्नवृत्तित्वीय(तत्सम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिक)स्व-

रूपसम्बन्धावच्छिन्नप्रतियोगिताको विवक्षितः, इतीदानीमनुगतीकृतस्य भेदत्वविशिष्टवृत्तित्वाभाववत्त्वरूपोभयावृत्तित्वस्य विवरणम् 'वैशिष्ट्यञ्चे'त्यादि'स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक' इत्यन्तेन तत्त्वालोककृता व्यधायि।

उक्तस्योभयावृत्तित्वलक्षणस्य तत्तत्संयोगादिगततत्तद्व्यक्तित्वेषु यथा सङ्गतिर्यथा च पूर्वापादितापत्त्यनुपपत्तीनामत्र नावकाशस्तथोपपाद्यते 'एवञ्चे'त्यादिनाऽग्रिमेण। स्वरूपेणोभयावृत्तौ तत्संयोगव्यक्तिनिष्ठतद्व्यक्तित्वे तद्व्यक्तिभेदगतं यद्भेदत्वं तद्भेदत्वविशिष्टा या तद्व्यक्तिगततद्व्यक्तित्वनिष्ठा कालिकसम्बन्धावच्छिन्ना वृत्तिता (उक्तभेदत्वाश्रयभेदप्रतियोगितद्व्यक्तिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितायास्तद्व्यक्तिनिष्ठतद्व्यक्तित्वे सत्त्वात्), तदभावस्य स्वरूपसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य सत्त्वाल्लक्षणसङ्गतिर्भवतीति सङ्क्षेपेण सूचितम्।

तत्संयोगव्यक्तिवृत्तितत्संयोगव्यक्तित्वनिष्ठकालिकसम्बन्धावच्छिन्नवृत्तित्वे तत्संयोगव्यक्तिभेदत्वविशिष्टता च उक्तभेदत्वावच्छिन्नाधिकरणतावत्य[वद्वृत्य]-परघटव्यक्तौ कालिकेन वर्तिनि तत्संयोगव्यक्तिगततद्व्यक्तित्वे सत्त्वेनोक्ताधिकरणतावन्निरूपितत्वरूपप्रथमसम्बन्धस्य, उक्तभेदत्वेन स्वनिरूपितत्व,-स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन विशिष्टा या तत्संयोगव्यक्तिनिष्ठा प्रतियोगिता तदवच्छेदकावच्छिन्ननिरूपितवृत्तितात्वरूपद्वितीयसम्बन्धस्य च सत्त्वात्, अर्थात् कालिकसम्बन्धावच्छिन्ना वृत्तिता यथा तत्संयोगव्यक्तीतरसंयोगव्यक्तिविशेषगततद्व्यक्तित्वे वर्तते, तथैव तत्संयोगव्यक्तिगततद्व्यक्तित्वेऽपि वर्तते, अतो भेदत्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्ननिरूपितत्वस्य तत्र सङ्गतिः, भेदत्वविशिष्टोक्तवृत्तितावत्ता च तत्र वृत्तितायां स्वावच्छेदककालिकसम्बन्धावच्छिन्नत्वात् स्वावच्छेदकतद्व्यक्तित्वत्वावच्छिन्नत्वाच्च।

तत्पर्वतानुयोगिकसंयोगेनोभयावृत्तिवह्नौ पूर्वोक्ताया उभयावृत्तित्वानुपपत्तेः परिहारः 'संयोगादिसम्बन्धावच्छिन्नैव च, न वह्निनिष्ठा' इत्युपन्यस्य सूच्यते तत्त्वालोककृद्भिः। तस्यायं भावो यद् भेदत्वविशिष्टवृत्तित्वान्तर्गता वृत्तिता वह्निनिष्ठा संयोगादिसम्बन्धावच्छिन्ना (संयोगसम्बन्धावच्छिन्ना अथवा समवायसम्बन्धावच्छिन्ना अथवा तत्पर्वतानुयोगिकसंयोगसम्बन्धावच्छिन्ना) न भवति, भेदत्ववैशिष्ट्यनियामकतयोक्तसम्बन्धविरहात्, अपि तु वह्नीतरनिष्ठैव या काचिद् वृत्तिता भेदत्वविशिष्टा भवेत्, तादृशवृत्तिताया अभावस्य विवक्षितोभयावृत्तित्वघटकतत्पर्वतानुयोगिकसंयोगसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिता-

कस्योक्तसम्बन्धेनोभयावृत्तिवह्नौ सत्त्वान्नानुपपत्तिरिति भावः।

पूर्वत्र वाच्यत्व,-तद्व्यक्तित्वान्यतरत्वादिना तद्व्यक्तित्वस्याप्युभयवृत्तित्वेन उक्तान्यतरत्वावच्छिन्नवृत्तित्वाभावस्य विवक्षितसम्बन्धावच्छिन्नप्रतियोगिताकस्य तत्र विरहात् तत्राप्यव्याप्तिरिति यदुक्तमासीत्तत्परिहारोऽत्र 'तद्व्यक्तित्वनिष्ठान्यतरत्वा-वच्छिन्नवृत्तिता च न तद्व्यक्तित्वत्वावच्छिन्ने'त्युपन्यस्य सूचितः। उक्तान्यतरत्वा-वच्छिन्नतद्व्यक्तित्वनिष्ठवृत्तिताया भेदत्वविशिष्टत्वेऽपि तद्व्यक्तित्वत्वावच्छिन्नत्व-विरहात्तत्परिग्रहासम्भवात्।

पूर्वत्र घटत्वेन संयोगेनोभयावृत्तेर्वह्नेर्वह्नित्वेनोभयवृत्तितया तत्राप्यव्याप्तिरिति यदुक्तमासीत्तस्यात्र परिहारो 'घटत्वावच्छिन्नवृत्तिता च न वह्निनिष्ठे'त्युपन्यस्य दर्शितः।

तादृशवृत्तिताया भेदत्वविशिष्टत्वेऽपि तदभावस्य वह्नौ सत्त्वान्नोक्ताव्याप्ति-सम्भवोऽत्रेति तदर्थ इति 'नैकस्यापि दोषस्यात्रावकाश' इति तदग्रे उपन्यस्तम्।

कालिकेनापि गगनादीनामवृत्तित्वे गगनत्वेन गगने उभयावृत्तित्वोपपत्तिः कालिकसम्बन्धावच्छिन्नामपि गगनात्मकव्यक्तिगतवृत्तितामादाय भवितुन्नैव शक्नुयाद्, भेदत्वविशिष्टवृत्तिताप्रसिद्ध्यसम्भवात्तस्मात्कालिकेनापि गगनादीनामवृत्तित्वे गगनत्वेन तत्रोभयावृत्तित्वोपपत्त्यर्थमुक्तपरिष्कारे वृत्तितास्थाने सम्बन्धितैव प्रवेशनीया। तथासति कालिकसम्बन्धावच्छिन्नसम्बन्धिताया भेदत्वविशिष्टत्वसम्भवेन तादृशसम्बन्धिताया अभावस्य विवक्षितसम्बन्धावच्छिन्नप्रतियोगिताकस्य गगनत्वेन गगने सत्त्वादनुपपत्ति-विरहात्।

स्वरूपसम्बन्धावच्छिन्ने तत्संयोगादिगततद्व्यक्तित्वे भेदत्वविशिष्टाया वाच्य-त्वावच्छिन्नवृत्तितायास्तादृशवृत्तित्वाभावस्य विवक्षितसम्बन्धावच्छिन्नप्रतियोगिता-कस्य तत्राभावात् प्राप्तानुपपत्तिपरिहाराय वृत्तितायां भेदत्वविशिष्टतानियामकद्वितीय-सम्बन्धघटकवृत्तितावत्ताप्रयोजकसम्बन्धतया स्वावच्छेदकावच्छिन्नत्वनिवेशः कृतः। तथासति वाच्यत्वावच्छिन्न-तद्व्यक्तित्वनिष्ठवृत्तितावत्त्वस्य तद्व्यक्तित्वत्वावच्छिन्न-वृत्तितायां स्वावच्छेदका(वाच्यत्वा)वच्छिन्नत्वसम्बन्धेन विरहात्तदभावस्य विवक्षित-सम्बन्धावच्छिन्नप्रतियोगिताकस्य तत्राभावेऽपि नानुपपत्तिः।

कालिकसम्बन्धावच्छिन्ना या तद्व्यक्तित्वनिष्ठा वृत्तिता, स्वावच्छेदका(तद्-व्यक्तित्वत्वा)वच्छिन्नत्वसम्बन्धेन तादृशवृत्तितावत्तायाः स्वरूपसम्बन्धावच्छिन्न-तद्व्यक्तित्वनिष्ठवृत्तित्वे सत्त्वेन भेदत्वविशिष्टत्वाद् विवक्षितोक्तसम्बन्धावच्छिन्न-प्रतियोगिताकस्य तदभावस्य स्वरूपसम्बन्धावच्छिन्नायां तद्व्यक्तित्वनिष्ठवृत्तितायां,

विरहात्प्राप्तानुपपत्तिपरिहाराय भेदत्ववैशिष्ट्यप्रयोजकद्वितीयसम्बन्धघटकवृत्तिता-[यां] वृत्ति[ता]वत्ताप्रयोजकद्वितीयसम्बन्धस्य स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशः, तथासति स्वरूपसम्बन्धावच्छिन्नायां वृत्तितायां स्वावच्छेदककालिक-सम्बन्धावच्छिन्नत्वविरहादुक्तानुपपत्तेः परिहारादिति।

प्रकारान्तरेणोभयावृत्तित्वानुगमं विज्ञापयितुं 'यद्वे'त्यादि'पूर्वोक्तसम्बन्धैरेव ग्राह्यमि'त्यन्तोऽग्रिमो भागः। तत्रोच्यते— वस्तुमदन्यत्वमेव वोभयावृत्तित्वम्, वस्तुमत्ता च तत्र स्ववृत्तित्व,-स्वनिष्ठप्रतियोगिताकभेदवद्वृत्तित्वोभयसम्बन्धेन विवक्षिता, तत्संयोगगततद्व्यक्तित्वे वस्तुमत्त्वविरहाद् वस्तुमदन्यत्वसत्त्वाल्लक्षण-सङ्गतिः, तत्र वस्तुमत्त्वविरहश्च तत्संयोगगततद्व्यक्तित्वस्य तत्संयोगव्यक्तिमात्र-वृत्तित्वेन, स्ववृत्तित्व,-स्वनिष्ठप्रतियोगिताकभेदवद्वृत्तित्वोभयसम्बन्धेन कस्यापि वस्तुनोऽसत्त्वात्। अत्रापि = वस्तुमदन्यत्वरूपतयोभयावृत्तित्वानुगमेऽपि, पूर्ववद् = भेदविशिष्टान्यत्वरूपानुगमवद्, दोषवारणाय तद्घटगततद्व्यक्तित्वे तद्घटगगनोभयभेद-मादाय यथाऽव्याप्तिदोषस्तथैवात्रापि उभयभेदमादाय प्राप्तदोषवारणायोक्तानुगमघटको भेदः प्रतियोग्यवृत्तित्वेन पूर्ववदेव विशेषणीयः।

अथवा उभयभेदमादाय प्राप्तदोषानवकाशाय स्वनिष्ठप्रतियोगिताकभेदवद्-वृत्तित्वरूपद्वितीयसम्बन्धस्थाने स्वनिष्ठप्रतियोगिताविशिष्टानुयोगित्वावच्छिन्नाधिकरण-वृत्तित्वसम्बन्ध एव विवक्षणीयः, तत्र सम्बन्धेऽनुयोगित्वे स्वनिष्ठप्रतियोगितावैशिष्ट्यं स्वनिरूपितत्व,-स्वनिरूपकवृत्तित्वोभयसम्बन्धेन विवक्षितम्।

तद्व्यक्तिगततद्व्यक्तित्वे सङ्गतिश्च तद्व्यक्तित्वस्य तद्व्यक्त्यात्मवस्त्वात्म-कस्ववृत्तित्वसत्त्वेऽपि स्वनिष्ठप्रतियोगिताविशिष्टा[1]नुयोगित्वा(तद्व्यक्तिभेदनिष्ठा-नुयोगित्वा)वच्छिन्नाधिकरणतावत्(तद्व्यक्तीतरव्यक्ति)वृत्तित्वविरहेण वस्तुमत्त्व-विरहात्तदन्यत्वस्य सत्त्वात्।

अत्र उक्तद्वितीयसम्बन्धतया स्वनिष्ठप्रतियोगिताविशिष्टानुयोगिताश्रयाधिकरण-वृत्तित्वमनिवेश्य तादृशानुयोगित्वावच्छिन्नाधिकरणवृत्तित्वनिवेशात् तादृशानुयोगित्वस्य यावदधिकरणवृत्तित्वं लब्धं भवति, तेन तद्व्यक्तिगगनोभयभेदमादाय तद्व्यक्तित्वेना-व्याप्तेरवकाशः, अन्यथा तद्व्यक्तित्वे तद्व्यक्तिरूपवस्तुमत्त्वेन तत्राऽव्याप्तिस्स्यात्, तद्व्यक्तित्वे तद्व्यक्तिरूपस्ववृत्तित्वस्य स्वनिष्ठप्रतियोगिताविशिष्टा या तद्व्यक्तिगगनो-भयभेदनिष्ठानुयोगिता तदाश्रयाधिकरणतद्व्यक्तिवृत्तित्वस्य च तत्र सत्त्वात्, उभयभेदस्य

---

१. 'स्वनिरूपितत्व, -स्वनिरूपकवृत्तित्वोभयसम्बन्धेन।

केवलान्वयित्वेन तद्व्यक्तावपि सत्त्वात्, उक्तार्थकतादृशानुयोगित्वावच्छिन्नाधिकरण-वृत्तित्वनिवेशे तु नानुपपत्तिः। अथवा वस्तुमदन्यत्वघटकवस्तुमत्तानियामकभेदघटित-द्वितीयसम्बन्धस्थानेऽनुपदोक्तसम्बन्धमनिवेश्य स्वनिष्ठप्रतियोगितात्वावच्छिन्ननिरूप्य-तानिरूपितनिरूपकतावच्छेदकधर्मावच्छिन्नाधिकरणवृत्तित्वमेव सम्बन्धो निवेश्यः। अत्रापि तद्व्यक्तित्वे सङ्गतिरुभयभेदमादायाव्याप्तेरनवकाशश्च दर्शितदिशा बोध्ये।

अनन्तरं 'यद्वे'त्यादिना दर्शितस्य वस्तुमदन्यत्वस्यापि येन रूपेण यस्योभया-वृत्तित्वं विवक्षितं भवति, वस्तुविशिष्टा तद्धर्मावच्छिन्ना या सम्बन्धिता, तादृश-सम्बन्धित्वाभावे एव तात्पर्यमुच्यते तत्त्वालोककृद्भिः। तत्र सम्बन्धितायां स्व(वस्तु)-निरूपितत्व,-स्व(वस्तु)निष्ठप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकता-वच्छेदकावच्छिन्नाधिकरणतावन्निरूपितसम्बन्धिताविशिष्टत्वोभयसम्बन्धेन वस्तु-विशिष्टत्वं विवक्षितम्। उक्तद्वितीयसम्बन्धघटकसम्बन्धितावैशिष्ट्यं च पूर्वोक्तैनैव स्वावच्छेदकसम्बन्धावच्छिन्नत्व,-स्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, सम्बन्धिता च पूर्ववद् येन रूपेणोभयावृत्तित्वं विवक्षितं तद्रूपावच्छिन्ना, सम्बन्धित्वाभावोऽपि पूर्ववद् येन सम्बन्धेनोभयावृत्तित्वं विवक्षितं तत्सम्बन्धावच्छिन्नसम्बन्धत्वीयस्वरूप-सम्बन्धावच्छिन्नप्रतियोगिताक एव विवक्षितः।

अत्र तत्संयोगादिगततत्तद्व्यक्तित्वरूपोभयावृत्तौ लक्षणसङ्गतिः, तथा तथा तत्तद्विवक्षाप्रयोजनानि च पूर्वदर्शितनिभान्येव ज्ञातव्यानि, अत्रैव खण्डे 'एवञ्चे'त्यादि 'स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य च निवेश' इत्यन्ततत्त्वालोकोक्तानि प्रकाशे प्रकाशितानि।

पूर्वोक्तानुगमप्रकारभिन्नप्रकारेणोभयावृत्तित्वानुगमं दर्शयितुम् 'अथवे'त्यादिना-ऽनन्तरमुच्यते यद् 'अथवा द्वित्वावच्छिन्नवृत्तित्वसामान्ये यन्निष्ठत्व,-यत्सम्बन्धा-वच्छिन्नत्व,-यद्धर्मावच्छिन्नत्वैतत्त्रितयाभावस्तत्त्वमेव तेन सम्बन्धेन तेन रूपेण चोभयावृत्तित्वमि'ति घटसंयोगादिनिष्ठे वृत्तित्वसामान्ये तद्धटतत्संयोगादितत्तद्व्यक्ति-गततद्व्यक्तित्वनिष्ठत्वस्वरूपसम्बन्धावच्छिन्नत्वतद्व्यक्तित्वत्वधर्मावच्छिन्नत्वैतत्त्रि-तयाभावस्य सत्त्वेन तद्व्यक्तित्वे स्वरूपसम्बन्धेन तद्व्यक्तित्वत्वरूपेणोभयावृत्तित्वस्य सङ्गतिः। द्वित्वावच्छिन्नवृत्तित्वसामान्यान्तर्गतनीलपीतघटत्वद्वयगतद्वित्वावच्छिन्न-वृत्तित्वे घटत्वनिष्ठत्व-समवायसम्बन्धावच्छिन्नत्व-घटत्वत्वधर्मावच्छिन्नत्वैतत्त्रित-यस्यैव सत्त्वेन घटत्वे समवायेनोभयावृत्तित्वव्यवच्छेदः। अत्र ये खल्वनुगमप्रभेदा उक्तास्तत्सर्वं शब्दानुगमानुरोधेनैव, अर्थश्च तत्र तत्रोभयावृत्तौ उभयावृत्तित्वरूपो भिन्नभिन्न एव, ततश्च प्रकृते तत्संयोगादिगततद्व्यक्तित्वरूपोभयावृत्तौ भेदविशिष्टान्यत्वे

सति स्वरूपसम्बन्धेन वृत्तित्वरूपमेवोभयावृत्तित्वन्तत्र, भेदविशिष्टता च स्वप्रतियोगि-निरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्व,-स्वानुयोगिनिरूपितस्वरूपसम्बन्धावच्छिन्न-वृत्तित्वोभयसम्बन्धेन, उक्तसम्बन्धद्वयेन तद्व्यक्तिभेदविशिष्टत्वस्य वाच्यत्वादौ सत्त्वात्तदन्यत्वे सति स्वरूपेण वृत्तित्वस्य उक्ततद्व्यक्तित्वे सत्त्वात्तत्र तदुपपत्तिरित्यु-पर्युक्तखण्डस्य प्रकाशः।[१९०]

तत्त्वालोकः – ''तेने''ति।[१] उभयावृत्तिधर्मवदर्थकविशेषपदोपादानेन सम्बन्धस्य यत्त्वतत्त्वेन सामान्योक्तव्याप्तौ प्रवेशेन चेत्यर्थः। ''सिद्धसाधनमि''ति।[२] सिद्धस्य संयोगसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्ना-भावस्य साधनमित्यर्थः।

सामान्यव्याप्तिबलाद्विशेषे हेतौ पक्षधर्मत्वग्रहाद्विशेषसाध्यसिद्धावपि सामान्यव्याप्तेः सम्बन्धविशेषावच्छिन्नत्वाविशेषितप्रतियोगिताकाभावत्वेनैव हेतुसाध्यघटिततया तज्ज्ञानात्संयोगीययावद्विशेषाभावे पक्षधर्मत्वग्रहदशाया-मपि संयोगत्वावच्छिन्नाभावत्वेनैवाभावेऽनुमितिविधेयत्वस्य सम्भवितया तादृशानुमितौ विशेषसाध्यसिद्धित्वेन संयोगसम्बन्धावच्छिन्नसंयोगत्वा-वच्छिन्नप्रतियोगिताकाभावग्रहस्य प्रतिबन्धकत्वेन सिद्धसाधनमिति भावः।

''व्यभिचार''इति।[३] तद्धर्मावच्छिन्नाभावरूपसाध्याप्रसिद्धिवारणाय स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तद्धर्मस्य साध्यत्वे बोध्यम्। [१९१]

*प्रकाशः* – 'यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानि'ति[४] दीधितौ उभयावृत्तिधर्मवदर्थक'विशेष'पदस्य सत्त्वेन यत्तत्सम्बन्धगर्भिततात्पर्यकत्वेन च 'यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताक-यावदभाववान् स तज्जात्यवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववानि'[५]त्यर्थ-परतया जगदीशकृततद्व्याख्यानन्तरं तादृशार्थपरतया तद्व्याख्यानप्रयोजनज्ञापनाय जगदीशेन 'तेन न स्वरूपासिद्धिर्न वा सिद्धसाधनं, जात्युपादानाद् गुरुधर्मस्य

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९
२. तत्रैव, जागदीशीमूलम्, पृ. ९
३. तत्रैव, जागदीशीमूलम्, पृ. ९
४. तत्रैव, दीधितिमूलम्, पृ. ८
५. तत्रैव, जागदीशीमूलम्, पृ. ९

(कम्बुग्रीवादिमत्त्वस्य) प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्ध्यापि न व्यभिचार' इत्युपन्यस्तं जागदीश्याम्।[१] तद्घटकानि 'तेन' 'न सिद्धसाधनम्' 'न वा व्यभिचार' इत्येतानि क्रमशः प्रतीकत्वेन परिगृह्य व्याख्यातुमयमुपर्युक्तः खण्डः।

तत्र 'तेने'त्यस्योक्तदीधितौ "उभयावृत्तिधर्मवदर्थक'विशेष'पदोपादानेन उक्त-सामान्यव्याप्तौ सम्बन्धस्य यत्त्वतत्त्वेन प्रवेशेन चे"ति व्याख्या कृता तत्त्वालोककृद्भिः। तत्र उभयावृत्तिधर्मवदर्थकविशेषपदोपादानेन संयोगत्वसमानाधिकरणगुणत्वसत्तादिक-धर्मावच्छिन्नप्रतियोगिताकाभावस्य तादृशयावद्विशेषाभावान्तर्गतस्य वृक्षात्मके पक्षेऽ-सत्त्वेन स्वरूपासिद्धिदोषानवकाशमुक्त्वानन्तरम् उक्तसामान्यव्याप्तौ सम्बन्धस्य यत्त्व-तत्त्वेन प्रवेशफलं जगदीशेन 'न वा सिद्धसाधनमि'त्युपन्यासेन यद्दर्शितं तत्र 'सिद्धसाधनमि'ति परिगृह्य व्याख्यायते— सिद्धस्य = वृक्षात्मकपक्षे सिद्धस्य, सर्वानुमतस्य संयोगसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नाभावस्य साधनमित्यर्थ इत्यु-पन्यस्य अर्थादुक्तसामान्यव्याप्तौ सम्बन्धस्य यत्त्वतत्त्वेनाप्रवेशे तया सामान्यव्याप्त्या संयोगसम्बन्धावच्छिन्नप्रतियोगिताकः संयोगत्वावच्छिन्नाभावः पूर्वसिद्धः सर्वानुमतः साधितो भवेत् तस्य संयोगत्वावच्छिन्नाभावत्वात्, संयोगसम्बन्धावच्छिन्नप्रतियोगिता-कसंयोगविशेषाभावकूटस्य सम्बन्धविशेषाघटिततादृशयावदभावकूटपदग्राह्यतया तत्र हेतुत्वसम्भवात्, न तु साधनीयस्य समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नाभावस्य सिद्धिरिति।

अत्रेदं यद्युच्येत यदुक्तसामान्यव्याप्तौ यत्त्वतत्त्वेन सम्बन्धस्य प्रवेशविरहेऽपि सामान्यव्याप्तिनिश्चयदशायामपि (धूमो वह्निव्याप्य इत्येवं निश्चयदशायामपि) विशेषहेतौ संयोगेन पर्वतीयधूमे पक्षधर्मत्वग्रहाद् विशेषसाध्यस्य (संयोगेन पर्वतीयवह्नेः) सिद्धिरिव समवायसम्बन्धावच्छिन्नतत्तत्संयोगत्वावच्छिन्नसंयोगयावद्विशेषाभावात्मक-विशेषहेतौ वृक्षात्मकपक्षवृत्तित्वग्रहाद् विशेषसाध्यस्य समवायसम्बन्धावच्छिन्न-प्रतियोगिताकसंयोगत्वावच्छिन्नाभावस्य सिद्धिर्भवितुं शक्नोत्येवेत्यसिद्धस्यैव साधनन्न तु सिद्धस्य साधनमिति तत्र समाधीयते—

सामान्यव्याप्तिबलाद्विशेषहेतौ पक्षधर्मत्वग्रहदशायां तद्बलाद्विशेषसाध्यसिद्धि-र्भवतीति सत्यं किन्तु सामान्यव्याप्तौ यत्त्वतत्त्वेन सम्बन्धस्य प्रवेशासत्त्वे सामान्यव्याप्तेः सम्बन्धविशेषावच्छिन्नत्वाविशेषितप्रतियोगिताकाभावत्वेनैव हेतुसाध्यघटिततया तादृशव्याप्तिज्ञानात्संयोगीययावद्विशेषाभावे समवायसम्बन्धावच्छिन्नप्रतियोगिताके

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १

सम्बन्धविशेषावच्छिन्नत्वाविशेषितप्रतियोगिताकाभावकूटत्वेन वृक्षात्मकपक्षधर्मत्व-ग्रहदशायामपि संयोगत्वावच्छिन्नाभावत्वेनैव, न तु समवायसम्बन्धावच्छिन्न-संयोगत्वाभावेन, अभावे अनुमितिविधेयत्वस्य सम्भवितया तादृशानुमितौ = संयोगत्वावच्छिन्नाभावत्वावच्छिन्नविधेयताकानुमितौ, संयोगसम्बन्धावच्छिन्नसंयोग-त्वावच्छिन्नप्रतियोगिताकाभावनिश्चयस्य सम्बन्धविशेषावच्छिन्नत्वाघटितप्रतियोगि-ताकाभावत्वेन तादृशाभावनिश्चयस्य विशेषसाध्यसिद्धित्वेन प्रतिबन्धकत्वात् सिद्ध-साधनमित्याशयात्।

अर्थात् सामान्यव्याप्तौ यत्त्वतत्त्वेन सम्बन्धस्य प्रवेशविरहे संयोगत्वावच्छिन्न-[अ]भावत्वरूपसामान्यरूपेणापि साध्यविशेषस्य समवायसम्बन्धावच्छिन्नसंयोग-सामान्याभावस्यानुमित्यात्मकसिद्धिर्भवितुन्नार्हति, तदा तादृशानुमितौ संयोगसम्बन्धा-वच्छिन्नसंयोगत्वावच्छिन्नाभावनिश्चयस्य सम्बन्धविशेषावच्छिन्नत्वाविशेषितप्रतियो-गिताकाभावत्वसामान्यरूपेण विशेषसाध्यसिद्धेः प्रतिबन्धकत्वादिति।

'जात्युपादानाद्गुरुधर्मस्य (कम्बुग्रीवादिमत्त्वस्य) प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्ध्याऽपि न व्यभिचार' इति तर्कालङ्कारैरुक्तम्[१]। हेतुघटकतया जातिपदाप्रवेशे यद्धर्मपदेन कम्बुग्रीवादिमत्त्वमादाय तदधिकरणवृत्तिर्यो य उभयावृत्ति-धर्मस्तत्तद्घटत्वादयस्तदवच्छिन्नप्रतियोगिताकानां निखिलतत्तद्घटाभावानां घटरहितदेशे सत्त्वेऽपि तत्र कम्बुग्रीवादिमत्त्वरूपगुरुधर्मावच्छिन्नप्रतियोगिताकाभावरूपसाध्यस्य विरहाद् व्यभिचारः स्यादिति तदर्थात्।

तत्र 'व्यभिचार' इति परिगृह्य तत्त्वालोककृद्भिरुच्यते — यत् तद्धर्मावच्छिन्ना-भाव(कम्बुग्रीवादिमत्त्वरूपगुरुधर्मावच्छिन्नाभाव)रूपसाध्याप्रसिद्धिदोषस्य वारणाय व्यभिचारदोषसद्भावाय च स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तद्धर्मस्य (यद्धर्मसमानाधिकरणधर्मस्य) साध्यत्वे व्यभिचार इति बोध्यम्। तथासति साध्या-प्रसिद्धेरसम्भवाद्व्यभिचारसम्भवाच्च तद्धर्मावच्छिन्नाभावस्यैव साध्यत्वे तु व्यभिचार-दर्शनानौचित्यप्रसङ्गात् साध्याप्रसिद्धिदोषदर्शनस्यैवौचित्यात्, प्रसिद्धसाध्यक एव व्यभिचारदोषात्, स्वावच्छिन्नाभाववत्त्वसम्बन्धेन तद्धर्मस्य साध्यत्वे तु न साध्या-प्रसिद्धिः, तद्धर्मस्य कम्बुग्रीवादिमत्त्वरूपगुरुधर्मस्य प्रसिद्धत्वाद्, व्यभिचारश्च कम्बु-ग्रीवादिमत्त्वरूपगुरुधर्मात्मकसाध्यविरहिणि, कम्बुग्रीवादिमत्त्वधर्मसमानाधिकरणो-भयावृत्तितत्तद्घटत्वधर्मावच्छिन्नप्रतियोगिताकयावद्विशेषाभावात्मकहेतोः सत्त्वादित्यु-पर्युक्ततत्त्वालोकखण्डस्य प्रकाशः।[१९१]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

तत्त्वालोकः— अथ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववद्-वृत्तित्वस्यैव व्यभिचारतया प्रकृतसाध्यतावच्छेदकसम्बन्धस्य वृत्त्यनियामकत्वेन तत्सम्बन्धावच्छिन्नसाध्याभावाप्रसिद्ध्या न तत्सम्भवः, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाङ्गीकारे च जात्युपादानेऽपि विषयितया तत्तद्व्यक्त्यभाववति वह्नित्वेन वह्निविषयकज्ञाने विषयितया वह्नित्वावच्छिन्नाभावासत्त्वेन व्यभिचारो दुरुद्धरस्स्यादिति चेद्।

न। वृत्त्यनियामकसम्बन्धस्य भेदप्रतियोगितावच्छेदकतायाः सर्वानुमततया साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वाभावाभावस्यैव व्यधिकरणसम्बन्धेन व्यापकत्ववारणाय व्यभिचारस्य साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व-साध्यताव्यापकत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वैतत्त्रितयाभाववत्तादृशभेदप्रतियोगितावच्छेदकत्वस्य वा तत्त्वस्य वाच्यतया प्रकृतेऽपि तत्सङ्गतेः।

यद्वा व्याप्तिशरीरे यत्सम्बन्धे वृत्त्यनियामकसम्बन्धान्यत्वं विशेषणीकृत्य वृत्त्यनियामकस्य प्रतियोगितावच्छेदकत्वाभ्युपगमेन व्यभिचारस्य सङ्गमनीयत्वम्बोध्यमिति।[१९२]

*प्रकाशः*—उपर्युक्तखण्डेन 'अथे'त्यादिना शङ्क्यते यत्कम्बुग्रीवादिमत्त्वादिगुरुधर्मेण साध्यतास्थले साध्याप्रसिद्धिवारणाय उक्तसामान्यव्याप्तौ स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तद्धर्मस्यैव साध्यत्वेऽपि तत्र जात्यनुपादाने व्यभिचारो भवितुन्नार्हति, साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वस्यैव व्यभिचारपदार्थतया तत्रसाध्यतावच्छेदकसम्बन्धस्य वृत्त्यनियामकत्वेन साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावप्रसिद्धेर्विरहात्, वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वानङ्गीकारात्।

वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वाङ्गीकारे तु जात्युपादानेऽपि उक्तसामान्यव्याप्तौ व्यभिचारः स्यात्, विषयितासम्बन्धावच्छिन्नतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकतत्तद्वह्निविशेषाभावकूटात्मकहेतुमति विषयितया वह्नित्वेन वह्निमति ज्ञाने वह्नित्वधर्मात्मकसाध्यस्य स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वविरहेण विरहात् तत्र ज्ञाने वह्नित्वेन रूपेण वह्नेरेव विषयितासम्बन्धेन सत्त्वादिति।

अत्र समाधीयते— साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वस्य व्यभिचारत्वन्नाङ्गीकुर्मो येनोक्तापत्तिः स्यात्, किन्तु भेदातिरिक्ताभावप्रतियोगितावच्छेदकत्वस्य वृत्त्यनियामकसम्बन्धे सर्वानुमतत्वविरहेऽपि भेदात्मकाभावप्रतियोगितावच्छेदकताया वृत्त्यनियामकसम्बन्धेऽपि सर्वानुमतत्वेन साध्यतावच्छेदकसम्बन्धप्रतियोगित्वेन सामानाधिकरण्यसम्बन्धेन विशिष्टं यद्धेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं तदभावस्य योऽभावस्तस्यैव व्यभिचारत्वं स्वीकुर्मः, धूमवान् वह्नेरित्यत्र धूमे साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टं हेतुसमानाधिकरण(वह्निमदयोगोलकवृत्ति)धूमवद्भेदप्रतियोगितावच्छेदकत्वस्य सत्त्वेन तदभावविरहात् तदभावाभावस्य सत्त्वाद्व्यभिचारलक्षणसङ्गतिः।

वह्निमान् धूमादित्यत्र पर्वतादिवृत्तिसमवायेन-वह्निमद्भेदमादाय वह्न्यात्मकसाध्ये व्यभिचारातिप्रसक्तिवारणाय हेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वविशेषणतया तत्र साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टत्वस्य निवेशः। तेनोक्तभेदमादायोक्तातिप्रसङ्गस्य निरासः, समवायेन वह्निमद्भेदप्रतियोगितावच्छेदकत्वसंयोगात्मकसाध्यतावच्छेदकसम्बन्धप्रतियोगित्वविरहात्।

उक्तसामान्यव्याप्तौ जात्यनुपादाने कम्बुग्रीवादिमत्त्वादिगुरुधर्मस्यैवोक्तसम्बन्धविशेषेण साध्यतास्थले गुरुधर्मात्मकसाध्ये उक्तव्यभिचारलक्षणसङ्गतिस्तु तत्र साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसत्त्वेन तद्भावविरहात्, तादृशप्रतियोगितावच्छेदकत्वाभावाभावस्य सत्त्वात्।

स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वात्मकवृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताककम्बुग्रीवादिमत्त्वरूपगुरुधर्मात्मकसाध्याभावस्याप्रसिद्धावपि उक्तसम्बन्धेन कम्बुग्रीवादिमत्त्वरूपधर्मात्मकसाध्यवद्भेदस्य प्रसिद्धत्वाद् वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभावेऽपि तस्य प्रतियोगितावच्छेदकताघटकसम्बन्धत्वस्य सर्वसम्मतत्वोक्तेः[1], कम्बुग्रीवादिमत्त्वसमानाधिकरणतत्तद्व्यक्तित्वावच्छिन्नाभावकूटात्मकहेतुमति कम्बुग्रीवादिमत्त्वधर्मस्योक्तसम्बन्धेन विरहात्, तादृशधर्मवद्भेदस्य हेतुसमानाधिकरणत्वसम्भवात्।

जात्युपादाने वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे नोक्तस्थले व्यभिचारप्रसङ्गसम्भवः, विषयितया तत्तद्व्यक्तित्वेन तत्तद्वह्निविशेषाभावकूटवति

---

१. 'वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभावेऽपि प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं सर्वसम्मतमेव।' – प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ४७

वह्नित्वेन वह्निविषयकज्ञाने स्वावच्छिन्नाभाववत्त्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकस्य प्रसिद्धभेदस्यासत्त्वेन वह्नित्वजात्यात्मकधर्मात्मकसाध्ये साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वविरहेण तदभावस्यैव सत्त्वात् तादृशभेदप्रतियोगितावच्छेदकत्वाभावाभावरूपव्यभिचाराभावात्।

दर्शितस्य साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावाभावस्य व्यभिचारपदार्थत्वस्वीकारे व्यभिचारस्य व्यधिकरणसम्बन्धेन व्यापकत्वं प्रसज्येत, अर्थात् साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावाभावः स्वाभाववत्त्वरूपव्यधिकरणसम्बन्धेन यत्र तिष्ठेद् वस्तुतो हेतुव्यापके साध्ये तिष्ठतस्तस्यैव स्वाभाववत्त्वरूपव्यधिकरणसम्बन्धेन व्यभिचारस्य व्यापकत्वं स्यादतो व्यभिचारस्य व्यधिकरणसम्बन्धेन व्यापकत्ववारणाय पूर्वदर्शितस्य व्यभिचारपदार्थत्वमस्वीकृत्य साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यताव्यापकत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वैतत्त्रितयाभाववत्तादृशभेदप्रतियोगितावच्छेदकत्वस्यैव तत्त्वं = व्यभिचारपदार्थत्वमङ्गीकरणीयम्।

धूमवान् वह्नेरित्यत्र धूमात्मके साध्ये हेतु(वह्नि)समानाधिकरणभेद(धूमवद्भेद)-प्रतियोगितावच्छेदकत्वं वर्तते। तत्र साध्यताव्यापकत्वस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकधूमत्वावच्छिन्नत्वस्य च द्वयोः सत्त्वेऽपि साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य विरहेण तत्प्रयुक्तोक्तत्रितयाभाववत्त्वसत्त्वाद् व्यभिचारलक्षणसङ्गतिः।

उक्तसामान्यव्याप्तौ जात्यनुपादाने कम्बुग्रीवादिमत्त्वधर्मस्य स्वावच्छिन्नाभाववत्त्वसम्बन्धेन साध्यत्वे उक्तव्यभिचारलक्षणसङ्गतिस्तु तादृशगुरुधर्मात्मकसाध्ये हेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं वर्तते, तत्र साध्यताव्यापकत्व,-साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वयोश्च सत्त्वेऽपि साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वासत्त्वादुक्तत्रितयाभावस्य सत्त्वात्।

'साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यताव्यापकत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वैतत्त्रितयाभाववत् तादृशभेदप्रतियोगितावच्छेदकत्वस्य वा' इति तत्त्वालोकवाक्ये 'तादृश'पदस्य भेदपदाव्यवहितपूर्वमुपादानस्वारस्यात् प्रतियोगितावच्छेदकत्वपदाव्यवहितपूर्वं तादृशपदानुपादानस्वारस्याच्च विकल्पात्मकैतद्व्यभिचारपदार्थघटकभेदप्रतियोगितावच्छेदकत्वे

साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टत्वविशेषणराहित्यं प्रतीयते, वह्निमान् धूमादित्यत्र साध्यनिष्ठे समवायेन वह्निमद्भेदप्रतियोगितावच्छेदकत्वे उच्यमानव्यभिचारलक्षणातिप्रसङ्गवारणन्तत्र तद्विशेषणमन्तरापि स्यादेव, समवायेन वह्निमद्भेदप्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य साध्यताव्यापकत्वस्य साध्यतावच्छेदकसम्बन्धितावच्छेदकवह्नित्वावच्छिन्नत्वैतत्त्रितयस्यैव सत्त्वेन विवक्षितस्योक्तत्रितयाभाववत्त्वस्य तत्र विरहात्, त्रितयाभावप्रतियोगितया साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्यानुपादाने धूमवान् वह्नेरित्यत्र धूमनिष्ठे हेतुमदयोगोलकवृत्तिसंयोगेन धूमवद्भेदप्रतियोगितावच्छेदकत्वे व्यभिचारलक्षणसङ्गतिर्न स्यात्, तत्र साध्यताव्यापकत्वस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वस्य च द्वयोः सत्त्वात्।

उक्तव्यभिचारपदार्थघटकत्रितयाभावप्रतियोगितया साध्यताव्यापकत्व,-साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वयोरुपादानप्रयोजने गवेषणीये।

अत्रेयं शङ्का जागर्ति— यद् वह्निमान् धूमादित्यत्र धूमवान् वह्नेरित्यत्र च हेत्वधिकरणे संयोगेन घटवद्भेदस्य सत्त्वेन साध्यतावच्छेदकसंयोगप्रतियोगित्वविशिष्टहेतु = धूम - वह्नि,- समानाधिकरण - घटवद्भेदप्रतियोगितावच्छेदकत्वाभावाभावः, साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यताव्यापकत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकावच्छिन्नत्वैतत्त्रितयाभाववद्धेतुसमानाधिकरणघटवद्भेदप्रतियोगितावच्छेदकत्वम्वा कुतो न व्यभिचारः। एवंविधा अन्या अपि शङ्का अत्र समुत्थिता भवन्ति।

संयोगेन घटवद्भेदमादायाभिनवव्यभिचारलक्षणद्वये तादृशभेदप्रतियोगितावच्छेदकत्वाभावाभावे तादृशभेदप्रतियोगितावच्छेदकत्वे च साध्यनिष्ठत्वनिवेशेन निवारणे संयोगेन महानसीयवह्निमद्भेदमादाय वह्निमान् धूमादित्यत्र वह्निनिष्ठतादृशप्रतियोगितावच्छेदकत्वाभावाभावो दर्शितत्रितयाभाववत्तादृशतादृशभेदप्रतियोगितावच्छेदकत्वम्वा व्यभिचारः स्यादित्यादेरस्वारस्यबीजस्य दर्शितव्यभिचारलक्षणद्वये सत्त्वेन व्यभिचारलक्षणापरिवर्तनेन 'यद्वे'त्यादिना पक्षान्तरं [प्रस्तुतम्] तत्त्वालोककृद्भिरिति प्रतीमः।

अपरञ्च 'वृत्त्यनियामकसम्बन्धस्य भेदप्रतियोगितावच्छेदकतायाः सर्वानुमततया' एतदनन्तरम् 'साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टे'त्यारभ्य 'तत्त्वस्य वाच्यतया प्रकृतेऽपि तत्सङ्गतेरि'त्यन्तवाक्ययोजनां तद्वाक्यस्वारस्येन अधोलिखित-

प्रकारेण सम्भावयामः, तद्यथा — व्यभिचारस्य = पूर्वतः प्राप्तस्य, साध्यतावच्छेदक-सम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वस्य, व्यधिकरणसम्बन्धेन = स्वाभाववत्त्व-सम्बन्धेन, व्यापकत्ववारणाय साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टहेतु-समानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावाभावस्यैव साध्यतावच्छेदकसम्बन्धा-तिरिक्तसम्बन्धावच्छिन्नत्वसाध्यताव्यापकत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्न-सम्बन्धितावच्छेदकावच्छिन्नत्वैतत्त्रितयाभाववत्तादृशभेदप्रतियोगितावच्छेदकत्वस्य वा तत्त्वस्य = व्यभिचारत्वस्य वाच्यत्वात्, इत्येषा योजना।

'यद्वे'त्युपन्यस्य तत्त्वालोककृद्भिः पुनरुच्यते — यत् साध्यतावच्छेदक-सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वस्यैव व्यभि-चारपदार्थत्वस्थितौ कम्बुग्रीवादिमत्त्वादिगुरुधर्मस्य स्वावच्छिन्नप्रतियोगिताकाभाव-वत्त्वसम्बन्धेन साध्यतास्थले तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिता-कविशेषाभावकूटवत्त्वात्मकहेतौ व्यभिचारस्य सङ्गतिर्वृत्त्यनियामकसम्बन्धस्य प्रतियो-गितावच्छेदकत्वाभ्युपगमेन, तथासति तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्या-भावाप्रसिद्धिविरहेण न व्यभिचारासम्भवः।

तथा उक्तसामान्यव्याप्तिशरीरघटके यत्सम्बन्धे वृत्त्यनियामकसम्बन्धान्यत्वं विशेषणं देयम्। तेन जात्युपादाने सति वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वे विषयितया तत्तद्व्यक्त्यभाववति वह्नित्वेन वह्निविषयकज्ञाने विषयित्वसम्बन्धा-वच्छिन्नवह्नित्वावच्छिन्नाभावासत्त्वेन पूर्वापादितस्य व्यभिचारस्य विनिवृत्तिरिति प्रकाशः।[१९२]

तत्त्वालोकः — ननु जात्युपादानेऽपि कपालद्वयसंयोगगतकम्बुग्रीवात्व-रूपजातेः स्वाश्रयाश्रयाधिकरणत्वरूपपरम्परासम्बन्धेन समानाधिकरणीभूतो-भयावृत्तिधर्मावच्छिन्नाभावकूटवति तत्सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-प्रतियोगिताकाभाववत्त्वसम्बन्धेन कम्बुग्रीवात्वस्य विरहेण व्यभिचारः, गुण-विभाजकजातित्वेन प्रवेशेऽपि स्वव्याप्यकम्बुग्रीवात्वाश्रयाधिकरणत्वसम्बन्धेन संयोगत्वाधिकरणत्वघटितहेतुमति संयोगत्वस्य विरहेण व्यभिचारो दुर्वार एवेति चेद्, न, समवायेनैव यज्जात्यधिकरणत्वस्य प्रवेशाददोषात्।

न च जात्युपादानमफलम्, गुणत्वविशिष्टस्यापि यत्तदादिपदबोध्यतया यत्त्वतत्त्वेनोपादानसम्भवेन गुणसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभाव-कूटस्य गुणवत्त्वव्यभिचारित्वात्, यादृशस्य च व्याप्तिघटकत्वं तादृशावच्छिन्न-त्वघटित एव साध्यत्वस्य साध्यसंसर्गत्वस्यैव वा व्याप्त्यनुभवगृहीततया

संयोगेन गुणवदभावप्रतियोगितावच्छेदकत्वस्य द्रव्यत्व एव[1] कल्पनेनोक्त-सम्बन्धस्य गुणव्यधिकरणत्वाद्, एवं जातित्वेन जातेरपि यत्त्वतत्त्वेन ग्राह्यतया जात्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य नित्यत्वाविशेषितजातेरेव कल्प-नीयतया व्यभिचाराच्च।

न च येन रूपेणोपादेयता तदवच्छिन्नावच्छेदकत्वस्यैव साध्यघटकत्वे संयोगत्वादेरपि स्वरूपतो यत्पदानुपादेयतया संयोगत्वेन यत्पदोपादेय-संयोगत्वस्य तेन प्रतियोगितानवच्छेदकत्वेन व्यभिचार इति तत्पदोपस्थाप्य-निष्ठावच्छेदकताकत्वस्यैव साध्य:य तत्संसर्गस्य वा घटकताया वाच्यतया गुणत्वेन जातित्वेन गुणजात्यादेरुपादेयत्वेऽपि न दोष इति वाच्यम्,—

गुणावच्छिन्नाभावजात्यवच्छिन्नाभावाद्यनुभवे आनुभविकानां गुणत्व-जातित्वाद्यवच्छिन्नावच्छेदकत्वावगाहिताया एवानुभवारूढत्वेन तस्य तत्पदो-पादेयत्वे जातित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव साध्यत्वा-पत्त्या व्यभिचारस्स्यादेव, संयोगत्वाद्यवच्छिन्नाभावानुभवे च संयोगत्वनिष्ठा-वच्छेदकत्वावगाहिताया एवानुभविकत्वेन तस्य तत्पदोपादेयत्वे तन्निष्ठावच्छे-दकत्वघटितस्य साध्यतायाः संसर्गताया वा प्राप्तत्वेन न दोष इत्येतदर्थस्या-नुभववासनावासितान्तःकरणवेद्यस्य सत्त्वात्। एतदभिप्रायेणैव जात्यवच्छिन्ना-भावाप्रसिद्ध्या व्यभिचारस्य भट्टाचार्योक्तता सङ्गच्छते।

न च जात्युपादानेऽपि जातित्वेन जातेर्यत्पदोपादेयतया व्यभिचार-तादवस्थ्यमिति वाच्यम्, जातिपदसमभिव्याहृतयत्पदस्य जातित्वेन जाति-बोधकत्वासम्भवाज्जातिविशेषाणां बोधस्यैव तथानुभविकत्वात्, स्वविशेषा-न्वितजात्याद्यवच्छिन्नाभावानुभवेऽपि तादृशजातिनिष्ठावच्छेदकताकत्वा-वगाहित्वस्यैव चानुभविकत्वाच्च।

अथैवं सिद्धसाधनप्रसङ्गः, सामानाधिकरण्यसम्बन्धेन शाखादिदेश-कालविशेषावच्छिन्नत्वावच्छिन्नसंयोगत्वनिष्ठावच्छेदकत्वनिरूपकप्रतियोगि-ताकाभावस्य वृक्षे सत्त्वादिति चेद्।

न। यन्निष्ठयत्सम्बन्धावच्छिन्ननिरवच्छिन्ननिरूपकताकसम्बन्धित्व-समानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटवान् यः स तन्निष्ठतत्सम्बन्धा-

---

१. श्रीजगदीशशर्मसम्पादिते तत्त्वालोकमूले 'एवे'ति पाठो नास्ति।

वच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववानिति व्याप्तावेव जात्युपादानकर्त्तुस्तात्पर्य्यात्।

यत्सम्बन्धावच्छिन्नाभावस्य हेतुघटकत्वं तत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य यद्धर्मविशेषणत्वमङ्गीकुर्वतामप्यत्रैव तात्पर्यम्बोध्यमिति।[१९३]

*प्रकाशः* – 'नन्वि'त्याद्युपर्युक्तखण्डेन जातेरुक्तसामान्यव्याप्तावुपादानेऽपि व्यभिचारः शङ्क्यते। तत्रेदमुच्यते यत् कपालद्वयसंयोगात्मककम्बुग्रीवागतकम्बुग्रीवात्वजातेरधिकरणं स्वाश्रयाश्रयाधिकरणत्व(स्वाश्रयाश्रयोऽधिकरणं यस्य तत्त्व)-रूपपरम्परासम्बन्धेन घटः[१], तद्वृत्तिरुभयावृत्तिधर्मस्तत्तद्व्यक्तित्वम्, तद्धर्मावच्छिन्नाभावकूटात्मकहेतुमति कम्बुग्रीवात्वजातेरुक्तपरम्परासम्बन्धावच्छिन्नकम्बुग्रीवात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववत्त्वरूपसाध्यतावच्छेदकसम्बन्धेन वृत्तित्वविरहाद् व्यभिचारः प्रसज्यति। तत्रोक्तहेतुमति दर्शितसाध्यतावच्छेदकसम्बन्धेन कम्बुग्रीवात्वजात्यात्मकसाध्यविरहश्च उक्तपरम्परया कम्बुग्रीवात्वविशिष्टाभावप्रतियोगितावच्छेदकत्वस्य साक्षात्सम्बन्धेन समवायेन घटत्व एव स्वीकारेण कम्बुग्रीवात्वे उक्तपरम्परयाऽनङ्गीकारेण स्वनिष्ठोक्तसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववत्त्वरूपसाध्यतावच्छेदकसम्बन्धस्य कम्बुग्रीवात्वव्यधिकरणत्वात्।

उक्तसामान्यव्याप्तौ गुणविभाजकजातेरेव विवक्षया कम्बुग्रीवात्वे गुणविभाजकजातित्वविरहेणापादितव्यभिचारवारणेऽपि स्वव्याप्यकम्बुग्रीवात्वाश्रयाश्रयाधिकरणत्वरूपपरम्परासम्बन्धेन संयोगत्वजातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटरूपहेतुमति संयोगत्वजातेरुक्तदिशैव स्वनिष्ठोक्तपरम्परासम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववत्त्वसम्बन्धेन स्वव्यधिकरणेन विरहाद् व्यभिचारस्स्यादेवेति।

अत्र समाधीयते— 'समवायेनैव यज्जात्यधिकरणत्वस्य प्रवेशाददोषादि'ति। समवायेनैव जात्यधिकरणत्वस्योक्तसामान्यव्याप्तौ प्रवेशे सति दर्शितपरम्पराभ्यां जात्यधिकरणत्वयोर्व्यावृत्तेरुक्तव्यभिचारद्वयस्य वारणात्।

यद्यपि उक्तसामान्यव्याप्तौ जात्युपादानफलं कम्बुग्रीवादिमत्त्वगुरुधर्मावच्छिन्नाभावाप्रसिद्ध्या प्रसक्तव्यभिचारवारणं तर्कालङ्कारेण पूर्वमेवोक्तं विवृतञ्च

---

१. स्व = कम्बुग्रीत्वं कपालद्वयसंयोगगतजातिविशेषः, तदाश्रयः = कपालद्वयसंयोगः, तदाश्रयः = कपालद्वयम्, तदधिकरणत्वं घटे इति यावत्।

तत्तत्त्वालोककृता[१], तथाप्यत्र प्रसङ्गवशाद्भट्टाचार्योक्तिविशेषाभिधित्सया तत्त्वालोककृतोच्यते— 'न च जात्युपादानमफलमि'ति। तस्य 'जात्युपादानमफलन्नै'त्यर्थः, यतो जात्यनुपादाने गुणत्वविशिष्टस्यापि, अर्थाज्जात्यनात्मकस्य गुणत्वेन गुणस्यापि, यत्तदादिपदबोध्यतया यत्त्वतत्त्वेनोपादनसम्भवेन गुणत्वेन गुणसमानाधिकरणोभयावृत्ति(तत्तद्घटपटादिद्रव्यगततत्तद्व्यक्तित्वरूप)धर्मावच्छिन्नाभावकूटात्मकहेतुमति गुणवत्त्व(गुणात्मक)स्य साध्यस्य स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वात्मकसाध्यतावच्छेदकसम्बन्धेन विरहात् संयोगेन गुणवदभावप्रतियोगितावच्छेदकत्वस्य द्रव्यत्व एव कल्पनेन गुणावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धस्य गुणात्मकगुणवत्त्वव्यधिकरणत्वाद् व्यभिचारः स्यात्।

एतदेव 'गुणसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटस्य गुणवत्त्वव्यभिचारित्वाद्, यादृशस्य च व्याप्तिघटकत्वं तादृशावच्छिन्नत्वघटित एव साध्यत्वस्य साध्यसंसर्गत्वस्यैव वा व्याप्त्यनुभवगृहीततया संयोगेन गुणवदभावप्रतियोगितावच्छेदकत्वस्य द्रव्यत्व एव कल्पनेनोक्तसम्बन्धस्य गुणव्यधिकरणत्वादि'त्युपन्यस्य बोधितं तत्त्वालोककृता।

प्रकृते यादृशस्य(गुणवत्त्वस्य)व्याप्तिघटकता तादृशावच्छिन्न(गुणवत्त्वावच्छिन्न)साध्यसंसर्गस्यैव (गुणवत्त्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसंसर्गस्यैव) व्याप्त्यनुभव(प्रकृत-यत्तद्घटितव्याप्त्यनुभव)गृहीततया संयोगेन गुणवदभावप्रतियोगितावच्छेदकत्वस्य लाघवाद् द्रव्यत्व एव कल्पनेन गुणवत्त्वावच्छिन्नत्वघटितोक्तसाध्यसंसर्गस्य साध्यव्यधिकरणत्वादिति तदाशयः।

उक्तसामान्यव्याप्तौ जात्यनुपादाने 'एवं जातित्वेन जातेरि'त्यादिना व्यभिचारान्तरमपि दर्शयति— उक्तसामान्यव्याप्तौ जात्यनुपादाने जातित्वेन रूपेण जातेरपि उक्तसामान्यव्याप्तिघटकयत्तत्पदपरिग्राह्यत्वसम्भवाज्जात्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य लाघवान्नित्यत्वाविशेषितजातेरेव कल्पनीयतया [व्यभिचारः प्रसज्येत। तथा हि][२]— 'नित्यत्वे सति अनेकसमवेतत्वं' जातिलक्षणम्। तत्र जात्यवच्छिन्नाभावप्रतियोगितावच्छेदकता अनेकसमवेतत्वमात्रांश एव कल्प्यते, यथा— जात्यवच्छिन्नं नित्यत्वविशेषितानेकसमवेतत्वावच्छिन्नं द्रव्यं-गुणः-कर्मैतत्त्रितयमेव तथैव नित्यत्वाविशेषितानेकसमवेतत्वावच्छिन्नमपि द्रव्यं-गुणः-कर्मैतत्त्रितयमेव, यथा च

---

१. प्रकृतग्रन्थे तत्त्वालोक-प्रकाशखण्डः १९१

२. सौकर्येण पाठसङ्गत्यै [ ] कोष्ठकान्तर्गतः पाठो विनिवेशितः।

जात्यवच्छिन्नाभावो द्रव्यातिरिक्त एव तथैव अनेकसमवेतत्वावच्छिन्नाभावोऽपि द्रव्यातिरिक्त एव, अतो जात्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य नित्यत्वाविशेषितजातावेव कल्पने आपत्त्यनुपपत्त्योरभावो लाघवञ्च। ततश्च जातित्वेन जात्यात्मकसाध्यस्य नित्यत्वघटितस्वावच्छिन्नाभाववत्त्वसम्बन्धो व्यधिकरणमेव, तादृशेन स्वव्यधिकरणसम्बन्धेन स्वस्य जातित्वेन जात्यात्मकसाध्यस्य जातित्वेन जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटरूपहेतुमति सत्त्वविरहाद्व्यभिचारः प्रसज्येत इति तदाशयः।

अनन्तरं 'यादृशस्य च व्याप्तिघटकत्वं तादृशावच्छिन्नत्वघटित एव साध्यत्वस्य साध्यसंसर्गत्वस्यैव वा व्याप्त्यनुभवगृहीततये'ति पूर्वोक्तौ 'न च येन रूपेणोपादेयते'-त्यादिना दोषो दर्श्यते। तत्रेदमुच्यते यद् येन रूपेण यत्पदोपादेयता तदवच्छिन्नावच्छेदकत्वस्यैव साध्यघटकत्वे संयोगत्वस्यापि संयोगत्वत्वरूपेणैव यत्पदोपादेयत्वेन स्वरूपतो यत्पदोपादेयत्वविरहेण तेन संयोगत्वत्वेन रूपेण संयोगत्वस्य संयोगसामान्याभावप्रतियोगितावच्छेदकत्वविरहेण संयोगत्वत्वावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववत्त्वसंसर्गस्य संयोगत्वव्यधिकरणत्वात् तेन स्वव्यधिकरणेन सम्बन्धेन संयोगत्वात्मकसाध्यस्य संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटात्मकहेतुमति सत्त्वासम्भवाद् व्यभिचारः स्यात्। एतद्व्यभिचाराभावाय येन रूपेण यत्पदोपादेयता तदवच्छिन्नावच्छेदकत्वघटितस्यैव साध्यत्वं साध्यसंसर्गत्वम्वाऽस्वीकृत्य तत्पदोपस्थाप्यनिष्ठावच्छेदकताघटित एव साध्यत्वस्य साध्यसंसर्गस्य वा स्वीकारे संयोगत्वत्वेन संयोगत्वस्य यत्पदोपादेयत्वेऽपि तत्पदोपस्थाप्याविशेषितसंयोगत्वनिष्ठावच्छेदकत्वघटितस्य साध्यता साध्यसंसर्गता वा स्वीक्रियेत चेत् तदा जात्यनुपादानेऽनुपदोक्तव्यभिचारद्वयमपि न स्यात्, जातित्वेन जातेरर्थान्नित्यत्वविशेषितानेकसमवेतत्वस्य यत्पदोपादेयत्वेऽपि तदवच्छिन्नावच्छेदकत्वस्य साध्यघटकत्वस्य साध्यसंसर्गघटकत्व[स्य] वा विरहेण तत्पदोपस्थाप्यनित्यत्वाविशेषितजातिनिष्ठावच्छेदकत्वघटितस्यैव साध्यतायाः साध्यसंसर्गताया वा सम्भवेन द्वितीयव्यभिचारदोषासम्भवात्, एवं गुणत्वेन गुणस्य यत्पदोपादेयत्वेऽपि तत्पदोपस्थाप्यद्रव्यत्वनिष्ठावच्छेदकत्वघटितस्यैव साध्यतायाः साध्यसंसर्गताया वा सम्भवेन, तादृशस्य संसर्गस्य गुणात्मकगुणवत्त्वरूपसाध्यव्यधिकरणत्वविरहात् प्रथमदर्शितव्यभिचारदोषासम्भवादिति चेद्।

अत्रोच्यते— गुणावच्छिन्नाभावजात्यवच्छिन्नाभावाद्यनुभवे आनुभविकानां गुणत्वजातित्वाद्यवच्छिन्नावच्छेदकत्वावगाहिताया एवानुभवारूढत्वेन तस्य (गुणत्व-

जातित्वाद्यवच्छिन्नावच्छेदकत्वस्य) तत्पदोपादेयत्वे गुणत्वजातित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव साध्यत्वापत्त्या साध्यसंसर्गत्वापत्त्या वा उक्तौ व्यभिचारौ स्यातामेव, संयोगत्वाद्यवच्छिन्नाभावानुभवे च संयोगत्व(निरवच्छिन्नसंयोगत्व)-निष्ठावच्छेदकत्वघटितस्यैव साध्यतायाः साध्यसंसर्गताया वा अनुभवारूढत्वेन तत्स्थलीयदोषासम्भवात्, एतदर्थस्य अनुभववासनावासितान्तःकरणवेद्यस्य सत्त्वात्। एतदभिप्रायेणैव जात्यनुपादाने जातित्वेन जात्यवच्छिन्ना[भावा]प्रसिद्ध्या (तत्र नित्यत्वाविशेषितजातेरेव = अनेकसमवेतत्व एव, अवच्छेदकत्वेन) व्यभिचारस्य भट्टाचार्योक्तता सङ्गच्छते इति।

गुणावच्छिन्नाभावानुभवतः (गुणवान्नास्तीति प्रतीतितः) तथा जात्यवच्छिन्नाभावानुभवतश्च (जातिमान्नास्तीति प्रतीतितश्च) संयोगत्वावच्छिन्नानुभवः (संयोगो नास्तीति प्रतीतिः) विलक्षण एव, अतो यः **संयो**गत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवान् स **स्वावच्छिन्नाभाव**वत्त्वसम्बन्धेन संयोगत्ववानित्यत्र व्यभिचारविरहः, यः गुणवत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवान् स गुणत्वेन गुणावच्छिन्नाभाववत्त्वसम्बन्धेन गुणवत्त्वधर्मवानित्यत्र, एवं यः जातित्वेन जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवान् स जातित्वेन जात्यवच्छिन्नाभाववत्त्वसम्बन्धेन जातिमानित्यत्र च व्यभिचारो भवत्येवेति सारांशः।

अत्र 'न च जात्युपादानेऽपी'त्यादिना शङ्क्यते यज्जात्युपादानेऽपि जातित्वेन जातेर्यत्पदोपादेयतया (यज्जातिपदग्राह्यत्वसम्भवेन गुणत्वविशिष्टप्रथमव्यभिचाराभावेऽपि जातित्वेन जातिमादाय) द्वितीयो व्यभिचारः स्यादेवेति।

तत्र समाधीयते— 'जातिपदसमभिव्याहृतयत्पदस्य जातित्वेन जातिबोधकत्वविरहादि'ति। जातिपदसमभिव्याहृतयत्पदेन घटत्वपटत्वादिजातिविशेषबोधस्यैवानुभवारूढत्वात्, स्वविशेषान्वितजात्यवच्छिन्नाभावानुभवेऽपि (स्वविशेष = जातिविशेषान्वितजात्याद्यवच्छिन्नाभावानुभवेऽपि) घटत्वजातिमान्नास्तीत्याकारकजातित्वाविषयकानुभवस्थलेऽपि तादृश = स्वविशेषघटत्वाद्यन्वित,-जातिनिष्ठावच्छेदकताकत्वावगाहित्वस्यैवानुभववेद्यत्वाच्च, न तु स्वविशेषघटत्वाद्यनन्वितजातित्वेन जातिनिष्ठावच्छेदकताकत्वावगाहित्वस्यानुभववेद्यताऽतो जात्युपादाने नो जातित्वेन जातिमादाय व्यभिचारसम्भव इति।

अनन्तरम् 'अथैवमि'त्यादिना जात्युपादानेऽपि प्रकारान्तरेण सिद्धसाधन-प्रसक्तिरापाद्यते। अथवा उक्तसामान्यव्याप्तौ सम्बन्धस्य यत्त्वतत्त्वेनोपादानेऽपि संयोगत्वावच्छिन्नाभावानुभवे संयोगत्वत्वाविशेषितसंयोगत्वनिष्ठावच्छेदकत्वावगाहिताया एवानुभविकत्वेऽपि सिद्धसाधनं स्यादिति 'अथैवमि'त्यादिना शङ्क्यते।

तत्रेदमुच्यते यत्शाखादिदेशकालविशेषावच्छिन्नत्वं स्वरूपेण शाखादिदेश-कालविशेषावच्छिन्नकप्यादिसंयोगे तिष्ठति, संयोगत्वमपि तत्र संयोगे तिष्ठति, अतः संयोगगतं यद्देशकालविशेषावच्छिन्नत्वम्, तत्सामानाधिकरण्यसम्बन्धेन संयोगत्वे आगच्छति, ततश्च सामानाधिकरण्यसम्बन्धेन शाखादिदेशकालविशेषावच्छिन्नत्वा-वच्छिन्नं यत्संयोगत्वम्, तन्निष्ठावच्छेदकत्वनिरूपकप्रतियोगिताकाभावो वृक्षे पूर्वतो यः सिद्धोऽस्ति (शाखाद्यवच्छिन्नसंयोगगत एव संयोगत्वे सामानाधिकरण्यसम्बन्धेन), शाखादिदेशकालविशेषावच्छिन्नत्वावच्छिन्नं वृक्षावच्छिन्नसंयोगगतसंयोगत्वे तु सामानाधिकरण्यसम्बन्धेन शाखादिदेशकालविशेषावच्छिन्नत्वावच्छिन्नत्वं न ह्येव, अर्थादविशेषितसंयोगत्वनिष्ठावच्छेदकतानिरूपकप्रतियोगिताकाभावस्य प्राचाम्मते वृक्षे सिद्धत्वविरहेऽपि उक्तदिशा देशकालविशेषावच्छिन्नत्वावच्छिन्नसंयोगत्वनिष्ठावच्छेद-कतानिरूपकप्रतियोगिताकाभावस्य तत्र तन्मतेऽपि सिद्धतैव, उक्तसामान्यव्याप्त्या तादृशस्यैव सिद्धस्याभावस्य साधनाद्भवत्येव सिद्धसाधनदोष इति।

अत्र समाधीयते— 'यन्निष्ठयत्सम्बन्धावच्छिन्ननिरवच्छिन्ननिरूपकताक-सम्बन्धित्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटवान् यः स तन्निष्ठतत्सम्ब-न्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववानिति व्याप्तावेव जात्यु-पादानकर्तुस्तात्पर्यादि'ति। एवंसति उक्तसामान्यव्याप्तिघटकहेतुकुक्षौ साध्यशरीरे च निरवच्छिन्नत्वस्य प्रवेशेन सिद्धसाधनविरहात् शाखादिदेशकालविशेषावच्छिन्न-त्वावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य निरवच्छिन्नावच्छेदक-ताकप्रतियोगिताकाभावत्वविरहात्।

उक्तसामान्यव्याप्तिस्वरूपे उक्तदिशा परिष्कृते संयोगत्वनिष्ठसमवायसम्बन्धा-वच्छिन्ना निरवच्छिन्ना[1], न तु केनापि धर्मेणावच्छिन्ना, या निरूपकता, अर्थात् संयोगत्वस्य सम्बन्धिता संयोगे तादृशसम्बन्धिताया या निरूपकता, सा संयोगत्वनिष्ठा समवायसम्बन्धावच्छिन्ना निरवच्छिन्ना च, तादृशसम्बन्धितासमानाधिकरणोभयावृत्ति-धर्मस्तत्तत्संयोगत्वम्, तत्तत्संयोगत्वावच्छिन्नाभावकूटवान् यः स संयोगत्वनिष्ठसमवाय-

---

१. सामानाधिकरण्यसम्बन्धेन शाखादिदेशकालविशेषावच्छिन्नत्वावच्छिन्ना तु न निरवच्छिन्ना।

सम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववान्, सामानाधिकरण्यसम्बन्धेन शाखादिदेशकालविशेषावच्छिन्नत्वावच्छिन्नसंयोगत्वनिरूपकताकसम्बन्धितासमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटस्योक्तदिशा परिष्कृतहेतुत्वेन तथा सामानाधिकरण्यसम्बन्धेन शाखादिदेशकालविशेषावच्छिन्नत्वविशेषितसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य साध्यत्वेन परिग्रहासम्भवात् पूर्वत्र = हेतुभागे संयोगत्वनिष्ठनिरूपकताया, उत्तरत्र = साध्यभागे संयोगत्वनिष्ठप्रतियोगितावच्छेदकताया विवक्षितनिरवच्छिन्नत्वविरहात्।

यत्सम्बन्धावच्छिन्नाभावस्य हेतुघटकत्वं तत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य यद्धर्मविशेषणत्वं मन्वानामपि उक्तपरिष्कृतव्याप्तावेव तात्पर्यादिति भावः।[१९३]

तत्त्वालोकः – "उभयावृत्तिपदवैयर्थ्यमि"ति[१]। वैयर्थ्यमत्र न निष्प्रयोजनकत्वम्, स्वरूपासिद्धिवारकस्य तदसम्भवात् किन्तु विशिष्टान्तरतादृशघटितत्वमेवेति बोध्यम्।

अथ घटसामान्याभावविरहिणि कतिपयघटाभावादिसत्त्वेन व्यभिचारवारणाय 'यावदि'त्युक्तं[२] दीधितिकृता। यावत्त्वञ्चात्र व्यापकत्वार्थकं कूटत्वावच्छिन्नार्थकम्वा वाच्यम्। तत्राद्ये यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकत्वं हेतुः पर्यवसितः, व्यापकत्वञ्च स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन, तत्र कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन घटत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकतात्व एव कल्पनीयतया तादृशाभावस्याप्रसिद्ध्या यत्पदेन कम्बुग्रीवादिमत्त्वस्योपादानासम्भवाज्जातिपदोपादानग्रन्थासङ्गतिःवैयर्थ्यपरोक्तग्रन्थासङ्गतिश्च, उभयावृत्तित्वघटिततदघटिताभावयोर्भेदेन विशिष्टान्तरघटितत्वासम्भवात्।

द्वितीये च तादृशाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिकूटत्वावच्छिन्नस्य हेतुत्वमायातम्, तत्रापि वैयर्थ्यासम्भवः, उभयावृत्तित्वाघटिततद्घटितधर्मावच्छिन्नानुयोगित्वयोर्भेदेन विशिष्टान्तरघटितत्वासम्भवात्। न च

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.९

२. तत्रैव, दीधितिमूलम्, पृ. ८

स्वव्याप्यत्वसम्बन्धेन तादृशाभावत्ववृत्तित्वं हेतुः, विशिष्टाभावत्वस्याभावत्वानतिरिक्ततया व्याप्यत्वासम्भवात्।

तादृशाभावत्वावच्छिन्नानुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमपि न हेतुः, वैयर्थ्यासम्भवाद्धेतोर्विशिष्टान्तरस्य च विभिन्नानुयोगिताघटितत्वात्।

न च यद्धर्मसामानाधिकरण्यनिष्ठावच्छेदकताभिन्नोभयावृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततत्तदवच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपिततद्भिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततदवच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपितानुयोगितानिरूपकपर्य्याप्तिप्रतियोगिकूटत्वत्वेनैव तादृशकूटत्वस्य हेतुतावच्छेदकत्वं वाच्यम्, तथा च तादृशकूटत्वावच्छिन्नाविषयकोभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वाविषयकतादृशकूटत्वविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नघटितत्वेन वैयर्थ्यसम्भव इति वाच्यम्,—

तथासत्युभयावृत्त्यनुपादानेऽपि स्वरूपासिद्ध्यसम्भवात्, उभयावृत्तित्वनिष्ठावच्छेदकत्वानुपादानस्यैव तदनुपादानपर्यवसायित्वेन तादृशानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वत्वस्य सत्ताद्यवच्छिन्नाभावसाधारणकूटत्वोभयावृत्तिधर्मावच्छिन्नाभावमात्रवृत्तिकूटत्वद्वयसाधारणतया तदेकस्य पक्षे सत्त्वादिति चेत्।[१९४]

*प्रकाशः*—उपर्युक्तखण्डेन 'उभयावृत्तिवैयर्थ्यमि'ति जागदीशीमाश्रित्य विचार आरभ्यते। तत्रोच्यते यदुक्तजागदीशीघटकस्य 'वैयर्थ्य'पदस्य प्रयोजनरहितत्वरूपो विवक्षितोर्थोऽत्र भवितुन्नार्हति, स्वरूपासिद्धिवारणफलकस्य प्रयोजनरहितत्वासम्भवात्, तस्माद्विशिष्टान्तर(स्वावच्छिन्नाविषयकप्रतीतिविषय)तादृश(प्रकृतसाध्यव्याप्य)घटितत्वमेवात्र वैयर्थ्यमभिप्रेतम्, यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावस्य विशिष्टान्तरतादृश(यज्जातिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकयावदभावात्मक)घटितत्वात्।

अनन्तरमत्र 'अथे'त्यादिना प्रकृतखण्डान्तिमपङ्क्तिस्थ— 'इति चे'दित्यन्तेन पूर्वपक्षविशेष उपस्थाप्यते, स च पूर्वपक्षः— यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावात्मकहेतुबोधकवाक्यार्थस्य सङ्गतत्वाभावविषयकः,

तदेवोपपादयितुमारभ्यते यद्दीधितिकृताऽत्र हेतुबोधकवाक्ये 'यावदि'ति कतिपय-घटाभावादिमति घटसामान्याभावासत्त्वात्प्राप्तस्य व्यभिचारस्य वारणाय सन्निवेशितं तत्रत्यमभावविशेषणीभूतं यावत्त्वं व्यापकत्वार्थकं कूटत्वावच्छिन्नार्थकम्वा विवक्षितं भवेत्, तत्र प्रथमे द्वितीये वा विकल्पे नो दोषराहित्यम्, तत्र यावत्पदस्य व्यापकत्वार्थकत्वपक्षे स्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन यद्धर्म(यज्जाति)-समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकत्वं हेतुः पर्यवस्यति।

यत्र भूतलविशेषात्मकेऽधिकरणविशेषे यावान् घटविशेषाभावस्तिष्ठति तद्भूतलं स्वनिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन तेषु सर्वेष्वेव घटीयविशेषाभावेषु तिष्ठति। एवंस्थितौ यत्र यत्र घटीयविशेषाभावत्वं तत्र तत्र स्वनिरूपितस्वरूपसम्बन्धा-वच्छिन्नाधेयत्वसम्बन्धेन तद्भूतलात्मकमधिकरणम्, ततश्च तत्र तादृशाभावत्वं यत्पदग्राह्यं व्याप्यं तत्पदग्राह्यञ्च तद्भूतलात्मकमधिकरणं व्यापकम्, तस्मात् तादृशा-भावत्वव्यापकत्वात्मकहेतुमति तद्भूतले घटसामान्याभावात्मकसाध्यस्य सत्त्वाद्धेतु-साध्ययोः सामानाधिकरण्योपपत्तिः, तत्र तद्भूतलनिष्ठं तादृशविशेषाभावत्वव्यापकत्वं तादृशविशेषाभावत्ववति वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावात्मकमेव, तादृश-विशेषाभावत्ववति तद्भूतलस्योक्तसम्बन्धेन सत्त्वेन तद्भूतलवद्भेदविरहाद्भेदप्रतियोगि-तावच्छेदकत्वाभावरूपव्यापकत्वस्य धूमवद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूप-व्यापकत्वस्य वह्नाविव सत्त्वात्।

किन्त्वेवंस्थितौ उक्तसामान्यव्याप्तौ जात्यनुपादाने गुरुधर्मं कम्बुग्रीवादिमत्त्व-मादाय व्यभिचारप्रदर्शकग्रन्थासङ्गतिरुभयावृत्तिपदवैयर्थ्यबोधकग्रन्थासङ्गतिश्च भवतः, यतो हि कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव-वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वरूपाभावप्रतियोगितावच्छेदकताया कम्बुग्रीवादिमत्त्वापेक्षया लघुभूतघटत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगि-ताकाभाववृत्तिभेदप्रतियोगितावच्छेदकतात्व एव कल्पनीयतया कम्बुग्रीवादिमत्त्व-समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेद-कत्वत्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्या जात्यनुपादानेऽपि यत्पदेन कम्बुग्री-वादिमत्त्वरूपधर्मस्य धर्तुमशक्यत्वेन व्यभिचारासम्भवाद् व्यभिचारपरग्रन्थासङ्गतेः, एवमुभयावृत्तित्वघटिताद्व्यापकत्वरूपादभावात् = यज्जातिसमानाधिकरणोभयावृत्ति-धर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपात्, उभया-वृत्तित्वाघटितस्य व्यापकत्वरूपस्याभावस्य यज्जातिसमानाधिकरणधर्मावच्छिन्न-प्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपस्य भिन्नत्वेन उभया-

वृत्तित्वघटितस्य प्रथमतो दर्शितस्य परस्ताद्दर्शितोभयावृत्तित्वाघटितत्वविरहेण विशिष्टान्तरतादृशघटितत्वासम्भवादुभयावृत्तिपदवैयर्थ्योपपादकग्रन्थासङ्गतेश्च। इति 'यावत्'पदस्य व्यापकत्वार्थकत्वपक्षे दोषोपपादनम्।

द्वितीयपक्षे = यावत्पदस्य कूटत्वावच्छिन्नार्थकत्वपक्षेऽपि, न निर्दोषता, यतो हि कूटत्वावच्छिन्नार्थकतापक्षे तादृशाभावत्वावच्छिन्नानुयोगिताक(यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताक)पर्य्याप्तिप्रतियोगिकूटत्वावच्छिन्नस्य हेतुता पर्यवस्यति, तत्रापि उभयावृत्तिपदवैयर्थ्यपरकग्रन्थासङ्गतिः स्यादेव, उभयावृत्तित्वघटितधर्मावच्छिन्नानुयोगिताया उभयावृत्तित्वा- घटितधर्मावच्छिन्नानुयोगितातो भिन्नत्वेन यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नस्य यज्जातिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नघटितत्वविरहेण विशिष्टान्तरतादृशघटितत्वासम्भवात्।

अनन्तरमिदं कथ्यते यत्तादृशाभावत्वव्यापकत्वस्य तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नस्योक्तग्रन्थासङ्गतिदोषाद्धेतुत्वासम्भवेऽपि स्वव्याप्यत्वसम्बन्धेन तादृशाभावत्ववृत्तित्वमेव हेतुरस्तु, घटाद्यनधिकरणीभूततद्भूतलाद्यात्मकाधिकरणविशेषस्योक्तदिशा तादृशाभावत्वव्यापकस्य स्वव्याप्यत्वसम्बन्धेन तादृशाभावत्ववृत्तित्वरूपहेतुमतो घटसामान्याभावात्मकसाध्यवत्त्वाद्धेतुसाध्ययोरैकाधिकरण्योपपत्तिरुक्तग्रन्थद्वयासङ्गतिविरहश्च, स्वव्याप्यत्वसम्बन्धेन तादृशाभावत्ववृत्तित्वस्य हेतुत्वे जात्यनुपादाने कम्बुग्रीवादिमत्त्वात्मकगुरुधर्ममादाय व्यभिचारपरकग्रन्थसङ्गतिसम्भवात्, विशिष्टान्तरतादृशघटितत्वस्यापि सम्भवेन वैयर्थ्यपरग्रन्थसङ्गतिसम्भवाच्चेति।

अत्रोच्यते— यत्स्वव्याप्यत्वसम्बन्धेन तादृशाभावत्ववृत्तित्वस्यापि हेतुता वक्तुमशक्यैव, विशिष्टाभावत्वस्य = यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वविशिष्टाभावत्वस्य, अभावत्वानतिरिक्ततया व्याप्यत्वासम्भवादिति। दर्शिततद्भूतलात्मकाधिकरणवृत्तितद्भूतलत्वाभावेऽपि अभावत्वस्य सत्त्वेन तत्र स्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन तद्भूतलात्मकाधिकरणविरहेण तदात्मकतद्भूतलात्मकाधिकरणस्य अभावत्वव्यापकत्वासम्भवादभावत्वे तद्भूतलव्याप्यत्वस्याप्यसम्भवात् स्वव्याप्यत्वसम्बन्धेन तादृशाभावत्ववृत्तित्वस्य हेतुत्वासम्भवादिति तदाशयात्।

पूर्वोक्तत्रयातिरिक्तस्य चतुर्थस्य सम्भवदुक्तिकतया हेतुत्वमाशङ्क्य निराकर्तुमुच्यते— 'तादृशाभावत्वावच्छिन्नानुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमपि न हेतुरि'त्यादि।

यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ना तादृशाभावनिष्ठा या अनुयोगिता (तादृशाभावप्रतियोगिनिष्ठप्रतियोगितानिरूपिता अनुयोगिता), तादृशानुयोगितानिरूपिता अवच्छेदकता तादृशतत्तद्विशेषाभावगत-विशेषाभावत्वनिष्ठा, ततश्च तादृशाभावत्वावच्छिन्नानुयोगितानिरूपितावच्छेदकतात्वं तत्तदभावत्वगतासु सर्वासु अवच्छेदकतासु, तादृशावच्छेदकतात्वावच्छिन्ना तादृशा-वच्छेदकतानिष्ठा या प्रतियोगिता, तादृशप्रतियोगिताका या पर्याप्तिः, तादृशपर्याप्तेरनुयोगितावच्छेदकं यद्रूपम्, तद्रूपवृत्तित्वमेव हेतुतया विवक्षणीयमिति तदर्थः।

घटसामान्याभावसंयोगसामान्याभावादिरूपसाध्याधिकरणत्वेन विवक्षिततद्भू-तलवृक्षादिरूपाधिकरणविशेषस्य उक्ते विशेषितरूपविशेषे वृत्तिता च स्वरूपसम्बन्धा-वच्छिन्नाधेयतावच्छेदकत्वावच्छिन्नानुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगिताव्च्छेदकत्वसम्बन्धेनाभिप्रेता।

एतदपि उभयावृत्तिपदवैयर्थ्यदर्शकग्रन्थासङ्गतिदोषेण निराक्रियते 'वैयर्थ्या-सम्भवाद्धेतोर्विशिष्टान्तरस्य च विभिन्नानुयोगिताघटितत्वादि'त्यनेन। विभिन्ना-नुयोगित्वघटितयज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वा-वच्छिन्नानुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप-वृत्तित्वहेतोर्विभिन्नानुयोगित्वघटितयज्जातिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताका-भावत्वावच्छिन्नानुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकरूपवृत्तित्वरूपविशिष्टान्तरघटितत्वविरहाद् विशिष्टान्तरतादृशघटितत्वरूप-वैयर्थ्यासम्भवादिति तदर्थात्।

अनन्तरं यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव-कूटात्मकहेतुगतहेतुतावच्छेदकीभूतकूटत्वस्य वक्ष्यमाणविशेषितकूटत्वत्वरूपेण हेतु-तावच्छेदकत्वं स्वीकृत्य उभयावृत्तिवैयर्थ्यस्य सङ्गतिं 'न चे'त्यादि'वैयर्थ्यसम्भव इति वाच्यमि'त्यन्तेन शङ्कते।

तत्रेत्थमभिधीयते यत्तादृशविशेषाभावसमूहगतं यत्कूटत्वम्, तादृशकूटत्वप्रति-योगिकपर्याप्तेरनुयोगिता या तादृशाभावसमुदाये, तादृशानुयोगिताया अवच्छेदकता अभावत्वनिष्ठा, तदवच्छेदकता तत्र विशेषणीभूते प्रतियोगित्वे, तदवच्छेदकता

प्रतियोगित्वविशेषणीभूतेऽवच्छेदकत्वे, तदवच्छेदकता तत्र विशेषणीभूते धर्मे, तदवच्छेदकता तत्र विशेषणीभूतोभयावृत्तित्वे यद्धर्म(यज्जाति)सामानाधिकरण्ये च, ततश्चेतरवारकन्यूनवारकविशेषितयद्धर्म(यज्जाति)सामानाधिकरण्यनिष्ठावच्छेदकता-भिन्न, -तथा उभयावृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता उक्तावच्छेद-कताद्वयनिरूपिता च या धर्मनिष्ठावच्छेदकता, तन्निरूपितधर्मभिन्ननिष्ठावच्छेदकत्वा-निरूपिता या अवच्छेदकत्वनिष्ठावच्छेदकता, तन्निरूपिता अवच्छेदकत्वभिन्ननिष्ठा-वच्छेदकत्वानिरूपिता या प्रतियोगित्वनिष्ठावच्छेदकता (यद्धर्मसमानाधिकरणोभया-वृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्व इत्यत्र), यद्धर्मसामानाधिकरण्यवान् य उभया-वृत्तिधर्मस्तादृशधर्मनिष्ठा यावच्छेदकता, तादृशावच्छेदकतानिरूपिता निरूपिका वा या प्रतियोगिता, तादृशप्रतियोगिताको योऽभावस्तत्त्वमित्यर्थस्तेन तत्रत्यप्रतियोगित्वे अवच्छेदकत्वं विशेषणं, तादृशप्रतियोगित्वं च निरूपितत्वसम्बन्धेनाभावे विशेषणं, तादृशाभावत्वावच्छिन्ना अनुयोगिता तादृशाभावनिष्ठा(कूटत्वप्रतियोगिकपर्याप्तेरनुयो-गिता), तादृशानुयोगितानिरूपिका या पर्याप्तिः, तादृशपर्याप्तिप्रतियोगिभूतं यत्कूटत्वं, तद्गतकूटत्वत्वरूपेणैव तादृशाभावकूटगतस्य कूटत्वस्य हेतुतावच्छेदकता स्वीक्रियते।

एवंसति वैयर्थ्यासङ्गतिर्न भवति, तदेवोपपादयति 'तथा चे'त्यादिना। तथा च तादृशकूटत्वावच्छिन्नाविषयक(विशिष्टान्तर)उभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपि-तत्वाविषयकतादृशकूटत्वविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नघटितत्वेन वैयर्थ्य-सम्भव इति, अर्थाद् उभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वाविषयिणी तादृश-कूटत्वविषयिका प्रतीतिः, यद्धर्मसामानाधिकरण्यनिष्ठावच्छेदकताभिन्नोभयावृत्तित्व-निष्ठावच्छेदकताभिन्नधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वनिष्ठावच्छेदकताभिन्ना-वच्छेदकत्वानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावत्वनिष्ठावच्छेदकता-निरूपितानुयोगितानिरूपकपर्याप्तिप्रतियोगिकूटत्वविषयिका प्रतीतिः, सा न उभया-वृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वविषयिणी, अतस्तादृशकूटत्वावच्छिन्नाविषयक-उभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वघटितकूटत्वावच्छिन्नाविषयक(विशिष्टा-न्तर)तादृशकूटत्व(दर्शितकूटत्व)विषयकप्रतीतिविषयतावच्छेदकावच्छिन्नघटितत्वेन वैयर्थ्यं विशिष्टान्तरतादृशघटितत्वरूपं सम्भवत्येवेति तदर्थः, दर्शितस्य इतरवारकन्यून-वारकोभयघटितस्वरूपस्येतरवारकघटितत्वावश्यंभावात्। अत्रापि प्रकारे अनुयोगित्व-प्रवेशसत्त्वात् पूर्ववत्तयोर्भेदेन वैयर्थ्यासम्भवो नैव वक्तुं शक्यः, हेतुतावच्छेदककूटत्वो-पस्थापकरूपे साधारणरूपेणैवानुयोगित्वस्य प्रविष्टत्वेन तद्भेदप्रयुक्तविशिष्टान्तरतादृशा-घटितत्वासम्भवादिति प्रतीमः।

अत्र 'तथासत्युभयावृत्त्यनुपादानेऽपि स्वरूपासिद्ध्यसम्भवादि'त्यादिना समाधीयते। दर्शितविशेषितपर्याप्तिप्रतियोगिकूटत्वत्वरूपेण तादृशकूटत्वस्य हेतुतावच्छेदकत्वस्वीकारे दर्शितदिशा वैयर्थ्यसम्भवेऽपि उभयावृत्त्यनुपादानेऽपि स्वरूपासिद्धिर्न स्यात्, यतो हेतुतावच्छेदककूटत्वोपस्थापकरूपे उभयावृत्तित्वनिष्ठावच्छेदकत्वानुपादानमेव उभयावृत्तित्वानुपादानं पर्यवस्यति, उभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वाविषयकतादृशानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वत्वस्य सत्ता(उभयवृत्तिता)द्यवच्छिन्नाभावसाधारणकूटत्वोभयावृत्तिधर्मावच्छिन्नाभावमात्रवृत्तिकूटत्वद्वयसाधारणतया तदेक(उभयावृत्तिधर्मावच्छिन्नाभावमात्रवृत्तिकूटत्व)वतः पक्षे वृक्षात्मकद्रव्ये सत्त्वेन हेत्वभावस्य पक्षेऽसत्त्वात्स्वरूपासिद्ध्यसम्भवात्।

उभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वघटित(यद्धर्मसामानाधिकरण्यादिभिन्नावच्छेदकत्वानिरूपितत्वघटित)यद्धर्मसामानाधिकरण्यादिनिष्ठावच्छेदकत्वनिरूपितत्वघटिते इतरवारकन्यूनवारकविशेषणघटितमहाकायकूटत्वे महावाक्येऽवान्तरवाक्यघटितत्वस्येव उक्तमहाकायकूटत्वान्तर्गततदन्तर्गतोभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वाघटिततदतिरिक्तघटितकूटत्वघटितत्वाद्वैयर्थ्यसम्भवेऽपि उभयावृत्तित्वानुपादाने, अर्थादुभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितत्वानुपादाने, उभयावृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वाघटिततदितरपूर्वोक्ताशेषघटितकूटत्वत्वस्य सत्ताद्यवच्छिन्नाभावसाधारणकूटत्वोभयावृत्तित्वधर्मावच्छिन्नाभावमात्रवृत्तिकूटत्वोभयसाधारणतया तदेकस्य = उभयावृत्तिधर्मावच्छिन्नाभावमात्रवृत्तिकूटत्ववतः, पक्षे वृक्षात्मकद्रव्ये सत्त्वेन स्वरूपासिद्धेरभावादित्याशयः।[१९४]

तत्त्वालोकः– उच्यते। यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वकूटत्वोभयरूपेणैव परामर्शीयपक्षविशेष्यतानिरूपितप्रकारत्वरूपहेतुत्वं यावद्विशेषाभावस्य विवक्षितं तत्र तादृशाभावे कूटत्वस्य स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तिरेव संसर्गः। संसर्गता च न तादृशपर्याप्तित्वेन किन्तु पर्याप्तित्वेनैव, वह्नित्वावच्छिन्नप्रतियोगित्वस्य प्रतियोगितात्वेन संसर्गतावत्।

एवञ्च तादृशपर्याप्तित्वविशिष्टसंसर्गेण विशिष्टान्तरतावच्छेदककूटत्वस्य व्याप्यतानवच्छेदकत्वेऽपि न क्षतिः, तादृशस्य हेतुतावच्छेदकताघटकसम्बन्धत्वविरहात्, यथा च शुद्धप्रतियोगितात्वेन प्रतियोगित्वस्य तादृशसंसर्गत्वेऽपि वह्निविशिष्टोऽभावो न महानसीयवह्न्यभावस्तथोक्तपर्याप्तेः पर्याप्तित्वेन संसर्गत्वेऽपि तादृशाभावकूटवत्त्वं न कतिपयाभाववतीति न व्यभिचारः।

**तथा चोभयावृत्तित्वानुपादाने यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभाव-कूटस्य हेतुतया तत्र कूटत्वस्य तादृशाभावत्वव्यापकपर्याप्तिरेव संसर्गत्वेन स्वरूपासिद्धिसङ्गतिः, यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिता-काभावकूटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्धर्मसमानाधिकरण-धर्मावच्छिन्नप्रतियोगिताकाभावकूटत्वावच्छिन्नविषयकत्वस्य हेतुविषयक-प्रतीतौ सत्त्वेन वैयर्थ्यसङ्गतिश्च। उक्तकूटत्वयोर्विलक्षणपर्याप्तिरूपहेतुतावच्छेद-कताघटकसम्बन्धेन हेतौ वर्तमानत्वावर्तमानत्वाभ्यां वैलक्षण्येऽपि कूटत्वत्वेन निखिलकूटत्वस्यैव हेतुतावच्छेदकत्वात् समवायेनावृत्तेरपि प्रमेयस्य समवायेन प्रमेयाभावप्रतियोगित्वप्रमेयवदभावप्रतियोगितावच्छेदकत्ववत्।[१९५]**

*प्रकाशः* – उपर्युक्तखण्डेन 'उच्यते' इत्यादिना पूर्वखण्डोत्थापितशङ्कायाः समाधानं विधीयते। तत्रेदमुच्यते यद् यावद्विशेषाभावस्य (यज्जातिसमानाधिकरणो-भयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावद्विशेषाभावस्य) हेतुतां परामर्शीय[पक्ष]-विशेष्यतानिरूपितप्रकारतात्मिका यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्न-प्रतियोगिताकाभावत्व,-कूटत्वैतदुभयरूपेणैव विवक्षिता, तत्र तादृशाभावे = याव-द्विशेषाभावे, यावद्विशेषाभावात्मकहेतावित्यर्थः, हेतुतावच्छेदकतया दर्शितरूपद्वयान्त-र्गतकूटत्वस्य संसर्गः स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तिरेव। अत्र 'स्व'पदग्राह्यं कूट-त्वम्, तदुद्देश्यं तादृशाभावः, उद्देश्यतावच्छेदकं तादृशाभावत्वम्, तद्व्यापकीभूता या पर्याप्तिस्तदात्मकः संसर्गः। तदात्मकसंसर्गस्य संसर्गता न तादृश(स्वोद्देश्यतावच्छेद-कव्यापक)पर्याप्तित्वेन, किन्तु पर्याप्तित्वसामान्यरूपेणैव, वह्न्यभाव इत्यत्र अभावे वह्नेर्वह्नित्वावच्छिन्नप्रतियोगित्व(तादृशप्रतियोगित्वनिरूपकत्व)स्य यथा प्रतियोगिता-त्वसामान्यरूपेणैव संसर्गता भवति, न तु वह्नित्वावच्छिन्नप्रतियोगितात्वात्मकविशेष-रूपेण, तथैव हेतुतावच्छेदककूटत्वसंसर्गस्य तादृशाभावत्वव्यापकपर्याप्तेः पर्याप्तित्व-सामान्यरूपेणैव संसर्गता।

प्रयोजनं दोषाभावञ्च दर्शयति— 'एवञ्च तादृशपर्याप्तित्वविशिष्टसंसर्गेण विशिष्टान्तरतावच्छेदककूटत्वस्य व्याप्यतानवच्छेदकत्वेऽपि न क्षतिः, तादृशस्य हेतुतावच्छेदकताघटकसम्बन्धत्वविरहात्, यथा च शुद्धप्रतियोगितात्वेन प्रतियोगि-त्वस्य तादृशसंसर्गत्वेऽपि वह्निविशिष्टोऽभावो न महानसीयवह्न्यभावस्तथोक्तपर्याप्तेः पर्याप्तित्वेन संसर्गत्वेऽपि तादृशाभावकूटवत्त्वं न कतिपयाभाववतीति न व्यभिचार' इत्यादिना।

विशिष्टान्तरतावच्छेदककूटत्वस्य = यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटत्वस्य, तादृशपर्याप्तित्वविशिष्टसंसर्गेण = यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकपर्याप्तित्वसंसर्गेण, व्याप्यतानवच्छेदकत्वेऽपि न क्षतिः, तादृशस्य हेतुतावच्छेदकताघटकसम्बन्धत्वविरहात्, पर्याप्तित्वस्यैव तथात्वात्, पर्याप्तित्वविशिष्टसंसर्गेण विशिष्टान्तरतावच्छेदककूटत्वस्य व्याप्यतावच्छेदकत्वादिति तदर्थात्।

अत्र 'तथा चे'त्यादिना स्वरूपासिद्धिसङ्गतिं वैयर्थ्य(उभयावृत्तिपदवैयर्थ्य)-सङ्गतिञ्च स्वयमेव सुस्पष्टयति तत्त्वालोककृत्। तथा चोभयावृत्तित्वानुपादाने यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटस्य हेतुतया तत्र कूटत्वस्य (हेतुतावच्छेदकद्वयघटककूटत्वस्य) तादृशाभावत्वव्यापकपर्याप्तेरेव (यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटत्वव्यापकपर्याप्तेरेव पर्याप्तित्वेन) संसर्गत्वेन स्वरूपासिद्धिसङ्गतिः, तादृशकूटान्तर्गतस्य सत्ताद्यवच्छिन्नाभावस्य वृक्षात्मकद्रव्यात्मकपक्षेऽसत्त्वात्।

यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदक(विशिष्टान्तरतावच्छेदक)यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटत्वावच्छिन्नविषयकत्वस्य हेतुविषयकप्रतीतौ (यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवान् वृक्ष इति प्रतीतौ) सत्त्वेन वैयर्थ्यसङ्गतिश्च।

पुनश्च सुस्पष्टयति— उक्तकूटत्वयोः = यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटत्व, -यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटत्वयोः, विलक्षणपर्याप्तिरूपहेतुतावच्छेदकताघटकसम्बन्धेन हेतौ वर्तमानत्वावर्तमानत्वाभ्यां वैलक्षण्येऽपि (दर्शितकूटत्वद्वयान्तर्गतप्रथमकूटत्व[स्य] स्वीयोद्देश्यतावच्छेदकव्यापकपर्याप्तिरूपविलक्षणहेतुतावच्छेदकसम्बन्धेन वर्तमानता, उक्तकूटत्वद्वयान्तर्गतद्वितीयकूटत्वस्य दर्शितविलक्षणसम्बन्धेन हेतुतावच्छेदकताघटकेनावर्तमानता, अतस्तयोः कूटत्वयोर्वैलक्षण्येऽपि) कूटत्वत्वेन निखिलकूटत्वस्यैव हेतुतावच्छेदकत्वाद् द्वयोः कूटत्वयोर्भिन्नत्वेऽपि क्षत्यभावात्, यथा समवायसम्बन्धेनावृत्तेरपि प्रमेयस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावप्रतियोगिता अथ च समवायेन प्रमेयवदभावप्रतियोगितावच्छेदकता भवति तथैव दर्शितविलक्षणपर्याप्तिरूपहेतुतावच्छेदकताघटकसम्बन्धेन हेतौ अवर्तमानस्यापि उक्तकूटत्वद्वयान्तर्गतापरकूटत्वस्य कूटत्वत्वेन हेतुतावच्छेदकत्वसम्भवादित्याशयादिति प्रकाशः।[१९५]

तत्त्वालोकः— ननु हेतुतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदक[1]प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यवच्छेदक[2]हेतुतावच्छेदकसमानाधिकरणवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्यैव व्यर्थविशेषणघटितत्वरूपत्वम्वाच्यम्, अन्यथा नीलधूमत्वस्य धूमत्वानतिरेकेण धूमत्वावच्छिन्नविषयताया नीलधूमत्वावच्छिन्नत्वात् तत्र वैयर्थ्यासम्भवात् द्रव्यं घटवृत्तिसत्त्वादित्यादौ घटवृत्तिसत्तात्वावच्छिन्नविषयकतादृशविषयताशून्यप्रतीतिविषयतावच्छेदकेन व्याप्यतावच्छेदकविशिष्टसत्तात्वानतिरिक्तेन सत्तात्वेनावच्छिन्नविषयताकत्वस्यैव हेतुप्रतीतौ सत्त्वेन वैयर्थ्यप्रसङ्गाच्च।

तथा च यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटवानिति प्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकसत्तावदभावादिप्रतियोगित्वसाधारणसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यत्वस्य हेतुमत्त्वप्रतीतौ सत्त्वेन न वैयर्थ्यसम्भव इति।

यत्तु— यद्धर्मसमानाधिकरणत्वमात्रेण वास्तवोभयावृत्तिधर्ममात्रावगाहियद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटवानिति प्रतीतिमादाय वैयर्थ्यसम्भवः, तत्र सत्तावदभावादेरविषयत्वेन तत्प्रतियोगित्वसाधारणसमुदायत्वस्य धारणासम्भवादिति।

तन्न, तादृशप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकस्य व्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविरहात्तस्य सत्त्वावच्छिन्नप्रतियोगित्वादिसाधारणसमुदायत्व उभयावृत्तित्वसाधारणसमुदायत्वे वा सत्त्वात्।[१९६]

*प्रकाशः*— उपर्युक्तखण्डेन 'नन्वि'त्यादिना 'न वैयर्थ्यसम्भव' इत्यन्तेन प्रकृते पुनर्वैयर्थ्यासम्भवं प्रकारान्तरेण शङ्कते। तत्रेदमुच्यते यद् व्यर्थविशेषणघटितत्वं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकावच्छिन्न-

---

१. 'अवच्छेदके'त्यस्याग्रिमेण 'रूप' इत्यनेन सम्बन्धः।
२. 'पर्याप्त्यनुयोगितावच्छेदके'त्येवं पाठः स्यादिति सम्भाव्यते।

घटितत्वं रूपं भवितुन्नार्हति, तथासति नीलधूमे व्यर्थविशेषणघटितत्वन्नोपपद्येत, धूमत्वस्य नीलधूमत्वानतिरेकेण धूमत्वावच्छिन्नविषयताया नीलधूमत्वावच्छिन्नत्वाद् धूमत्वस्य नीलधूमत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वविरहात्, द्रव्यं घट-वृत्तिसत्त्वादित्यादौ वैयर्थ्यविरहिणि वैयर्थ्यप्रसङ्गाच्च घटवृत्तिसत्तात्वावच्छिन्नविषयता-शून्यपटवृत्तिसत्तात्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकस्य सत्तात्वस्य द्रव्यत्व-रूपप्रकृतसाध्यव्याप्यतावच्छेदकघटवृत्तिसत्तात्वानतिरिक्ततया तदवच्छिन्न(सत्तात्वा-वच्छिन्न)विषयकत्वस्यैव हेतु(घटवृत्तिसत्तात्मकहेतु)विषयकप्रतीतौ सत्त्वात्।

अतो नीलधूमे व्यर्थविशेषणघटितत्वसम्पादनाय द्रव्यं घटवृत्तिसत्त्वादित्यत्र घटवृत्तिसत्तायां तदभावाय च अन्यादृशमेवाधोवक्ष्यमाणं व्यर्थविशेषणघटितत्वं वाच्यम्, तथासति प्रकृते वृक्षात्मकद्रव्ये संयोगसामान्याभावसाधकतया दर्शित-सामान्यव्याप्तिघटकदर्शितहेतौ उभयावृत्तिपदवैयर्थ्यसम्भवो न स्यादिति पूर्वपक्षस्य सारः।

उक्तानुपपत्त्यापत्त्योः परिहाराय व्यर्थविशेषणघटितत्वम् हेतुतावच्छेदकतात्वा-वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्ना(हेतुतावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्ना)नुयोगिताकपर्याप्तिकावच्छेदकताकविषयता-कत्वशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकप्रकृत-साध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यवच्छेदक(प्रकृतसाध्य-व्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक)हेतुतावच्छे-दकसमानाधिकरणवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्य-ज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं वाच्यम्।

वह्निमान् नीलधूमादित्यत्र तत्समन्वयश्च हेतुतावच्छेदकतात्वा(वच्छेदक-तात्वा)[1]वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपं तत्र नीलत्वधूमत्वगतं द्वित्वम्, तत्र रूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वशून्या या प्रतीतिः सा केवलधूमविषयिणी प्रतीतिस्तादृशप्रतीतिविषयतावच्छेदकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तथा प्रकृतसाध्यव्याप्यतावच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकञ्च हेतुतावच्छेदक(नीलधूमत्व)समा-नाधिकरण(धूमत्व)वृत्तिरूपं = धूमत्वगतैकत्वं, तादृशरूपावच्छिन्नानुयोगिताकपर्याप्ति-

---

१. ( ) कोष्ठकान्तर्गतः पाठोऽधिकः प्रतीयते।

कावच्छेदकताकविषयता धूमत्वावच्छिन्ना धूमविषयता तादृशविषयताशून्यं ज्ञानन्नो नीलधूमविषयकम्, किन्तु तद्भिन्नमेव घटादिविषयकं ज्ञानम्, तादृशज्ञानविषयतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य नीलत्वधूमत्वगतद्वित्वे सत्त्वादुपपत्तिः।

द्रव्यं घटवृत्तिसत्त्वादित्यत्र च नो वैयर्थ्यप्रसङ्गसम्भवः, यतो हि तत्र घटवृत्तित्वसत्तात्वगतद्वित्वात्मकहेतुतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपे विवक्षितं तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वन्न भवति।

तत्र स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यकेवलसत्ताविषयकप्रतीतिविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसत्तात्वगतैकस्य प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविरहात् (केवलसत्तात्वस्य द्रव्यत्वात्मकप्रकृतसाध्यव्याप्यतावच्छेदकत्वविरहात्)।

एवंसति प्रकृते 'यो यदीययावद्विशेषाभाववानि'त्यादिसामान्यव्याप्तिस्थले वैयर्थ्यासम्भवं स्वयमुपपादयति 'तथा चे'त्यादिना। तथा च यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटवानिति प्रतीतिविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकसत्तावदभावादिप्रतियोगित्वसाधारणसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यत्वस्य हेतुमत्त्वप्रतीतौ सत्त्वेन न वैयर्थ्यसम्भव इति।

तत्र उभयावृत्तित्वघटितहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं सत्तावदभावादिप्रतियोगित्वसाधारणसमुदायत्वभिन्नं समुदायत्वविशेषात्मकम्, तत्र रूपे तादृशसमुदायत्वविशेषावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वशून्या या प्रतीतिः सा यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानित्याकारिका सत्तावदभावादिविषयिणी प्रतीतिः, तादृशप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं सत्तावदभावादिप्रतियोगित्वसाधारणसमुदायत्वं प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकहेतुतावच्छेदकसमानाधिकरणवृत्तिरूपम्, तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यज्ञानम् उभयावृत्तित्वघटितहेतुमत्त्वविषयकं ज्ञानम्, तादृशज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यैव तत्र रूपे सत्त्वेन विवक्षितस्य तादृशपर्याप्त्यनुयोगि-

तानवच्छेदकत्वस्य तत्र विरहादिति भावः।

उपपादितपूर्वपक्षस्य 'यो यदीययावद्विशेषाभाववानि'त्यादिसामान्यव्याप्तौ वैयर्थ्यासम्भवरूपस्य समाधानं 'यत्तु' मतेन विधीयते 'यत्तु यद्धर्मसमानाधिकरणत्वमात्रेणे'त्यादिना। उक्तपूर्वपक्षसमाधानायेदं कथ्यते यद् वास्तविको य उभयावृत्तिधर्मः, यद्धर्मसमानाधिकरणत्वमात्रेण न तु यद्धर्मसमानाधिकरणोभयावृत्तित्वेनापि, तादृशधर्ममात्रावगाहिनी (वास्तवोभयावृत्तिधर्ममात्रावगाहिनी) या यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानिति प्रतीतिः, तादृशप्रतीतिमादाय प्रकृतसामान्यव्याप्तिस्थले वैयर्थ्यं सम्भवेदेव, न तु वैयर्थ्यासम्भवः, यतो हि यद्धर्मसमानाधिकरणत्वमात्रेण वास्तवोभयावृत्तिधर्ममात्रावगाहियद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानिति प्रतीतौ सत्तावदभावादेर्विषयत्वविरहेण सत्तावदभावादिप्रतियोगित्वसाधारणसमुदायत्वस्य धारणासम्भवात् = उभयावृत्तित्वघटितो यः प्रकृतहेतुस्तद्धेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकात्मकं यत् स्वम्, तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वेन धारणासम्भवात्, दर्शितसमुदायत्वस्य उक्तपर्याप्त्यनुयोगितावच्छेदकत्वेन धारणाभावे तादृशप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकहेतुतावच्छेदकसमानाधिकरणवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्य- (यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानिति ज्ञानविषयताशून्य)-ज्ञानं न यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानिति हेतुविषयकं ज्ञानं, तस्य यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानिति ज्ञानविषयताकत्वात्, किन्तु हेत्वविषयकमेव ज्ञानम्, तादृशज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वरूपस्य व्यर्थविशेषणघटितत्वस्य हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे सत्त्वादिति।

उपर्युपपादितं यत्तुमतं 'तन्ने'त्यादिना निरस्यते। तत्रेदमुच्यते यत् तादृशप्रतीति- (यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानिति यद्धर्मसमानाधिकरणत्वमात्रेण वास्तवोभयावृत्तिधर्ममात्रावगाहिप्रतीति) विषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकस्य प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविरहात् तस्य = प्रकृतसाध्यव्याप्यता-

वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वावच्छिन्न-प्रतियोगित्वादिसाधारणसमुदायत्वे उभयावृत्तित्वसाधारणसमुदायत्वे वा सत्त्वादिति।

यद्धर्मसमानाधिकरणत्वमात्रेण उभयावृत्तिधर्ममात्रावगाहियद्धर्मसमानाधिकरण-धर्मावच्छिन्नप्रतियोगिताकाभावकूटवानिति प्रतीतिविषयतात्वावच्छिन्नपर्याप्त्यनुयोगि-तावच्छेदकं कथन्न प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्य-नुयोगितावच्छेदकमिति चेदुच्यते— तादृशप्रतीतेः यद्धर्मसमानाधिकरणत्वमात्रेण वस्तुत उभयावृत्तिधर्ममात्रावगाहित्वेऽपि यद्धर्मसमानाधिकरणोभयावृत्तिधर्मत्वेन तदन-वगाहित्वात् यद्धर्मसमानाधिकरणधर्मत्वेनैव तदवगाहित्वात्, सत्त्वाद्यवच्छिन्नप्रतियो-गित्वसाधारणसमुदायत्वानवगाहित्वाच्चेति प्रतीम इत्युपर्युक्तखण्डस्य प्रकाशः।[१९६]

तत्त्वालोकः – **अन्ये तु— निरवच्छिन्नावच्छेदकत्वस्यैव व्यर्थविशेषण-घटितत्वघटकत्वमित्यभ्युपगमेन प्रकृते उभयावृत्तित्वविशेषणस्य व्यर्थतामुप-पादयन्ति। तथा हि हेतुतावच्छेदकघटकानामवश्यं कुत्राप्यनवस्थाभयेन स्वरूपतो भानमभ्युपेयम्, तथा चोभयावृत्तित्वघटकस्वरूपतो भासमाननिष्ठा-वच्छेदकत्वस्यापि निरवच्छिन्नतया तद्घटितवृत्तिसमुदायत्वस्यैव हेतुतानिरूपि-तनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेद-कतया तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यं विशिष्टान्तरघटकस्वरूपतोभानयोग्याखिलप्रकारकसमूहालम्बनज्ञानमादाय व्याप्यतावच्छेदक[१]- तात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकस्य व्याप्यता-निरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्ववत्तया तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यत्वस्य हेतु-मत्त्वज्ञाने विरहेण वैयर्थ्यसम्भव इति वदन्ति।**

**तदसत्। निरवच्छिन्नावच्छेदकत्वस्य व्यर्थविशेषणघटितत्वघटकत्वा-वश्यकत्व एव हि तत्सम्भवति। न च तस्यावश्यकत्वम्, तथा हि धूमवतो हेतुत्वे धूमधूमत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताक-विषयताशून्यधूमत्वेन तद्धूमावगाहिधूमवद्वानिति ज्ञानविषतावच्छेदकतात्वा-वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकतद्धूमधूमत्वगतद्वित्वमादाय वैयर्थ्यवारणाय हेतुतावच्छेदकतायान्निरवच्छिन्नत्वमभिमतं तत्रोक्तद्वित्वस्य व्याप्यतावच्छेदक-तापर्याप्त्यनुयोगितावच्छेदकत्वविरहेण दोषस्यैवाभावाद् धूमवतो व्याप्यत्वे**

---

१. 'विषयतावच्छेदके'ति पाठो जगदीशशर्मसम्पादिते सिद्धान्तलक्षणतत्त्वालोकमूले

धूमत्वनिखिलधूमगतसमुदायत्वे तद्धूमवतो व्याप्यत्वे तत्तासहितसमुदायत्वे वा तस्य भावान्न तदुपादेयम्।

एवं हेतुमत्त्वविषयकज्ञाने धूमत्वतद्धूमगतद्वित्वावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकत्वकविषयत्वस्यापि न सम्भवः। तथा हि तादृश-पर्याप्तीया प्रतियोगिता न तज्ज्ञानीयविषयतावच्छेदकतात्वावच्छिन्ना, तन्नि-रूपकपर्याप्त्यनुयोगितावच्छेदकत्वस्य समुदायत्व एव सत्त्वात्।

नापि तद्धूमातिरिक्तधूमावृत्त्यवच्छेदकतात्वावच्छिन्ना, अवच्छेदक-भेदेनावच्छेदकताभेदस्याप्रामाणिकत्वात्। नापि तद्धूमधूमत्वान्यतरवृत्तित्व-विशिष्टावच्छेदकतात्वावच्छिन्ना, किञ्चिन्निष्ठनिरूपितत्वसम्बन्धावच्छिन्ना-वच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नभेदनिष्ठावच्छेदकता-भिन्नावच्छेदकत्वानिरूपितत्वस्य प्रतियोगित्वविशेषणतया विवक्षणीयत्वात्।

अत एव जातिमद्धेतुकस्थले धूमत्वगतैकत्वं विशिष्टान्तरविषयतावच्छे-दकतापर्याप्त्यनुयोगितावच्छेदकमादाय वैयर्थ्यवारणाय तादृशरूपावच्छिन्ना-नुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतायान्निरवच्छिन्नत्वोपादानमप्यपास्तम्, धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयता-कत्वविरहात्, तादृशविषयताशून्यहेतुविषयकज्ञानविषयतावच्छेदकतात्वा-वच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतानिरूपितनिरवच्छिन्नावच्छेदक-तापर्याप्त्यनुयोगितावच्छेदके सत्त्वाच्च।

एवन्नीलधूमवद्धेतुके विशिष्टान्तरविषयतावच्छेदकगतधूमधूमत्वगत-समुदायत्वस्य स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनिरवच्छिन्नावच्छेद-कत्वप्रसिद्धेर्धूमत्वगतैकत्वस्य व्याप्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगि-तावच्छेदकत्वविरहेण धारणासम्भवेऽपि वैयर्थ्यासम्भववारणाय व्याप्यता-वच्छेदकतायान्निरवच्छिन्नत्वोपादानमपि न कार्यमिति चेत्।[१९७]

*प्रकाशः* — उपर्युक्तखण्डेन अन्ये प्रकृते वैयर्थ्यमित्थमुपपादयन्ति यद् धूमवतो हेतुतास्थले = संयोगसम्बन्धावच्छिन्नस्वनिष्ठाधेयतानिरूपिताधारत्वसम्बन्धेन तादा-त्म्यसम्बन्धेन वा धूमविशिष्टस्य हेतुतास्थले, धूमस्यापि हेतुतावच्छेदकान्तर्गततया हेतुतावच्छेदकीभूतधूमधूमत्वोभयगतसमुदायत्वस्यैव हेतुतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपत्वेन तत्र रूपे तद्रूपात्मकं यत् स्वम्, तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वशून्य = धूमत्वेन तद्धूमा-

वगाहि(न तु सकलधूमावगाहि)धूमवद्वानिति, प्रतीतिविषयतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकहेतुतावच्छेदकधूमधूमत्वसमानाधिकरणवृत्ति-रूप(तद्धूमधूमत्वगतद्वित्व)मादाय तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदक-ताकविषयताशून्य(सकलधूमधूमत्वविषयकधूमवद्वानित्यस्य हेतुविषयकज्ञानस्योक्त-विषयताशून्य)त्वविरहेण ज्ञानान्तरविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वात्प्रसक्तवैयर्थ्यवारणाय निरवच्छिन्नावच्छेदकत्वस्यैव व्यर्थविशेषणघटितत्वघटकतया निवेशः कार्यस्तथासति प्रकृते वैयर्थ्यस्योपपत्तिः धूमवतो हेतुतास्थले प्रसक्तवैयर्थ्यस्य निवृत्तिश्च भवेतामिति तदेवोपपादयन्ति — 'निरवच्छिन्नावच्छेदकत्वस्यैव व्यर्थविशेषणघटितत्वघटकत्वमि'त्यादिना 'वैयर्थ्य-सम्भव' इत्यन्तेन।

हेतुतावच्छेदकघटकानामनवस्थाभयेनावश्यं कुत्रापि स्वरूपतोभानमभ्युपेयं तथा चोभयावृत्तित्वघटकस्वरूपतोभासमाननिष्ठावच्छेदकत्वस्यापि निरवच्छिन्नतया तद्घटितवृत्तिसमुदायत्वस्यैव (उभयावृत्तित्वघटकस्वरूपतोभासमानहेतुतावच्छेदक-घटितवृत्तिसमुदायत्वस्यैव) हेतुतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रति-योगिताकपर्याप्त्यनुयोगितावच्छेदकतया तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छे-दकताकविषयताशून्यं विशिष्टान्तरघटकस्वरूपतोभानयोग्याखिलप्रकारकसमूहालम्बन-ज्ञानमादाय (विशिष्टान्तर = उभयावृत्तित्वाघटित = यद्धर्मसमानाधिकरणधर्मावच्छिन्न-प्रतियोगिताकाभावकूटघटकस्वरूपतोभानयोग्याखिलप्रकारकसमूहालम्बनज्ञानमादाय) तादृशज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकस्य व्याप्यता = प्रकृतसाध्यव्याप्यता, - निरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकत्ववत्तया तदवच्छिन्नानुयोगिताक = विशिष्टान्तरघटक-स्वरूपतोभानयोग्याखिलप्रकारकसमूहालम्बनज्ञानविषयतावच्छेदकताप्रतियोगिक-पर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताक, -पर्याप्तिप्रतियोग्यवच्छेदकताक-विषयताशून्यत्वस्य हेतुमत्त्वज्ञाने विरहेण तादृशविषयताशून्यज्ञानान्तरविषयतावच्छेद-कतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य उक्तरूपे सत्त्वाद् वैय-र्थ्यसम्भव इत्यन्ये वदन्ति।

तदसत्, यतो निरवच्छिन्नावच्छेदकत्वस्य व्यर्थविशेषणघटितत्वघटकत्वा-वश्यकत्वे एव अन्यैरुपपादितदिशा प्रकृतहेतुघटकोभयावृत्तित्वभागस्य वैयर्थ्य-सम्भावना, किन्तु निरवच्छिन्नावच्छेदकत्वस्य व्यर्थविशेषणघटितत्वघटकत्वा-वश्यकतैव नास्ति, यतो हि तत्प्रयोजनवत्तया सम्भाविते धूमवतो हेतुतास्थले तत्र

निरवच्छिन्नावच्छेदकत्वानिवेशेऽपि दोषो न स्यात्, सावच्छिन्नावच्छेदकताकधूम-धूमत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यंधूमत्वेन तद्धूमावगाहितद्धूमवानिति ज्ञानविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकतद्धूमधूमत्वगतद्वित्वमादाय धूमवतो हेतुतास्थले वैयर्थ्यं भवितुन्नार्हति, तद्धूम-धूमत्वगतद्वित्वस्य व्याप्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वस्य अपेक्षितस्य विरहात्, धूमवतो हेतुतास्थले धूमत्वनिखिलधूमगतसमुदायत्वस्यैव व्याप्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वात्, तद्धूमवतो हेतुतास्थले च तत्तासहितधूमधूमत्व-समुदायत्वविशेषे एव व्याप्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वसद्भावात्तत्ता-रहितसमुदायत्वविशेषे तदभावात्। एतदेव 'निरवच्छिन्नावच्छेदकत्वस्ये'त्यादि 'न तदुपादेयमि'त्यन्तवाक्यकदम्बेन सूचितम्।

व्यर्थविशेषणघटितत्वस्य निरवच्छिन्नावच्छेदकत्वाघटितत्वेऽपि धूमवतो हेतु-तास्थले धूमत्वतद्धूमगतद्वित्वस्य व्याप्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्व-विरहोपपादनेन दोषाभावमुपपाद्यापरथापि तत्र दोषाभावम् 'एवं हेतुमत्त्वविषयकज्ञाने' इत्यादिनोपपादयति। तत्र धूमत्वतद्धूमगतद्वित्वे व्याप्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वमभ्युपेत्यापि न तत्र वैयर्थ्यसम्भवः, हेतुमत्त्वविषयकज्ञाने धूमत्वतद्धूमगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकत्वकविषयत्वसम्भवाभावात्। तथासति तादृशविषयताशून्यहेतुमत्त्वविषयकज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रति-योगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यैव हेतुतावच्छेदकतात्वावच्छिन्नपर्याप्त्य-नुयोगितावच्छेदकरूपे सत्त्वेन विवक्षितस्य तादृशानुयोगितानवच्छेदकत्वस्य विरहाद्दोषासम्भवाद् (वैयर्थ्यासम्भवात्)।

हेतुमत्त्वविषयकज्ञाने यथा धूमत्वतद्धूमगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्ति-प्रतियोग्यवच्छेदकताकविषयत्वविरहस्तथोपपादयति 'तथाही'त्यादिना। तथा हि तादृशपर्याप्तीया प्रतियोगिता[१] यतो न तज्ज्ञानीय= हेतुमत्त्वविषयकज्ञानीय,-विषयतावच्छेदकतात्वावच्छिन्ना अतो न हेतुमत्त्वविषयकज्ञाने धूमत्वतद्धूमगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकत्वकविषयत्वसम्भवः। तादृशपर्याप्तीया प्रतियोगिता कुतो न हेतुमत्त्वज्ञानीयविषयतात्वावच्छिन्ना ? इति जिज्ञासाशमनायोक्तम् 'तन्निरूपक= हेतुमत्त्वज्ञानीयविषयतावच्छेदकतात्वनिरूपक,-पर्याप्त्यनुयोगितावच्छेदकत्वस्य समुदायत्व एव= धूमत्वनिखिलधूमगतसमुदायत्व एव, सत्त्वादि'ति।

---

१. अत्र 'तादृशपर्याप्ति'पदेन धूमत्व-तद्धूमगतद्वित्वावच्छिन्नानुयोगिताका पर्याप्तिर्ग्राह्या।

उक्तपर्याप्तीया प्रतियोगिता यथोक्तकारणतस्तज्ज्ञानीय(हेतुमत्त्वज्ञानीय)विषयतावच्छेदकतात्वावच्छिन्ना न, तथैवावच्छेदकभेदेनावच्छेदकताभेदस्याप्रामाणिकत्वकारणात् तद्धूमातिरिक्तधूमावृत्त्यवच्छेदकतात्वावच्छिन्नापि न, धूमत्वतद्धूमात्मकावच्छेदकभेदेनावच्छेदकताभेदाभावात्।

उक्तपर्याप्तीया प्रतियोगिता तद्धूमधूमत्वान्यतरवृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्नापि न। तत्र कारणमुपन्यस्तम् — 'किञ्चिन्निष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नभेदनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वस्य प्रतियोगित्वविशेषणतया विवक्षितत्वादि'ति। तद्धूमधूमत्वान्यतरवृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्नायाः पर्याप्तेः प्रतियोगितायाः किञ्चिन्निष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नभेदनिष्ठावच्छेदकताभिन्नोक्तान्यतरवृत्तित्व,-अथवा तादृशवृत्तित्ववैशिष्ट्य,-निष्ठावच्छेदकतानिरूपितत्वेन विवक्षितानिरूपितत्वविरहात्।

अनन्तरमिदमुच्यते यद् हेतुतावच्छेदकतायां निरवच्छिन्नावच्छिन्नत्वस्य यथा धूमवतो हेतुत्वे तद्धूमधूमत्वगतद्वित्वमादाय वैयर्थ्यवारणाय व्यर्थविशेषणघटितत्वघटकत्वावश्यकता नास्ति तथैव जातिमतो हेतुतास्थले धूमत्वगतैकत्वं विशिष्टान्तरविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकमादाय वैयर्थ्यवारणाय तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतायां निरवच्छिन्नत्वस्य व्यर्थविशेषणघटितत्वघटकत्वावश्यकता नास्ति। तत्र कारणं दर्श्यते — धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताकत्वविरहात् = हेतुमत्त्वविषयकज्ञाने विरहाद्, हेतुमत्त्वविषयकज्ञानविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वस्य समुदायत्व एव (जातित्वघटितसमुदायत्व एव) सत्त्वादिति।

वैयर्थ्यापत्तिविरहेऽपरं कारणं दर्शितं 'तादृशविषयताशून्यहेतुविषयकज्ञानविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतानिरूपितनिरवच्छिन्नावच्छेदकतापर्याप्त्यनुयोगितावच्छेदके सत्त्वाच्चे'त्युक्त्या। तस्यायं भावो यत्तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यहेतुविषयज्ञानविषयतां धूमनिष्ठामादाय तादृशविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदके धूमत्वगतैकत्वे सत्त्वात्तादृशपर्याप्त्यनुयोगितानवच्छेदकत्वस्य व्यर्थविशेषणघटितत्वघटकतया विवक्षितस्य विरहान्न वैयर्थ्यम्, अन्येषाम्मते हेतुतानिरूपितनिरवच्छिन्नावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकरूपे तादृशपर्याप्त्यनुयोगितानवच्छेदकत्वविवक्षणादिति।

तन्मते यथा हेतुतानिरूपितावच्छेदकतायान्निरवच्छिन्नत्वनिवेशस्तथैव तादृश-रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतायामपीति बोध्यम्, तदनुमतस्त-दुभयत्र निरवच्छिन्नत्वनिवेशोऽत्र खण्डितः।

नीलधूमवद्धेतुकस्थले विशिष्टान्तरविषयतावच्छेदकधूमधूमत्वगतसमुदायत्वस्य स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनिरवच्छिन्नावच्छेदकत्वप्रसिद्धेर्धूमत्वगतै-कत्वस्य व्याप्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वविरहेण धारणा-ऽसम्भवेपि वैयर्थ्यासम्भववारणाय व्याप्यतावच्छेदकतायान्निरवच्छिन्नत्वोपादानमपि न कार्यम्।

एतदुक्तेरयमाशयो यन्नीलधूमवद्धेतुकस्थले व्यर्थविशेषणघटितत्वमिष्टम्, तत्र व्यर्थविशेषणघटितत्वलक्षणसङ्गतिः नीलधूमहेतुकस्थल इव धूमत्वगतैकत्वमादायैव भवितुं शक्नोति, किन्तु धूमत्वगतैकत्वन्तत्र व्याप्यतावच्छेदकताप्रतियोगिकपर्याप्त्य-नुयोगितावच्छेदकमेव भवितुन्नार्हति, व्याप्यतावच्छेदकतायास्तत्र धूमेऽपि सत्त्वाद्, अतो व्याप्यतावच्छेदकतायां निरवच्छिन्नत्वनिवेशस्तत्र धूमत्वगतैकत्वं परिगृह्य व्यर्थविशेषणघटितत्वसम्पादनाय कार्यः।

तत्र निरवच्छिन्नत्वनिवेशे सति निरवच्छिन्नव्याप्यतावच्छेदकत्वस्य धूमत्वमात्रे तत्र सत्त्वेन धूमत्वगतैकत्वस्य व्याप्यतावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगिता-वच्छेदकत्वमुपपद्यते— इत्येतत्कथनखण्डनाय तत्रोक्तं 'नीलधूमवद्धेतुके विशिष्टा-न्तर(धूमवत्)विषयतावच्छेदकधूमधूमत्वगतसमुदायत्वस्य स्वावच्छिन्नानुयोगिताक-(तादृशसमुदायत्वावच्छिन्नानुयोगिताक)पर्याप्तिप्रतियोगिनिरवच्छिन्नावच्छेदकत्व-प्रसिद्धेरि'ति। (निरवच्छिन्नाया धूमत्वनिष्ठावच्छेदकतायास्तादृशसमुदायत्वावच्छिन्ना-नुयोगिताकपर्याप्तिप्रतियोगित्वेन तत्प्रसिद्धिस्तत्प्रसिद्धिप्रदर्शनञ्च तादृशरूपावच्छिन्ना-नुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतायान्निरवच्छिन्नत्वनिवेशाभिप्रायेण)।

तादृशसमुदायत्वं (धूमधूमत्वगतसमुदायत्वं) परिधृत्य तत्र व्यर्थविशेषणघटि-तत्वलक्षणसङ्गतिः कर्तुं शक्या, तदर्थं व्याप्यतावच्छेदकतायान्निरवच्छिन्नत्वोपादानं न कार्यमिति तदाशयः।

एवमुपरिप्रतिपादितरीत्या प्रासङ्गिकसामान्यव्याप्तौ हेतुघटकोभयावृत्तिपद-वैयर्थ्यसमर्थकान्यमतखण्डने जाते 'तथाचे'त्यादि 'न वैयर्थ्यसम्भव' इत्यन्तेन १९६ संख्यकखण्डगतेनोभयावृत्तिपदवैयर्थ्याभावशङ्का सुस्थिरैवेति 'इति चेदि'त्यन्तेन बोधिते, 'उच्यते' इत्यादिनाऽग्रिमखण्डगतेन तत्र समाधीयते इति।[१९७]

तत्त्वालोकः – उच्यते। स्वावच्छिन्नाधिकरणतावद्वृत्तित्वसम्बन्धेन धूमत्वविशिष्टद्रव्यहेतुके स्वाश्रयप्रतियोगिकत्वसम्बन्धेन धूमत्वविशिष्टप्रागभावहेतुकस्थले च विशिष्टान्तरतावच्छेदकधूमत्वस्य हेतुतावच्छेदकसमानाधिकरणतया तद्गतैकत्वमादाय वैयर्थ्यवारणाय हेतुविशेषणवैयर्थ्यस्थले व्यर्थविशेषणघटितत्वशरीरे समानाधिकरणवृत्तित्वस्थाने हेतुत्वावच्छेद्यविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वं विशेषणं देयम्।

एवञ्च हेतुतावच्छेदकविशेषणस्य नैल्यादेर्नीलधूमवतो हेतुतायां वैयर्थ्यसम्पादनायावच्छेदकतावच्छेदकत्वघटितत्वं व्यर्थविशेषणघटितत्वं वाच्यम्, तत्र धूमत्वविशिष्टद्रव्यवतो हेतुतास्थले व्यर्थविशेषणत्वस्य धूमत्वे वारणाय विशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकतासामानाधिकरण्यं विशेषणतया विवक्षणीयम्, तथासति प्रकृतेऽपि वैयर्थ्यसम्भवः, सत्त्वाद्यवच्छिन्नप्रतियोगित्वादीनामुक्तविशेष्यतानवच्छेदकत्वात्, व्याप्यतावच्छेदकतावच्छेदकत्वेऽपि तादृशविशेष्यतावच्छेदकतासामानाधिकरण्यं विशेषणमन्यथा नीलधूमविशिष्टवद्धेतुकस्थले धूमत्वगतैकत्वस्य धारणन्न स्यादिति तु न वाच्यम्, विशिष्टसत्तावतो हेतुत्वेऽपि वैयर्थ्यं स्याद्वैशिष्ट्यनिष्ठावच्छेदकत्वे व्याप्यतावच्छेदकतानिरूपित उक्तसामानाधिकरण्यविरहात्, किन्तु व्याप्यतावच्छेदकतायामुक्तविशेष्यताविशिष्टत्वं वाच्यम्, वैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितप्रकारतासमानाधिकरणावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेनेत्यलम्।[१९८]

*प्रकाशः* – १९६ तमे खण्डे उपपादितवैयर्थ्यासम्भवस्य समाधानायात्रोच्यते यद् हेतुविशेषणवैयर्थ्यस्थले हेतुतावच्छेदकविशेषणवैयर्थ्यस्थले च नैकविधमेव व्यर्थविशेषणघटितत्वम्, किन्तु किञ्चिद्विभिन्नमेव, नीलधूमत्वस्य धूमत्वानतिरेकेण नीलधूमहेतुकस्थले प्राप्तवैयर्थ्यासम्भववारणाय पूर्वलक्षितव्यर्थविशेषणघटितत्वस्य सत्त्वे नीलधूमहेतुकस्थल इव स्वावच्छिन्नाधिकरणतावद्वृत्तित्वसम्बन्धेन धूमत्वविशिष्टद्रव्यहेतुकस्थले तथा स्वाश्रयप्रतियोगिकत्वसम्बन्धेन धूमत्वविशिष्टप्रागभावहेतुकस्थलेऽपि च विशिष्टान्तरतावच्छेदकधूमत्वस्य हेतुतावच्छेदकधूमत्वसमानाधिकरणतया धूमत्वगतैकत्वमादाय व्यर्थविशेषणघटितत्वमापद्येत्, अतो हेतुविशेषणवैयर्थ्यस्थले व्यर्थविशेषणघटितत्वशरीरघटकं हेतुतावच्छेदकसमानाधिकरणवृत्तित्वन्निष्कास्य तत्स्थाने हेतुत्वाबच्छेद्या या विशेष्यता, तादृशविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं प्रवेश्यम्।

तथासति स्वावच्छिन्नाधिकरणतावद्वृत्तित्वसम्बन्धेन धूमत्वविशिष्टद्रव्यहेतुकस्थले स्वाश्रयप्रतियोगिकत्वसम्बन्धेन धूमत्वविशिष्टप्रागभावहेतुकस्थले च हेतुत्वावच्छेद्यविशेष्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य पूर्वत्र धूमत्वद्रव्यत्वगतद्वित्वे परत्र धूमत्वप्रागभावत्वगतद्वित्व एव सत्त्वेन धूमत्वगतैकत्वे तदभावाद्धूमत्वगतैकत्वपरिग्रहासम्भवान्न तदादाय तत्र व्यर्थविशेषणघटितत्वापत्तिर्नवा नीलधूमहेतुकस्थले तदनुपपत्तिस्तत्र धूमत्वगतैकत्वे हेतुतावच्छेदकसमानाधिकरणवृत्तित्वस्येव हेतुत्वावच्छेद्यविशेष्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्यापि सद्भावात्। समानाधिकरणविषयतयोरवच्छेद्यावच्छेदकभावस्वीकारेण हेतुतासमानाधिकरणविशेष्यताया हेतुत्वावच्छेद्यता प्रोक्ता। नीलधूमहेतुकस्थले हेतुत्वावच्छेद्या या विशेष्यता, तदवच्छेदकता धूमत्व एव पर्याप्ता, न तु नीलत्वेऽपि, तस्यैवातिप्रसङ्गाद्यनापादकलघुभूतत्वात्, स्वावच्छिन्नाधिकरणतावद्वृत्तित्वादिसम्बन्धेन धूमत्वविशिष्टद्रव्यादिहेतुकस्थले तु हेतुत्वावच्छेद्यविशेष्यतावच्छेदकता धूमत्वद्रव्यत्वोभयत्रैव पर्याप्ता, तस्या धूमत्वमात्रपर्याप्तत्वेऽतिप्रसङ्गः स्यादित्यवधेयम्।

अनन्तरम् 'एवञ्चे'त्यादिना हेतुतावच्छेदकविशेषणनैल्यादेर्नीलधूमवतो हेतुतास्थले वैयर्थ्यसम्पादनाय अवच्छेदकतावच्छेदकत्वघटितत्वं व्यर्थविशेषणघटितत्वं वाच्यम्, तत्र विशिष्टान्तरं धूमवत् इति, तद्विषयता धूमवति, तदवच्छेदकता धूमे, तदवच्छेदकता धूमत्वे, तादृशावच्छेदकता = विशिष्टान्तरविषयतावच्छेदकतावच्छेदकता,-वद्धूमत्वमादाय तत्र व्यर्थविशेषणघटितत्वं सम्पद्यते, परन्तु हेतुतावच्छेदकविशेषणवैयर्थ्यं यदि विशिष्टान्तरविषयतावच्छेदकतावच्छेदकताघटितत्वेन भवेत्तदा नीलधूमवद्धेतुकस्थल इव धूमत्वविशिष्टद्रव्यवतो हेतुतास्थलेऽपि धूमत्वनिष्ठतादृशविषयताम् = विशिष्टान्तरविषयतावच्छेदकतावच्छेदकताम्, आदाय व्यर्थविशेषणघटितत्वमापद्येत। अतो धूमत्वविशिष्टद्रव्यवतो हेतुतास्थले धूमत्वमादाय व्यर्थविशेषणघटितत्वाभावाय विशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्या या विशेष्यता, तादृशविशेष्यतावच्छेदकतासामानाधिकरण्यं निवेश्यम्।

तथानिवेशे सति नीलधूमवद्धेतुकस्थले धूमत्वनिष्ठायां विशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां नीलधूमनिष्ठा या हेतुतावच्छेदकता, तदवच्छेद्या विशेष्यता नीलधूमनिष्ठैव विशेष्यता, नीलधूमत्वनिष्ठतादृशविशेष्यतावच्छेदकतासामानाधिकरण्यस्य सत्त्वेन तत्र व्यर्थविशेषणघटितत्वोपपत्तिः, धूमत्वविशिष्टद्रव्यवतो हेतुतास्थले तु हेतुतावच्छेदकता धूमत्वविशिष्टद्रव्यनिष्ठा, तदवच्छेद्या विशेष्यता धूमत्वविशिष्टद्रव्यनिष्ठैव, तदवच्छेदकता धूमत्वविशिष्टद्रव्यत्वनिष्ठा, तादृशावच्छेदकता-

सामानाधिकरण्यस्य तत्र धूमत्वनिष्ठविशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां विरहाद् व्यर्थविशेषणघटितत्वापत्त्यसम्भवादिति। तथासति = हेतुतावच्छेदकविशेषण-वैयर्थ्यस्थले विशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्य-विशेष्यतावच्छेदकतासामानाधिकरण्यस्य विशेषणतया विवक्षणीयत्वे सति, प्रकृतेऽपि यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नाभाववानिति व्याप्तिघटकहेतुघटकोभयावृत्तेर्हेतुतावच्छेदकविशेषण-वैयर्थ्यसम्भवः। तत्र तद्वैयर्थ्यसम्भवमुपपादयति – 'सत्त्वाद्यवच्छिन्नप्रतियोगित्वादीना-मुक्तविशेष्यतानवच्छेदकत्वादि'त्युक्त्या।

तदुक्तेरयमाशयो यत् तत्र पूर्वं यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटवानिति प्रतीतिविषयसत्तावदभावादिसत्त्वाद्यवच्छिन्नप्रतियोगित्वादिसाधारणसमुदायत्वा-वच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यत्वस्य हेतुमत्त्वप्रतीतौ सत्त्वम्प्रदर्श्य वैयर्थ्यासम्भव उक्त आसीत्, तदिह सत्त्वाद्यवच्छिन्नप्रतियोगित्वादिरूप-विशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायास्तादृशविशेष्यतानवच्छेदकत्वोक्त्या। यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावत्वकूटत्वोभयनिष्ठा या हेतुता-वच्छेदकता, तदवच्छेद्या विशेष्यता तन्निष्ठैव विशेष्यता, तदवच्छेदकता = तादृश-विशेष्यतावच्छेदकता यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावत्वत्वकूट-त्वत्वनिष्ठा, न तु सत्तावदभावादिसत्त्वाद्यवच्छिन्नप्रतियोगित्वादिरूपा, तन्निष्ठा वा, अतस्तत्र तादृशविषयताशून्यत्वसत्त्वेऽपि तादृशविषयताया हेतुतावच्छेदकत्वावच्छेद्य-विशेष्यतावच्छेदकत्वविरहाद् न तदादाय वैयर्थ्यासम्भवस्तत्र हेतुतावच्छेदकत्वा-वच्छेद्यविशेष्यतावच्छेदकतासमानाधिकरणा या विशिष्टान्तरविषयतावच्छेदकता-वच्छेदकता, सा उभयावृत्त्यघटितयज्जातिसमानाधिकरणधर्मावच्छिन्नाभावत्वत्वकूट-त्वत्वोभयनिष्ठावच्छेदकताख्यविषयता, तच्छून्यत्वस्य तत्र हेतुमत्त्वप्रतीतौ विरहेण तादृशविषयताशून्यघटादिविषयकज्ञानविषयतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगि-तानवच्छेदकत्वस्य हेतुतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपे तादृशाभावत्वकूटत्वगतद्वित्वे सत्त्वेन लक्षितस्य व्यर्थविशेषणघटितत्वस्य तत्रोपपत्ति-रिति तदाशयः।

तत्र सिद्धान्ते हेतुतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं रूपं यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्व-कूटत्वोभयगतं द्वित्वं, द्वितीयं रूपं स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वशून्य-

प्रतीतिविषयतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदक[१]-प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक - हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकता यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वत्व-कूटत्वत्वोभयनिष्ठा, तत्समानाधिकरणा विशिष्टान्तरविषयतावच्छेदकतावच्छेदकता उभयावृत्तित्वरहितयज्जातिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वत्वकूटत्वत्वनिष्ठा, तादृशावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं तदुभयगतं द्वित्वं, तद्रूपावच्छिन्ना(वच्छिन्ना)[२]नुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यज्ञानं घटादिविषयकमेव, न तु यज्जातिसमानाधिकरणेत्यादिहेतुविषयकं, तादृशज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य हेतुतावच्छेदकतादृशाभावत्वकूटत्वोभयगतद्वित्वे सत्त्वेन व्यर्थविशेषणघटितत्वोपपत्तिरिति भावः।

अनन्तरमिदमुच्यते यन्नीलधूमविशिष्टवह्नेतुकस्थले, अर्थाद्धेतुतावच्छेदकतावच्छेदकविशेषणनीलघटितहेतुकस्थले धूमत्वगतैकत्वमादाय व्यर्थविशेषणघटितत्वन्न स्यात्, यतो हि तत्र हेतुतावच्छेदकता नीलधूमविशिष्टनिष्ठा, तदवच्छेद्या विशेष्यता नीलधूमविशिष्टनिष्ठैव, तदवच्छेदकता नीलधूमनिष्ठा, तत्सामानाधिकरण्यं धूमत्वनिष्ठविशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां नास्ति, धूमत्वविशिष्टद्रव्यवतो हेतुतास्थले व्यर्थविशेषणत्वस्य धूमत्वे वारणाय विशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां हेतुतावच्छेदकतावच्छेद्यविशेष्यतासामानाधिकरण्यविवक्षासत्त्वादतस्तत्र नीलधूमविशिष्टवह्नेतुकस्थले धूमत्वगतैकत्वमादाय व्यर्थविशेषणघटितत्वसम्पादनाय व्याप्यतावच्छेदकतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकतासामानाधिकरण्यन्निवेशनीयम्।

तथासति तत्र धूमनिष्ठायां व्याप्यतावच्छेदकतावच्छेदकतायां नीलधूमनिष्ठा या हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकता, तत्सामानाधिकरण्यसत्त्वान्नानुपपत्तिः अर्थात्तत्र विशिष्टान्तरतावच्छेदकधूमत्वगतैकत्वमादाय व्यर्थविशेषणघटितत्वोपपत्तिरित्येतत्कथनन्निरस्यते 'इति तु न वाच्यमि'त्यादिना। विशिष्टसत्तावतो हेतुत्वे सत्तानिष्ठा या व्याप्यतावच्छेदकता, तादृशावच्छेदकतानिरूपिता वैशिष्ट्यनिष्ठा या अवच्छेदकता, तत्र उक्तसामानाधिकरण्यविरहात् = हेतुतावच्छेदकत्वावच्छे-

---

१. 'पर्याप्त्यनुयोगितावच्छेदके'त्यस्याग्रिमपंक्तिस्थ 'पर्याप्त्यनुयोगितावच्छेदके'त्यनेन संबन्धः।

२. ( ) कोष्ठकान्तर्गतोऽधिकः पाठः प्रतिभाति।

द्यविशेष्यतासामानाधिकरण्यविरहात्, हेतुतावच्छेदकताविशिष्टसत्तानिष्ठा तदवच्छेद्या विशेष्यता, तन्निष्ठैव तदवच्छेदकता विशिष्टसत्तात्वनिष्ठा, तत्सामानाधिकरण्यस्य वैशिष्ट्यनिष्ठावच्छेदकतायामसत्त्वात् तत्र वैयर्थ्यरहिते वैयर्थ्यं स्यात्, अर्थादुक्तोपायेन नीलधूमविशिष्टवतो हेतुत्वे यदि व्यर्थविशेषणघटितत्वं वैयर्थ्यम्वोपपादितं स्यात्तदा विशिष्टसत्तावतो हेतुत्वेऽपि वैयर्थ्यं स्यादिति तत्रत्यतत्त्वालोकपङ्क्तिशब्दार्थः। द्रव्यस्य तादात्म्येन साध्यत्वे तादात्म्येन विशिष्टसत्तावत्त्वं सद्धेतुस्तत्र वस्तुतो वैशिष्ट्यस्य न व्यर्थविशेषणत्वं, व्यभिचारवारकत्वात्।

अत्रेदं स्पष्टीकरणीयमस्ति यद्विशिष्टसत्तावतो हेतुत्वे वैशिष्ट्यनिष्ठव्याप्यतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकता(विशिष्टसत्तात्वनिष्ठावच्छेदकता)सामानाधिकरण्यविरहाद्वैशिष्ट्यस्य वैयर्थ्यं यदि स्यात्, तदा धूमत्वविशिष्टद्रव्यवतो हेतुतास्थले द्रव्यनिष्ठा या व्याप्यतावच्छेदकता, तन्निरूपिता धूमत्वनिष्ठा या अवच्छेदकता, तत्र हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकता (द्रव्यत्वनिष्ठावच्छेदकता) सामानाधिकरण्यविरहात्तदाश्रयस्य धूमत्वस्य कुतो न वैयर्थ्यमिति ?

तत्त्वालोककृद्भिर्नीलधूमविशिष्टवतो हेतुत्वे नीलस्य वैयर्थ्यसम्पत्तये विशिष्टस्य सत्तावतो हेतुत्वे वैशिष्ट्यस्य व्यर्थत्वाभावाय च व्याप्यतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्यविशेष्यताविशिष्टत्वं विवक्ष्यते। तत्र वैशिष्ट्यम् स्वावच्छेदकधर्मावच्छिन्नत्व,- स्वनिरूपितप्रकारतासमानाधिकरणावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन। विशिष्टसत्तावतो हेतुत्वे विशिष्टसत्तानिष्ठव्याप्यतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्या विशिष्टसत्तानिष्ठा या विशेष्यता, तदवच्छेदक = तादृशविशेष्यतावच्छेदक,-विशिष्टसत्तात्वधर्मावच्छिन्नत्वस्य तादृशविशेष्यतानिरूपितवैशिष्ट्यनिष्ठप्रकारतासमानाधिकरणावच्छेदकत्वानिरूपितत्वस्य च सत्त्वेन तादृशविशेष्यताविशिष्टता। नीलधूमविशिष्टवतो हेतुत्वे धूमविशिष्टनिष्ठव्याप्यतावच्छेदकतायां हेतुत्वावच्छेदकत्वावच्छेद्यतादृशविशिष्टनिष्ठविशेष्यतावच्छेदकनीलधर्मावच्छिन्नत्वविरहात् तादृशविशेष्यतानिरूपितनीलधूमनिष्ठप्रकारतासमानाधिकरणधूमनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वेन तादृशावच्छेदकत्वानिरूपितत्वसम्बन्धस्यापि विरहान्न विशिष्टतेति।

प्रासङ्गिकस्वच्छताशेषो भावनया भावनीयः। विशिष्टसत्तावतो हेतुत्वे वैशिष्ट्यस्य वैयर्थ्यन्नेष्टम्। एवं धूमत्वविशिष्टद्रव्यवतो हेतुत्वे धूमत्वस्य वैयर्थ्यन्नेष्टम्। परन्तु नीलधूमविशिष्टवतो हेतुत्वे नीलधूमवतो हेतुत्वे नीलधूमस्य च हेतुत्वे नीलस्य

वैयर्थ्यमिष्टम्। वैयर्थ्यवन्नीलघटितोक्तहेतुषु त्रिषु स्थलेषु धूमत्वगतैकत्वमादायैव निरुक्तव्यर्थविशेषणघटितत्वलक्षणसङ्गतिर्भवति। तत्र लक्षणे हेतुविशेषणहेतुतावच्छेदकविशेषण-हेतुतावच्छेदकतावच्छेदकविशेषणवैयर्थ्यभेदेन यत्किञ्चित्परिवर्तनं तद्घटके विशेषणतया सन्निवेशितविशेषणविशेषविवक्षाभिस्तेन प्रकृते उभयावृत्तिपदं हेतुघटकं व्यर्थं भवत्येवेति प्रघट्टकस्य सङ्क्षिप्तोऽर्थः।[१९८]

तत्त्वालोकः– **केचित्तु— यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव एव हेतुः, हेतुता च विलक्षणविषयितासम्बन्धेन स्वविशिष्टज्ञानवृत्तिकूटत्वावच्छिन्नवत्त्वसम्बन्धेन, वृत्तिता च स्वाभाववदवृत्तित्वसम्बन्धेन, अवृत्तित्वघटकवृत्तित्वञ्च स्वविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वसम्बन्धेन, तथा च न व्यभिचारो न वा जात्युपादानासङ्गतिः, नापि वैयर्थ्यासङ्गतिश्चेति प्राहुः।**

**परे तु— विलक्षणप्रतियोगितासम्बन्धेन स्वविशिष्टाभाववृत्तिकूटत्वावच्छिन्नवत्त्वसम्बन्धेन तादृशाभावस्य हेतुत्वम्, वृत्तित्वञ्च स्वाभाववदवृत्तित्वसम्बन्धेन, अवृत्तित्वघटकवृत्तिता च स्वप्रतियोगितावच्छेदकधर्मवत्त्वसम्बन्धेनेति न व्यभिचारो न वैयर्थ्यासङ्गतिरिति— वदन्ति।**

**तन्नाति समञ्जसम्, जात्युपादानवैयर्थ्यात्, कम्बुग्रीवादिमत्त्वघटिताभावविशिष्टाभावाप्रसिद्धेर्घटत्वघटिताभावत्वस्यैव तदवच्छेदकत्वौचित्यादिति दिक्।[१९९]**

*प्रकाशः*– उपर्युल्लिखितखण्डः प्रासङ्गिकस्य 'केचित्तु'मतस्य प्रदर्शनपरः। केचिद्वृक्षे संयोगसामान्याभावसाधनाय जगदीशदर्शितानुमानघटकहेतुत्वेन यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावमविविक्ष्य यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव विवक्षितत्वं वदन्ति।

तत्र 'एव'पदेन तादृशयावदभावस्य हेतुत्वव्यवच्छेदोऽभिमतः। हेतुता च यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्य न स्वरूपसम्बन्धेन, येन संयोगत्वजातिसमानाधिकरणतद्व्यक्तित्वरूपोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चित्संयोगाभावात्मकहेतुमति संयोगत्वावच्छिन्नाभावात्मकसंयोगसामान्याभावविरहाद्व्यभिचारो भवेत्, किन्तु विलक्षणविषयितासम्बन्धेन 'स्वविशिष्टज्ञानवृत्तिकूटत्वावच्छिन्नवत्त्व'सम्बन्धेन एवोक्ताभावस्य हेतुता। एतत्सम्बन्धघटक'स्व'पदेन यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावात्मको

दर्शितो हेतुरेव परिग्राह्यः, हेतुतावच्छेदकसम्बन्धतया दर्शितघटकवृत्तिता च स्वाभाववदवृत्तित्वसम्बन्धेन विवक्षिता।

तत्र स्वाभाववदवृत्तित्वसम्बन्धे 'स्व'पदेन दर्शितहेतुतावच्छेदकसम्बन्धघटककूटत्वस्य स्वविशिष्टज्ञानवृत्तिना विशेषितस्य परिग्रहः। स्वाभाववदवृत्तित्वघटकवृत्तिता च स्वविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वसम्बन्धेन विवक्षिता।

तेन तादृशकूटत्वाभाववद् यज्ज्ञानात्मकं स्वम्, तादृशज्ञानविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वसम्बन्धेन तादृशज्ञानवृत्तित्वराहित्यरूपम्, स्वाभाव(कूटत्वाभाव)वदवृत्तित्वं विलक्षणविषयितासम्बन्धेन स्व(यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावात्मकदर्शितहेतु)विशिष्टज्ञानवृत्तिना विशेषिते कूटत्वे निर्गलितं जातम्।

समन्वयश्च प्रकृते संयोगत्वजातिसमानाधिकरणोभयावृत्तिधर्मः संयोगव्यक्तिविशेषगतस्तद्व्यक्तित्वं तद्धर्मावच्छिन्नप्रतियोगिताकाभावात्मकहेतुस्वरूप-स्वेन विलक्षणविषयितात्मकविवक्षितहेतुतावच्छेदकसम्बन्धेन विशिष्टं ज्ञानम् संयोगगताशेषतद्व्यक्तित्वधर्मावच्छिन्नप्रतियोगिताकसंयोगयावद्विशेषाभावविषयकमेव ज्ञानम्, तादृशज्ञानवृत्तिकूटत्वं (विवक्षितेन स्वाभाववदवृत्तित्वसम्बन्धेन तादृशज्ञानवृत्तिकूटत्वं) संयोगत्वजातिसमानाधिकरणोभयावृत्तितद्व्यक्तित्वधर्मावच्छिन्नप्रतियोगिताकयावदभावगतमेव कूटत्वम्, यतो हि स्वाभाववद् = उक्तकूटत्वाभाववद्, उक्तज्ञानातिरिक्तमेव ज्ञानम् न तूक्तं संयोगयावद्विशेषाभावविषयकं ज्ञानम्, तज्ज्ञानविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्ता उक्ते संयोगयावद्विशेषाभावविषयके ज्ञाने न भवति। अतः स्व(उक्तकूटत्वाभाववज्ज्ञान)विषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वसम्बन्धेन स्वाभाव(उक्तकूटत्वाभाव)वद्वृत्तित्वराहित्यरूपस्वाभाववदवृत्तित्वसम्बन्धेन उक्तकूटत्वस्य संयोगयावद्विशेषाभावविषयकज्ञानवृत्तित्वोपपत्तिः।

तादृशकूटत्वावच्छिन्नः संयोगयावद्विशेषाभावसमुदायविशेषस्तद्वत्त्वसम्बन्धेन संयोगत्वजातिसमानाधिकरणोभयावृत्तियत्किञ्चिदेकमात्रसंयोगगततद्व्यक्तित्वधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदेकस्य संयोगाभावस्य संयोगत्वावच्छिन्नप्रतियोगिताकस्य संयोगसामान्याभावस्य अभाववति सत्त्वासम्भवात्तादृशस्य यावतो विशेषाभावस्य हेतुत्वविरहेऽपि (संयोगत्वजातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव हेतुत्वेऽपि) न व्यभिचारावसरः।

कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्ति - तद्धटत्वावच्छिन्नप्रतियोगिताकाभावात्मकहेतोर्विवक्षितेन स्वविशिष्टज्ञानवृत्तिकूटत्वावच्छिन्नवत्त्वात्मकहेतुतावच्छेदकसम्बन्धेनाधिकरणे गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकारेण कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या प्रसक्तव्यभिचारवारकस्य जात्युपादानस्यापि नासङ्गतिः।

न वा संयोगत्वजातिसमानाधिकरणसत्तागुणत्वाद्यवच्छिन्नाभावमादाय वृक्षादौ पक्षे तादृशाभावात्मकहेतुविरहेण प्राप्तस्वरूपासिद्धिवारक - व्यभिचारावारको - भयावृत्तिपदवैयर्थ्यासङ्गतिरपीति केचिदत्र प्राहुः।

परे तु— अत्र पूर्वोपपादितहेतुतावच्छेदकसम्बन्धापेक्षया हेतुतावच्छेदकसम्बन्धं किञ्चिदन्यथाकृत्य पूर्ववत् (केचित्तुपक्षवदेव) यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव, न तु तादृशयावदभावस्य, हेतुत्वं वदन्ति। अत्र हेतुतावच्छेदकतया विवक्षितः विलक्षणप्रतियोगितासम्बन्धेन स्व(तादृशाभावात्मकदर्शितहेतु)विशिष्टाभाववृत्तिकूटत्वावच्छिन्नवत्त्वस्वरूपः, उक्तसम्बन्धघटकवृत्तिता च पूर्ववदेव स्वाभाववदवृत्तित्वसम्बन्धेन।

अवृत्तित्वघटकवृत्तिता च— नो स्वविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वसम्बन्धेन यथापूर्वम्, किन्तु स्वप्रतियोगितावच्छेदकधर्मवत्त्वसम्बन्धेन, हेतुतावच्छेदकसम्बन्धकोटौ पूर्वं 'केचित्तु' पक्षे ज्ञाने स्ववैशिष्ट्यनियामकतया विलक्षणविषयितायाः प्रवेश आसीत्, इह अभावे स्ववैशिष्ट्यनियामकतया विलक्षणप्रतियोगिताया निवेश इति पूर्वतो भेदः। विलक्षणप्रतियोगितापदेन विलक्षणप्रतियोगितानिरूपकत्वमभिप्रेतम्, तथासत्येव यत्किञ्चित्तादृशैकविशेषाभावविशिष्टता तादृशाभावसमुदायस्य सम्भविता।

यथा पूर्वत्र तादृशयत्किञ्चिदेकविशेषाभावविशिष्टता विलक्षणविषयितासम्बन्धेन तादृशयावद्विशेषाभावविषयकज्ञानस्यैव, न त्वेकमात्रविशेषाभावविषयकज्ञानस्यापि, तथैवेह परोक्तकल्पेऽत्र तादृशैकविशेषाभावात्मकहेतुस्वरूपस्वविशिष्टता विलक्षणप्रतियोगितासम्बन्धेन तादृशयावद्विशेषाभावस्यैव, न तु तादृशैकविशेषाभावस्यापि, तादृशाभावविशिष्टयावद्विशेषाभाववृत्तिकूटत्वावच्छिन्नवत्त्वसम्बन्धेन संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्य यत्किञ्चित्संयोगाभाववति सत्त्वासम्भवान्न व्यभिचारः। नापि व्यभिचारावारकतया सत्तागुणत्वाद्यवच्छिन्नाभावमादाय स्वरूपासिद्धिवारकोभयावृत्तिपदवैयर्थ्यासङ्गतिः।

हेतुतावच्छेदकसम्बन्धघटकावृत्तित्वघटकवृत्तित्वं पूर्वत्र स्वविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वसम्बन्धेनासीद्, इह परोक्तकल्पे तु स्वप्रतियोगितावच्छेदकधर्मवत्त्वसम्बन्धेन अत्र पर्य्याप्तिनिवेशस्य अर्थात्स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वनिवेशस्यावश्यकता नास्ति। यावद्विशेषाभावगतकूटत्वस्य स्वाभाववति = तादृशयावद्विशेषाभावाभाववति, यत्किञ्चित्स्वप्रतियोगितावच्छेदकधर्मवति वृत्तित्वविरहस्य ग्राह्यकूटत्वे सत्त्वेन पर्याप्तिनिवेशावश्यकत्वविरहादिति वदन्ति परे।

परन्तु परेषां मतमिदं नातिसमीचीनम्, यतो ह्यत्र विलक्षणप्रतियोगितासम्बन्धेन यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावविशिष्टाभावघटितकल्पे उपपादितरीत्या व्यभिचारस्य उभयावृत्तिपदवैयर्थ्यासङ्गतेश्च विरहेऽपि घटत्वघटिताभावत्वस्यैव लघुभूतस्य अभावविशिष्टाभावप्रतियोगितावच्छेदकत्वसम्भवेन कम्बुग्रीवादिमत्त्वरूपगुरुभूतधर्मघटितकम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तितद्घटत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टाभावत्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्या व्यभिचाराप्रसक्त्या कम्बुग्रीवादिमत्त्वादिगुरुधर्मव्यावर्तनावश्यकताविरहेण तद्व्यावर्तकजात्युपादानस्य वैयर्थ्यादिति प्रकाशः।[१९९]

**तत्त्वालोकः – ''व्यभिचारवारकस्यैवे''ति।[१] अत्र साध्यगमकत्वरूपं हेतुत्वं हि किञ्चिद्धर्मिण्येव साध्यगमकत्वम्, निर्धर्मिकानुमित्यभावात्, तथा च गमकतायां साध्यव्याप्तेरिव पक्षधर्मत्वस्यापि प्रयोजकतया वैयर्थ्यशरीरे प्रकृतसाध्यव्याप्यतावच्छेदकत्वस्येव प्रकृतपक्षधर्मतावच्छेदकत्वस्यापि विशेषणत्वं वाच्यमिति स्वरूपासिद्धिवारकस्य न वैयर्थ्यमिति मिश्राणामाशयः।**

**अन्येषान्तु गमकतायां व्याप्तिमात्रमुपयुक्तं ह्रदे धूमस्य वह्निगमकत्वविरहेऽपि गमकता न हीयते, पर्वते वह्निगमकत्वाक्षतेरिति पक्षधर्मतावच्छेदकत्वन्न वैयर्थ्यघटकमिति व्यभिचारावारकस्य वैयर्थ्यम्वदतामाशयो बोध्यः।[२००]**

***प्रकाशः*** – उपर्युक्तखण्डेन व्यभिचारवारकासिद्धिवारकविशेषणयोः सार्थक्यासार्थक्ये मतभेदेन मतभेदबीजसहितमुपपादयति। मिश्राणां = पक्षधरमिश्राणाम्, अयमाशयो यदुभयविधं व्यभिचारवारकमसिद्धिवारकञ्च विशेषणद्वयं सार्थकम्, यतो हि साध्यगमकत्वरूपं हेतुत्वं यथा तस्य व्यभिचरितत्वे न सम्भवति, तथैव तस्य स्वरूपासिद्धत्वे = पक्षावृत्तित्वेऽपि, साध्यानुमापकत्वं भवितुन्नार्हति, निर्धर्मिकानुमितेरनुदयात्, किञ्चिद्धर्मिण्येव = पर्वतादौ, तत्र वर्तिना केनचित्साधनेन = व्याप्येन,

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९

कस्यापि = तत्साधनव्यापकस्य साध्यस्य, साधनात्। अतोऽसिद्धि(पक्षावृत्तित्व)-वारकस्यापि विशेषणस्य व्यभिचारवारकविशेषणस्येव सार्थकतैव, न तु व्यर्थता, गमकत्वाय प्रकृतसाध्यव्याप्तेरिव प्रकृतपक्षधर्मताया अपि आवश्यकता, ततश्च वैयर्थ्यशरीरे प्रकृतसाध्यव्याप्यतावच्छेदकत्वस्येव प्रकृतपक्षधर्मतावच्छेदकत्वस्यापि प्रवेशः, प्रकृतसाध्यव्याप्यतावच्छेदकप्रकृतपक्षधर्मतावच्छेदकलघुभूतधर्मघटितत्वस्यैव व्यर्थविशेषणघटितत्वात्। ततश्च प्रकृते 'यज्जातिसमानाधिकरणे'त्यादिना दर्शिते हेतौ व्यभिचारावारकमपि उभयावृत्तिपदमसिद्धिवारकतया सार्थकमेव, न तु व्यभिचारा-वारकत्वाद्व्यर्थम्।

असिद्धिवारकस्यापि व्यभिचारावारकतया वैयर्थ्यं वदतामन्येषान्तु अयमाशयो यद् गमकतायां = साधकतायां, केवला व्याप्तिरेवोपयुक्ता, न तु पक्षवृत्तिताऽपि, धर्मिविशेषे ह्रदे तत्र वृत्तित्वविरहेण धूमस्य वह्निगमकत्वविरहेऽपि पर्वतादौ तस्य = धूमस्य, वह्निगमकत्वेन धूमे वह्निगमकत्वक्षतेरभावात्। तस्मात् प्रकृतसाध्यव्याप्यता-वच्छेदकत्वमात्रं वैयर्थ्यघटकम्, न तु प्रकृतपक्षधर्मतावच्छेदकत्वमपीति प्रकाशः। [२००]

तत्त्वालोकः – "अत एव शब्दे नित्यत्वसाध्यके"त्यादि।[१] एकमात्रगुणे तद्घटीयरूपे व्यभिचारवारणाय "विशेषगुणान्तरासमानाधिकरणे"ति।[२] स्वात्मकविशेषगुणसमानाधिकरणे शब्देऽसिद्धिवारणाय "अन्तरे"ति।[३] आकाशमनःसंयोगे व्यभिचारवारणाय "एकमात्रवृत्ती"ति।[४] एकमात्र-वृत्तित्वञ्चोभयावृत्तित्वम्, वृत्तिता च तत्र समवायावच्छिन्नान्तर्भवतीति गगनमनःसंयोगध्वंसे व्यभिचारवारणाय मनःकर्म्मणिव्यभिचारवारणाय वा "गुणे"ति।[५]

न च मनोवेगे व्यभिचार इति वाच्यम्, तस्य मीमांसकमते गतिसन्तान एवान्तर्भावादिति तु ग्रन्थानुरोधिनः।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९-१०

२. तदेव, पृ. १०

३. तदेव, पृ. १०

४. तदेव, पृ. १०

५. तदेव, पृ. १०

विशेषगुणान्तरासामानाधिकरण्योक्तिस्वारस्यादेव विशेषगुणसामानाधिकरण्यस्यापि हेतुघटकत्वलाभाद् गतौ न व्यभिचारसम्भवः। उक्तध्वंसे व्यभिचारवारणायैव गुणत्वोपादानम्, दृष्टान्तता च गगनपरिमाणस्यैवेति समयपरिमाणवदिति मूलग्रन्थाननुरोधिनः।

ननु शब्देतरविशेष[1]गुणासमानाधिकरणत्व-विशेषगुणासमानाधिकरणत्वरूपाभावयोर्भेदेन न वैयर्थ्यसम्भव इति चेद्।

न। विलक्षणप्रतियोगितासम्बन्धेन स्वविशिष्टाभाववत्त्वसम्बन्धेन शब्देतरविशेषगुणसामानाधिकरण्यस्यैव विशेषणत्वे तात्पर्यादुपस्थितौ लाघवादिति भावः।

क्वचित्पुस्तके 'शब्दोऽनित्यः सामान्यवत्त्वे सति विशेषगुणान्तरासमानाधिकरणत्वे सति बहिरिन्द्रियग्राह्यत्वादि'त्यनुमानमुपलभ्यते[2]। तदप्रामाणिकम्, निःप्रयोजनविशेषगुणान्तरासमानाधिकरणत्वविशेषणशून्यस्यैतादृशानुमानहेतोर्मूलग्रन्थेऽदर्शनादिति।[२०१]

*प्रकाशः* — उपर्युक्तभागेन व्यभिचारावारकासिद्धिवारकविशेषणघटितहेतुमुद्धृत्य पक्षधरकृततादृशविशेषणसार्थक्योपपादनं दर्शयति तत्त्वालोककृत्। अत्रत्यो व्याख्येयो जागदीशी भागः "अत एव शब्दे नित्यत्वसाधके"त्यादिः 'शब्दो नित्यः विशेषगुणान्तरासमानाधिकरणैकमात्रवृत्तिगुणत्वादिति हेतावसिद्धिवारकस्य शब्देतरार्थकस्यान्तरपदस्य तैः शब्दमण्यालोके सार्थक्यं समर्थितमि'ति।[3]

उपन्यस्त-जागदीशीपाठविषये "एकमात्रवृत्ती'तीदं मूले न दृश्यते". इत्यादिः सरला(सुबोधनी)कृल्लेखः[4], परन्तु मत्पितृपितामहभ्रातृश्रीगोपीनाथमिश्रहस्तमिथिलाक्षरलिखितप्राचीनसिद्धान्तलक्षणजागदीशीपुस्तके मदुपन्यस्तपाठस्यैव सत्त्वात् तत्त्वालोककृता तथापाठस्यैव व्याख्यातत्वाच्च 'शब्दोऽनित्यः सामान्यवत्त्वे सति विशेषगुणान्तरासमानाधिकरणत्वे सति बहिरिन्द्रियग्राह्यत्वादि'ति क्वचित्पुस्तके उपलभ्यमानपाठस्याप्रामाणिकत्वोक्तेश्च तदप्रामाणिकत्वकथने निःप्रयोजनविशेषगुणान्तरा-

---

१. 'विशेष'इति पाठो जगदीशशर्मसम्पादितपुस्तकमूले नास्ति।

२. द्रष्टव्यम् — प्रकृतग्रन्थस्य प्रथमभागे जागदीशीमूलम् (टिप्पण्याम्), पृ. १०

३. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ९-१०

४. सिद्धान्तलक्षणसुबोधनी, पृ. ३२३

समानाधिकरणत्वविशेषणशून्यस्यैतादृशानुमानहेतोर्मूलग्रन्थे = अनुमानचिन्तामणौ दर्शनाभाव उक्तः। शब्देऽनित्यत्वसाधनाय यद्युक्ताभानं भवेत्तर्हि 'सामान्यवत्त्वे सत्त्वे सति बहिरिन्द्रियग्राह्यत्वादित्ये'व पर्याप्तं स्यात्, 'विशेषगुणान्तरासमानाधिकरणत्वे सती'ति निःप्रयोजनमेव स्यात्, शब्दे सामान्यवत्त्वस्य बहिरिन्द्रियग्राह्यत्वस्य च सत्त्वेन तेन तत्रानित्यत्वसिद्धिसम्भवात् तच्छून्य[स्य] = विशेषगुणान्तरासमानाधिकरणत्व-रूपव्यर्थविशेषणशून्यस्य, शब्देऽनित्यत्वसाधकतादृशानुमानहेतौ मूलेऽदर्शनादिति तदर्थात्।

तस्मात्प्रासङ्गिको ग्रन्थभागो मीमांसकाभिमतः शब्दे नित्यत्वसाधनपरः, अत एव शब्दो नित्यो विशेषगुणान्तरासमानाधिकरण एकमात्र[वृत्ति]गुणत्वाद् हेतावसिद्धि-वारकस्य शब्देतरार्थकस्यान्तर-पदस्य तैः सार्थक्यं समर्थितमित्येव। तत्र 'अत एवे'त्यस्य व्यभिचारवारकस्येवासिद्धिवारकविशेषणस्यापि गमकतायामुपयुक्तत्वा-देवेत्यर्थः। अन्यथा शब्दे नित्यत्वसाधकतयोपन्यस्ते उक्तहेतौ शब्देतरार्थकस्यान्तरपदस्य तैः = पक्षधरमिश्रैः, सार्थक्यसमर्थनसङ्गतिर्न स्यात्।

अनन्तरमत्र विशेषगुणान्तरासमानाधिकरण 'एकमात्रवृत्तिगुणत्वादि'ति उक्तं हेतुं व्याकरोति। तत्र हेतौ 'विशेषगुणान्तरासमानाधिकरणे'त्यंशः एकमात्रवृत्तौ तद्धटीय-रूपे नित्यत्वरूपसाध्या[भाव]वति व्यभिचारवारणाय, तदुपादाने तु तद्धटीयरूपे विशेषगुणान्तरस्पर्शासमानाधिकरणत्वविरहान्न व्यभिचारः।

तत्रान्तरपदानुपादाने, अर्थाद् विशेषगुणासमानाधिकरणैकमात्रवृत्तिगुणत्वादेता-वन्मात्रोपादाने, शब्दात्मके पक्षे स्वात्मकविशेषगुणसमानाधिकरणत्वस्यैव सत्त्वेन विशेषगुणासमानाधिकरणैकमात्रवृत्तिगुणत्वहेतोर्वृत्तित्वविरहेण हेत्वभाववत्पक्षात्मिका स्वरूपासिद्धिः स्यादतोऽन्तरपदस्य तत्र सार्थकता, तदुपादाने तु शब्दे शब्देतरविशेष-गुणसामानाधिकरण्यविरहान्नोक्तदोषः।

तत्र 'एकमात्रवृत्ति'पदानुपादाने 'विशेषगुणान्तरासमानाधिकरणगुणत्वादे'ता-वन्मात्रसत्त्वे आकाशमनःसंयोगात्मके गुणे नित्यत्वरूपसाध्यविरहिणि विशेषगुणान्तरा-समानाधिकरणगुणत्वरूपहेतोः सत्त्वेन व्यभिचारः स्यादतः 'एकमात्रवृत्ति'पदमुपात्तम्। एकमात्रवृत्तित्वमुभयावृत्तित्वरूपम्, तत्र वृत्तित्वं समवायसम्बन्धेन विवक्षितम्, अर्थात् समवायसम्बन्धेनोभयवृत्तिभिन्नमेवोभयावृत्ति विवक्षितम्।

ततश्च आकाशमनःसंयोगध्वंसे नित्यत्वविरहिणि विशेषगुणान्तरासमाना-धिकरणैकमात्रवृत्तौ = समवायेनोभयवृत्तिभिन्ने, व्यभिचारवारणाय गुणपदम्, तथासति

तस्य गुणत्वविरहान्न व्यभिचारः। अथ वा मनोवृत्तिक्रियायां विशेषगुणान्तरासमाना-धिकरणैकमात्रवृत्तौ व्यभिचारवारणाय 'गुण'पदम्।

अत्र यद्यपि मनोगतवेगात्मकगुणे नित्यत्वविरहिणि विशेषगुणान्तरासमाना-धिकरणैकमात्रवृत्तिगुणे व्यभिचारः प्राप्नोति, तथापि मीमांसकैः मनोगतवेगस्य क्रियासन्तान एवान्तर्भावकरणात्तत्र तैः गुणत्वानङ्गीकारात्तन्मते तत्र हेतौ व्यभिचारा-भावादिति व्याख्या कालपरिमाणस्य दृष्टान्ततयोपस्थापक'समयपरिमाणवत्' इत्ये-तद्घटित-यथास्थितमूलग्रन्थानुरोधिनः।

'समयपरिमाणवदि'ति मूलग्रन्थाननुरोधिनस्तु अत्र कथयन्ति यद् विशेष-गुणान्तरासामानाधिकरण्योक्तिस्वारस्यतो विशेषगुणसामानाधिकरण्यस्यापि अत्र हेतु-घटकता लभ्यते, तेनैव मनोगतक्रियायां वेगे वा व्यभिचारवारणं स्यादेव, न तत्र व्यभिचारवारणाय गुणपदम्, किन्तु उक्तध्वंसे = आकाशमनःसंयोगध्वंसे, विशेष-गुणान्तरासमानाधिकरणे विशेषगुणसमानाधिकरणे एकमात्रवृत्तौ = समवायेनोभय-वृत्तिभिन्ने, नित्यत्वरूपसाध्यविरहिणि व्यभिचारवारणायैव गुणत्वोपादानमिति। दृष्टा-न्तता चात्र न समयपरिमाणस्य, किन्तु गगनपरिमाणस्यैव, आकाशपरिमाणं यथा विशेषगुणान्तरासमानाधिकरणविशेषगुणसमानाधिकरण एकमात्रवृत्तिगुणत्ववन्नित्यम्, तथैव तादृशहेतुमान् शब्दोऽपि नित्य इति।

समयपरिमाणे = कालपरिमाणे, विशेषगुणसमानाधिकरणत्वसहितविशेषगुणा-न्तरासमानाधिकरण एकमात्रवृत्तिगुणत्वात्मकहेतोरभावाद् दृष्टान्तत्वासम्भवात्तदुपेक्ष्य गगनपरिमाणस्य दृष्टान्ततावलम्बिता विशेषगुणान्तरासामानाधिकरण्योक्तिस्वारस्येन विशेषगुणसामानाधिकरण्यस्य हेतुघटकतया लब्धत्वं वदता समयपरिमाणवदिति मूलग्रन्थाननुरोधिना — इति तत्त्वालोककृतामाशयः।

अनन्तरमत्रेदं शङ्कयते यद् शब्देतरविशेषगुणसमानाधिकरणत्वाभावात्मक-शब्देतरविशेषगुणासमानाधिकरणत्वरूपाभावः विशेषगुणसमानाधिकरणत्वाभावा-त्मकविशेषगुणासमानाधिकरणत्वरूपाभावश्च परस्परं भिन्नावेवाभावौ, न तु तयोर्द्वयो-रभावयोरभेदः, विभिन्नप्रतियोगिकत्वात्, एवं स्थितौ शब्देतरविशेषगुणासमानाधिकर-णत्वरूपाभावघटितप्रकृतहेतोः = एकमात्रवृत्तिगुणत्वात्मकहेतोः, विशेषगुणासमाना-धिकरणत्वरूपाभावघटितत्वविरहाद् वैयर्थ्यप्रसक्तेः सम्भावनैव नास्ति, ततश्च तत्रान्तरपदस्य व्यभिचारावारकतया वैयर्थ्यप्रदर्शनासम्भवे मिश्रकर्तृकतत्सार्थक्यसमर्थ-नमयुक्तमिति।

तत्र समाधीयते यद् शब्देतरविशेषगुणासमानाधिकरणत्वाभावघटित एकमात्रवृत्तिगुणत्वात्मकप्रकृतहेतोः उपस्थितौ लाघवाद् विलक्षणप्रतियोगिता(विलक्षणप्रतियोगितानिरूपकत्व)सम्बन्धेन स्व(शब्देतरविशेषणसामानाधिकरण्य)विशिष्टाभाववत्त्वसम्बन्धेन शब्देतरविशेषगुणसामानाधिकरण्यविशेषित एकमात्रवृत्तिगुणत्वहेतावेव तात्पर्यात्।

उक्तरीत्या = विलक्षणप्रतियोगितानिरूपकत्वसम्बन्धेन स्वविशिष्टाभाववत्त्वसम्बन्धेन, शब्देतरविशेषगुणसामानाधिकरण्यस्यैव शब्देतरविशेषगुणासमानाधिकरणत्वरूपाभावस्थाने निवेशः, अभावस्य प्रकारतया तत्र प्रवेशाभावेन सम्बन्धघटकतयाऽभावस्य तत्र प्रवेशसत्त्वेऽपि सम्बन्धोपस्थितेरनावश्यकतया अभावोपस्थितेरपेक्षाविरहादुपस्थितौ लाघवात्, ततश्च शब्देतरविशेषगुणसामानाधिकरण्यघटितहेतोः विशेषगुणसामानाधिकरण्यघटितत्वावश्यंभावात् शब्देतरार्थकस्य 'अन्तर'पदस्य व्यभिचारावारकस्य वैयर्थ्यसम्भवादिति प्रकाशः।[२०१]

तत्त्वालोकः – असिद्धिवारकविशेषणशून्यं कल्पान्तरमाह "यद्वे"-त्यादि।[१] अथ कालिकस्ववृत्तिवाच्यत्ववत्त्वादिसम्बन्धावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगित्वादिकमादाय स्वरूपासिद्धिवारणाय समवायसम्बन्धावच्छिन्नावच्छेदकत्वस्य[२] संयोगत्वसत्तात्वान्यतरावच्छिन्नप्रतियोगित्वसंयोगद्रव्यत्वाद्युभयाभावप्रतियोगित्वादिकमादाय स्वरूपासिद्धिवारणाय यद्धर्मातिरिक्तधर्मानवच्छिन्नत्वस्य यद्धर्मावच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावस्य संयोगसामान्याभावप्रतियोगित्वावच्छिन्नाभावरूपस्य वृक्षेऽसत्तया स्वरूपासिद्धिवारणाय प्रत्येकावच्छिन्नत्वस्य च निवेशनीयतयाऽसिद्धिवारकविशेषणानामत्रापि सत्त्वमेवेति चेद्।

न। यद्रूपविशिष्टप्रतियोगिताकूटवत्त्वं यत्र तत्र तद्रूपवृत्तिप्रतियोगिताकाभाववत्त्वमिति सामान्यव्याप्तेरभ्युपगमाद्, वैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकपर्याप्तीया या किञ्चिन्निष्ठनिरूपितत्वसम्बन्धावच्छिन्नाऽवच्छेदकताभिन्नाऽवच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिता, तद्वत्समवायसम्बन्धावच्छिन्नावच्छेदकताकत्वसम्बन्धेन, कूटवत्ता च स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन, रूपवृत्तित्वञ्च स्वनिरूपितसमवाय-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

२. 'समवायसम्बन्धावच्छिन्नावच्छेदकत्व' इत्येव पाठो मुद्रितप्राचीनपुस्तके।

सम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन बोध्यम्, एवञ्च नासिद्धिवारकस्य व्यर्थविशेषणस्यात्रावकाश इति।

केचित्तूभयावृत्तित्वाद्यप्रवेशेन लघुभूतं व्याख्यान्तरमाह ''यद्वे''ति, तेन नासिद्धिरित्यादि, असिद्धिवारकतत्तद्विशेषणोपादानेन नासिद्धिः, असिद्धिवारकत्वादेव तत्तद्विशेषणानां न व्यर्थतेत्यर्थ इति प्राहुः।

परे तु यद्धर्मावच्छिन्नप्रतियोगितात्वव्यापकत्वमेव हेतुः, व्यापकता च स्वनिष्ठाभावप्रतियोगितावच्छेदकत्वसम्बन्धेन, तथा च व्यापकतारूपाभाववैलक्षण्याद्वैयर्थ्यासम्भव इति वदन्ति।[२०२]

*प्रकाशः* – उक्तभागेनासिद्धिवारकविशेषणाघटितसामान्यव्याप्तिविषयक-'यद्वा'कल्पस्य व्याख्या आरभ्यते। 'यद्वा'कल्पान्तरन्तु इत्थमस्ति— 'यो यदीययावद्विशेषाभाववानि'त्यस्य यो यदीयानां = यद्धर्मावच्छिन्नप्रतियोगित्वानां, यावतां विशेषाभाववान् = प्रत्येकावच्छिन्नाभाववान्, स तद्धर्मावच्छिन्नाभाववान् इत्यर्थः। तथा च संयोगत्वावच्छिन्नप्रतियोगित्वव्यक्तीनां प्रत्येकावच्छिन्नाभावकूटवत्त्वस्य वृक्षे सत्त्वान्नासिद्धिर्न वा व्यर्थविशेषणत्वमिति ध्येयमिति।

अत्र 'यद्वा'कल्पे 'अथे'त्यादिना असिद्धिवारकविशेषणानामत्रापि सत्त्वमेवेति शङ्क्यते यत्समाधानमनेकैः प्रकारैः 'केचित्तु' 'परे तु' 'अन्ये तु' मत-स्वकीयमतसहितैर्विधास्यते। उपन्यस्ते 'यद्वा'कल्पे असिद्धिवारकस्य समवाय-सम्बन्धावच्छिन्नावच्छेदकत्वविशेषणस्यावश्यकता, तदभावे कालिकस्ववृत्ति-वाच्यत्ववत्त्वादिसम्बन्धेन संयोगत्वधर्मावच्छिन्नानां यावतां प्रतियोगित्वानां प्रत्येकावच्छिन्नस्यैव वृक्षात्मकपक्षे सत्त्वेन हेतुत्वेन विवक्षितस्य तादृशप्रत्येकावच्छिन्नाभावस्यासत्त्वेन स्वरूपासिद्धिः स्यात्।

एवं स्वरूपासिद्धिवारकस्य यद्धर्मातिरिक्तधर्मानवच्छिन्नत्वविशेषणस्याप्यत्रावश्यकता, अन्यथा संयोगत्वधर्मावच्छिन्नसंयोगत्वधर्मातिरिक्तधर्मावच्छिन्नप्रतियोगित्वं = संयोगत्वसत्तात्वान्यतरधर्मावच्छिन्नप्रतियोगित्वम्, आदाय संयोगद्रव्यत्वोभयाभावप्रतियोगित्वञ्चादाय सत्ताद्रव्यत्वयोर्वृक्षे सत्त्वेन तादृशप्रत्येकप्रतियोगित्वावच्छिन्नाभावात्मकविवक्षितहेतोर्वृक्षात्मके पक्षेऽसत्त्वेन स्वरूपासिद्धिः स्यात्।

तथा स्वरूपासिद्धिवारणाय प्रत्येकावच्छिन्नत्वविशेषणस्याप्यत्रावश्यकत्वम्, अन्यथा इदानीं (तदनुमानतः पूर्वावस्थायां) संयोगसामान्याभावस्येव संयोग-

सामान्याभावप्रतियोगित्वावच्छिन्नाभावस्य = संयोगसामान्याभावप्रतियोगित्वावच्छिन्नाभावस्वरूपस्य, संयोगत्वधर्मावच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावस्य च वृक्षात्मकपक्षेऽसत्तया तस्य च हेतुत्वेन परिगृहीतस्य संयोगत्वधर्मावच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावस्य तत्र वृक्षात्मकपक्षावृत्तितया स्वरूपासिद्धिः स्यात्।

अत्र वृक्षात्मकपक्षेऽसत्तयोक्तो यद्धर्मावच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावः एक एवाभावः सामान्याभावतुल्यो, न तु विशेषाभावकूटात्मकः, तस्य च संयोगत्वधर्मावच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावत्वेऽपि न तादृशप्रत्येकप्रतियोगित्वावच्छिन्नाभावत्वं, यावत्त्वेनैव तादृश(संयोगत्वावच्छिन्न)प्रतियोगित्वस्य तत्रावच्छेदकत्वम्, न तु प्रत्येकत्वेनेति ध्येयम्।

तत्र प्रथमं समाधीयते यद्– यद्रूपविशिष्टप्रतियोगिताकूटवत्त्वं यत्र तत्र तद्रूपवृत्तिप्रतियोगिताकाभाववत्त्वमिति सामान्यव्याप्तावेवोक्त'यद्वा'कल्पस्य तात्पर्यमिति। तत्र प्रतियोगितायां यद्रूपविशिष्टता स्वावच्छिन्नानुयोगिताका या पर्य्याप्तिस्तदीया या किञ्चिन्निष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना तथा अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना अवच्छेदकता, तया अवच्छेदकतया अनिरूपिता प्रतियोगिता तद्वत् समवायसम्बन्धावच्छिन्नावच्छेदकताकत्वसम्बन्धेन विवक्षिता। तादृशप्रतियोगिताकूटवत्ता च स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन विवक्षिता। साध्यकोटौ प्रतियोगितायां तद्रूपवृत्तिता च स्वनिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन विवक्षिता।

एवंसति संसर्गकोटावेव प्रविष्टेन समवायसम्बन्धावच्छिन्नावच्छेदकताकत्वेन प्रथमतो दर्शितायाः स्वरूपासिद्धेः संसर्गकोटिप्रविष्टप्रतियोगितायां तादृशयत्किञ्चिन्निष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वनिवेशेन मध्यदर्शितान्तदर्शितस्वरूपासिद्ध्योश्च वारणसम्भवात् प्रकारविधया हेतुशरीरेऽसिद्धिवारकविशेषणासत्त्वात् तद्वैयर्थ्यस्य नावकाशः।

सङ्गतिश्च प्रकृते— 'स्वावच्छिन्ने'त्यादि'समवायसम्बन्धावच्छिन्नावच्छेदकताकत्वा'न्तेन विवक्षितसम्बन्धेन, संयोगत्वगतैकत्वात्मकयद्रूपविशिष्टाः प्रतियोगिताः भवन्ति, संयोगत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाभावीयास्तत्तत् संयोगनिष्ठास्तत्तत्प्रतियोगित्वनिष्ठावच्छेदिकात्मिकाः प्रतियोगिताः, यतो हि तत्र संयोगत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूता अवच्छेदकता संयोगत्वनिष्ठावच्छेदकता, सा शिरोभागेन अवच्छेदकतात्वेन विशेषिता, पृष्ठभागेन च तत्तत्संयोगगततत्तत्प्रतियोगित्वेन

निरूपितत्वसम्बन्धेन विशेषिता, अतः सा संयोगत्वनिष्ठा दर्शितपर्याप्तिप्रतियोगिभूताऽवच्छेदकता, निरूपितत्वसम्बन्धावच्छिन्नतत्तत्प्रतियोगित्वनिष्ठावच्छेदकतानिरूपिता अवच्छेदकतात्वनिष्ठावच्छेदकतानिरूपिता च भवति, न तूक्तावच्छेदकताद्वयातिरिक्तावच्छेदकतानिरूपिता। अतः किञ्चिन्निष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता सा सञ्जायते, तादृशावच्छेदकतावती समवायसम्बन्धावच्छिन्ना अवच्छेदकता सैव अवच्छेदकता संयोगत्वनिष्ठा, तादृशावच्छेदकताकत्वात्मकसम्बन्धः संयोगत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाभावीयावच्छेदकीभूतप्रतियोगितासु सङ्घटते। अतः स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तादृशप्रतियोगिताकूटवति (संयोगत्वगतैकत्वात्मकयद्रूपविशिष्टा = संयोगत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाभावीयावच्छेदिका, या तत्तत्प्रतियोगिता, तादृशप्रतियोगिताकूटवति) वृक्षात्मकपक्षे स्वनिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन संयोगत्वगतैकत्वात्मकतद्रूपविशिष्टप्रतियोगिताकाभावस्य संयोगसामान्याभावात्मकस्य साध्यस्य सिद्धिः समुपपद्यते इति।

अत्र तत्तत्प्रतियोगित्वकूटात्मकहेतुगतकूटत्वात्मकहेतुतावच्छेदकस्याखण्डत्वोक्त्या वैयर्थ्यानवकाशोक्तिर्नोचिता भाति।

'केचित्तु'मतं 'केचित्तूभयावृत्तित्वे'त्यादिना दर्शयति। केचिदत्रेत्थं समादधति यद् 'यद्वे'ति व्याख्यानं 'यो यदीययावद्विशेषाभाववानि'त्यादिदीधितेरुभयावृत्तित्वाघटितत्वेन पूर्वव्याख्यानापेक्षया लघुभूतम्, एतद्(यद्वा)व्याख्याघटकं 'तेन नासिद्धिर्नवा व्यर्थविशेषणत्वमि'त्यस्य तु अत्रासिद्धिवारकसमवायसम्बन्धावच्छेदकत्वादिदर्शितविशेषणोपादानेन नासिद्धिः, असिद्धिवारकत्वादेव तत्तद्विशेषणानां न व्यर्थतेत्यभिप्रायादिति।

'परे तु' मतं 'परे तु' इत्यादिना उपन्यस्यते। प्रकृते परे कथयन्ति यद् 'यद्वा'कल्पस्य स्वनिष्ठाभावप्रतियोगितावच्छेदकत्वसम्बन्धेन यद्धर्मावच्छिन्नप्रतियोगितात्वव्यापकत्वस्य सामान्यासाधकतया हेतुत्वे तात्पर्यमस्ति, अर्थाद् यो यो यद्धर्मावच्छिन्नप्रतियोगितात्वस्य स्वनिष्ठाभावप्रतियोगितावच्छेदकत्वसम्बन्धेन व्यापकः (व्यापकतावानिति वा) स तद्धर्मावच्छिन्नाभाववानिति वृक्षे संयोगत्वावच्छिन्नाभावात्मकसंयोगसामान्याभावसाधकसामान्या व्याप्तिः।

स्वनिष्ठाभाव(संयोगत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाभाव)प्रतियोगितावच्छेदकत्ववृक्षात्मकपक्षे संयोगत्वधर्मावच्छिन्नप्रतियोगितात्वव्यापकत्वात्मकहेतोः सत्त्वेन, तेन तत्र संयोगत्वावच्छिन्नाभावात्मकसंयोगसामान्याभावः सिद्ध्यति।

अत्र स्वसमानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्व(स्वसमानाधिकरणप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकीभूतधर्माभाववत्त्व)रूपव्याप्यत्वरूपस्य अभावस्य विलक्षणस्यैव सत्त्वान्न व्यर्थेतिति भावः।[२०२]

तत्त्वालोकः – अन्ये — तूभयावृत्तिधर्मावच्छिन्नत्वस्योभयावृत्तिधर्मसत्तात्वान्यतरावच्छिन्नप्रतियोगिताकाभावं स्ववृत्तिवाच्यत्ववत्तासम्बन्धावच्छिन्नतद्व्यक्तित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावञ्चादाय स्वरूपासिद्धिवारणाय स्वरूपसम्बन्धावच्छिन्नतद्व्यक्तित्वनिष्ठावच्छेदकत्वान्यावच्छेदकत्वानिरूपितत्वार्थकत्वमिव यद्धर्मावच्छिन्नत्वस्यापि स्वरूपासिद्धिवारणाय समवायसम्बन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकत्वान्यावच्छेदकत्वानिरूपितत्वार्थकत्वमस्तूभयावृत्तित्वस्याप्रवेशेन तदनुपादाननिबन्धनासिद्धिर्न, तस्याप्रवेशादेव च न व्यर्थविशेषणतेत्यालपन्ति।

अवच्छिन्नत्वस्यातिरिक्तानवच्छिन्नत्वरूपस्य भेदघटितत्वेनावच्छिन्नत्वसापेक्षतया दुर्न्निरूपत्वेन विलक्षणस्यैव वाच्यतया समवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगितानिष्ठमितरानवच्छिन्नप्रतियोगितानिष्ठमिव विलक्षणमेवाङ्गीकार्यमित्यसिद्धिवारकविशेषणस्याप्रवेशेन तदनुपादानप्रयुक्तासिद्धिर्न्न यतो नासिद्धिरतो न व्यर्थविशेषणत्वमित्यर्थः।

न च प्रत्येकपदस्यासिद्धिवारकस्य प्रवेश इति वाच्यम्, स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तादृशप्रतियोगिताकूट एव हेतुरित्यस्यैव वक्तव्यत्वादन्यादृशस्य प्रत्येकावच्छिन्नाभावस्य दुर्वचत्वादिति।

अत एव यावत्त्वस्य व्यापकत्वार्थकत्वोपगमेन संसर्गकोटावुभयावृत्तित्वादेर्निवेशेन च पूर्वविकल्पेऽपि वैयर्थ्यपरीहारसम्भवादव्यर्थविशेषणत्वसम्पत्त्यै कल्पान्तरस्यानुसृतस्य यावत्त्वादेर्व्यापकत्वार्थकत्वोपगमादिना तत्फलकत्वसम्पादनं सन्दर्भविरुद्धमित्यपि निरस्तमिति तु वयं ब्रूमः।[२०३]

*प्रकाशः* – पूर्वं (२०२ संख्यकखण्डे) 'यद्वा'कल्पेऽसिद्धिवारकविशेषणशून्यतयोक्तेऽसिद्धिवारकविशेषणत्रयस्याप्यत्रापि सत्त्वमिति या शङ्का उत्थापिता,

तत्समाधानपरम् 'अन्ये तु' मतं स्वमतञ्च दर्शयितुं तत्त्वालोककृद्भिरेतत्खण्डोपक्रमः क्रियते।

तत्रान्ये कथयन्ति यद् 'यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानि'त्यस्य यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववानित्यस्मिन् प्रथमव्याख्यात्मके कल्पे स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धावच्छिन्न(तत्संयोगव्यक्तिगत)तद्व्यक्तित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाव-तद्व्यक्तित्वरूपोभयावृत्तिसत्तात्वान्यतरधर्मावच्छिन्नप्रतियोगिताकाभावावादाय तादृशाभावयोः वृक्षात्मकपक्षावृत्तित्वेन प्राप्तस्वरूपासिद्धिवारणाय यथा स्वरूपसम्बन्धावच्छिन्नतद्व्यक्तित्वनिष्ठावच्छेदकत्वान्यावच्छेदकत्वानिरूपितत्वार्थकता उभयावृत्तिधर्मावच्छिन्नत्वस्य भवति तथैव द्वितीयेऽप्येतस्मिन् यद्वाकल्पे 'यो यदीययावद्विशेषाभाववानि'त्यस्य व्याख्याने यद्धर्मावच्छिन्नत्वस्यापि दर्शितरीत्या प्राप्तस्वरूपासिद्धिवारणाय समवायसम्बन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकत्वान्यावच्छेदकत्वानिरूपितत्वार्थकताऽस्तु, अत्रोभयावृत्तित्वस्य प्रवेशविरहेण, तदनुपादान(तदप्रवेश)निबन्धना स्वरूपासिद्धिर्न स्यात्, उभयावृत्तित्वस्य तस्य पूर्वत्र स्वरूपासिद्धिवारकविशेषणस्यात्र 'यद्वा'कल्पेऽप्रवेशादेव न व्यर्थविशेषणतेति वदन्त्यन्ये, तस्याप्रवेशादेव च न व्यर्थविशेषणतेत्यालपन्ति।

उक्तोपन्यासानन्तरम् 'अवच्छिन्नस्ये'त्यादि 'सन्दर्भविरुद्धमित्यपि निरस्तमिति तु वयं ब्रूम' इत्यन्तं स्वाभिमतमुपन्यस्यति तत्त्वालोककृत्। तेन यद्वात्मककल्पान्तरे उत्थापितस्वरूपासिद्धिपूर्व[पक्ष]स्य तथा तत्समाधानपरकदर्शित(प्रथमद्वितीय'केचित्तु' तृतीय 'परे तु' चतुर्थ 'अन्ये तु')मतानां समीक्षाऽपि सिद्ध्यति।

तत्त्वालोककृतः कथयन्ति यदितरानवच्छिन्नप्रतियोगितानिष्ठमवच्छिन्नत्वं यथा विलक्षणमेव भवति, न तु अतिरिक्तानवच्छिन्नत्वरूपं भवति, तथैव समवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगितानिष्ठमप्यवच्छिन्नत्वं विलक्षणमेव मन्तव्यं यतो हि इतरानवच्छिन्नप्रतियोगितानिष्ठावच्छिन्नत्वस्य अतिरिक्तानवच्छिन्नत्वरूपतास्वीकारे तस्य भेदघटितत्वेनावच्छिन्नत्वसापेक्षतयाऽनिरूपता स्यात्। अर्थादतिरिक्तानवच्छिन्नत्वरूपत्वे तस्य = अतिरिक्तानवच्छिन्नत्वस्य, तदवच्छेदकभिन्नावच्छेदकत्वावच्छिन्नभिन्नत्वमर्थः, भेदात्मकस्य तस्य स्वप्रतियोगितावच्छेदकावच्छिन्नज्ञानसापेक्षज्ञानकतया स्वप्रतियोगितावच्छेदकस्यानन्तावच्छिन्नवर्तिनः स्वरूपसम्बन्धात्मकस्यानन्त्येन दुर्बोधत्वरूपदुर्निरूपतैव। अत इतरानवच्छिन्नप्रतियोगितानिष्ठमवच्छिन्नत्वं विलक्षणमेवाङ्गी-

कार्यं भवति, तथैव समवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगितानिष्ठमप्य-वच्छिन्नत्वं विलक्षणमेव, न तु अतिरिक्तानवच्छिन्नत्वरूपम्।

एवंसति असिद्धिवारक(संयोगत्वसत्तात्वान्यतरावच्छिन्नाभावप्रतियोगित्व-संयोगद्रव्यत्वाद्युभयाभावप्रतियोगित्वादिकमादाय प्राप्तस्वरूपासिद्धिवारक)विशेषणस्य इह कल्पे (यद्वाकल्पे) प्रवेशविरहेण तदनुपादानप्रयुक्तासिद्धिर्न, यतो नासिद्धिरतो न व्यर्थविशेषणतेत्यर्थः (यद्वाकल्पान्तर्गतस्य 'नासिद्धिर्न वा व्यर्थविशेषणत्वमि'त्य-स्यार्थः)।

अत्र शङ्कामुपस्थाप्य प्रतिषेधति 'न चे'त्यादिना। न च प्रत्येकपदस्य असिद्धिवारकस्य अत्र यद्वाकल्पे प्रवेशस्तु अस्त्येव (प्रत्येकपदाभावेऽत्र संयोगत्वधर्मा-वच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावं संयोगसामान्याभावप्रतियोगित्वावच्छिन्ना-भावरूपमादाय तादृशाभावस्य तदनुमानतः पूर्वं वृक्षात्मकपक्षेऽसत्तया स्वरूपासिद्धिः स्यात्तद्वारणाय 'प्रत्येक'पदस्यावश्यकता)। उक्त शङ्का 'अन्यादृशस्य प्रत्येकावच्छिन्ना-भावस्य दुर्वचतया स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तादृश = संयोगत्वा-दियद्धर्मावच्छिन्न,-प्रतियोगिताकूट एव हेतुरित्यस्यैव वक्तव्यत्वादि'त्युपन्यस्यापाकृता।

संयोगत्वादियद्धर्मावच्छिन्नप्रत्येकप्रतियोगित्वावच्छिन्नाभावस्य अन्यादृशस्य दुर्वचत्वेन स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन यद्धर्मावच्छिन्नप्रतियोगिता-कूटार्थकतैव तस्य, तथासति संयोगसामान्याभावप्रतियोगित्वावच्छिन्नाभावस्वरूप-दर्शिताभावस्य विवक्षितोक्तहेतुग्राह्यत्वविरहेण तस्य वृक्षात्मकपक्षेऽसत्त्वेऽपि विवक्षित-हेतोस्तादृशप्रतियोगिताकूटस्य विवक्षितसम्बन्धेन वृक्षात्मकपक्षे सत्त्वेन नासिद्धिर्न वा तद्वारकप्रत्येकपदस्य प्रवेश इत्याशयात्।

उपपादितस्य स्वाभिमतस्य दाढर्चाय 'अत एवे'त्यादि उपन्यस्यते। अत एव = अत्र कल्पान्तरे समवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगितानिष्ठस्या-वच्छिन्नत्वस्य इतरानवच्छिन्नप्रतियोगितानिष्ठावच्छिन्नत्वस्यैव विलक्षणत्वोपगमादेव, तथात्र स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तादृशप्रतियोगिताकूटस्यैव हेतुत-याऽभिप्रेतत्वसत्त्वादेव च, अत्र सन्दर्भविरुद्धता दोषो न।

अन्यथाऽत्र 'यत्र यद्रूपविशिष्टप्रतियोगिताकूटवत्त्वं तत्र तद्रूपवृत्तिप्रतियोगिता-काभाववत्त्वमि'त्यादिभिः पूर्वोक्तप्रकारैर्निर्दोषत्वोपपादने, अर्थादसिद्धिवारकस्यात्र यद्वाकल्पे उक्तदिशा संसर्गकोटावेव सन्निवेशकरणेन यावत्त्वस्य व्यापकत्वार्थकरणेन वाऽसिद्धिवारकविशेषणवैयर्थ्यपरिहारे सति पूर्वस्मिन् (प्रथमे) 'यो यज्जातिसमाना-

धिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववानि'त्यादिनोक्तेऽपि यावत्त्वस्य व्यापकत्वार्थकत्वोपगमेन उभयावृत्तित्वादेः संसर्गकोटावेव निवेशेन च अव्यर्थ-विशेषणत्वसम्पत्त्यै = व्यर्थविशेषणत्वाभावाय, कल्पान्तर(यद्वाकल्प)स्य अनुसरणं तत्र यावत्त्वादेर्व्यापकत्वार्थकत्वोपगमादिना तत्फलकत्व(प्रथमकल्पफलकत्व)सम्पादनं सन्दर्भविरुद्धं स्यादिति वयं (तत्त्वालोककृतः) ब्रूमः।

उभयावृत्तिपदयावत्पदघटितप्रथमदर्शितकल्पे उत्थापितदोषाणां समाधानाय यत्रोभयावृत्तित्वस्य संसर्गकोटौ निवेशो यावत्त्वस्य व्यापकत्वार्थकत्वोपगमश्च न कृतस्तथेहापि कल्पान्तरे उत्थापितस्वरूपासिद्धिवैयर्थ्यदोषप्रशमनायासिद्धिवारकस्य संसर्गकोटौ निवेशो यावत्त्वस्य व्यापकत्वार्थकत्वोपगमश्च नोचितस्तस्मादिह कल्पान्तरे यद्वोक्ते उत्थापितस्वरूपासिद्धिपरिहारो मदुक्तरीत्यैव विधातुमचितो न तु संसर्गकोटौ तथानिवेशेन यावत्त्वस्य व्यापकत्वार्थकत्वोपगमेन वेति तत्त्वालोककृतामाशय इति भावः।[२०३]

तत्त्वालोकः— **अथ 'यो यदीययावद्विशेषाभाववानि'त्यस्य— यो यदीयानां = यदभावप्रतियोगित्वानां, यावतां विशेषाभाववान् = प्रत्येकधर्मा-वच्छिन्नाभाववानिति, 'स तत्सामान्याभाववानि'त्यस्य च— स तदात्मक-सामान्याभाववानित्यर्थ एव कुतो नाङ्गीकृतः? असिद्धिवारकविशेषणस्या-सम्भवाल्लाघवाच्चेति त्वत्र चिन्त्यम्।**

**''ध्येयमि''ति।[१] सामान्याभावप्रतियोगित्वस्य प्रतियोगितावच्छेदक-रूपताया अतिरिक्तताया वा सिद्धान्तसिद्धतया सन्दिग्धासिद्धेर्दुर्वारत्वप्रसङ्ग-रूपास्वरसं सूचयितुमुक्तम्।[२०४]**

*प्रकाशः*— 'यो यदीययावद्विशेषाभाववानि'ति दीधितेः यद्वात्मककल्पान्तरेण यादृशार्थो दर्शितस्तत्रासिद्धिवारकविशेषणशून्यकल्पत्वेनावतरितेऽसिद्धिवारकविशेषण-सत्त्वशङ्का तत्समाधाने एतत्पूर्वभागद्वयेन कृते। तत्रोच्यते यदसिद्धिवारकविशेषणा-भावाल्लाघवाच्च 'यद्वे'त्युपक्रम्य 'यो यद्धर्मावच्छिन्नप्रतियोगितानां यावतां प्रत्येका-वच्छिन्नाभाववानि'त्यादि यदुक्तम्, तत्स्थाने 'यो यदभावप्रतियोगित्वानां यावतां प्रत्येकावच्छिन्नाभाववान् स तदात्मकसामान्याभाववानि'त्येवार्थो 'यो यदीय-यावद्विशेषाभाववानि'त्यादेर्दीधितेः कुतो न दर्शित इति। 'यद्धर्मावच्छिन्नयावत्प्रति-योगित्व'स्थाने 'यदभावयावत्प्रतियोगित्वो'क्तौ 'स तद्धर्मावच्छिन्नाभाववानि'त्यस्य

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.१०

स्थाने च 'स तदात्मकसामान्याभाववानि'त्युक्तौ च असिद्धिवारकविशेषणाभावलाघवौ भवत एवेति तदनुक्तिकारणं चिन्त्यमिति तदाशयः, संयोगाभावप्रतियोगित्वानां यावतां प्रत्येकावच्छिन्नाभावात्मकहेतुना तदात्मकसामान्याभावस्य साध्यस्य साधने क्षतेरभावात्। तथासति असिद्धिवारकस्य 'प्रत्येक'पदस्य प्रवेशस्तु न शङ्कितुं शक्यः, पूर्वविहितसमाधानानुसारं स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तादृशप्रतियोगित्वकूटस्यैव हेतुत्वे तत्तात्पर्यात्।

अत्र 'यद्वा'कल्पान्त्यं 'ध्येयमि'ति। तत्रास्वरससूचकमस्वरसकारणञ्च सामान्याभावप्रतियोगित्वस्य प्रतियोगितावच्छेदकरूपता अतिरिक्तता वा सिद्धान्तसिद्धास्ति। तथास्थितौ संयोगत्वधर्माव[च्छिन्नाभाव]प्रतियोगितानां संयोगत्वात्मकत्वे अतिरिक्तत्वे वा तदवच्छिन्नाभावस्य वृक्षात्मकपक्षे संयोगसामान्याभावसाधकतया पर्यवसितदर्शितहेतोः दर्शितानुमानतः पूर्वं वृक्षात्मके पक्षे संयोगसामान्याभावात्मकसाध्यस्येव सिद्धत्वविरहेण सन्दिग्धत्वस्यैव सत्त्वेन सन्दिग्धासिद्धिदोषः, हेतोः पक्षवृत्तित्वनिर्णयविरहात् = पक्षवृत्तित्वस्य सन्दिग्धत्वात्, स्यादिति तदाशयः।[२०४]

**तत्त्वालोकः – 'विशेष'पदस्य न्यूनवृत्तिधर्मवदर्थकतामभ्युपेत्य व्याख्यानं दूषयितुमाह "यो यद्धर्मन्यूनवृत्ती"त्यादि।[१]**

**न्यूनवृत्तित्वञ्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्, सत्तात्वस्य न्यूनवृत्तित्ववारणाय स्वसमानाधिकरणेति। ननु न्यूनवृत्तिधर्मे पक्षतावच्छेदकविशिष्टान्यत्वं वाच्यम्, वैशिष्ट्यञ्च — स्वाश्रयवृत्तिवृत्तित्व[२], - स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन। तथा च घटावृत्तिसंयोगत्वस्य वृक्षपटादिसंयोगद्वयवृत्तित्वाद्वृक्षसमवेतत्वस्य च वृक्षतदितरोभयवृत्तिसत्तावृत्तित्वान्न पक्षतावच्छेदकविशिष्टान्यत्वमित्यत आह "वृक्षान्यासमवेतत्वे"ति।[३]**

**न च वृक्षान्यासमवेतत्वस्य वृक्षत्ववृक्षरूपादावेव सत्त्वेनन संयोगत्वसामानाधिकरण्यमिति वाच्यम्, वृक्षद्वयसंयोगान्तर्भावेण तत्सत्त्वात्तस्य वृक्षान्यासमवेतत्वात्।**

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०
२. 'स्वाश्रयवृत्तित्वे'त्येव पाठो मुद्रितप्राचीनपुस्तके।
३. तत्रैव, जागदीशीमूलम्, पृ. १०

अथ पक्षतावच्छेदकविशिष्टान्यत्वस्य वृक्षसंयोगनिष्ठतत्तद्व्यक्तित्वेऽपि न सम्भवस्तस्य वृक्षान्यकप्यादिवृत्तिवृत्तित्वात्, न च वृक्षद्वयसंयोगनिष्ठ-तद्व्यक्तित्व एव तत्सम्भव इति वाच्यम्, तद्वृक्षत्वस्य पक्षतावच्छेदकत्वे उक्ततद्व्यक्तित्वेऽपि पक्षतावच्छेदकविशिष्टान्यत्वासम्भवादिति चेद्वैशिष्ट्यस्य स्वविशिष्टवृत्तिवृत्तित्वघटितेन विवक्षितत्वात्, वैशिष्ट्यञ्च स्वानाश्रयत्व,-स्वाश्रय[1]वृत्तिगुणानाश्रयत्वोभयसम्बन्धेन। तथा च कप्यादेः स्वानाश्रयत्वेऽपि स्वाश्रयवृत्तिसंयोगरूपगुणानाश्रयत्वविरहेण वृक्षसंयोगनिष्ठतद्व्यक्तित्वेऽपि विशिष्टान्यत्वसम्भवादिति।

यद्वा पक्षसमवेतविशिष्टान्यत्वमेव विशेषणम्, वैशिष्ट्यञ्च स्व-वृत्तित्व,-स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन, तथा च न कोऽपि दोषः।

वस्तुतस्तु न्यूनवृत्तित्वस्यैव यद्धर्मसमानाधिकरणत्वे सति यद्धर्माश्रय-विशिष्टान्यत्वार्थकत्वं स्वीकृत्य यो यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताक-यावदभाववान् स तद्धर्मावच्छिन्नाभाववानित्येवं व्याप्तिरेव वाच्या। वैशिष्ट्य-ञ्चानुपदोक्तोभयसम्बन्धेन। एवञ्च सामान्यव्याप्तिग्रहाद्व्याप्यसामान्याघटक-पक्षतावच्छेदकविशिष्टान्यत्वादिघटितविशेषहेतुकानुमित्यसम्भवेऽपि न क्षतिरिति।

एवं वृक्षपदस्य तत्संयोगवदर्थकतया तत्संयोगवदन्यासमवेतत्वे पक्ष-समवेतरूपादिविशिष्टत्वसत्त्वेऽपि संयोगत्वाश्रयविशिष्टान्यत्वसत्त्वेन तत्संग्रहः, तत्तद्वृक्षत्वं पक्षतावच्छेदकीकृत्योक्तहेतुना संयोगसामान्याभावसाधने प्रागुक्तेव वक्ष्यमाणेऽपि च वृक्षान्यासमवेतत्वमादाय दोषासम्भवाद् वृक्षपदस्य तत्तत्संयोगवदर्थकताया अभ्युपेयत्वादिति त्वभिनवः पन्थाः।[२०५]

*प्रकाशः*— 'यो यदीययावद्विशेषाभाववानि'त्यादिसामान्यव्याप्तिप्रदर्शक-दीधितेस्तद्घटक'विशेष'पदस्य न्यूनवृत्तिधर्मवदर्थकतां स्वीकृत्य 'यो यद्धर्मन्यूनवृत्ति-धर्मावच्छिन्नयावदभाववान् स तद्धर्मावच्छिन्नाभाववानि'ति यद्व्याख्यानं यच्च तथा-व्याख्याने दूषणमुपन्यस्तं तदिहोक्तखण्डेन व्याख्यायते।

तत्र प्रथमं तद्घटकन्यूनवृत्तित्वं परिष्क्रियते— 'न्यूनवृत्तित्वञ्चे'त्यादिना। स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपमिह न्यून-

---

१. 'स्वानाश्रये'ति प्राचीनमुद्रितपुस्तके पाठः।

वृत्तित्वम्, स्वपदाभ्यां संयोगत्वादेर्यद्धर्मस्य परिग्रहः, तत्तत्संयोगगततत्तद्व्यक्तित्वे संयोगत्वसमानाधिकरणत्वस्य संयोगत्वाधिकरणमपरव्यक्तिमादाय संयोगत्वसमानाधिकरणं तद्व्यक्तित्ववद्भेदमादाय संयोगत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य च सत्त्वाल्लक्षणसङ्गतिः।

तत्र स्वसमानाधिकरणत्वविशेषणानुपादाने संयोगत्वन्यूनवृत्तौ सत्तात्वे संयोगत्वसमानाधिकरणसत्तात्ववद्भेदप्रतियोगितावच्छेदकत्वसत्त्वेनातिव्याप्तिः स्यादतः स्वसमानाधिकरणत्वस्योपादानम्। तथासति सत्तात्वे संयोगत्वसामानाधिकरण्यविरहेणातिव्याप्तिविरहः। लक्षितायाः संयोगत्वन्यूनवृत्तितायाः घटावृत्तिसंयोगत्वपटावृत्तिसंयोगत्वादौ सत्त्वाद्यावदभावान्तर्गतस्य तादृशसंयोगत्वन्यूनवृत्तिधर्मावच्छिन्नाभावस्य घटादावेव सत्त्वेन वृक्षात्मकपक्षेऽसत्त्वात् स्वरूपासिद्धिः प्रसज्यति, अतो 'विशेष'पदस्य न्यूनवृत्तिधर्मवदर्थकत्वं स्वीकृत्योक्तव्याख्यानमसङ्गतम्।

उक्ते न्यूनवृत्तिधर्मवदर्थकविशेषपदव्याख्याने स्वरूपासिद्धिदोषापादकतया 'घटावृत्तिसंयोगत्वादी'त्युपन्यस्य 'वृक्षान्यासमवेतत्वे'ति यदुपन्यस्तम्, तदवतरणमत्र दीयते, अर्थात् तत्र स्वरूपासिद्धेरापादनाय घटावृत्तिसंयोगत्वेतरस्य वृक्षान्यासमवेतत्वस्य संयोगत्वन्यूनवृत्तिधर्मस्योल्लेखे किं बीजम्? पूर्वोपन्यस्तघटावृत्तिसंयोगत्वात्मकसंयोगत्वन्यूनवृत्तिधर्ममाश्रित्यैव तत्र स्वरूपासिद्धिसम्भवादिति जिज्ञासायामुच्यते यद् यद्धर्मन्यूनवृत्तिधर्मे पक्षतावच्छेदकविशिष्टान्यत्वेन विशेषिते सति घटावृत्तिसंयोगत्वे संयोगत्वन्यूनवृत्तित्वसत्त्वेऽपि पक्षतावच्छेदकविशिष्टान्यत्वविरहेण घटावृत्तिसंयोगत्वरूपसंयोगत्वन्यूनवृत्तिधर्मं परिगृह्य स्वरूपासिद्ध्यसम्भवेऽपि वृक्षान्यासमवेतत्वरूपसंयोगत्वन्यूनवृत्तिधर्मं परिगृह्य न्यूनवृत्तिधर्मे पक्षतावच्छेदकविशिष्टान्यत्वेन विशेषितेऽपि स्वरूपासिद्धिः स्यादेवेति वृक्षान्यासमवेतत्वोपादानम्।

अत्र न्यूनवृत्तिधर्मविशेषणीभूतपक्षतावच्छेदकधर्मविशिष्टान्यत्वघटकं वैशिष्ट्यम् स्वाश्रयवृत्तिवृत्तित्व,-स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन विवक्षितम्, घटावृत्तिसंयोगत्वस्य संयोगत्वन्यूनवृत्तिधर्मस्य वृक्षपटसंयोगे तृणपटसंयोगे च वृत्तितासत्त्वेन वृक्षत्वरूपपक्षतावच्छेदकाश्रयो यो वृक्षः, तद्वृत्तिवृक्षपटसंयोगवृत्तित्वेन स्वाश्रयवृत्तिवृत्तित्वसम्बन्धस्य तृणपटसंयोगमादाय वृक्षत्वरूपपक्षतावच्छेदकानाश्रयवृत्तिवृत्तित्वसम्बन्धस्य च सत्त्वेन वृक्षत्वरूपपक्षतावच्छेदकविशिष्टत्वस्यैव सत्त्वेन तदन्यत्वविरहात्। एतदेव 'तथा च घटावृत्तिसंयोगत्वस्य वृक्षपटादिसंयोगद्वयवृत्तित्वादि'त्युपन्यस्य सूचितम्।

एवं वृक्षसमवेतत्वेऽपि न वृक्षत्वात्मकपक्षतावच्छेदकविशिष्टान्यता, किन्तु पक्षतावच्छेदकवृक्षत्वविशिष्टतैव, वृक्षत्वाश्रयवृत्तिसत्तायां वृक्षत्वानाश्रयवृत्तिसत्तायाञ्च वृक्षसमवेतत्वस्य सत्त्वाद्, अतो वृक्षसमवेतत्वं लघुभूतं संयोगत्वन्यूनवृत्तिधर्मं परिहाय नञ्द्वयोपादानेन 'वृक्षान्यासमवेतत्वमु'क्तम्। तत्र वृक्षान्यासमवेतत्वरूपे संयोगत्वन्यून-वृत्तिधर्मे स्वाश्रयवृत्तिवृत्तित्व,-स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन वृक्षत्वरूप-पक्षतावच्छेदकविशिष्टत्वविरहात्तदन्यत्वस्य सत्त्वात्तदवच्छिन्नाभावस्य वृक्षात्मकपक्षेऽ-सत्त्वेन स्वरूपासिद्धिरापतेदित्युक्तम्। यद्यपि वृक्षान्यासमवेतत्वस्य सत्तावृत्तित्वविरहाद् वृक्षत्ववृक्षरूपादौ वृक्षान्यासमवेतत्वस्य सत्त्वेऽपि तत्र न संयोगत्वसामानाधिकरण्यम्, तथापि वृक्षद्वयसंयोगे वृक्षान्यासमवेतत्वस्य तत्र तस्य संयोगत्वसामानाधिकरण्यस्य च सम्भव एवेति समञ्जसम्।

अनन्तरमत्र 'अथ पक्षतावच्छेदकविशिष्टान्यत्वस्ये'त्यादिना शङ्क्यते यद् यद्धर्मन्यूनवृत्तिधर्मे पक्षतावच्छेदकविशिष्टान्यत्वविशेषणे सति वृक्षगतसंयोगनिष्ठतत्तद्-व्यक्तित्वेऽपि पक्षतावच्छेदकविशिष्टान्यत्वविरहेण संयोगत्वन्यूनधर्मत्वेन सङ्ग्राह्यस्य तस्य परिग्रहो न स्यात्, वृक्षसमवेतसंयोगनिष्ठतत्तद्व्यक्तित्वधर्मे वृक्षत्वात्मकपक्षता-वच्छेदकविशिष्टान्यत्वविरहश्च वृक्षकपिसंयोगगत-तद्व्यक्तित्वधर्मे वृक्षत्वाश्रय-वृत्तिवृत्तित्वस्य वृक्षत्वानाश्रय(कपि)वृत्तिवृत्तित्वस्य च सत्त्वेन वृक्षत्वात्मकपक्षता-वच्छेदकविशिष्टत्वस्यैव सत्त्वात्।

वृक्षकपिसंयोगनिष्ठतद्व्यक्तित्वधर्मे उक्तदिशा वृक्षत्वात्मकपक्षतावच्छेदक-विशिष्टान्यत्वासम्भवेऽपि वृक्षद्वयसंयोगनिष्ठतद्व्यक्तित्वे पक्षतावच्छेदकवृक्षत्व-विशिष्टान्यत्वं सम्भवेदेव, तस्य वृक्षत्वानाश्रयवृत्तिवृत्तित्वविरहादित्यपि तद्वृक्षत्वस्यैव पक्षतावच्छेदकत्वे, तत्रापि पक्षतावच्छेदकविशिष्टान्यत्वासम्भवात् स्वानाश्रयवृत्ति-वृत्तित्वरूपद्वितीयसम्बन्धस्यापि तत्र सद्भावादिति पूर्वपक्षः।

अत्र 'वैशिष्ट्यस्य स्वविशिष्टवृत्तिवृत्तित्वघटितेन विवक्षितत्वादि'त्यादिना समाधीयते। अर्थात्पक्षतावच्छेदकविशिष्टान्यत्वरूपन्यूनवृत्तिधर्मविशेषणघटकपक्षता-वच्छेदकविशिष्टतानियामकतया पूर्वदर्शितद्वितीयसम्बन्धस्थाने स्वानाश्रयत्व,-स्वा-श्रयवृत्तिगुणानाश्रयत्वोभयसम्बन्धेन स्वविशिष्टवृत्तिवृत्तित्वमेव देयम्, न तु स्वानाश्रय-वृत्तिवृत्तित्वरूपः प्राक्तनः। एवं सति वृक्षसंयोगनिष्ठतद्व्यक्तित्वरूपसंयोगत्वन्यूनवृत्तिधर्मे पक्षतावच्छेदकवृक्षत्वविशिष्टान्यत्वस्य नानुपपत्तिः, तस्य वृक्षान्यकपिवृत्तिवृत्तित्वेऽपि कपौ स्वानाश्रयत्व(पक्षतावच्छेदकवृक्षत्वानाश्रयत्व)सत्त्वेऽपि स्वाश्रय(वृक्षत्वाश्रय)-वृत्तिसंयोगात्मकगुणानाश्रयत्वस्वरूपद्वितीयसम्बन्धविरहेण स्वविशिष्टत्वाभावात्

स्वविशिष्टत्वविरहे सति स्वाश्रयवृत्तिवृत्तित्वस्वविशिष्टवृत्तिवृत्तित्वोभयसम्बन्धेन पक्षतावच्छेदकविशिष्टत्वाभावात्पक्षतावच्छेदकविशिष्टान्यत्वस्य तत्रोपपत्तिसम्भवात्।

संयोगत्वन्यूनवृत्तितया घटावृत्तिसंयोगत्ववृक्षसमवेतत्वयोः परिग्रहाभावाय वृक्षान्यासमवेतत्वे तत्सङ्गतये कपिं परिगृह्य वृक्षसंयोगनिष्ठतद्व्यक्तित्वे तदनुपपत्त्यभावाय च न्यूनवृत्तित्वे पक्षतावच्छेदकविशिष्टान्यत्वविशेषणं विहाय तत्स्थाने पक्षसमवेतान्यविशेषणं 'यद्वे'त्यादिनोच्यते। तत्र वैशिष्ट्यं स्ववृत्तित्व,-स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन विवक्षितम्। वृक्षसंयोगगततद्व्यक्तित्वे पक्षसमवेत(वृक्षकपिसंयोग)वृत्तित्वसत्त्वेऽपि कपेः पक्ष(वृक्ष)समवेतानाश्रयत्वविरहेण पक्षसमवेतानाश्रयवृत्तिवृत्तित्वविरहेण पक्षसमवेतविशिष्टान्यत्वसम्भवात्। घटावृत्तिसंयोगत्वे वृक्षवृत्तिसंयोगपटवृत्तिसंयोगवृत्तित्वसत्त्वेन पक्षसमवेतविशिष्टतैव, न तु पक्षसमवेतविशिष्टान्यता। एवं वृक्षसमवेतत्वेऽपि पक्षसमवेतविशिष्टतैव, न तु पक्षसमवेतविशिष्टान्यता, वृक्षवृक्षसंयोगात्मकपक्षसमवेतमादाय स्व(पक्ष)समवेतवृक्षवृक्षसंयोगवृत्तित्वस्य स्वानाश्रय(वृक्षवृक्षसंयोगानाश्रय = कपि)वृत्तिवृक्षकपिसंयोगवृत्तित्वस्य वृक्षसमवेतत्वे सत्त्वात्। वृक्षान्यासमवेतत्वे तु न पक्षसमवेतविशिष्टता, तत्र स्वानाश्रय(पक्षसमवेतानाश्रय)वृत्तिवृत्तित्वासम्भवादिति न कोऽपि दोषः।

'एवञ्चे'त्यादि 'न क्षतिरि'त्यन्तेन दर्शयिष्यमाणदोषबुद्ध्या विहितोपपादनानन्तरं 'वस्तुतस्तुनो'पक्रम्योच्यते — यद् वस्तुतस्तु यो यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नयावदभाववानित्यादिना दर्शितसामान्यव्याप्तिघटकन्यूनवृत्तिधर्मे नोक्तदिशा पक्षतावच्छेदकविशिष्टान्यत्वं पक्षसमवेतविशिष्टान्यत्वम्वा विशेषणं देयम्, किन्तु न्यूनवृत्तित्वस्यैव यद्धर्मसमानाधिकरणत्वे सति स्ववृत्तित्व,-स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन यद्धर्माश्रयविशिष्टान्यत्वमर्थं (पारिभाषिकं) स्वीकृत्य यो यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् स तद्धर्मावच्छिन्नाभाववानिति सामान्यव्याप्तिरङ्गीकार्या।

एवंसति यो यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नयावदभाववान् स तद्धर्मावच्छिन्नाभाववानिति सामान्यव्याप्तिग्रहाद्व्याप्यसामान्याघटकपक्षतावच्छेदकविशिष्टान्यत्व,-अथवा पक्षसमवेतविशिष्टान्यत्व-घटितविशेषहेतुना तादृशविशेषितहेतौ वृक्षान्यासमवेतत्वमादाय स्वरूपासिद्धिदोषेणानुमित्यसम्भवस्यादोषत्वेऽपि न क्षतिः, 'वस्तुतस्तु'-दर्शितसामान्यव्याप्तौ वृक्षान्यासमवेतत्वमादाय दोषा[वश्यम् ?]भावात्।

एवं वृक्षपदस्य तत्संयोग(वृक्षकपिसंयोग)वदर्थकतया तत्संयोगवदन्यासमवेतत्वस्वरूपवृक्षान्यासमवेतत्वस्य पक्ष(वृक्ष)समवेतरूपादिविशिष्टत्वात् (पक्षसमवेतरूपे तत्संयोगवदन्यासमवेतत्वस्य सत्त्वात्) पक्षसमवेतरूपानाश्रय(कपि)वृत्तौ वृक्षकपिसंयोगात्मकतत्संयोगेऽपि तत्संयोगवदन्यासमवेतत्वस्य वृत्तित्वाच्च तस्य तत्संयोग-

वदन्यासमवेतत्वरूपवृक्षान्यासमवेतत्वस्य सङ्ग्रहानुपपत्तावपि 'वस्तुतस्तु' कल्पे तु तत्संयोगवदन्यासमवेतत्वस्य नासङ्ग्रहः, कपेः (वृक्षकपिसंयोगात्मकतत्संयोगाश्रयकपेः) यद्धर्मा(संयोगत्वधर्मा)श्रयानाश्रयत्वविरहेण यद्धर्माश्रयस्य स्वानाश्रयवृत्तिवृत्तित्वरूपवैशिष्ट्यनियामकद्वितीयसम्बन्धस्य तत्र विरहेण संयोगत्वरूपयद्धर्मविशिष्टान्यत्वस्य सद्भावात्। एतदेव 'एवं वृक्षपदस्य तत्संयोगवदर्थकतया तत्संयोगवदन्यासमवेतत्वे पक्षसमवेतरूपादिविशिष्टत्वसत्त्वेऽपि संयोगत्वाश्रयविशिष्टान्यत्वसत्त्वेन तत्सङ्ग्रह' इत्युपन्यस्य बोधितं तत्त्वालोककृद्भिः।

'वस्तुतस्तुनो'क्तकल्पे 'वृक्ष'पदस्य तत्संयोगवदर्थकतास्वीकारे कारणं दर्शयति — 'तत्तद्वृक्षत्वं पक्षतावच्छेदकीकृत्ये'त्यादि 'दिति त्वभिनवः पन्था' इत्यन्तेन। वृक्षपदस्य तत्संयोगवदर्थकत्वास्वीकारे तत्तद्वृक्षत्वं पक्षतावच्छेदकीकृत्य उक्तहेतुना = संयोगत्वसमानाधिकरणत्वे सति दर्शितोभयस्ववृत्तित्वस्वानाश्रयवृत्तिवृत्तित्वसम्बन्धेन संयोगत्वधर्माश्रयविशिष्टान्यधर्मावच्छिन्नप्रतियोगिताकयावदभाववत्त्वरूपेण, संयोगसामान्याभावसाधने वृक्षान्यासमवेतत्वमादाय दोषासम्भवाद् वृक्षान्यासमवेतत्वमादाय तत्र दोषाय वृक्षपदस्य तत्संयोगवदर्थकता स्वीकृतेति तदर्थः।

वृक्षपदस्य तत्संयोगवदर्थपरत्वविरहे तत्तद्वृक्षत्वं पक्षतावच्छेदकीकृत्य उक्तहेतुना संयोगसामान्याभावसाधने वृक्षान्यासमवेतत्वस्य तद्वृक्षात्मकपक्षमात्रवृत्तिरूपादिमादाय पक्षसमवेतविशिष्टतैव भवेत्, स्ववृत्तित्वस्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धसद्भावात्, ततश्च तत्र वृक्षान्यासमवेतत्वमादाय दोषो न स्यात्।

वृक्षपदस्य तत्संयोगवदर्थपरत्वे तु तत्र तद्वृक्षत्वपक्षतावच्छेदकस्थले तत्संयोगवदन्यासमवेतत्वरूपवृक्षान्यासमवेतत्वमादाय दोषः सम्भवेदेवेति तदाशयादिति प्रकाशः।[२०५]

तत्त्वालोकः – **केचित्तु — वृक्षसंयोगनिष्ठतद्व्यक्तित्वे पक्षतावच्छेदकविशिष्टान्यत्वसम्पत्त्यर्थं स्वाश्रयावृत्तिवृत्तित्वस्य वैशिष्ट्यघटकत्वं वृक्षसमवेतत्वस्य न्यूनवृत्तित्ववारणाय न्यूनवृत्तौ पदार्थविभाजकावृत्तित्वस्य विशेषणत्वं वृक्षान्यासमवेतस्याभावादेः समवायेन स्वाश्रयावृत्तेर्वारणाय स्वाश्रयावृत्तौ वृत्तित्वस्य समवायसम्बन्धावच्छिन्नस्य[1] च विशेषणतां च वदन्ति। तन्नाति-**

---

१. जगदीशशर्मसम्पादिते सिद्धान्तलक्षणतत्त्वालोकमूले 'वृत्तिमत्वस्य समवायावच्छिन्नस्ये'ति पाठान्तरम्।

चारु, तथासति द्रव्यत्वान्यवृक्षसमवेतत्ववृक्षवृत्तिगुणत्वाद्यवच्छिन्नाभावमादाय दोषसम्भवे वृक्षान्यासमवेतत्वावच्छिन्नाभावपर्यन्तानुधावनवैफल्यापत्तेः।

यत्तु — वृक्षवृत्तिसंयोगत्वावच्छिन्नाभावमादाय दोषसम्भवे तत्परित्यागो नोचित इति। तदसत्, तदादाय सन्दिग्धासिद्धेरेव सम्भवेन निश्चितासिद्ध्यनुरोधेनापि तावद्दूरानुधावनसार्थक्यसम्भवात्।

अस्मत्कल्पे च वृक्षसंयोगत्वमादाय दोषस्य न सम्भवोऽपि, तादृशसंयोगत्वे वृक्षसमवेतकपिसंयोगत्वविशिष्टत्वस्य सत्त्वात् स्वानाश्रयपिपीलिकावृत्तिवृक्षसंयोगवृत्तित्वात्।

न च यद्धर्मसमानाधिकरणधर्मे न्यूनवृत्तित्वघटकस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्विहाय सामान्यव्याप्तौ यत्समवेतत्वविशिष्टान्यत्वं विशेषणं देयन्तावतैव वृक्षान्यासमवेतत्वावच्छिन्नाभावस्यापि वारणादिति वाच्यम्, तत्संयोगतद्द्वित्वान्यतरत्वावच्छिन्नाभावमादायासिद्धेः पूर्वकल्पापेक्षया गुरुत्वाच्चेति।[२०६]

*प्रकाशः* – 'यो यद्धर्मन्यूनवृत्ती'त्यादिप्रासङ्गिककल्पमाश्रित्य केचित्कथयन्ति यदत्र कल्पे वृक्षसंयोगनिष्ठतद्व्यक्तित्वे वृक्षत्वाश्रयवृत्तिवृत्तित्वेन वृक्षत्वानाश्रयकप्यादिवृत्तिसंयोगवृत्तित्वेन च पक्षतावच्छेदक(वृक्षत्व)विशिष्टत्वस्यैव सत्त्वेन 'अथे'त्यादिना पूर्वं कृतायाः पक्षतावच्छेदकविशिष्टान्यत्वासम्भवशङ्काया अपाकरणाय अर्थाद् वृक्षसंयोगनिष्ठतद्व्यक्तित्वे पक्षतावच्छेदकविशिष्टान्यत्वसम्पत्त्यर्थं पक्षतावच्छेदकवैशिष्ट्यनियामकपूर्वोक्तद्वयस्थाने स्वाश्रया(पक्षतावच्छेदकाश्रया)वृत्तिवृत्तित्वमेव देयम्, तेन वृक्षसंयोगनिष्ठतद्व्यक्तित्वे न पक्षतावच्छेदकविशिष्टान्यत्वहानिः, वृक्षकपिसंयोगस्य पक्षतावच्छेदकाश्रयावृत्तित्वविरहेण वृक्षकपिसंयोगनिष्ठतद्व्यक्तित्वे पक्षतावच्छेदकाश्रयावृत्तिवृत्तित्वविरहात्। वृक्षसमवेतत्वे वृक्षावृत्तिवृत्तित्वविरहेण पक्षतावच्छेदकविशिष्टान्ये न्यूनवृत्तित्ववारणाय वृक्षसमवेतत्वे न्यूनवृत्तौ पदार्थविभाजकोपाध्यवृत्तित्वविशेषणं देयम्। तथासति पदार्थविभाजकोपाधौ द्रव्यत्वे वृक्षसमवेतत्वस्यावृत्तित्वविरहेण न न्यूनवृत्तित्वापत्तिः, येन तत्र कल्पे दोषाय वृक्षसमवेतत्वमनादाय नञ्द्वयघटितगुरुभूतवृक्षान्यासमवेतत्वोपादानासङ्गतिः स्यात्।

ये पदार्थाः कुत्रापि समवायेन न तिष्ठन्ति तादृशा अभावादयोऽपि वृक्षान्यासमवेता भवन्ति। ये च वृक्षे तु समवायेन तिष्ठन्ति, वृक्षान्यत्र समवायेन न वर्तन्ते, तादृशा वृक्षत्ववृक्षरूपादयोऽपि वृक्षान्यासमवेता उच्यन्ते। तत्र वृक्षान्यासमवेतस्या-

भावादेः स्वाश्रयावृत्ति = पक्षतावच्छेदकाश्रयावृत्ति,-वृत्तित्वेन (वृक्षे समवायेनावृत्तौ अभावादौ स्वरूपेण वृत्तौ पक्षतावच्छेदकविशिष्टत्वनिरासाय) स्वाश्रयावृत्तौ वृत्तितायाः समवायावच्छिन्नं विशेषणम्। तथासति सर्वत्रैवासमवेतस्याभावादेः वृक्षान्यासमवेतस्य स्वाश्रया(पक्षतावच्छेदकाश्रया)वृत्तौ समवायावच्छिन्नवृत्तित्वविरहान्न पक्षतावच्छेदक-विशिष्टतेति वदन्ति केचित्।

तदेतत्केषाञ्चित्कथनन्नातिसुन्दरम्, यतो हि तथासति द्रव्यत्वान्यवृक्षसमवेतत्वे वृक्षावृत्तिगुणत्वादौ च स्वाश्रयावृत्तौ (पक्षतावच्छेदकाश्रयावृत्तौ) समवायेन वृत्तित्व-विरहेण पदार्थविभाजकावृत्तित्वविरहेण च पक्षतावच्छेदकविशिष्टान्यत्वात्तदादायैव तत्र दोषसम्भवे वृक्षान्यासमवेतत्वपर्यन्तानुधावनं विफलं स्यात्।

वृक्षसमवेतद्रव्यत्वमादाय वृक्षसमवेतत्वस्य पदार्थविभाजकवृत्तितैव स्यान्नत्व-वृत्तित्वम्, अतो 'द्रव्यत्वान्ये'ति तत्र प्रयुक्तम्। वृक्षसमवेतत्वस्य द्रव्यत्वातिरिक्ते कुत्रापि न पदार्थविभाजकवृत्तिता, अतो द्रव्यत्वान्यवृक्षसमवेतत्वावच्छिन्नाभावं तादृशाभावमादाय तत्र दोषः स्यादेव। एवं वृक्षवृत्तिगुणत्वस्यापि वृक्षावृत्तिवृत्तित्व-विरहेण पक्षतावच्छेदकविशिष्टान्यत्वात् पदार्थविभाजकद्रव्यत्वगुणत्वाद्यवृत्तित्वाच्च तदवच्छिन्नाभावमादाय तत्र दोषः स्यादेव। ततश्च तन्मते तत्र वृक्षान्यासमवेतत्वा-वच्छिन्नाभावपर्यन्तानुधावनवैफल्यापत्तिः स्यादेव।

अत्र 'यत्तु' आक्षिपति — वृक्षवृत्तिसंयोगत्वे वृक्षावृत्तिवृत्तित्वविरहेण पक्षता-वच्छेदकविशिष्टान्यत्वस्य पदार्थविभाजकावृत्तित्वस्य च सत्त्वात् तदवच्छिन्नाभाव-मादायापि तत्र न्यूनवृत्तित्वघटितकल्पे दोषसम्भवेन तत्परित्यागानौचित्यन्तत्र दोष — इति।

तदेतदसत्, यतो हि वृक्षावृत्तिसंयोगत्वावच्छिन्नाभावमादाय तत्र संदिग्धा-सिद्धिरेव सम्भवेत्, न तु निश्चिता स्वरूपासिद्धिरतो निश्चितायाः स्वरूपासिद्धेस्तत्र सद्भावबोधाय वृक्षान्यासमवेतत्वावच्छिन्नाभावपर्यन्तानुधावनस्य तत्र सार्थक्यसम्भवात्।

तदनुमानतः पूर्वं संयोगसामान्याभावसंयोगसामान्याभावप्रतियोगित्वावच्छिन्ना-भावयोरिव वृक्षावृत्तिसंयोगत्वावच्छिन्नाभावस्यापि तत्र वृक्षात्मके पक्षे निश्चितत्वविर-हात् सन्दिग्धत्वस्यैव सत्त्वात् तदादाय संदिग्धासिद्धिरेव तत्र स्यादिति हि तदाशयः।

न्यूनवृत्तिधर्मे पक्षसमवेतविशिष्टान्यत्वविशेषणकल्पे वृक्षवृत्तिसंयोगत्वधर्मे वृक्षात्मकपक्षसमवेत(वृक्षकपिसंयोग)वृत्तित्वेन स्वानाश्रय(वृक्षकपिसंयोगात्मक-पक्षसमवेतानाश्रय)पिपीलिकावृत्तिवृक्षसंयोगवृत्तित्वेन च पक्षसमवेतविशिष्टत्वस्यैव सत्त्वेन पक्षसमवेतविशिष्टान्यत्वासम्भवात्तदादाय तत्र दोषासम्भवात्।

एतदेव 'अस्मत्कल्पे च वृक्षसंयोगत्वमादाय दोषस्य न सम्भवोऽपि, तादृशसंयोगत्वे वृक्षसमवेतकपिसंयोगविशिष्टत्वस्य सत्त्वात् स्वानाश्रयपिपीलिकावृत्ति-वृक्षसंयोगवृत्तित्वादि'त्युपन्यासेन बोधितं तत्त्वालोककृद्भिः।

अनन्तरं शङ्क्यते यद् यद्धर्मसमानाधिकरणधर्मे न्यूनवृत्तित्वघटकतया पूर्वोक्तं स्व(यद्धर्म)समानाधिकरणभेदप्रतियोगितावच्छेदकत्वं परित्यज्य सामान्यव्याप्तावेव 'यत्समवेतत्वविशिष्टान्यत्वं' विशेषणं देयम्।

तत्र 'यदि'ति न पक्षपरम्, न वा यद्धर्मपरम्, तथासति आपत्त्यनुपपत्त्योः परिहारासम्भवात्। एवं यद्धर्माश्रयपरमपि भवितुन्नार्हति, पक्षपरत्वे घटावृत्तिसंयोगत्वस्य व्यावृत्तिर्न स्यात्, तस्यापि पक्षसमवेतत्वविशिष्टान्यत्वात्। यद्धर्मपरत्वे अप्रसिद्धिदोषः स्यात्, संयोगत्वादियद्धर्मसमवेतत्वस्य प्रसिद्धिविरहात्। यद्धर्माश्रयपरत्वे वृक्षान्यासम-वेतत्वस्य व्यावृत्तिर्न स्यात्, वृक्षान्यासमवेतत्वे संयोगत्वधर्माश्रयसमवेतत्वविशिष्टत्व-विरहेण तदन्यत्वस्य तत्र सत्त्वात्।

अतो 'यदि'ति पदं तत्र यत्किञ्चित्परमेव प्रतीमः। तथासति वृक्षसंयोगनिष्ठ-तद्व्यक्तित्वस्य सङ्ग्रहः, तत्र यत्किञ्चित्समवेतत्वविरहात्, घटावृत्तिसंयोगत्वे यत्कि-ञ्चित्समवेतत्वस्यैव सत्त्वेन तस्य व्यावृत्तिरेवं वृक्षान्यासमवेतत्वस्यापि व्यावृत्तिः, तत्रापि यत्किञ्चित्समवेतत्वसत्त्वात्।

न्यूनवृत्तित्वस्वरूपघटकतया पूर्वोक्त-स्व(यद्धर्म)समानाधिकरणभेदप्रति-योगितावच्छेदकत्वविशेषणव्यावर्त्यायां सत्तायां यत्किञ्चित्समवेतत्वविशिष्टताया एव सत्त्वेन तदन्यत्वविरहात्तस्या व्यावृत्तिरिति शङ्का 'न चे'त्यादि 'तावतैव वृक्षान्या-समवेतत्वावच्छिन्नाभावस्यापि वारणादिती'त्यन्तेन विहिता।

अत्र समाधानम्— 'तत्संयोगतद्द्वित्वान्यतरत्वावच्छिन्नाभावमादाया-सिद्धेः पूर्वकल्पापेक्षया गुरुत्वाच्चेती'ति। तत्संयोगतद्द्वित्वान्यतरत्वे स्वरूपसम्बन्धेन वृत्तौ यत्किञ्चित्समवेतत्वविरहेण तद्विशिष्टान्यत्वात् तादृशान्यतरत्वावच्छिन्नाभावस्य यावदन्तर्गतस्य वृक्षात्मकपक्षवृत्तित्वविरहेण स्वरूपासिद्धिः स्यात्, पूर्वकल्पापेक्षया गौरवापत्तिश्चेति प्रकाशः।[२०६]

तत्त्वालोकः– वृक्षादौ गगनादेरेक एव संयोगो लाघवादिति, अथात्र वृक्ष एव तत्तदवयवावच्छिन्नगगनसंयोगस्य भेदाभावोऽभिमतः, किम्वा वृक्ष-गगन संयोगाद् घटादिगगनसंयोगस्यापि भेदाभाव इति विमर्शे लाघवात्सर्वेषा-मप्यैक्यं प्राप्नोति।

तत्र कैश्चिदेकक्रिययैकत्र संयोगनाशे निष्क्रियेऽप्यपरत्र संयोगनाशापत्तिः, वृक्षविनाशात्तत्संयोगनाशे विद्यमानघटादिष्वपि संयोगनाशापत्तिश्च, क्रियाश्रय-नाशाभ्यामपि लाघवानुरोधेन संयोगाविनाशकल्पने[1] पाकाश्रयनाशादितो रूपादिनाशस्याप्यप्रामाणिकत्वापत्त्यैकरूपादिवादापत्तिः स्यादिति वृक्ष एव तत्तदवयवावच्छिन्नसंयोगभेदाभावोऽङ्गीकार्यः। शाखादौ क्रियायां वृक्षेऽपि संयोगप्रतिद्वन्द्विविभागजविभागोत्पत्त्या निःक्रियदेशावच्छिन्नोऽपि संयोगो नश्यत्येव, निःक्रियदेश एव च संयोगः परमवतिष्ठते, खण्डवृक्षोत्पत्त्यादिस्थले-ऽवस्थितावयवसंयोगसत्त्वेऽपि तदवच्छिन्नसंयोगनाशवदिति समानोत्पत्तिध्वं-सादिमतां समानक्रियाणाञ्चावयविनामेकगगनसंयोगाभ्युपगमेऽपि न क्षति-रित्युच्यत इति, तदेव च तत्त्वम्।

अथ समवायेन तत्तत्संयोगम्प्रति तत्तद्द्रव्यत्वेन कारणत्वकल्पनात्तत्त-त्संयोगप्रतिनियतदेशनियमेऽपि अवच्छेदकदेशनियमायावच्छेदकतासम्बन्धेन तत्तत्संयोगम्प्रति तादात्म्येनावच्छेदकदेशकारणत्वमपि विशिष्यैव वाच्यम्, तत्रावच्छेदकतासम्बन्धेन तत्तत्संयोगम्प्रति तत्तद्देशत्वेन कारणत्वं यदि स्यात्तदा गगनसंयोगस्य निखिलवृक्षावयवावच्छिन्नतया तं प्रति कारणत्वकल्पनाया निष्प्रयोजनत्वाद्व्यभिचाराभावेन तदैक्यमप्रत्यूहं स्यात् तदेव न, मूलाद्यवयवा-वच्छिन्नसंयोगम्प्रति मूलत्वादिना कारणत्वस्यैव लाघवेन वाच्यत्वात्, तथा च मूलावच्छिन्नगगनसंयोगस्य शाखावच्छिन्नत्वे शाखायां मूलस्यासत्त्वेन व्यभिचारः स्यात्। व्यभिचारवारणाय कार्यतावच्छेदककोटौ विभुसंयोगान्य-त्वादिविशेषणन्तु तदैक्यावधारणम्विना गौरवेणोपादातुमशक्यमभ्यर्हितञ्च पदार्थलाघवगौरवापेक्षया कार्यकारणभावलाघवगौरवमेव। तेनैकसंयोगकल्प-नालाघवमकिञ्चित्करमिति गगनवृक्षसंयोगस्यावच्छेदकभेदाद्भेदसिद्धिरित्य-नुशयेनाह 'अतिप्रसङ्गभङ्गाये'त्यादि।[2] [२०७]

---

१. 'संयोगविनाशकल्पने' इति पाठान्तरम् जगदीशशर्मसम्पादितपुस्तके।

२. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

*प्रकाशः* – न च ''यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानि'ति व्याप्तेरि''ति दीधितेर्व्याख्यानन्तरम् 'संयोगयावद्विशेषाभावा एव मानमि'ति[1] दर्शित-दीधित्यन्तरवर्तिदीधितिं परिगृह्य ''मानं = मानतावच्छेदकम्, आचार्यमतेनेदं वे''[2]त्यु-पन्यस्य 'न च सर्वावयवावच्छेदेन वृक्षादौ गगनादेरेक एव संयोगो लाघवादिति तस्यैवाभावविरहात् संयोगयावद्विशेषाभाववत्त्वं पक्षे स्वरूपासिद्धमिति वाच्यमि'ति[3] जगदीशेनोत्थापिता शङ्का, तद्व्याख्यात्र 'वृक्षादौ गगनादेरेक एव संयोगो लाघवादि'ति प्रतीकत्वेन परिगृह्य 'अथे'त्यादि 'तदेव तत्त्वमि'मित्यन्तेन क्रियते।

तत्र स्पष्टीकरणाय लाघववादिनम्प्रति अयं प्रश्नो जिज्ञासयोत्तिष्ठते यत् किं वृक्षात्मकावयविन्यैव गगन(विभु)संयोगस्य लाघवादेकत्वन्न तु वृक्षावयवभेदतो वृक्षवति गगनसंयोगे भिन्नता इत्यभिमतं भवत आहोस्विद् वृक्षगगनसंयोगाद् घटादिगगनसंयोगस्यापि भेदाभावोऽभिमतः। अर्थादवयविनि गगनसंयोगो न केवलम-वयविनोऽवयवभेदेन भिन्नः, किन्तु अवयवि(घटपटादि)भेदेनापि गगनसंयोगो न भिन्नः, किन्तु लाघवादेक एवेति मतम्, अथवा अवयवभेदतो न तत्र भेदः, अवयविभेदेन तु भेद इति, तत्र लाघवाद्भेदाभावस्वीकारे अवयविभेदतोऽपि गगनसंयोगे भेदाभाव एव प्राप्नोति, यथा वृक्षगगनसंयोगे वृक्षावयवभेदतो न भेदः, तथैव वृक्षघटपटाद्यवय-विभेदतोऽपि गगनसंयोगे न भेद इति।

उत्थितेऽस्मिन् विचारे कैश्चिदुक्तं दर्श्यते तत्त्वरूपतापि तस्यैवोच्यते च 'तत्र कैश्चिदि'त्यादिना 'तदेव च तत्त्वमि'त्यन्तेन। समानोत्पत्तिध्वंसादिमतां समान-क्रियाणाञ्चावयविनामेकगगनसंयोगाभ्युपगमेऽपि न क्षति[रिति] केषाञ्चित्सिद्धान्तस्तदु-पपादनायोच्यते। केषाञ्चिदित्थं कथ्यमस्ति यद् वृक्षे अर्थात्तस्मिन्नवयविनि तदवयव-भेदेन गगनसंयोगो न भिन्नः, किन्तु एक एव, परन्तु अवयव्यन्तरे घटादौ यो गगनसंयोगः स वृक्षगतगगनसंयोगतो भिन्न एव, न तु वृक्षगगनसंयोगतोऽभिन्नः, अर्थाल्लाघवात्स्वावयवभेदेन स्वस्मिन् वृक्षादाववयविनि गगनसंयोगभेदानङ्गीकारेऽपि एकावयविगगनसंयोगतोऽपरावयविगगनसंयोगो भिन्न एव, नत्वभिन्नः, यतो हि एकक्रियया (एकावयविगतक्रियया) एकत्र (एकत्रावयविनि) संयोगनाशे निःक्रियेऽप्य-परत्र (क्रियारहितेऽपि अपरत्रावयविनि) संयोगनाशापत्तिः (वृक्षगगनसंयोगतो घटगगन-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

२. तत्रैव, जागदीशीमूलम्, पृ. १०

३. तत्रैव, जागदीशीमूलम्, पृ. १०

संयोगस्य भेदाभावे घटगतक्रियया घटगगनसंयोगनाशे क्रियाशून्यवृक्षगगनसंयोगस्य नाशापत्तिरित्यर्थः), क्रियाया विभागद्वारा संयोगनाशकत्वसिद्धान्तात्, आश्रयनाशतोऽपि संयोगनाशस्वीकारात्। लाघवानुरोधेन (वृक्षगगनसंयोगस्य घटादिगगनसंयोगतो भेदाभावाय तयोरभेदाय क्रियातः आश्रयनाशतश्चापि) संयोगस्य विनाशो नाङ्गीक्रियेत, तदा पाकतः आश्रयनाशतश्च रूपादिविनाशोऽपि अप्रामाणिक एव आपद्येत, पाकाश्रयनाशाभ्यां रूपादिविनाशस्याप्रामाणिकत्वापत्तावेकरूपवादापत्तिरतो वृक्ष एव तत्तदवयवावच्छिन्नगगनसंयोगभेदाभावो न तु घटादिगगनसंयोगतोऽपि वृक्षगगनसंयोगे भेदाभावो मन्तव्य इति।

वृक्षे गगनसंयोगस्यैकत्वे वृक्षावयवभेदतस्तत्र गगनसंयोगे भेदाभावेऽन्तःशङ्केयं जायते यद् वृक्षस्य शाखात्मके एकस्मिन्नवयवे क्रियायां समुत्पन्नायां सत्यां तच्छाखात्मकावयवावच्छिन्नवृक्षगगनसंयोग एव तच्छाखोत्पन्नक्रियया नश्यति, क्रियाशून्यावयवावच्छिन्नवृक्षगगनसंयोगस्तु नैव नश्यति, तदेतत्तत्रावयवभेदेन वृक्षगगनसंयोगविरहे नोपपद्यते इति शङ्कामिमां परिहर्तुमुपन्यस्यते— 'शाखादौ क्रियायां वृक्षेऽपि संयोगप्रतिद्वन्द्विविभागजविभागोत्पत्त्या निःक्रियदेशावच्छिन्नोऽपि संयोगो नश्यत्येव, निःक्रियदेश एव च संयोगः परमवतिष्ठते, खण्डवृक्षोत्पत्त्यादिस्थलेऽवस्थितावयवसत्त्वेऽपि तदवच्छिन्नसंयोगनाशवदि'ति।

षोडशशाखात्मकैरवयवैरारब्धस्य वृक्षस्य अष्टशाखात्मकावयवनाशेन नाशोभूत्वा अष्टशाखात्मकावयवकखण्डवृक्षो वृक्षान्तरात्मको यत्र उत्पद्यते तत्र षोडशशाखावतो महतो वृक्षस्य नाशेऽविनष्टाष्टशाखात्मकावयवसंयोगो (विद्यमानावयवावच्छिन्नवृक्षारम्भकसंयोगः) सत्सु एव तेषु अवयवेषु यथा यथा नश्यत्येव, तथैवैकस्यां शाखायां क्रियोत्पत्त्या तच्छाखावच्छिन्नवृक्षगगनसंयोगो यथा नश्यति विभागद्वारा संयोगनाशकक्रियया, तथैव निःक्रियतदवयवान्तरा(शाखान्तरा)वच्छिन्नवृक्षगगनसंयोगोऽपि सत्सु एव निःक्रियेषु शाखान्तरेषु अवयवेषु नश्यत्येव। तत्र हेतुः शाखोत्पन्नक्रियया संयोगप्रतिद्वन्द्विविभागजविभागोत्पादः।

अयम्भावः— यथा हस्तक्रियया हस्ततरुविभागो भूत्वैव हस्ततरुसंयोगो नश्यति तथैव हस्तदेशतोऽपि तरोर्विभागोऽपि भूत्वैव हस्ततरुसंयोगो नश्यति। हस्ततरुविभागस्येव हस्तदेशतरुविभागस्यापि हस्ततरुसंयोगप्रतिद्वन्द्वित्वात् तत्र हस्ततरुविभागेन यो हस्तदेशतस्तरुविभागः = शरीरतरुविभागः, स विभागजविभाग इत्युच्यते। मुक्तावल्यां विभागजविभागस्य कारणमात्रविभागजन्यत्वेन कारणाकारणविभागजन्यत्वेन च द्वैविध्यमुक्तम् तथा एकस्यैव कर्मण आरम्भकसंयोगप्रतिद्वन्द्वि-

विभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोध उक्तः, 'विकसत्कमलकुड्मलभङ्गप्रसङ्गादि'त्यादिना।[१]

प्रकृते वृक्षावयवतच्छाखोत्पन्नक्रियया वृक्षावयव-तच्छाखागगनयोर्विभागस्तेन च विभागेन वृक्षगगनयोर्विभागः, स एव विभागजो विभागः, क्रियावच्छाखागगनविभागेन क्रियावच्छाखागगनसंयोगनाशः, वृक्षगगनविभागतश्च वृक्षगगनसंयोगनाशः, अर्थात् सक्रियशाखावच्छिन्नवृक्षगगनसंयोगस्य निःक्रियशाखावच्छिन्नवृक्षगगनसंयोगस्य च नाशः। तदा तत्र निःक्रियावयवात्मकदेशेन सह गगनस्य संयोगोऽवतिष्ठते।

अत्र दृष्टान्ततयोक्तम्, स्थलविशेषे नश्यमानावयवसंयोगनाशेन विद्यमानावयवसंयोगोऽपि यथा खण्डवृक्षोत्पत्तिस्थले विनश्यति, तथैव निःक्रियावयवावच्छिन्नगगनवृक्षसंयोगनाशेऽपि सक्रियावयवावच्छिन्नवृक्षगगनसंयोगनाशस्थले भवितुं शक्नोत्येवेति। अतः समानोत्पत्तिध्वंसादिमतां समानक्रियावताञ्चावयविनामेकगगनसंयोगाभ्युपगमे न क्षतिरिति, वृक्षादौ गगनादेरेक एव संयोगो लाघवात्।

उपपादिताया अस्याः शङ्काया निरासाय 'अथे'त्यादिनोपक्रम्यते। तत्रोच्यते — यत् तत्तत्संयोगप्रतिनियतदेशनियमाय घटारम्भकसंयोगस्य कपालद्वयात्मकदेशविशेषनियतत्वाय समवायसम्बन्धेन तत्तत्संयोगम्प्रति तत्तद्द्रव्यत्वेन कपालत्वादिद्रव्यत्वेन तादात्म्येन कारणता मन्तव्या, तेन घटारम्भकसंयोगस्य कपालात्मकदेशविशेषनियतत्वमेव, न तु तदन्यतन्त्वादिदेशतापि, एवं वृक्षकपिसंयोगस्य वृक्षकपिदेशनियततैव, न तु तदन्यदेशताऽपि, किन्तु दर्शितकार्यकारणभावेन तत्तत्संयोगस्य प्रतिनियतदेशनियमोपपत्तावपि अवच्छेदकदेशनियमाय = वृक्षकपिसंयोगीवच्छेदकदेशः शाखैव, न तु मूलमेवंविधनियमोपपत्तये, अपरोऽपि अवच्छेदकतासम्बन्धेन संयोगम्प्रति शाखात्वादिना अवच्छेदकदेशत्वेन कारणता इत्यादिस्वरूपको विशिष्यैव कार्यकारणभावो मन्तव्यः।

तथासति, अर्थादवच्छेदकदेशनियमाय अवच्छेदकतासम्बन्धेन तत्तत्संयोगम्प्रति तत्तद्देशत्वेन विशिष्य द्वितीयकार्यकारणभावकल्पने सति, वृक्षकपिसंयोगस्य निखिलवृक्षावयवावच्छिन्नत्वविरहेण तादृशस्थले दर्शितस्य द्वितीयस्य विशिष्य कार्यकारणभावस्य अवच्छेदकतासम्बन्धेन तत्कपिसंयोगम्प्रति शाखात्वादिना तत्तदवच्छेदकदेशस्तादात्म्येन कारणमित्येवंविधस्य स्वीकारावश्यकत्वेऽपि गगनसंयोगस्य निखिलवृक्षावयवावच्छिन्नतया तं प्रति दर्शितद्वितीयप्रकारककार्यकारणभावकल्पना

---

१. न्यायसिद्धान्तमुक्तावली, गुणनिरूपणे विभागनिरूपणप्रसङ्गे

नावश्यिकी, तादृशद्वितीयप्रकारककार्यकारणभावस्य तत्र विरहे च तत्राङ्गीकृतप्रथम-प्रकारकमात्रकार्यकारणभावे समवायेन संयोगं प्रति तादात्म्येन तत्तद्व्यत्वेन कारणत्वे व्यभिचाराभावाद्वृक्षे गगनसंयोगस्य ऐक्यं निष्प्रत्यूहं स्यादिति।

अनन्तरं 'तदेव ने'त्यादिना खण्डयत्युपर्युपपादितम्, पदार्थलाघवगौरवापेक्षया कार्यकारणलाघवगौरवस्यैवाभ्यर्हितत्वेन लाघवात्, शाखाद्यवयवावच्छिन्नसंयोगं प्रति शाखात्वादिना एकप्रकारक एव कार्यकारणभावः पूर्वदर्शितकार्यकारणभावद्वयस्थाने, न तु पूर्वोक्तौ द्वौ, मदुक्तेन नवेन एकेनैव कार्यकारणभावेन, तत्तत्संयोगप्रतिनियतदेश-नियमस्यावच्छेदकदेशनियमस्य चोपपत्तिसम्भवात्, शाखावच्छिन्नवृक्षकपिसंयोगस्य वृक्षकप्यतिरिक्तवृक्षावयवमूले वा उत्पादासम्भवात्। तस्माल्लाघवादेक एव कार्यकारण-भावो न तु तद्द्वयम्।

परन्तु लाघवान्मदुक्ते एकस्मिन्नेव कार्यकारणभावे सति वृक्षगगनसंयोगो वृक्षावयवभेदतो भिन्नभिन्न एव मन्तव्यो भवति यतो हि तदैकत्वे मूलावच्छिन्नगगन-संयोगस्य शाखावच्छिन्नत्वे शाखायां मूलस्यासत्त्वेन उक्तकार्यकारणभावे व्यभिचारः स्यात्। तथा च कार्यकारणभावलाघववशात्कार्यकारणभावस्तु एक एव। तथासति तत्र प्राप्तव्यभिचारवारणाय वृक्षगगनसंयोगोऽनेक एव नत्वेकः। तथासति पदार्थलाघवा-भावेऽपि न क्षतिः, कार्यकारणभावलाघवस्याभ्यर्हितस्य सत्त्वात् प्राप्तव्यभिचारवारणाय कार्यतावच्छेदककोटौ विभुसंयोगान्यत्वस्यैव निवेशो न तु वृक्षगगनसंयोगानेकता-स्वीकार इति तु वृक्षगगनसंयोगैक्यावधारणम्विना गौरवग्रस्तत्वान्नैव स्वीकर्तुं शक्य-मित्याशयेनैव तर्कालङ्कारेण 'अतिप्रसङ्गभङ्गाय शाखादितत्तदवयवावच्छिन्नवृत्तिक-संयोगम्प्रति तत्तदवयवत्वेन हेतुत्वस्यावश्यकतया वृक्षे व्याप्यवृत्तिगगनसंयोगस्या-सम्भवादि'ति[१] प्रकाशः।[२०७]

तत्त्वालोकः – ननु गगनसंयोगस्यैकत्वे व्याप्यवृत्तितयाऽवच्छेदकविरहेण मूलाद्यनवच्छिन्नत्वान्न व्यभिचारप्रसक्तिः, एवं प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतेरेकस्यैव शरीरवृक्षसंयोगस्य प्राच्यादिदिगवच्छिन्नत्वशाखा-वच्छिन्नत्वयोः सत्त्वाद् व्यभिचारः। न चोक्तप्रतीतौ संयोगद्वयावगाहित्वसम्भवः, यत्र प्राच्यां मूल एकशरीरसंयोगः, प्रतीच्यां शाखायामपरशरीरसंयोगस्तत्र प्रतीच्यां मूले शरीरसंयोग इति प्रतीत्यापत्तेः, एवं संयोगजसंयोगस्थल एकसंयोग एवावयवद्वयावच्छिन्नत्वेन व्यभिचारश्चेति मूलनिरूपितावच्छेदक-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

त्वसम्बन्धावच्छिन्नवृत्तित्वविशिष्टसंयोगम्प्रति मूलादेः कारणत्वं वाच्यम्, तथा च विशिष्टाधिकरणताया वैलक्षण्यान्मूलवृत्तित्वविशिष्टसंयोगाधिकरणत्वस्य मूलातिरिक्तावयवेऽसत्त्वाद्यथा नोक्तस्थलयोर्व्यभिचारस्तथा मूलशाखाद्यवच्छिन्नसंयोगव्यक्तीनां गगननिरूपितानामैक्येपि न व्यभिचारः। न चोक्तव्यभिचारयोर्वारणाय स्वावच्छिन्नत्व,-स्वावच्छिन्नानुयोगिताकत्वोभयसम्बन्धेन शाखावत्संयोगम्प्रति शाखात्वेन कारणत्वम्, कार्यतावच्छेदकसम्बन्धश्च स्वानुयोगितावच्छेदकत्वम्, एवं स्वावच्छिन्नत्व,-स्वावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन शाखावत्संयोगं प्रति शाखात्वादिना कारणत्वम्, कार्यतावच्छेदकसम्बन्धश्च स्वप्रतियोगितावच्छेदकत्वमिति वाच्यम्, गौरवेणैतस्य त्याज्यत्वात्, मेषद्वयादिसंयोगस्थले चोभयोरेवावयवस्य प्रतियोगितानुयोगितावच्छेदकत्वेन व्यभिचारतादवस्थ्याच्चेति चेद्।

न। स्वावच्छेदकत्व,-स्वावच्छेदकशाखादिसमवेतसमवायित्वोभयसम्बन्धेन संयोगं प्रति तादात्म्येन शाखात्वादिना कारणत्वे एव तात्पर्य्यादुक्तव्यभिचारयोरप्रसक्तेः, दिक्कालदेशेषु विलक्षणावच्छेदकत्वस्य स्वीकृततया विजातीयावच्छेदकतासम्बन्धेन प्राच्याद्यवच्छिन्नसंयोगं प्रति प्राच्यादिदिक्त्वेन कारणत्वकल्पनात्।

दिग्विशेषावच्छिन्नत्व[1]नियमोऽप्युपपद्यत एव। न च मूलशाखानिष्ठावच्छेदकतासम्बन्धेन संयोगम्प्रति मूलशाखात्वादिना कारणत्वमेव लाघवाद्व्यभिचारवारणाय च वाच्यम्, तथासति गगनसंयोगस्यैकत्वेऽपि न व्यभिचार इति वाच्यम्, विशेषरूपेण संसर्गत्वानभ्युपगमात्, यच्चोक्तं व्याप्यवृत्तेरवच्छेदकत्वाभावान्न व्यभिचार इति, तदपि न, शाखायां वृक्षे गगनसंयोग इत्यादिप्रतीतेर्व्याप्यवृत्तेरप्यवच्छेदकत्वाङ्गीकारादिति।[२०८]

*प्रकाशः* – उक्तखण्डेन वृक्षगगनसंयोगैक्यमुपपादयितुमुपक्रमते। तत्र पूर्वोक्तौ शङ्कते यत् तत्तदवयवावच्छिन्नवृत्तिकसंयोगम्प्रति तत्तदवयवत्वेन कार्यकारणभावलाघवमूलकैककार्यकारणभावपक्षे व्यभिचारवारणाय वृक्षगगनसंयोगानेकतास्वीकारावश्यकता नास्ति, वृक्षगगनसंयोगस्यैकत्वे व्याप्यवृत्तित्वादवच्छेदकाभावात्तस्य मूलाद्यनवच्छिन्नत्वादेव भवदभिमतकार्यकारणभावे व्यभिचारासम्भवात्, अपि च वृक्षगगनसंयोगानेकतास्वीकारेऽपि भवदभिमते उक्तकार्यकारणभावे व्यभिचारव्याधि-

---

१. 'दिग्विशेषावच्छेदकत्वे'ति पाठो जगदीशशर्मसम्पादित-तत्त्वालोकमूले।

निवृत्तिर्नास्ति। प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतिसिद्धे एकस्मिन् वृक्षशरीरसंयोगे प्राच्यादिदिगवच्छिन्नत्वशाखावच्छिन्नत्वयोः सत्त्वेन प्राच्यादिदिशि शाखात्वस्य शाखायां प्राच्यादिदिक्त्वस्याभावाद्व्यभिचारव्याधेः सद्भावात्, प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिदर्शितप्रतीतिविषयौ नैव द्वौ संयोगौ प्राच्यादिदिगवच्छिन्नशाखावच्छिन्नौ, येन व्यभिचाराभावो वक्तुं शक्येत। उक्तप्रतीतेः संयोगद्वयावगाहित्वस्वीकारे यत्र प्राच्यां मूले एकशरीरसंयोगः प्रतीच्यां शाखायामपरशरीरसंयोगस्तत्र प्रतीच्यां मूले शरीरसंयोग इति तथा प्राच्यां शाखायां शरीरसंयोग इति प्रतीत्यापत्तेः। उक्तकार्यकारणभावे संयोगजसंयोगस्थले(कपालतरुसंयोगादिजाततरुकुम्भादिसंयोगस्थले)ऽपि व्यभिचारः स्याद्, एकसंयोग एवावयवद्वयावच्छिन्नत्वसत्त्वात्। एतावता प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतिविषयः संयोगः एक एव, ततश्चोक्तव्यभिचारवारणाय संयोगजस्थले व्यभिचारवारणाय च भवता मूलनिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नवृत्तित्वविशिष्टसंयोगम्प्रति मूलत्वादिना कारणत्वमेव मन्तव्यम्, तथासति विशिष्टस्य शुद्धानतिरिक्तत्वेऽपि विशिष्टाधिकरणतायाः शुद्धाधिकरणतातो वैलक्षण्येन मूलवृत्तित्वविशिष्टसंयोगाधिकरणत्वस्य मूलातिरिक्तशाखाद्यवयवेऽसत्त्वाद् यथा नोक्तस्थलयोः (प्राच्यां शाखायां शरीरवृक्षसंयोगः इत्यादिप्रतीतिविषयसंयोगस्थले = दिशात्मकदेशात्मकावच्छेदकभेदस्थले, दर्शितसंयोगस्थले च देशात्मकमूलशाखाद्यवच्छेदकभेदस्थले) व्यभिचारस्तथा मूलशाखाद्यवच्छिन्नसंयोगव्यक्तीनां गगननिरूपितानामैक्यसद्भावेऽपि व्यभिचारो नह्येव स्यादिति वृक्षगगनसंयोगैक्यवादिनां शङ्का।

अनन्तरं प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतिसिद्धैकसंयोगस्थले संयोगजसंयोगे चैकस्मिन् प्राप्तव्यभिचारवारणाय तथोपायो 'न चे'त्यादिना दर्श्यते येनोक्तस्थलद्वयव्यभिचारवारणं वृक्षगगनसंयोगानेकता च स्यात्।

स चोपायः कार्यकारणभावान्तरस्वीकारात्मकः, कार्यकारणभावान्तरञ्च स्वावच्छिन्नत्व,-स्वावच्छिन्नानुयोगिकत्वोभयसम्बन्धेन शाखादिविशिष्टसंयोगम्प्रति शाखात्वादिना तादात्म्येन कारणता, अत्र कार्यतावच्छेदकसम्बन्धोऽनुयोगितावच्छेदकत्वरूपः, तथा स्वावच्छिन्नत्व,-स्वावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन शाखादिविशिष्टसंयोगम्प्रति शाखात्वादिना तादात्म्येन कारणता, अत्र कार्यतावच्छेदकसम्बन्धः स्वप्रतियोगितावच्छेदकत्वरूपः, अर्थात् कार्यतावच्छेदकः सम्बन्धो न समवायः, किन्तु पूर्वत्र स्वानुयोगितावच्छेदकत्वरूपः, परत्र स्वप्रतियोगितावच्छेदकत्वरूपः, कार्यतावच्छेदकधर्मोऽपि न शाखाद्यवच्छिन्नसंयोगत्वमपि तु दर्शित-

सम्बन्धद्वयेन शाखादिविशिष्टसंयोगत्वमेव।

एवं प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतिकसंयोगस्थले एकत्रैव संयोगे प्राच्यादिदिगवच्छिन्नत्वशाखावच्छिन्नत्वयोः सत्त्वेऽपि न व्यभिचारः, स्वावच्छिन्नत्वस्वावच्छिन्नानुयोगिकत्वोभयसम्बन्धेन शाखाविशिष्टसंयोगस्य स्वानुयोगितावच्छेदकत्वसम्बन्धेन शाखायामेव सत्त्वात्, प्राच्यान्तत्र स्वप्रतियोगितावच्छेदकत्वसम्बन्धस्यैव सत्त्वात्, स्वावच्छिन्नत्व,-स्वप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन तस्य प्राचीविशिष्टत्वात्, तत्र प्राचीशाखयोर्द्वयोरवच्छेदकत्वसत्त्वेऽपि प्रतियोगितावच्छेदकत्वस्य शाखायामनुयोगितावच्छेदकत्वस्य प्राच्यां विरहात्। एवं संयोगजसंयोगस्थले एकस्यैव संयोगस्यावयवद्वयावच्छिन्नत्वेऽपि न व्यभिचारः, द्वयोरवयवयोरनुयोगितावच्छेदकत्वविरहात् प्रतियोगितावच्छेदकत्वविरहाच्चेति।

अत्र समाहितं 'गौरवेणैतस्य त्याज्यत्वाद् मेषद्वयादिसंयोगस्थले चोभयोरेवावयवस्य प्रतियोगितानुयोगितावच्छेदकत्वेन व्यभिचारतादवस्थ्याच्चे'ति। उक्तव्यभिचारद्वयवारणायानुपदोक्तकार्यकारणभावस्वीकारो गौरवग्रस्तत्वाद् मेषद्वयसंयोगस्थले व्यभिचाराच्च नैव कर्तुं शक्य इति तदर्थः। विरुद्धदिगवस्थितमेषद्वयक्रियाजनितमेषद्वयसंयोगस्थले उभयोरेव मेषयोरवयवयोर्यः संयोगो भवति, तत्र तस्य संयोगस्यैकत्वेन विभिन्नावयविनोरवयवद्वये तादृशसंयोगप्रतियोगित्वानुयोगित्वयोः सत्त्वेन दर्शितोभयसम्बन्धेन विभिन्नावयवरूपविभिन्नदेशद्वयविशिष्टत्वसत्त्वात्तादृशैकावयवतादात्म्यस्य तादृशापरावयवेऽसत्त्वाद्व्यभिचारः प्रसज्यतीति तदाशयात्।

अनन्तरं 'ननु गगनसंयोगस्यैकत्वे व्याप्यवृत्तितये'त्यादिनोत्थापितव्यभिचाराभावस्थलविशेषव्यभिचारद्वयशङ्कायाः समाधानम् 'इति चेन्न, स्वावच्छेदकत्वस्वावच्छेदकशाखादिसमवेतसमवायित्वोभयसम्बन्धेन संयोगम्प्रति तादात्म्येन शाखात्वादिना कारणत्व एव तत् (मूलाद्यवयवावच्छिन्नसंयोगम्प्रति मूलत्वादिना कारणत्वमित्येतत्) तात्पर्यादि'त्यादिना विधीयते।

शाखायां वृक्षः कपिसंयोगी इत्यादिस्थले स्वा(संयोगा)वच्छेदकत्व,-स्वावच्छेदक(संयोगावच्छेदक)शाखासमवेत(वृक्ष)समवायित्वो(समवायिकारणत्वो)-भयसम्बन्धेन संयोगात्मककार्यस्य शाखायां स्थितत्वात्तत्र शाखातादात्म्यस्य सत्त्वात् सङ्गतिः, प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतिविषयैकसंयोगस्थले संयोगजसंयोगे चावयवद्वयावच्छिन्ने व्यभिचारद्वयविरहश्च, अनुपदोक्तकार्यकारणभावे उक्तव्यभिचारद्वयाभावस्तु दिग्देशकालेषु विलक्षणावच्छेदकत्वस्वीकारात्, शाखानिष्ठशरीरवृक्षसंयोगावच्छेदकतातः प्राचीनिष्ठायास्तादृशसंयोगावच्छेदकताया भिन्न-

त्वात्, विजातीयतावच्छेदकतासम्बन्धेन प्राच्याद्यवच्छिन्नसंयोगम्प्रति प्राच्यादिदिक्त्वेन कारणत्वकल्पनात्, तत्तात्पर्यविषयदर्शितकार्यकारणभावे देशविशेषावच्छेदकत्वनियमस्य दिग्विशेषावच्छेदकत्वनियमस्य चोपपत्तेः, अर्थाद् विभिन्नेषु अवयवात्मकदेशेषु मूलशाखादिषु प्राचीप्रतीच्यादिविभिन्नदिक्षु एकावच्छेदकत्वविरहात् तत्र तत्र विजातीयावच्छेदकत्वस्यैव सत्त्वादुक्तव्यभिचारद्वयासम्भवात्।

मूलशाखादिविभिन्नावयवात्मकविभिन्नदेशेषु विजातीयावच्छेदकत्वानङ्गीकारेऽपि कार्यतावच्छेदकसम्बन्धकोटौ स्वावच्छेदकशाखादिसमवेत-समवायित्वरूपद्वितीयसम्बन्धोपादानान्मूले शाखायाः शाखायां मूलस्य तादात्म्यविरहेऽपि न व्यभिचारः, तस्य संयोगस्य मूले स्वावच्छेदकत्वसम्बन्धेन सत्त्वेऽपि स्वावच्छेदकशाखासमवेतसमवायित्वसम्बन्धेन सत्त्वविरहात्, स्वावच्छेदकशाखादिसमवेतसमवायित्वस्य तत्तदवयवनिष्ठस्य भिन्नत्वात्, तस्य समवायिकारणत्वरूपत्वात्, ततश्चावयवद्वयावच्छिन्नसंयोगजसंयोगेऽपि व्यभिचारासम्भवात्।

शाखायां वृक्षे गगनसंयोग इत्यादिप्रतीतेः व्याप्यवृत्तेरप्यवच्छेदकत्वाङ्गीकाराद् व्यभिचारप्रसक्त्या वृक्षगगनसंयोगानेकताया एव कार्यकारणभावकल्पनालाघवात्स्वीकारात् व्याप्यवृत्तेरवच्छेदकत्वाभावेन व्यभिचाराभावस्य वक्तुमशक्यत्वात्।

मूलशाखादिनिष्ठावच्छेदकतावच्छेदकतासम्बन्धेन संयोगम्प्रति मूलशाखात्वादिना लाघवात् कार्यकारणभावस्तत्र च कार्यकारणभावे वृक्षगगनसंयोगस्यैक्येऽपि न व्यभिचार इति तु नैव वक्तुं शक्यम्, विशेषरूपेण संसर्गत्वानभ्युपगमादिति प्रकाशः।[२०८]

तत्त्वालोकः– अत्र ब्रूमः। अधोमूले वृक्षे गगनसंयोगः उपरिशाखायां वृक्षे गगनसंयोगः प्राच्यामेतच्छाखायां वृक्षे गगनसंयोग इत्यादिप्रतीतेर्मूलावच्छिन्नस्याधोदेशावच्छिन्नतया शाखाद्यवच्छिन्नस्य चोपरिदेशाद्यवच्छिन्नतया मूलशाखाद्यवच्छिन्नगगनसंयोगस्य भेद एव स्वीकरणीयः, अभेदे चोपरिमूले वृक्षे गगनसंयोग इति प्रतीत्यापत्तेः, न चोक्तप्रतीत्यसिद्धिर्येन च प्रमाणेन संयोगसिद्धिस्तेनैवोक्तप्रतीतेरपि सम्पाद्यत्वादिति।

अत्रेदम्बोध्यम्। उक्तप्रतीतौ वृक्षवृत्तिगगनसंयोगे तत्तद्दिग्देशावच्छिन्नत्वभानस्यानुभविकत्वे वृक्षवृत्तितायाम्वानुभविकत्वे भवेदेव संयोगभेदः देशनिष्ठावच्छेदकतायामेव दिगवच्छिन्नत्वभानस्य प्रामाणिकत्वे च नाङ्गीकार्यः। उक्तप्रतीत्यापत्तेरयोगान्मूलनिष्ठावच्छेदकताया उपरिदेशानवच्छिन्नत्वात्, अत एव

दिग्व्यभिचारम्परित्यज्य संयोगजसंयोगे देशव्यभिचार एवादृतो भट्टाचार्येण, एवं वृक्षे गगनसंयोगम्व्याप्यवृत्तिं गगनेऽव्याप्यवृत्तिं प्रतिपादयतो 'यत्तु संयोगमात्रे'त्यादि[1]गदाधरग्रन्थस्यापि देशनिष्ठावच्छेदकतायामेव दिगवच्छिन्नत्वे तात्पर्यम्वाच्यमन्यथा गगनसंयोगनिष्ठगगनवृत्तितायामेकस्यामुपरि दिग्मूले (मूल[2])देशावच्छिन्नत्वासम्भवेन भेदस्वीकारे वृक्षेऽपि भेदस्यावश्यकत्वापत्तेः।

यद्वा गगने वृक्षसंयोगसत्तायां वृक्षस्यावच्छेदकतयाऽव्याप्यवृत्तितायां तात्पर्यम्, अधोमूले वृक्षे गगनसंयोग इत्यादिप्रतीतिरप्रामाणिक्येवेति।

केचित्त्वतिप्रसङ्गभङ्गायेत्यादिग्रन्थमन्यथा व्याचक्षते। तथाहि— देशविशेषाद्यनवच्छिन्नसंयोगस्यानुपलम्भात्कारणानियम्यस्य देशविशेषावच्छिन्नत्वस्यानियमप्रसङ्गाद्देशविशेषस्य कारणत्वं वाच्यम्, तत्कार्यतावच्छेदकञ्च न संयोगत्वम्, व्यभिचारापत्तेः, तद्वारणाय च तत्तद्देशावच्छिन्नत्वं कार्यतावच्छेदकमभ्युपेयमेवञ्चानवच्छिन्नस्य व्याप्यवृत्तेर्गगनसंयोगस्योत्पत्त्यसम्भवः, उत्पादकसामग्र्यभावाद्यत्किञ्चिद्विशेषसामग्रीम्विना सामान्योत्पत्त्यसम्भवेन विशेषसामग्र्या अवश्यापेक्षणीयत्वात्, विशेषश्चावच्छिन्न एव क्लृप्तोऽनवच्छिन्नस्य कल्प्यत्वात्क्लृप्तानुसारेणैव च कल्पनायाः कार्यत्वादित्यव्याप्यवृत्तिगगनसंयोगसिद्धौ न स्वरूपासिद्ध्यवकाश इति।

तन्न चारु, वृक्षे व्याप्यवृत्तेरेव गगनेऽव्याप्यवृत्तितया तदुत्पत्तिसम्भवादिति दिक्।[२०९]

*प्रकाशः*– 'अत्र ब्रूम' इत्यादिना तत्त्वालोककृत् पूर्वमप्रतिपादितं विशेषविषयं प्रतिपादयति यद् अधोदेशे मूले वृक्षे गगनसंयोगः उपरिशाखायां वृक्षे गगनसंयोगः प्राच्यामेतच्छाखायां वृक्षे गगनसंयोगः इत्यादिप्रतीत्या मूलावच्छिन्नसंयोगस्यैवाधोदेशावच्छिन्नत्वप्राप्त्या एवं शाखावच्छिन्नसंयोगस्यैवोपरिदेशावच्छिन्नत्वप्राप्त्या मूलावच्छिन्ने उपरिदेशावच्छिन्नत्वस्य शाखावच्छिन्नेऽधोदेशावच्छिन्नत्वस्य च विरहेण वृक्षे मूलशाखादिविभिन्नदेशावच्छिन्नो गगनसंयोगो विभिन्न एव मन्तव्यो नत्वेकः, तदैकत्वे (अभेदे) उपरिमूले वृक्षगगनसंयोगः एवमधःशाखायां वृक्षे गगनसंयोग इत्येवं प्रतीतेरापत्तिः स्यात्। मूलावच्छिन्नेऽधोदेशावच्छिन्नत्वशाखावच्छिन्ने उपरिदेशा-

---

१. गादाधरी (वाराणसी, १९७०), सिद्धान्तलक्षणप्रकरणम्, पृ. ३२२

२. कोष्ठकान्तर्गतः पाठः प्राचीनपुस्तके नास्ति।

वच्छिन्नत्वसाधकदर्शितप्रतीतौ प्रमाणन्तु धर्मिग्राहकभानमेव, अर्थाद् येन भानेन वृक्षे गगनसंयोगः सिद्धयति तदेवोक्तप्रतीतावपि मानमिति।

पुनश्च 'अत्रेदं बोध्यमि'त्युपक्रम्य विषयविशेषं दर्शयति — यदुक्तप्रतीतौ = अधोमूले वृक्षे गगनसंयोग इत्यादिपूर्वदर्शितप्रतीतौ, वृक्षवृत्तिगगनसंयोगे, तादृशसंयोग-निष्ठवृक्षवृत्तितायाम्वा तत्तद्दिग्देशा(अधोमूलदिग्देशा)वच्छिन्नत्वभानस्यानुभवसिद्धत्वे वृक्षे गगनसंयोगभेदो भवेदेव।

यदि तूक्तप्रतीतौ तथाभानन्नानुभवसिद्धमपि तु तत्र देशनिष्ठावच्छेदकतायामेव दिगवच्छिन्नत्वभानं प्रामाणिकमर्थाद् मूलनिष्ठावच्छेदकतायामेवाधोदेशात्मकदिग-वच्छिन्नत्वभानं प्रामाणिकम्, तदा तत्र संयोगभेदो नाङ्गीकार्यः, देशनिष्ठावच्छेदकताया-मेव दिगवच्छिन्नत्वभानस्य प्रामाणिकत्वे तत्र संयोगाभेदे उपरिमूले वृक्षे गगनसंयोग इत्येवं प्रतीत्यापत्तेः सम्भवविरहाद् मूलनिष्ठावच्छेदकताया उपरिदेशा-वच्छिन्नत्वविरहात्।

अत एव = उक्तप्रतीतौ (अधोमूले वृक्षगगनसंयोग इत्यादिप्रतीतौ) मूलादि-निष्ठावच्छेदकताविशेष एव अधोदिगादिविशेषावच्छिन्नत्वभानाभ्युपगमादेव, भट्टाचार्येण मूलाद्यवयवावच्छिन्नसंयोगम्प्रति मूलत्वादिना तर्कालङ्कारदर्शितकारणत्व-पक्षे प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतिविषयसंयोगे दिग्व्यभिचारं परित्यज्य संयोगजसंयोगेऽवयवद्वयावच्छिन्ने एकस्मिन् व्यभिचार आदृतः, पूर्वत्र = प्राच्यां शाखायां शरीरवृक्षसंयोगः इत्येवं प्रतीतिकसंयोगस्थले, एकत्र प्राच्यादिदिग-वच्छिन्नत्वशाखावच्छिन्नत्वविरहेण शाखात्मकदेशनिष्ठावच्छेदकतायामेव प्राचीदिग-वच्छिन्नत्वसत्त्वाद् व्यभिचारासम्भवाद् वृक्षे गगनसंयोगो व्याप्यवृत्तिः, गगने तु स संयोगोऽव्याप्यवृत्तिरित्येतत्प्रतिपादको 'यत्तु संयोगमात्रस्ये'त्यादि[1] गादाधरीग्रन्थोऽपि देशनिष्ठावच्छेदकतायामेव दिगवच्छिन्नत्वप्रतिपादनतात्पर्यकः। अन्यथा गगनसंयोग-निष्ठायामेकस्यां गगनवृत्तितायामुपरिदिगवच्छिन्नत्वमूलदेशावच्छिन्नत्वासम्भवेन भेदं स्वीकृत्य गगने वृक्षगगनसंयोगस्याव्याप्यवृत्तित्वस्वीकारे वृक्षेऽपि एकस्यां तस्यां अधोदिगवच्छिन्नत्वमूलावच्छिन्नत्वासम्भवेन भेदस्यावश्यकत्वादव्याप्यवृत्तितैव स्यात्। तस्य ग्रन्थस्य देशनिष्ठावच्छेदकतायामेव दिगवच्छिन्नत्वतात्पर्यकत्वे तु तत्राधोमूलदिग्देशावच्छेदकभेदविरहान्न तेन तद्भेदो न वाऽव्याप्यवृत्तितेति।

---

१. 'यत्तु संयोगमात्रस्याव्याप्यवृत्तितासिद्धान्तानुरोधेन मूलाग्राद्यवच्छिन्नतरुविभुसंयोगादीनां भेद-स्वीकार आवश्यक इति। तदपि न सम्यक्, तादृशसंयोगव्यक्तीनां गगनादौ दिग्विशेषरूपावच्छेद-कनियमेनैव तादृशसिद्धान्तसङ्गतेरि'ति तत्रत्या गादाधरी, सिद्धान्तलक्षणप्रकरणम्, पृ. ३२२

यद्वा 'यत्तु संयोगमात्रे'त्यादिगादाधरीग्रन्थस्य नो देशनिष्ठावच्छेदकतायामेव दिगवच्छिन्नत्वे तात्पर्यम्, किन्तु गगने वृक्षसंयोगसत्तायां वृक्षस्यावच्छेदकतयाऽव्याप्यवृत्तितायामेव तात्पर्यमर्थाद् गगने या वृक्षसंयोगसत्ता सा अव्याप्यवृत्तिः, वृक्षस्य तत्रावच्छेदकत्वात्, वृक्षे तु या गगनसंयोगसत्ता सा तु व्याप्यवृत्तिरेव, न तु अव्याप्यवृत्तिस्तत्र कस्याप्यवच्छेदकत्वविरहात्, अधोमूले वृक्षे गगनसंयोग इत्यादिप्रतीतेः प्रामाणिकत्वविरहेण अधोमूलादेस्तदवच्छेदकत्वसिद्ध्यसम्भवादिति।

केचिदत्र 'अतिप्रसङ्गभङ्गाये'त्यादिदर्शितजागदीशीग्रन्थमन्यथा दर्शितरीत्यतिरिक्तानुपददर्शयिष्यमाणरीत्या व्याचक्षते। तथा हि— संयोगस्य देशविशेषावच्छिन्नस्यैवानुभूतत्वेन देशविशेषाद्यनवच्छिन्नसंयोगस्योपलम्भविरहात् कारणानियन्त्रितस्य देशविशेषावच्छिन्नत्वस्यानियमप्रसङ्गदोषग्रस्तत्वेनाभ्युपगन्तुमशक्यत्वाद्देशविशेषावच्छिन्नत्वे देशविशेषस्य कारणताऽभ्युपेया, देशविशेषावच्छिन्नत्वं प्रति तस्य देशविशेषात्मकस्य कारणस्य कार्यतावच्छेदको यदि संयोगत्वं स्यात्तदा देशविशेषमूलाद्यनात्मकशाखादिस्थितसंयोगेऽपि संयोगत्वस्य सत्त्वेन व्यभिचारः स्यादतः संयोगनिष्ठं तत्तद्देशावच्छिन्नत्वमेव देशविशेषात्मककारणस्य कार्यतावच्छेदकं स्वीकार्यम्, एवंसति उत्पादकसामग्र्यभावेनानवच्छिन्नस्य व्याप्यवृत्तेर्गगनसंयोगस्योत्पत्त्यसम्भवः, विशेषसामग्र्या अभावे विशेषसामग्र्यपेक्षसामान्योत्पत्तेरसम्भवात्, विशेषसामग्री च अवच्छिन्नसंयोगविशेषोत्पत्तावेव क्लृप्तानवच्छिन्नसंयोगसामग्र्याः क्लृप्तत्वविरहात्, क्लृप्तानुसारेणैव कल्पनाया कर्तव्यतौचित्यात्, अतो वृक्षेऽव्याप्यवृत्तेरेव गगनसंयोगस्य सिद्धौ सत्यां यावदभावान्तर्गतस्य तदभावस्य वृक्षात्मकपक्षे सत्त्वेन 'यो यदीययावद्विशेषाभाववानि'त्यादिदर्शितसामान्यव्याप्तौ स्वरूपासिद्धेर्नास्ति सम्भव इति केचिद्वदन्ति।

तन्न सुन्दरम्, 'यत्तु संयोगमात्रस्ये'त्यादिगादाधरीग्रन्थोपपादितदिशा वृक्षे व्याप्यवृत्तेरेव गगनेऽव्याप्यवृत्तितया वृक्षगगनसंयोगोत्पत्तौ बाधकाभावादिति प्रकाशः।[२०९]

तत्त्वालोकः– दीधितौ 'यत्तदर्थयोरननुगमादि'ति।[१] यत्तदर्थसंयोगघटत्वादीनामनुगतैकरूपाभावेन व्याप्तिकोटौ प्रवेशासम्भवाद्घटसामान्याभावघटीययावद्विशेषाभावादीनां व्याप्तिग्रहश्च न संयोगीययावद्विशेषाभावलिङ्गकसंयोगसामान्याभावानुमित्युपयोगी, तयोर्विशिष्य व्याप्तिश्चाग्रे निराकरणीया। न च यत्तच्छब्दार्थत्वमेवानुगतो धर्मः, तस्य प्रमेयत्वादिसाधारण्येन यत्त्वाश्रय-

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

समानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटस्य प्रायसो[1]ऽसत्त्वप्रसङ्गात्, न च यत्त्वं तत्त्वं धर्मविशेषः, मानाभावात् यत्पदेनैकधर्मोपादाने तत्पदेनापि तस्यैवोपादानमिति नियमस्याशक्यनिर्वाह्यत्वाच्चेति भावः।

"प्राचाम्मते यत्तदर्थयोरनुगमादाहे"ति।[2] अनुगतत्वे सत्यननुगत-कार्यकारी धर्मविशेषो यत्त्वतत्त्वमनुभवानुरोधाद् उक्तनियमोऽपि तत्स्वाभाव्या-देवोपपद्यते। कथमन्यथा स्वीयस्तनपानादिगोचरप्रवृत्तेः स्तनपानादिगोचर-कार्यताज्ञानादिव्याप्तिमुपलभ्य यो यत्र प्रवर्तते सः कार्यतया तज्जानातीति सामान्यतो व्याप्तिमुपादाय गवानयनप्रवृत्तितत्कार्यज्ञानयोरगृहीतव्याप्तिकेनापि तत्प्रवृत्त्या तज्ज्ञानमनुमीयते।

यदि च साध्यजातीयसाधनजातीययोः कयोरपि व्यभिचारस्या-नुपस्थितावुपस्थितनिखिलसाध्यजातीयसाधनजातीयव्याप्तेर्विशिष्य ग्रहादेवा-गृहीतव्याप्तिप्रवृत्तिविशेषलिङ्गेन कार्यत्वविशेषज्ञानानुमानसम्भव इति सामान्य-व्याप्त्यभ्युपगमो निरर्थक इत्युच्यते तदा प्रकृतेऽपि तथैव संयोगसामान्याभाव-सिद्ध्याऽभिमतसिद्धिरिति प्राचामाशयः।

इदन्तु बोध्यम्— यत्त्वतत्त्वयोरननुगतत्वेऽपि न क्षतिः, जातिर्जातिमती जातित्वादित्यनुमानादेवाभिमतसिद्धिः, साध्यता च स्वतादात्म्य,-स्व-समानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटव्यापकाभावप्रतियोगिता-वच्छेदकत्वोभयसम्बन्धेन।

यद्वा वृक्षाद्यवृत्तिस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिता-कयत्किञ्चिदभावकं यद्यत्तद्भेदकूटवान् यो यः स वृक्षनिष्ठाभावप्रतियोगिता-वच्छेदक इति व्याप्त्यैव सामान्यव्याप्तिस्थलाभिषिक्तया भट्टाचार्योक्तया-भिमतसिद्धिरिति।[२१०]

*प्रकाशः*— संयोगीययावद्विशेषाभावसंयोगसामान्याभावयोर्विशिष्य व्याप्तेरग्रे निराकरिष्यमाणत्वेन यत्तदर्थसंयोगत्वघटत्वादीनाम् (अथवा संयोगघटादीनाम्) अनुगतैकरूपाभावेन अनुगतैकरूपेण व्याप्तिकोटौ प्रवेशसम्भवाभावाद् घटीययावद्वि-शेषाभावघटसामान्याभावव्याप्तेर्ग्रहस्य संयोगीययावद्विशेषाभावलिङ्गकसंयोगसामान्या-

---

१. 'प्रायशो' इत्यनेन भवितव्यम्।

२. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

भावानुमितावुपयोगित्वासम्भवादिति दीधितिघटक'यत्तदर्थयोरननुगमादि'त्यस्य तात्पर्यात्।

अत्र शङ्कते यद् यत्तदर्थयोरनुगमकता यत्तच्छब्दार्थत्वरूपानुगतधर्मस्य भवितुं शक्नोतीति। समाहितं तत्, 'तस्य प्रमेयत्वादिसाधारण्येन यत्त्वाश्रयसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटस्य प्रायसो[१]ऽसत्त्वप्रसङ्गादि'त्युल्लिख्य। प्रमेयत्वेऽपि यत्तच्छब्दार्थत्वरूपोक्तानुगतधर्मसत्त्वेन यत्त्वाश्रयो(प्रमेयत्वाश्रयो)भयावृत्ति(तत्तद्वृक्षत्व)धर्मावच्छिन्नाभावकूटस्य वृक्षादौ पक्षेऽसत्त्वप्रसङ्गात्, हेत्वभाववत्पक्षात्मकस्वरूपासिद्धिदोषापातादित्याशयात्।

उक्तदोषाद् यत्तदर्थत्वस्यानुगमकत्वस्वीकारासम्भवेऽपि यत्त्वतत्त्वात्मकधर्मविशेषस्यानुगमकता स्यादित्यपि न, तादृशानुगतधर्मसद्भावे मानाभावात्, यत्त्वतत्त्वरूपधर्मविशेषस्वीकारे यत्पदेनैकधर्मोपादाने तत्पदेनापि तस्यैवोपादानमिति नियमनिर्वाहासम्भवदोषापत्तेश्च। यत्त्वतत्त्वात्मकधर्मविशेषसद्भावे सर्वत्रैव तस्यैव यत्तत्पदग्राह्यतया यत्पदेनैकधर्मोपादाने तत्पदेनापि तस्यैवोपादानमिति सामान्यनियमो न स्यात्, तादृशसामान्यनियमस्वरसतस्तत्र तत्र विभिन्नस्यैव यत्तत्पदग्राह्यधर्मविशेषस्यानुभविकत्वात्।

'प्राचां मते यत्तदर्थयोरनुगतत्वादाह — एकावच्छेदेन' (यावद्विशेषाभावस्योपाधित्वाच्च) इति जागदीशी[२]। अत्र 'अनुगतत्वे सत्यननुगतकार्यकारी धर्मविशेष' इत्यादि 'इति प्राचामाशय' इत्यन्तेन प्राचीनाशयं तत्त्वालोककृत् स्पष्टयति। अनुभवानुरोधादनुगतत्वे सत्यननुगतकार्यकारिणं धर्मविशेषं यत्त्वतत्त्वं प्राचीनाः स्वीकुर्वन्ति। 'यत्'पदेनैकधर्मोपादाने 'तत्'पदेनापि तस्यैवोपादानमिति नियमस्यापि दर्शितस्वरूपकयत्त्वतत्त्वकत्वाभिप्रायकत्वादेवोपपत्तिः।

अन्यथा = यत्त्वतत्त्वस्योक्तस्वरूपकत्वविरहे, उक्तनियमस्य तत्स्वाभाव्यविरहे वा, स्वस्य जातमात्रबालस्य स्तनपानादौ या प्रवृत्तिः, तस्याः प्रवृत्तेः स्तनपानादिगोचरकार्यताज्ञानादिना व्याप्तिमुपलभ्य अर्थात् स्तनपानादौ कार्ये मम कार्यताज्ञानसत्त्वादेव मम प्रवृत्तिर्जाता, यत्र मत्प्रवृत्तिस्तत्र मम कार्यताज्ञानपूर्विका इत्येवं स्वीयप्रवृत्तिविशेषस्वकीयकार्यताज्ञानविशेषयोरेव प्रथमं व्याप्यव्यापकभावबोधात्मकं व्याप्तिज्ञानम्, अनन्तरन्तु यो यत्र प्रवर्तते स कार्यतया तज्जानातीत्येवं सामान्यतो व्याप्तिं विज्ञाय,

---

१. 'प्रायशो' इत्येवमुचितम्भाति।

२. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

गवानयनात्मककार्यविशेषे प्रवृत्तिविशेषगवानयनधर्मिककार्यताज्ञानयोर्व्याप्यव्यापक-भावमजानतापि (गवानयनप्रवृत्तितत्कार्यताज्ञानयोरगृहीतव्याप्तिकेनापि) तत्प्रवृत्त्या = गवानयनात्मककार्ये प्रवृत्तिमुपलभ्य, तज्ज्ञानं गवानयनधर्मिकं तत्र प्रवृत्तसमवेतं कार्यताज्ञानमनुमीयते, पूर्वतनेन 'कथमि'त्यनेनास्य सम्बन्धः, अन्यथा कथमनुमीयते इतीह पूर्वापरयोजना स्वीयस्तनपानादिगोचरप्रवृत्तिस्तनपानादिगोचरकार्यताज्ञानादि-व्याप्त्युपलम्भोत्तरकालिकयत्तद्धटितां यो यत्र प्रवर्तते स कार्यतया तज्जानातीत्येवं सामान्यतो व्याप्तिमादाय गवानयनप्रवृत्तितत्कार्यताज्ञानयोर्व्याप्तिग्रहाभाववताऽपि अर्थात् स्वीयस्तनपानादिगोचरप्रवृत्तेः स्तनपानादिगोचरकार्यताज्ञानादिना विशिष्य व्याप्तिज्ञान-मिव पदस्य गवानयनप्रवृत्तिस्थले विशिष्य व्याप्तिग्रहो न तिष्ठति तादृशजनेनापि, गवानयनप्रवृत्त्या गवानयनकार्यताज्ञानं यदनुमीयते तत् यत्त्वतत्त्वस्यानुगतत्वविरहे अननुगतकार्यकारित्वविरहे च नोपपन्नं स्यात्, तत्र विशिष्य व्याप्तिग्रहासत्त्वाद् अनुगतकार्यविरहाच्चेति भावः।

प्रकारान्तरेणापि तदेव सुदृढं कर्तुं 'यदि चे'त्यादिनोच्यते यत् साध्यजातीय-साधनजातीययोः कयोरपि व्यभिचारस्यानुपस्थितौ (पर्वतीयवह्निस्वरूपसाध्यजातीय-पर्वतीयधूमस्वरूपसाधनजातीययोः चत्वरादिवह्निधूमयोः कयोरपि व्यभिचारस्य ज्ञान-विरहे) अथवा 'प्रकारवचने जातीयर्'[1] इत्येतद्विहितजातीयप्रत्ययान्तोऽत्र साध्यजातीय-साधनजातीयशब्दो विवक्षितः, तथा च 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः'[2] इति न्यायसूत्र-लक्षितायाः प्रवृत्तेः वाचिकप्रवृत्तौ बौद्धिकप्रवृत्तौ वा शारीरिकप्रवृत्तितो भिन्नत्वेऽपि तज्जातीयत्वव्यवहारात्। प्रकृते स्वीयस्तनपानादिगोचरप्रवृत्तिस्तनपानादिगोचरकार्यता-ज्ञानादिभिन्नगवानयनादिगोचरप्रवृत्तितत्कार्यताज्ञानाद्योः कयोर्व्यभिचारस्यानुपस्थितौ उपस्थितनिखिलसाध्यजातीयसाधनजातीययोर्विशिष्य व्याप्तिग्रहादेव सामान्यतो विशेषतो वा अगृहीतव्याप्तिकप्रवृत्तिविशेषलिङ्गेन कार्यत्वविशेषज्ञानस्य ज्ञानमनुमित्या-त्मकं सम्भवि। अतः अगृहीतव्याप्तिकप्रवृत्तिविशेषलिङ्गेन कार्यत्वविशेषज्ञानानुमानाय यो यत्र प्रवर्तते स कार्यतया तज्जानातीत्येवं सामान्यव्याप्त्यभ्युपगमो नावश्यकः (निरर्थको वा), तदा प्रकृतेऽपि वृक्षे संयोगसामान्याभावानुमानाय सामान्यव्याप्त्यभ्यु-पगमो निरर्थक एव (अनावश्यक एव), साध्यजातीयसाधनजातीययोः कयोरपि व्यभिचारस्याग्रहात्, उपस्थितनिखिलसाध्यजातीयसाधनजातीययोर्विशिष्य व्याप्ति-ग्रहादेव वृक्षात्मकपक्षे संयोगसामान्याभावानुमानात्मकाभिमतसिद्धिसम्भवादिति।

---

१. अष्टाध्यायी, ५.३.६९

२. न्यायसूत्रम्, १.१.१७

अत्र 'इदन्तु बोध्यमि'त्युपक्रम्य उच्यते यद् यत्त्वतत्त्वयोरनुगतत्वविरहेऽपि क्षतिर्नास्ति, अर्थाद् यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानित्येवं सामान्यव्याप्तेरसिद्धावपि क्षतिर्नास्ति, जातिर्जातिमती (जातिः स्वतादात्म्य-स्व-समानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटव्यापकाभावप्रतियोगितावच्छेदकत्वो-भयसम्बन्धेन जातिमती)जातित्वादित्यनुमानादेव वृक्षे संयोगसामान्याभावसिद्धि-सम्भवात्, संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटस्य व्यापकीभूतो यः संयोगसामान्याभावस्तत्प्रतियोगितावच्छेदकत्व,-संयोगत्वात्मक-स्वतादात्म्योभय-सम्बन्धेन संयोगत्वजातौ संयोगत्वजातिमत्त्वरूपसाध्यस्य सत्त्वात्।

यद्वा वृक्षाद्यवृत्ति स्व(संयोगत्व)समानाधिकरणोभयावृत्तिधर्मावच्छिन्न-प्रतियोगिताकयत्किञ्चिदभावकं यद् यत्, तत्तद्भेदकूटवान् यो यः स वृक्षनिष्ठाभाव-प्रतियोगितावच्छेदकः इति व्याप्त्यैव सामान्यव्याप्तिस्थानीयया गदाधरभट्टाचार्योक्तया अभिमतसिद्धिसम्भवात्।

संयोगत्वात्मकस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताक-यत्किञ्चिदभावस्य वृक्षाद्यवृत्तित्वविरहात् संयोगत्वस्य वृक्षाद्यवृत्तितादृशयत्किञ्चिद-भावकयद्यदन्तर्गतत्वाभावात् तद्भेदकूटवद् यद्यदन्तर्गतत्वस्य तत्र संयोगत्वे प्राप्तत्वात् संयोगत्वात्मके तत्र स्वस्मिन् वृक्षनिष्ठाभाव(संयोगसामान्याभाव)प्रतियोगितावच्छेद-कत्वस्य सिद्धिर्जायते इति गदाधरभट्टाचार्याभिमतेयं रीतिरिति प्रकाशः।[२१०]

तत्त्वालोकः- ''व्यापकत्वन्दुर्घटमि''ति।[१] अथावच्छिन्नत्वैकानवच्छि-न्नत्वोभयाभाववत्त्वमेवास्त्वेकावच्छिन्नत्वमुभयाभावघटकञ्चैकावच्छिन्नत्वं स्वसमानाधिकरणावच्छिन्नतादृशाभावाधिकरणताकूटावच्छेदकावच्छिन्नत्व-रूपम्, एवञ्च गुणनिष्ठाधिकरणत्वस्यावच्छिन्नत्वविरहेणोभयाभाववत्त्वात्तस्य साध्यव्यापकत्वं वृक्षनिष्ठे संयोगविशेषाभावाधिकरणत्वे कुत्रापि न स्वसमाना-धिकरणनिखिलतादृशाधिकरणतावच्छेदकावच्छिन्नत्वमित्युभयाभावविरहेण साधनाव्यापकत्वम्, कपिसंयोगविशेषाभावाधिकरणत्वमात्रस्यैव स्वसमाना-धिकरणनिखिलतादृशावच्छेदकमूलावच्छिन्नत्वसत्त्वेनोभयाभाववत्तया कपि-संयोगाभावरूपसाध्यव्यापकत्वस्यापि सम्भवेन 'न च तथापी'[२]त्याद्युक्तशङ्काया अपि नावकाशः, भट्टाचार्येण चेदमेकावच्छिन्नत्वं कपिसंयोगाभावरूपसाध्य-व्यापकत्वसम्पत्तय उक्तम्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

२. तदेव, पृ. १०

न च विशिष्टाभावमुपेक्ष्य कथमुभयाभाव उक्त इति वाच्यम् अनिर्वाहात्, तथाहि — जातित्वरूपत्वादीनामपि यत्पदार्थतया तदवच्छिन्नाभावरूपसाध्यव्यापकत्वस्योभयाभावविशिष्टे तादृशविशेषाभावेऽसम्भवः, स्वसमानाधिकरणावच्छिन्नतादृशाभावाधिकरणत्वस्य तदवच्छेदकत्वस्य चाप्रसिद्धेर्जातिविशेषाभावाद्यधिकरणत्वमात्रस्यैव व्याप्यवृत्तित्वात्तथा चैकावच्छिन्नत्वाप्रसिद्ध्या तद्घटितोभयाभावाप्रसिद्धेः, तदुपपत्तये चैकावच्छिन्नत्वघटकाधिकरणत्वविशेषणावच्छिन्नत्वस्याव्याप्यवृत्त्यभावत्वावच्छिन्ननिरूपितत्वानवच्छिन्नत्वोभयाभावरूपस्यावच्छेदकत्वस्य च तद्घटकस्य स्वनिरूपितावच्छेदकत्वाभाववत्त्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपस्य वाच्यतया विशिष्टाभावप्रवेशे जातित्वरूपत्वादीनां यत्पदेनोपादाने विशिष्टाप्रसिद्ध्या साध्योपाध्योः सामान्यव्याप्त्यनिर्वाहः, यत्पदेन जातित्वस्योपादाने देशमात्रस्यैव प्रागुक्ततादृशावच्छेदकत्ववत्तया तदनवच्छिन्नत्वावच्छिन्नत्वयोर्विरुद्धत्वादिति।

यद्वा यदीययावद्विशेषाभावत्वावच्छिन्ननिरूपितमेकमधिकरणत्वमेकावच्छिन्नत्वविशेषितं लघुभूतमुपाधिः, एकावच्छिन्नत्वञ्चावच्छिन्नत्वैकानवच्छिन्नत्वोभयाभाववत्त्वमेव, तद्घटकमेकावच्छिन्नत्वञ्चैकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वम्, एवञ्चाव्याप्यवृत्त्यभावसाधारणकूटत्वेन व्याप्यवृत्त्यधिकरणत्वमप्यव्याप्यवृत्त्येवेति संयोगीययावद्विशेषाभावाधिकरणत्वेऽवच्छिन्नत्वस्यानेकावच्छिन्नाभावकूटाधिकरणत्वस्य वृक्षावयवत्वेनैव देशावच्छिन्नतयैकानवच्छिन्नत्वस्य च सत्त्वेन तस्य साधनाव्यापकत्वम्, कपिसंयोगीययावद्विशेषाभावाधिकरणत्वस्य तन्मूलावच्छेद्यतयोभयाभावत्वेन साध्यव्यापकत्वमपि सम्भवति। अत्र विशिष्टाभावनिवेशे न क्षतिः, समानाधिकरणोभयत्वस्यैकविशिष्टापरत्वरूपत्वात्।

भट्टाचार्याणामुभयाभावोक्तिश्चात्र कल्पे स्वातन्त्र्येण न दृश्यते, किन्तु प्रागुक्तोभयाभावघटकमेकावच्छिन्नत्वमेकप्रकारेण निरुच्या'ऽथ वे'त्यादिना प्रकारान्तरेण तस्यैव निर्वचने उभयाभावात्मकत्वमिति ग्रन्थलाघवानुरोधेनापि तथोक्तिसम्भवेन वा पूर्वपक्षानवकाशादिति चेदुपाधिसाध्ययोस्सामान्यव्याप्तिनिर्वाहस्याकिञ्चित्करतया निरवच्छिन्नत्वरूपैकावच्छिन्नत्वनिवेश एव लाघवमित्याशयेनाह "एकावच्छेदेनेत्यनेने"त्यादिना।[1]

---

१. (क) प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०
(ख) प्राचीनपुस्तके 'एकावच्छेदेनेत्यादिने'ति पाठान्तरम्।

अधिकरणतामात्रस्याधिकरणवृत्त्यसाधारणधर्मावच्छिन्नतया देश-कालेत्युक्त एकावच्छिन्ननिरूपिताधिकरणत्वस्यैकत्वे गुणनिष्ठस्य द्रव्यादि-निष्ठस्य चाधिकरणत्वस्यावच्छिन्नत्वमेव स्यादनवच्छिन्नत्वमेव वा स्यादिति देशकालानवच्छिन्नत्वं वृत्तित्वविशेषणतयोपात्तम्, तथा च तादृशाधिकरणत्वे गुणवृत्तित्वमनवच्छिन्नम्वृक्षादिवृत्तित्वञ्च सावच्छिन्नमिति न दोष इति।[२११]

*प्रकाशः* – वृक्षे संयोगसामान्याभावसाधनाय दर्शितायां 'यो यदीययावद्वि-शेषाभाववान् स तत्सामान्याभाववानि'ति व्याप्तौ संयोगसामान्याभावात्मकसाध्य-व्यापकत्वात् संयोगीययावद्विशेषाभावात्मकसाधनाव्यापकत्वाच्च एकावच्छेदेन यावद्विशेषाभाववत्त्वमुपाधिरूपदोषतया यद्दर्शितं दीधितिग्रन्थेन, तत्र तस्य एकावच्छेदेन यावद्विशेषा[भाव]वत्त्वस्य गुणे संयोगयावद्विशेषाभावस्य व्याप्यवृत्तित्वाद् व्याप्यवृत्ति-नोऽवच्छिन्नत्वविरहात्, (एकावच्छेदेन संयोगीययावद्विशेषाभाववत्त्वस्य) संयोग-सामान्याभावात्मकसाध्याधिकरणे गुणे वृत्तित्वविरहेण साध्यव्यापकत्वदुर्घटत्व-शङ्का 'न चैवं तत्तत्संयोगाभावस्य गुणे व्याप्यवृत्तित्वादेकावच्छेदेन साध्यव्यापकत्वं दुर्घटमिति वाच्यमि'त्युपन्यस्य[१] तर्कालङ्कारेण दीधितिं व्याकुर्वता कृता। तत्र 'एवमि'त्यस्य उपाधौ साधनाव्यापकत्वसम्पत्तये एकावच्छेदेनेत्यसत्त्वे इत्यर्थः। तदुपरि विचाराय उपर्युक्ततत्त्वालोकखण्डस्योपक्रमः।

तत्र 'अथे'त्यारभ्य 'पूर्वपक्षानवकाशादिति चेदि'त्यन्तेन तत्त्वालोककृद्भि-र्दर्शितोपाधिघटकमवच्छिन्नत्वमेकावच्छेदेनेत्यनेन बोधितमुभयाभावविशेषवत्त्वरूपं स्वीकृत्य दर्शितोपाधौ साध्यव्यापकत्वसाधनाव्यापकत्वे पूर्वपक्षमुपपादयता प्रथमं समर्थ्येते– एकावच्छेदेन यावद्विशेषाभाववत्त्वमित्येतदुपाधिघटकमवच्छिन्नत्वम्– अवच्छिन्नत्व,-एकानवच्छिन्नत्वोभयाभाववत्त्वरूपमेवास्तु, एदुभयाभावघटकमेका-वच्छिन्नत्वम् (एकानवच्छिन्नत्वमेकावच्छिन्नत्वरहितत्वं तद्घटकमेकावच्छिन्नत्व-मित्यर्थः) पुनः स्वसमानाधिकरणावच्छिन्नतादृशाभावाधिकरणताकूटावच्छेदका-वच्छिन्नत्वरूपम्[२], एवञ्च = उपाधिघटकावच्छिन्नत्वस्य उक्तोभयाभाववत्त्वरूपस्यैव विवक्षणे च, गुणे तत्तत्संयोगाभावस्य व्या[प्य]वृत्तित्वाद् व्याप्यवृत्तेः केनचिदवच्छिन्न-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

२. अत्र स्वसमानाधिकरणेत्यादिघटक'स्व'पदेन अधिकरणतात्मकस्य यावद्विशेषाभाववत्त्वस्य परिग्रहः, स्वसमानाधिकरणेत्यादिघटक'तादृश'पदेन संयोगत्वादिजातिसमानाधिकरणोभयावृ-त्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्य सङ्केतः।

त्वविरहेऽपि गुणमादाय एकावच्छेदेन संयोगीययावद्विशेषाभाववत्त्वोपाधौ न संयोग-सामान्याभावात्मकसाध्यव्यापकत्वक्षतिः। गुणनिष्ठाधिकरणत्वस्य = गुणनिष्ठस्य संयोगीययावद्विशेषाभाववत्त्वरूपाधिकरणत्वस्य, एकानवच्छिन्नत्वेऽपि अवच्छिन्नत्व-विरहेणोक्तोभयाभाववत्त्वसत्त्वात् साध्यव्यापकत्वसम्पत्तिः, तत्रोपाधौ वृक्षमादाय साधनाव्यापकत्वमुभयाभाववत्त्वरूपावच्छिन्नत्वविवक्षायामुपपादयति— 'वृक्षनिष्ठे संयोगविशेषाभावाधिकरणत्वे कुत्रापि न स्वसमानाधिकरणनिखिलतादृशाधिकरणता-वच्छेदकावच्छिन्नत्वमित्युभयाभावविरहेण (अवच्छिन्नत्वस्य एकानवच्छिन्नत्वस्य च द्वयोः सत्त्वात्) साधनाव्यापकत्वमि'त्युपन्यस्य।

वृक्षनिष्ठानां संयोगीयविशेषाभावाधिकरणत्वानां वृक्षावयवावच्छिन्नत्वेन स्व(उक्ताधिकरणत्व)समानाधिकरणावच्छिन्ननिखिलतादृशाधिकरणतावच्छेदका-वच्छिन्नत्व(संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव-निखिलाधिकरणतावच्छेदकावच्छिन्नत्व)विरहात् स्वसमानाधिकरणावच्छिन्नतादृशा-भावाधिकरणताकूटावच्छेदकावच्छिन्नत्वविरहेण एकावच्छिन्नत्वविरहादेकानवच्छिन्न-त्वस्य अवच्छिन्नत्वस्य च द्वयोः सत्त्वादुभयाभावविरहात् साधनाव्यापकत्वस्योपपत्ति-रित्याशयात्, संयोगीययावद्विशेषाभावात्मकसाधनवति वृक्षे परिष्कृतैकावच्छिन्नत्व-विशेषितसंयोगीययावद्विशेषाभाववत्त्वोपाधेरसत्त्वेन साधनाव्यापकता तत्रेति यावत्। वृक्षनिष्ठसंयोगविशेषाभावाधिकरणत्वेऽवच्छिन्नत्वसत्त्वेऽपि कस्यापि वृक्षावयवस्य स्वसमानाधिकरणनिखिलतादृशाधिकरणतावच्छेदकत्वविरहेण दर्शितैकावच्छिन्नत्व-विरहेण एकानवच्छिन्नत्वस्य अवच्छिन्नत्वस्य च द्वयोः सत्त्वेनोभयाभावविरहादिति तदर्थात्।

उपाधिघटकस्य एकावच्छिन्नत्वस्य दर्शितोभयाभाववत्त्वरूपतास्वीकारे लाभान्तरं दर्शयति— "कपिसंयोगाभावाधिकरणत्वमात्रस्यैव स्वसमानाधिकरण-निखिलतादृशावच्छेदकमूलावच्छिन्नत्वसत्त्वेनोभयाभाववत्तया कपिसंयोगाभावरूप-साध्यव्यापकत्वस्यापि सम्भवेन 'न च तथापि कपिसंयोगसामान्याभाववति वृक्षे निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वादुपाधेः साध्याव्याप-कत्वमिति वाच्यमि'[१]त्यग्रिमजागदीशीग्रन्थोक्तशङ्काया अपि नावकाश"इत्युपन्यासेन।

वृक्षनिष्ठकपिसंयोगीयविशेषाभावाधिकरणत्वस्य सर्वस्यैव वृक्षावयवविशेषरूपं मूलमवच्छेदकम्, तदेव च तादृशाधिकरणत्वसमानाधिकरणावच्छिन्नकपिसंयोगत्व-

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकनिखिलाभावाधिकरणत्वानामवच्छेदकम्, अतः एकावच्छिन्नत्वस्यैव सत्त्वादुभयाभावघटकस्य द्वितीयप्रतियोगिनः एकानवच्छिन्नत्वस्यासत्त्वेनोभयाभाववत्ता सञ्जाघटीतीत्याशयात्, मूले कस्यापि कपिसंयोगस्य सत्त्वविरहेण तस्य निखिलतादृशाधिकरणत्वावच्छेदकत्वम्।

गदाधरभट्टाचार्येण च उक्तोभयाभाववत्त्वमेव दर्शितोपाधिघटकमेकावच्छिन्नत्वं कपिसंयोगाभावात्मकसाध्यव्यापकत्वसम्पत्तये उक्तम्, एतावता उपाधिघटकस्य एकावच्छिन्नत्वस्य दर्शितोभयाभाववत्त्वरूपतास्वीकारे भट्टाचार्यसम्मततापि।

अत्र 'न चे'त्यादिना शङ्कते यद् एकावच्छिन्नत्वम् अवच्छिन्नत्वविशिष्टैकानवच्छिन्नत्वोभयाभावरूपविशिष्टाभावात्मकमुपेक्ष्य दर्शितोभयाभावात्मकं किमर्थमुक्तमिति। एतत्समाधानम् 'अनिर्वाहादि'त्यादि 'विशिष्टाभावप्रवेशे जातित्वरूपत्वादीनां यत्पदेनोपादाने विशिष्टाप्रसिद्ध्या साध्योपाध्योः सामान्यव्याप्त्यनिर्वाहः, यत्पदेन जातित्वोपादाने देशमात्रस्यैव प्रागुक्ततादृशावच्छेदकत्ववत्तया तदनवच्छिन्नत्वावच्छिन्नत्वयोर्विरुद्धत्वादिती'त्यन्तेन विज्ञापितं तत्त्वालोककृद्भिः।

अत्र विशिष्टाभावप्रवेशे साध्योपाध्योः सामान्यव्याप्तिनिर्वाहो न स्यादित्येव पूर्वोत्थापितशङ्कासमाधानाय मुख्यं वक्तव्यमस्ति किन्त्वेतन्मुख्यवक्तव्याङ्गतया प्रथमतोऽभिधातव्यं 'तथा ही'त्यादि 'तदुपपत्तये चैकावच्छिन्नत्वघटकाधिकरणत्वविशेषणावच्छिन्नत्वस्याव्याप्यवृत्त्यभावत्वावच्छिन्ननिरूपितत्वानवच्छिन्नत्वोभयाभावरूपस्यावच्छेदकत्वस्य च तद्घटकस्य स्वनिरूपितावच्छेदकत्वाभाववत्त्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपस्य वाच्यतये'त्यन्तमुपन्यस्तमस्ति।

प्रथमतोऽत्रेदमुच्यते यद् एकानवच्छिन्नत्वघटकस्य स्वसमानाधिकरणावच्छिन्नतादृशाभावाधिकरणताकूटावच्छेदकावच्छिन्नत्वरूपैकावच्छिन्नत्वघटकाधिकरणत्वविशेषणम् अवच्छिन्नत्वं (स्वसमानाधिकरणावच्छिन्नेत्येतद्घटकावच्छिन्नपदबोधितम्) अव्याप्यवृत्त्यभावत्वावच्छिन्ननिरूपितत्व,-अनवच्छिन्नत्वोभयाभावरूपम्, अवच्छेदकत्वञ्च तद्घटकम् (एकावच्छिन्नत्वघटकम् स्वसमानाधिकरणावच्छिन्नतादृशाभावाधिकरणताकूटावच्छेदकेत्येतद्घटकावच्छेदकपदबोधितम्) स्वनिरूपितावच्छेदकत्वाभाववत्त्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपमवश्यं विवक्षणीयं भवति।

विशिष्टाभावो वा उभयाभावो वा भवतु, तत्र यादृशयोर्विशेषणविशेष्ययोः विशिष्टप्रतियोगिप्रविष्टयोः अथवा द्वयोः प्रतियोगिनोः पर्यवसानेऽवस्थितिः, तादृशस्थितेः परिज्ञानाय (यादृशस्थितौ उभयाभावस्थाने विशिष्टाभावप्रवेशे दोषादोषौ विचारणीयौ

भवतः, तादृशस्थितेः स्पष्टीकरणाय) उपर्युक्त उपपादनोपक्रमः।

एकानवच्छिन्नत्वघटकैकावच्छिन्नत्वघटकाधिकरणत्वविशेषणावच्छिन्नत्वस्य यदि अव्याप्यवृत्त्यभावत्वावच्छिन्ननिरूपितत्व,-अनवच्छिन्नत्वोभयाभावरूपता न स्यात् तथा एकानवच्छिन्नत्वघटकैकावच्छिन्नत्वघटकावच्छेदकत्वस्य स्वनिरूपितावच्छेदकत्वाभाववत्त्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपता यदि न स्यात्तदा 'यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानि'त्येतत्सामान्यव्याप्त्यन्तर्गतजातियावद्विशेषाभाव-जातिसामान्याभावयोः व्याप्यव्यापकभावस्थले तथा रूपयावद्विशेषाभावरूपसामान्याभावयोर्व्याप्यव्यापक[भाव]स्थले च अवच्छिन्नत्वैकानवच्छिन्नत्वोभयाभाववत्त्वरूपैकावच्छिन्नत्वविशिष्टैतादृशविशेषाभावे, अर्थात् जातित्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावज्जातिविशेषाभावे तथा रूपत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावद्रूपविशेषाभावे, क्रमशः जातिसामान्याभावरूपसामान्याभावात्मकसाध्यव्यापकत्वसम्भवो न स्यात्, जातिविशेषाभावाधिकरणत्वमात्रस्य एवं रूपविशेषाभावाधिकरणत्वमात्रस्य व्याप्यवृत्तितया स्वसमानाधिकरणावच्छिन्नतादृशा[भावा]धिकरणत्वस्य तादृश(स्वसमानाधिकरणावच्छिन्न)जातित्वरूपत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधिकरणताकूटावच्छेदकत्वस्य चाऽप्रसिद्धया एकावच्छिन्नत्वस्याप्रसिद्धौ तद्घटितस्य = एकावच्छिन्नत्वघटितस्य, अवच्छिन्नत्वैकानवच्छिन्नत्वोभयाभावस्याप्रसिद्धेः। तस्मादवच्छिन्नत्वैकानवच्छिन्नत्वोभयाभावप्रतियोगिभूतैकानवच्छिन्नत्वघटकैकावच्छिन्नत्वघटकावच्छिन्नत्वावच्छेदकत्वे दर्शितरूपके आवश्यके इति कथनाशयः।

तथास्थितौ अवच्छिन्नत्वविशिष्ट = दर्शितस्वरूपकस्वघटकावच्छिन्नत्वावच्छेदकत्वघटितैकावच्छिन्नत्वघटितैकानवच्छिन्नत्वाभावरूपस्य विशिष्टाभावस्य दर्शितोपाधौ एकावच्छिन्नपदार्थतया प्रवेशे साध्योपाध्योः सामान्यव्याप्तिनिर्वाहो न स्यात्, तत्र साध्योपाध्योः सामान्यव्याप्त्यनिर्वाहे कारणं स्पष्टयति– 'यत्पदेन जातित्वोपादाने देशमात्रस्यैव तादृशावच्छेदकत्ववत्तया तदनवच्छिन्नत्वावच्छिन्नत्वयोर्विरुद्धत्वादि'ति। यत्पदेन जातित्वोपादाने जातित्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकजातिविशेषाभावाधिकरणतामात्रस्यैव व्याप्यवृत्तितया देशमात्रस्यैव प्रागुक्ततादृशावच्छेदकत्व = स्वनिरूपितावच्छेदकत्वाभाववत्त्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपावच्छेदक[त्व],-वत्तया तदनवच्छिन्नत्वा (एकावच्छिन्नत्वाभावरूपैकानवच्छिन्नत्वा)-वच्छिन्नत्वयोर्विरुद्धत्वादिति यथाश्रुतमूलपङ्क्त्यर्थात्।

परन्तु तत्र अव्याप्यवृत्त्यभावत्वावच्छिन्ननिरूपितत्वविरहेण अनवच्छिन्नत्वस्य सत्त्वेऽपि अव्याप्यवृत्त्यभावत्वावच्छिन्ननिरूपितत्वानवच्छिन्नत्वोभयाभावरूपस्य एकावच्छिन्नत्वघटकाधिकरणत्वविशेषणावच्छिन्नत्वस्य सत्त्वेऽपि तद्घटकस्यावच्छेदकत्वस्य स्वनिरूपिता- वच्छेदकत्वाभाववत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वरूपस्य प्रागुक्तस्य देशमात्रे कथं सत्त्वम्? तत्र देशमात्रे स्वनिरूपितावच्छेदकत्वाभाववत्त्वसम्बन्धस्यैव तादृशसम्बन्धेन स्वस्यैव च सत्त्वेन तादृशसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्ता कथं स्यादिति सूक्ष्मदृष्ट्याध्येयमथवाशयान्तरम्वात्र तत्त्वालोककृतामिति नेदानीमवधारयामि।

अथवा स्वनिरूपितावच्छेदकत्वमेव तत्र सम्बन्धः, अभावपदमधिकम्, किन्तु तदनवच्छिन्नत्वावच्छिन्नत्वयोर्विरुद्धत्वादिति पर्यवसितोक्तेः नास्ति सन्देहास्पदत्वम्। विरुद्धयोर्द्वयोरेकविशिष्टापररूपत्वासम्भवाद् विशिष्टाभावप्रवेशे साध्योपाध्योः सामान्यव्याप्तिनिर्वाहासम्भवाद् विशिष्टाभावमनिवेश्योभयाभाव एव प्रवेशित इति कथनस्य सारांशः।

अनन्तरं 'यद्वो'पक्रमेणेदमुच्यते यद् एकावच्छेदेन यदीययावद्विशेषाभाववत्त्वमुपाधिरित्यस्य लघुभूते एकावच्छिन्नत्वविशेषिते यदीययावद्विशेषाभावत्वावच्छिन्ननिरूपिते एकस्मिन्नधिकरणत्वे उपाधित्वबोधने एव तात्पर्य्यम्।

तत्र विशेषणीभूतमेकावच्छिन्नत्वम् अवच्छिन्नत्वैकानवच्छिन्नत्वोभयाभाववत्त्वरूपमेव एकानवच्छिन्नत्वघटकमेकावच्छिन्नत्वञ्च एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वम्।

एवञ्च = एकानवच्छिन्नत्वघटकैकावच्छिन्नत्वस्य एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वरूपत्वे च, अव्याप्यवृत्त्यभावसाधारणकूटत्वेन (यत्कूटत्वं व्याप्यवृत्त्यभावे अव्याप्यवृत्त्यभावे उभयत्रैव तिष्ठति तादृशकूटत्वेन) व्याप्यवृत्त्यधिकरणत्वमपि अव्याप्यवृत्त्येव (एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वरूपैकावच्छिन्नत्वविरहात्) इति संयोगीययावद्विशेषाभावाधिकरणत्वेऽवच्छिन्नत्वस्य एकानवच्छिन्नत्वस्य सत्त्वेन साधनाव्यापकत्वम्, तत्र = संयोगीययावद्विशेषाभावाधिकरणत्वे एकावच्छिन्नत्वस्य कथं सत्त्वं? तदुच्यते– 'अनेकावच्छिन्नाभावकूटाधिकरणत्वस्य वृक्षावयवत्वेनैव देशावच्छिन्नतयैकानवच्छिन्नत्वस्य च सत्त्वेने'ति। मूलशाखादिरूपविभिन्नवृक्षावयवरूपानेकावच्छेदकावच्छिन्नो यस्तत्तत्संयोगविशेषाभावस्तत्कूटाधिकरणत्वस्य वृक्षावयवत्वेनैव देशावच्छिन्नतयेति तदर्थः।

वृक्षावयवत्वस्यैकमात्रवृत्तिधर्मत्वविरहेण न तदवच्छिन्नावच्छेदकताके एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वरूपैकावच्छिन्नत्वम्, अत एकानवच्छिन्नत्वस्य तत्र सत्त्वमित्याशयः।

अनन्तरमुच्यते कपिसंयोगीययावद्विशेषाभावाधिकरणत्वस्य तन्मूलावच्छेद्यतयोभयाभावत्वेन [तद्(वृक्ष)मूलावच्छेद्यतयोभयाभावसत्त्वेन] साध्यव्यापकत्वमपि सम्भवति।

अत्र = यद्वोक्तप्रकारे यत्र एकानवच्छिन्नत्वघटकैकावच्छिन्नत्वमेकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वरूपमुक्तं तत्र, विशिष्टाभावनिवेशे (उभयाभावस्थाने विशिष्टाभावनिवेशे) न क्षतिः (साध्योपाध्योः सामान्यव्याप्त्यनिर्वाहो न), अवच्छिन्नत्व– उक्तस्वरूपैकावच्छिन्नत्वाभावरूपैकानवच्छिन्नत्वयोः पूर्वोक्तप्रकार इव इह विरुद्धत्वविरहेण समानाधिकरणयोस्तयोरुभयत्वस्य एकविशिष्टापरत्वरूपत्वसम्भवात्।

विशिष्टाभावनिवेशे क्षतिविरहे गदाधरभट्टाचार्येण उपाधौ कपिसंयोगाभावरूपसाध्यव्यापकत्वसम्पत्तये यद्वोक्तकल्पे उभयाभावमुपेक्ष्य विशिष्टाभावः कथन्नोक्त इति पूर्वपक्षस्य नावकाशः, भट्टाचार्याणामुभयाभावोक्तेरत्र = यद्वाकल्पे, स्वातन्त्र्योणादर्शनात्।

प्रागुक्तोभयाभावघटकमेकावच्छिन्नत्वमेकप्रकारेण निरुच्य 'अथवे'त्यादिना प्रकारान्तरेण तस्यैव (एकावच्छिन्नत्वस्यैव) निर्वचने उभयाभावात्मकत्वमिति ग्रन्थलाघवानुरोधेनापि तथोक्ति(उभयाभावोक्ति)सम्भवेन वा उक्तपूर्वपक्षावकाशविरहादिति।

अर्थाद् भट्टाचार्याणामुभयाभावोक्तिर्न अपरथा एकावच्छिन्नत्वनिर्वचनवति कल्पे विशिष्टाभावप्रवेशे साध्योपाध्योः सामान्यव्याप्त्यनिर्वाहबुद्ध्या, किन्तु ग्रन्थलाघवानुरोधेनैव, प्रागुक्तोभयाभावघटकस्य एकावच्छिन्नत्वस्य प्रथममेकप्रकारेण निर्वचनं विधाय पश्चात्तस्यैवैकावच्छिन्नत्वस्य प्रकारान्तरेण (प्रथमत उक्तप्रकारातिरिक्तप्रकारेण) निर्वचने उभयाभावात्मकत्वमिति ग्रन्थे लाघवसम्भवादिति भावः।

'व्यापकत्वं दुर्घटमि'ति प्रतीकोपरि 'अथे'त्यादि 'इति चेदि'त्यन्तेनोत्थापितपूर्वपक्षस्य समाधानायोपन्यस्यते 'उपाधिसाध्ययोः सामान्यव्याप्तिनिर्वाहस्याकिञ्चित्करतया निरवच्छिन्नत्वरूपैकावच्छिन्नत्वनिवेश एव लाघवमित्याशयेनाह एकावच्छेदेने- [त्यनेने]त्यादिना' इति।

तत्र 'उपाधिसाध्ययोः सामान्यव्याप्तिनिर्वाहस्याकिञ्चित्करतया' इत्युक्तिः 'अथे'त्यादिना दर्शितोभयाभावात्मकैकावच्छिन्नत्वघटकैकानवच्छिन्नत्वघटकैका-वच्छिन्नत्वस्य प्रथमप्रकारकनिर्वचनपक्षे साध्योपाध्योः सामान्यव्याप्तिनिर्वाहाय उपपादितायाः उभयाभावस्थानिकविशिष्टाभावोपेक्षायाः खण्डनाय।

'अथे'त्यादिनोक्तं दीधित्युक्तोपाधिघटकमेकावच्छिन्नत्वमुभयाभावात्मकं विशिष्टाभावात्मकम्वा उभयथापि निरवच्छिन्नवृत्तित्वविशिष्टत्वापेक्षया गुरुभूतम्, अतस्तर्कालङ्कारेण तदुपेक्ष्य 'एकावच्छेदेनेत्यनेन निरवच्छिन्नत्ववृत्तिकत्वविशिष्टस्य विवक्षितत्वादि'त्युक्तमिति तदाशयात्। अथवोभयाभावात्मकं विशिष्टाभावात्मकम्वा एकानवच्छिन्नत्वं साध्योपाध्योः सामान्यव्याप्तिनिर्वाहायैव पूर्वपक्षितम्, तत् साध्यो-पाध्योः सामान्यव्याप्तिनिर्वाहस्याकिञ्चित्करत्वाद्गुरुत्वाच्चायुक्तम्, अतस्तर्कालङ्कारोक्त-मेवैकावच्छिन्नत्वं लघुभूतमादेयम्।

तादृशोक्तौ तर्कालङ्काराशयं स्पष्टयति 'अधिकरणतामात्रस्ये'त्यादिना। उपाधि-घटकं यावद्विशेषाभाववत्त्वं यावद्विशेषाभावाधिकरणत्वरूपमधिकरणत्वमात्रस्याधिकर-णवृत्त्यसाधारणधर्मावच्छिन्नतया, तत्रावच्छिन्नत्वराहित्यरूपनिरवच्छिन्नत्वासम्भवात्।

निरवच्छिन्नत्वेन देशकालात्मकावच्छेदकानवच्छिन्नत्वबोधने अधिकरणत्व-मात्रस्याधिकरणवृत्त्यसाधारणधर्मावच्छिन्नतया क्षत्यभावेऽपि एकधर्मावच्छिन्ननिरूपि-ताधिकरणत्वस्यैकत्वे गुणनिष्ठस्य द्रव्यादिनिष्ठस्य चाधिकरणत्वस्य (संयोगयावद्वि-शेषाभावाधिकरणत्वस्य) अवच्छिन्नत्वमेव स्यादनवच्छिन्नत्वमेव वा स्यादुभयन्तु न स्यादिति हेतोर्निरवच्छिन्नत्वं देशकालानवच्छिन्नत्वरूपं वृत्तित्वविशेषणतयोपात्तम्।

तथा च तादृशाधिकरणत्वे = संयोगयावद्विशेषाभावाधिकरणत्वे, गुणवृत्तित्व-मनवच्छिन्नम् = देशकालानवच्छिन्नम्, वृक्षादिवृत्तित्वञ्च सावच्छिन्नम् = वृक्षावयव-मूलशाखादिरूपदेशावच्छिन्नम्, अतो न दोषः = दर्शितोपाधौ साध्यव्यापकत्वसाधना-व्यापकत्वयोर्नानुपपत्तिरिति तदाशयः।[२११]

तत्त्वालोकः – ननूपाधेर्व्यभिचारोन्नायकतया व्याप्तिबुद्धावेव विरोधितया साध्यसाधनयोः प्रकृते सामान्यत एव व्याप्तेर्गृहीतत्वेन तत्र सामान्यत एव साध्योपाध्योर्व्याप्तिबुद्धेर्विरोधित्वम्वाच्यमन्यथा धूमाव्यापकमहानसीयतृणादे-र्महानसीयवह्निव्यापकताबुद्धेर्वह्नित्वेन धूमत्वेन व्याप्तिबुद्धौ विरोधित्वं स्यात्सामान्यतश्च साध्योपाध्योर्व्याप्तिर्न सम्भवति, कपिसंयोगसामान्याभाव-वति निरवच्छिन्नकपिसंयोगीयविशेषाभावकूटवत्त्वस्य व्यभिचारित्वादित्या-

शयेनाशङ्कते ''न च तथापी''त्यादिना[१], उक्तव्याप्तौ साध्यविधया प्रवेशादिति साध्यसाधनयोर्व्याप्तौ व्यभिचारवारणाय जात्यवच्छिन्नाभावप्रवेशस्योक्तत्वा-दित्यर्थः, तेन साध्यसाधनयोर्व्याप्तौ जातिप्रवेशस्य प्रागेव कृतत्वेनोक्ताशङ्काया न सन्दर्भविरोधः।

'एकावच्छेदेन तदीययावद्विशेषाभावस्योपाधित्वादि'ति[२]दीधितौ कपि-संयोगाभावमादायोपाधिव्याप्तिभङ्गाशङ्कायां जातिप्रवेशस्य स्मारितत्वात्। अत एवोपाधिसम्पत्त्यर्थं जात्यवच्छिन्नाभावप्रवेशो नोचित इत्याशङ्कापि निरस्ता, व्यभिचारवारणायैव तत्प्रवेशस्य प्रागुक्तत्वादिति।

जात्यवच्छिन्नाभावश्च संयोगघटोभयाभावादिकमादाय सिद्धसाधन-वारणाय जातीतरधर्मानवच्छिन्न[३]प्रतियोगिताकाभावरूपस्तज्जातिगतैकत्ववृत्ति-प्रतियोगिताकाभावपर्यवसायी नातः संयोगत्वरूपजातेः कपिसंयोगाभाव-प्रतियोगितावच्छेदकत्वेऽपि दोषतादवस्थ्यमिति भावः।[२१२]

*प्रकाशः* – 'एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्चे'ति दीधित्युपरि तर्कालङ्कारेण 'न च तथापि कपिसंयोगसामान्याभाववति वृक्षे निरवच्छिन्नवृत्तिकत्व-विशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वादुपाधेः साध्याव्यापकत्वमि'ति यच्छङ्कितम्, यच्च 'जात्यवच्छिन्नाभावस्यैवोक्तव्याप्तौ साध्यविधया प्रवेशात् कपिसंयोगाभावस्या-तथात्वेन तं प्रति तदीययावद्विशेषाभावस्योक्तरूपेणाव्यापकत्वेऽपि क्षत्यभावादि'त्यनेन समाहितम्[४], तयोराशयं स्पष्टयितुमुक्तस्तत्त्वालोकखण्डः।

तत्रोत्थापितशङ्काशयं प्रथमं स्पष्टयति यदुपाधेर्व्यभिचारोन्नायकतया व्याप्ति-बुद्धावेव विरोधिता यथा वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादतो वह्निर्न धूमव्याप्य इति। ततश्च प्रकृते तत्सामान्याभावात्मकसाध्यतदीययावद्विशेषा-भावात्मकसाधनयोः सामान्य एव, न तु संयोगसामान्याभावसंयोगीययावद्विशेषाभावौ विशिष्य। अतः साध्यसाधनयोः सामान्यतया व्याप्तिग्रहे सामान्यत एव साध्योपाध्यो-र्व्याप्तिबुद्धेर्विरोधिता, न तु विशिष्य साध्योपाध्योर्व्याप्तिबुद्धेर्विरोधिता, कपिसंयोग-सामान्याभावात्मकसाध्यवति वृक्षे निरवच्छिन्नकपिसंयोगीययावद्विशेषाभावस्यासत्त्वेन

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

२. तत्रैव, दीधितिमूलम्, पृ. ८

३. प्राचीनपुस्तके 'धर्मावच्छिन्ने'ति पाठः।

४. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. १०

साध्योपाध्योः सामान्यतो व्याप्तिर्न सम्भवतीति शङ्काशयः। अत्र साध्यसाधनयोः सामान्यतो व्याप्तिबुद्धौ साध्योपाध्योः सामान्यतो व्याप्तिबुद्धेरुक्ताया विरोधितायाः प्रमापकतया उपन्यस्तमन्यथा धूमाव्यापकमहानसीयतृणादेर्महानसीयवह्निव्यापकता-बुद्धेर्वह्नित्वेन धूमत्वेन व्याप्तिबुद्धौ विरोधित्वं स्यादिति।

अर्थात्साध्यसाधनयोः सामान्यव्याप्तिबुद्धिप्रतिबन्धिका यदि साधनाव्यापके साध्यसामान्यव्यापकत्वबुद्धिरेव न स्यात्, साध्यविशेषव्यापकत्वबुद्धिरपि साधना-व्यापकधर्मिका साध्यसाधनयोः सामान्यतो व्याप्तिबुद्धिं प्रतिबन्धीयात्तदा धूमाव्यापक-महानसीयतृणादिधर्मिकसाध्यविशेषमहानसीयवह्निव्यापकत्वबुद्धिर्वह्निधूमयोः सामान्य-व्याप्तिबुद्धिप्रतिबन्धिका स्यात्।

तस्माद्धूमाव्यापकमहानसीयतृणादेर्महानसीयवह्निव्यापकत्वेऽपि साध्य-सामान्यान्तर्गतपर्वतीयादिवह्निव्यापकत्वविरहान्न तत्र प्रतिबध्यप्रतिबन्धकत्वे तथैव साधनाव्यापके निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावे संयोगसामान्या-भावात्मकसाध्यविशेषव्यापकत्वसत्त्वेऽपि कपिसंयोगसामान्याभावात्मकसाध्यव्यापक-त्वविरहेण साध्यसाधनयोः सामान्यव्याप्तिबुद्धिप्रतिबन्धो न स्यादिति तदाशयात्।

अनन्तरं समाधानाशयं स्पष्टयितुमुपन्यस्यति 'साध्यसाधनयोर्व्याप्तौ व्यभिचार-वारणाय जात्यवच्छिन्नाभावप्रवेशस्योक्तत्वादित्यर्थः' इति, साध्यसाधनयोर्व्याप्तौ व्यभिचारवारणायोक्तस्य जात्यवच्छिन्नाभावप्रवेशस्येह "एकावच्छेदेन तदीययावद्वि-शेषाभावस्योपाधित्वादि'ति दीधितौ कपिसंयोगाभावमादायोपाधिव्याप्तिभङ्गाशङ्कायां जातिप्रवेशस्य स्मारितत्वादि"ति च।

कम्बुग्रीवादिमत्त्वादिकगुरुधर्ममादाय प्राप्तव्यभिचारवारणाय [साध्य]साधनयो-र्व्याप्तौ जातिप्रवेश उक्तः, अर्थाद् जातीतरधर्मानवच्छिन्नप्रतियोगिताकाभावरूपः स्वा(प्रतियोगिताऽ)वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन तज्जातिगतैकत्ववृत्तिप्रतियोगिताकाभावपर्यवशायी जात्यवच्छिन्नाभावः साध्यसाधनयोर्व्याप्तौ साध्यतयोक्तः। तस्येह स्मारणम् कपिसंयोगाभावमादाय उपाधौ = एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वोपाधौ, जातायाः साध्याव्यापकत्वेन व्याप्ति-भङ्गाशङ्काया विनिवृत्त्यर्थं कृतम्। कपिसंयोगाभावस्य कपिप्रतियोगिकत्वसंयोगत्वो-भयावच्छिन्नप्रतियोगिताकाभावत्वेन जातीतरधर्मानवच्छिन्नप्रतियोगिताकाभावत्व-विरहादुक्तस्मारितसाध्यान्तर्गतत्वविरहेण तदादायोपाधिभङ्गाशङ्कायाः कर्तुमशक्यत्वा-दिति समाधानाशयात्।

जातीतरधर्मानवच्छिन्नाभावप्रवेशस्य व्यभिचारवारणाय साध्यसाधनयोर्व्याप्तौ पूर्वोक्तस्यैव स्मारितत्वव्याख्यया साध्यसाधनयोर्व्याप्तौ जातिप्रवेशस्य प्रागेव कृतत्वेन उक्ताशङ्काया = उपाधिभङ्गाशङ्कायाः, न सन्दर्भविरुद्धता, पूर्वमुक्तस्य स्मरणाभावप्रयुक्तत्वादुपाधिभङ्गाशङ्कायाः पूर्वोक्तस्य स्मारणेन तच्छङ्काविनिवर्तनात्। उपाधिसम्पत्त्यर्थं जात्यवच्छिन्नाभावप्रवेशानौचित्यशङ्काया अपि व्यभिचारवारकतयैव पूर्वोक्तस्य जात्यवच्छिन्नाभावप्रवेशस्य स्मारितत्वव्याख्यया निवर्तनाद् वृक्षे संयोगघटोभयाभावादेः सिद्धतया तादृशाभावादेरपि संयोगत्वादिजात्यवच्छिन्नाभावत्वेन तादृशाभावमादाय प्राप्तसिद्धसाधनदोषविनिवारणाय जातीतरधर्मानवच्छिन्नप्रतियोगिताकाभावतात्पर्येणैव जात्यवच्छिन्नाभावप्रवेशस्य साध्यसाधनयोर्व्याप्तौ पूर्वोक्तता, तस्यैवेह स्मारितत्वेन कपिसंयोगाभावस्य संयोगत्वजात्यवच्छिन्नप्रतियोगिताकत्वादुपाधिभङ्गाशङ्का तादवस्थ्याशङ्काया व्युदासादित्युक्तखण्डस्य प्रकाशः।[२१२]

तत्त्वालोकः – ''गुणविभाजकजातेरेवे''ति।[१] अयमभिप्रायः यत्त्वतत्त्वघटितसामान्यव्याप्तौ तदेकविशेषसाध्यव्यापकत्वतादृशसाधनाव्यापकत्वयोरेकत्र ग्रहोऽपि विरोध्यनुभवात्, गुणविभाजकयज्जात्यवच्छिन्नाभावश्च यज्जात्यवच्छिन्नाभावत्वेन साध्यविशेषः, गुणविभाजकतज्जातिसमानाधिकरणो[२]भयावृत्तिधर्मावच्छिन्नाभावकूटोऽपि च साधनविशेषः, यत्त्वतत्त्वघटितस्थलवद्वह्निधूमादिस्थले महानसीयवह्न्यादेर्व्यापकत्वाप्रतिभासनान्न दोषः। एतेन साध्यसाधनव्याप्तौ जात्यवच्छिन्नाभावप्रवेशवद्गुणविभाजकजात्यवच्छिन्नाभावप्रवेशप्रयोजनविरहादुपाधिसम्पत्त्यर्थन्तत्प्रवेशश्चानुचित इति निरस्तम्।

निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगीययावद्विशेषाभावस्याप्युपाधित्वं यद्यपि सम्भवति, तथापि सामान्यव्याप्त्यनुरोधेन सामान्य एवोपाधिरुक्तः, विशेषव्याप्तौ च विशेषोपाधिरग्रे वक्ष्यत एवेति। गुणविभाजकजातित्वञ्च गुणत्वव्याप्यत्वे सति गुणत्वव्याप्याव्याप्यजातित्वं, तदपि गुणत्वसमानाधिकरणभेदप्रतियोगितावच्छेदंकजातिमदन्यजातित्वम्, जातिमत्ता च स्वसामानाधिकरण्य,-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनेति।

वस्तुतस्तु गुणविभागसूत्रजन्यबोधीयोद्देश्यतावच्छेदकत्वमेव गुणविभाजकत्वं बोध्यम्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. 'सामानाधिकरण्यो' इति मुद्रितपुस्तके पाठः।

अस्तु सामान्यव्याप्तौ सामान्यस्यैवोपाधेः प्रदर्शनीयत्वन्तथापि न क्षतिरित्याशयेनाह''यत्त्वि''ति।[१] तथा च परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावस्योपाधेः तत्सामान्याभावव्यापकत्वं सामान्यत एव सम्भवति, कपिसंयोगसामान्याभाववत्यभिघातसामान्याभाववति च वृक्षे मूलस्यान्तर्देशस्य च तदीयविशेषाभावमात्रावच्छेदकत्वेन परस्परानवच्छेदकत्वविरहेण परस्परानवच्छेदकतत्तच्छाखाद्यनवच्छिन्नमूलान्तर्देशाद्यवच्छिन्नवृत्तित्वविशिष्टतत्तदीययावद्विशेषाभावयोस्सत्त्वात्। साधनव्यापकत्वन्तु न सम्भवति, संयोगीययावद्विशेषाभाववति वृक्षे तादृशवृत्तित्वविशिष्टस्य तस्यासत्त्वाद् देशमात्रस्यैव तत्र परस्परानवच्छेदकतया तदनवच्छिन्नत्वस्य निरवच्छिन्नवृत्तित्व एव सत्त्वादिति भावः।

न च परस्परत्वप्रवेशादननुगमः, तदीयविशेषाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिकूटत्वविशिष्टाधिकरणत्वस्योपाधित्वेन विवक्षणात्, वैशिष्ट्यञ्च स्वावच्छिन्ननिरूपितत्व,-स्वविशिष्टानवच्छिन्नत्वोभयसम्बन्धेन, स्ववैशिष्ट्यञ्च स्वाश्रययत्किञ्चिदभावाधिकरणतानवच्छेदकत्वसम्बन्धेन।

अथवा तादृशाभावत्वविशिष्टाधिकरणताकूटवत्त्वमेवोपाधिः, वैशिष्ट्यञ्च प्रागुक्तोभयसम्बन्धेनेति यत्किञ्चित्त्वप्रवेशात्संयोगविशेषाभावत्वाश्रयाभावाधिकरणतानवच्छेदकदेशाप्रसिद्ध्यादिप्रयुक्तोपाध्यसम्भवानवकाशः।

अत्र परस्परावच्छेदकं यद्यत्तदनवच्छिन्नत्वन्तु न प्रवेश्यम्, तस्य निरवच्छिन्नत्व एव पर्य्यवसानेन पूर्वकल्पाविशेषादिति।

वृत्त्यनियामकस्य प्रतियोगितावच्छेदकत्वपक्षेऽवच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यतासम्बन्धेनाभाववत्त्वमेकावच्छिन्नत्वं व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणताया अपि सङ्ग्राहकं भविष्यतीत्याशयेन ''चिन्त्यमि''त्युक्तम्।[२]

बहुषु पुस्तकेषु तादृशार्थप्रतिपादकः केचित्त्वित्यादिग्रन्थ एवोपलभ्यते। अत्रावच्छेद्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिवेशनञ्च सामान्याभावनिवेशपक्षे लाघवानुरोधेनैवावच्छेद्यत्वस्य प्रतियोगित्वे तत्र स्वरूपसम्बन्धा-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. तदेव, पृ. ११

वच्छिन्नत्वस्य प्रवेश्यत्वात्, अवच्छेदकत्वसम्बन्धावच्छिन्नाभाववद्यद्यत्तन्निष्ठावच्छेदकत्वानिरूपितत्वाभावनिवेशे च गगनादीनामपि यत्पदार्थतया तन्निष्ठाव्याप्यवृत्तितानियामकावच्छेदकत्वाप्रसिद्ध्योक्ताभावाप्रसिद्धिः स्यादिति तन्निवेशः।

वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तत्सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभाव एव प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको निवेश्य इति बोध्यम्।

"तदनवच्छेदकस्ये"ति।[1] न च व्याप्यवृत्तिरूपाद्यभावाधिकरणताया अप्यवच्छेदकत्वस्य संसर्गधर्मविशेषादौ प्रसिद्धिसम्भवात्तत्साधारणावच्छेदकत्वोपादाने क्षत्यभावान्न दोष इति वाच्यम्, धर्मसंसर्गादिनिष्ठावच्छेदकत्वाव्याप्यवृत्तितानियामकावच्छेदकत्वादिसाधारणावच्छेदकतात्वस्यैकस्याभावादिति।

यद्यवच्छेदकतात्वद्वयमन्यतरत्वेन निवेश्य स्वनिरूपितान्यतरवदभाववत्त्वमेवानवच्छेदकत्वं विवक्षितन्तदा न कोऽपि दोष इति तु विभाव्यम्।[२१३]

*प्रकाशः* – 'न चाभिघातादिसामान्याभावस्य वृक्षे सत्त्वात् तत्र निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावस्यासत्त्वादुपाधेः साध्याव्यापकत्वमिति वाच्यम्, गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशादि'ति[2] पूर्वपक्षतत्समाधानपरा या जागदीशी, तद्घटकः समाधानपरो भागः 'गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशादि'ति। तदाशयम् 'अयमभिप्रायः' इत्यादिना तथा स्पष्टयति यथा पूर्वापरसन्दर्भशुद्धिः स्यात्।

तत्र पूर्वखण्डेऽवतरणरूपेण साध्यसाधनयोस्सामान्यव्याप्तिबुद्धौ सामान्यत एव साध्योपाध्योर्व्याप्तिबुद्धेर्विरोधित्वं यदुक्तमासीत्तदुत्तरमत्र प्रदीयते— यत्त्वतत्त्वघटितसामान्यव्याप्तौ तदेकविशेष(सामान्यैकदेशविशेष)साध्यव्यापकत्वतादृश(सामान्यैकदेशविशेष)साधनाव्यापकत्वयोरेकत्र ग्रहोऽपि विरोधी, कथमिति जिज्ञासाया विनिवृत्तयेऽत्र कारणं दर्शयति 'अनुभवादि'ति, अनुभवबलादिति तदर्थः। एतावता साध्यसाधनयोः यत्त्वतत्त्वघटितसामान्यव्याप्तिबुद्धौ यथा साध्योपाध्योः सामान्यव्याप्तिबुद्धेर्विरोधिता तथा अनुभवबलात्तदेकविशेषसाध्यव्यापकत्वतादृशसाधनाव्यापकत्वयोरेकत्र

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. तदेव, पृ. ११

ग्रहस्यापि विरोधिता, तेन अभिघातसामान्याभाववति निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वेन विरोधिन्याः साध्योपाध्योः सामान्यव्याप्तिबुद्धेरभावेऽपि यज्जात्यवच्छिन्नाभावत्वेन साध्यविशेष-गुणविभाजकयज्जात्यवच्छिन्नाभाव-संयोगत्व-रूपयज्जात्यवच्छिन्नाभावात्मकसाध्यविशेषव्यापकत्वगुणविभाजकतज्जाति(संयोगत्व-जाति)समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटात्मकसाधन-विशेषाव्यापकत्वयोरेकत्र = निरवच्छिन्नवृत्तिकत्वविशिष्टे तदीययावद्विशेषाभाववत्त्वे, ग्रहस्य विरोधिनः सत्त्वात् साध्यसाधनयोः सामान्यव्याप्तिबुद्धेरुत्पादासम्भवादिति तदाशयः।

पूर्वम् 'अन्यथा = साध्यसाधनयोः सामान्यव्याप्तिबुद्धौ सामान्यत एव साध्योपाध्योः व्याप्तिबुद्धेर्विरोधित्वविरहे, धूमाव्यापकमहानसीयतृणादेर्महानसीयवह्निव्यापकताबुद्धेर्वह्नित्वेन धूमत्वेन व्याप्तिबुद्धौ विरोधित्वं स्यादि'ति यदुक्तमासीत्तदुत्तरं 'यत्त्व-तत्त्वघटितस्थलवद्वह्निधूमादिस्थले महानसीयवह्न्यादेर्व्यापकत्वाप्रतिभासनान्न दोष' इत्यनेन प्रदत्तम्, अर्थात् सामान्यत एव साध्योपाध्योर्व्याप्तिबुद्धेरेव सामान्यतः साध्यसाधनयोर्व्याप्तिबुद्धौ = यत्त्वतत्त्वघटितदर्शितव्याप्तिबुद्धौ, विरोधित्वविरहेऽपि 'अन्यथे'त्यादिना दर्शितो दोषो न स्यात्, वह्निधूमादिस्थले धूमाव्यापकमहानसीय-तृणादेर्महानसीयवह्निव्यापकत्वप्रतिभानविरहेण यत्त्वतत्त्वघटितस्थलसाम्यस्य तत्र विरहादिति तदाशयः।

एतेन = यज्जात्यवच्छिन्नाभावत्वेनैव रूपेण गुणविभाजकजात्यवच्छिन्नाभावस्य साध्यविशेषत्वेन, 'साध्यसाधनव्याप्तौ व्यभिचारवारणाय जात्यवच्छिन्नाभावप्रवेशवद् गुणविभाजकजात्यवच्छिन्नाभावप्रवेशप्रयोजनविरहादुपाधिसम्पत्त्यर्थं तत्प्रवेशश्चा-नुचित' इत्याक्षेपो निरस्तः, यज्जात्यवच्छिन्नाभावत्वरूपेणैव तस्य तत्र प्रविष्टतया गुणविभाजकजात्यवच्छिन्नाभावत्वेन तस्य तत्र प्रवेशविरहादाक्षेपनिरासादिति तदाशयात्।

अनन्तरमुच्यते यन्निरवच्छिन्नवृत्तिकत्वविशिष्टयावद्विशेषाभावस्यैवोपाधित्वं कथमुक्तम्? निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगीययावद्विशेषाभावस्याप्युपाधित्व-सम्भवादित्याशङ्कितुन्न शक्यम्, सामान्यव्याप्त्यनुरोधेन सामान्योपाध्युक्तेरेवोचितत्वा-द्विशेषव्याप्तौ विशेषोपाधेः 'निर्गुणत्वादेरुपाधित्वाच्चे'त्यनेनाग्रे[1] वक्ष्यमाणत्वादिति।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

अनन्तरं गुणविभाजकजातिं 'गुणविभाजकजातित्वञ्चे'त्यादिना लक्षयति— 'गुणत्वव्याप्यत्वे सति गुणत्वव्याप्याव्याप्यजातित्वं' तल्लक्षणम्। रूपत्वजातौ गुणत्व-व्याप्यत्वस्य गुणत्वव्याप्यनीलत्वाद्यव्याप्यत्वाच्च लक्षणसङ्गतिः।

गुणत्वाव्याप्यनीलत्वाद्यव्याप्यसत्ताजातावतिव्याप्तिवारणाय सन्त्यन्तं 'गुणत्व-व्याप्यत्वे सती'ति। गुणत्वव्याप्यनीलत्वपीतत्वादावतिव्याप्तिवारणाय 'गुणत्वव्याप्या-व्याप्यत्वमि'ति द्वितीयदलम्।

गुणत्वव्याप्यत्वे सति गुणत्वव्याप्याव्याप्यजातित्वम् गुणत्वसमानाधिकरणभेद-प्रतियोगितावच्छेदकजातिमदन्यजातित्वरूपम्, तत्र जातिमत्ता स्वसामानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धाभ्याम्।

गुणत्ववति रसे रूपभेदसत्त्वेन तादृशभेदप्रतियोगितावच्छेदिका जाती रूपत्वा-त्मिका, उक्तोभयसम्बन्धेन रूपत्वजातिमत्ता नीलत्वादिजातौ, तदन्यत्वस्य रूपत्वे सत्त्वात्सङ्गतिः।

वस्तुतस्तु 'रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा'[१] इति गुणविभाजकसूत्रजन्य-बोधीयोद्देश्यतावच्छेदकत्वमेव गुणविभाजकत्वं बोध्यम्। तत्सूत्रजबोधीयोद्देश्यता-वच्छेदकत्वस्यापि नीलत्वमधुरत्वसुरभित्वाभिघातत्वादौ विरहाद्गुणविभाजकत्वविरहः।

अनन्तरम् 'एकावच्छेदेने'त्यस्य परस्परानवच्छेदकानवच्छेद्यवृत्तिकत्वविशिष्टे-त्यर्थपरं 'यत्तु' मतमवतरणपूर्वकं व्याख्यातुमुपन्यस्यति 'अस्तु सामान्यव्याप्तौ सामांन्यस्यैवोपाधेर्दर्शनीयत्वम्' अर्थाद् यत्त्वतत्त्वघटितसामान्यव्याप्तौ अनुभवबला-द्दर्शितस्य एकत्र तदेक(सामान्यैक)विशेषसाध्यव्यापकत्व,-तादृशसाधनाव्यापकत्व-योर्ग्रहस्य विरोधित्वस्यास्वीकारपक्षेऽपि, तथापि न क्षतिर्यतो हि 'एकावच्छेदेने'त्यस्य मम (यत्तु)मते न निरवच्छिन्नवृत्तिकत्वविशिष्टमर्थो येन साध्यसामान्यान्तर्गतकपि-संयोगसामान्याभाववत्यभिघातसामान्याभाववति च वृक्षे निरवच्छिन्नवृत्तिकत्व-विशिष्टतदीययावद्विशेषाभावविरहेण सामान्योपाधेर्विरहात्सामान्योपाधिप्रदर्शनासङ्गतिः स्यात्, किन्तु परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टत्वमेवैकावच्छिन्नत्वम्। एतादृशैकावच्छिन्नत्वविशिष्टकपिसंयोगीययावद्विशेषाभावाभिघातीययावद्विशेषाभावयोः कपिसंयोगसामान्याभाववति अभिघातसामान्याभाववति च वृक्षे सत्त्वेन साध्य-सामान्यव्यापकत्वस्य तत्रोपपत्तिः।

---

१. वैशेषिकसूत्रम्, १.१.६

उपपाद्यते च सा उपपत्तिः— 'तथा च परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावस्योपाधेः तत्सामान्याभावव्यापकत्वं सामान्यत एव सम्भवति, कपिसंयोगसामान्याभाववत्यभिघातसामान्याभाववति च वृक्षे मूलस्यान्तर्देशस्य च तदीयविशेषाभावमात्रावच्छेदकत्वेन (मूलावच्छेदेन अन्तर्देशावच्छेदेन च कस्यापि कपिसंयोगविशेषस्याभिघातविशेषस्य चासत्त्वेन सर्वस्यैव कपिसंयोगविशेषाभावस्य सर्वस्यैव चाभिघातविशेषाभावस्य मूलावच्छेदेन अन्तर्देशावच्छेदेन च सत्त्वादित्याशयात्) परस्परानवच्छेदकत्वविरहेण = मूलान्तर्देशयोः परस्परानवच्छेदकत्वविरहेण,[1] परस्परानवच्छेदकतत्तच्छाखा[2]-द्यनवच्छिन्नमूलान्तर्देशाद्यवच्छिन्नवृत्तिकत्वविशिष्टतत्तदीययावद्विशेषाभावयोः (कपिसंयोगीययावद्विशेषाभावाभिघातीययावद्विशेषाभावयोः) सत्त्वादि'त्यन्तेनोपाधौ साध्यव्यापकत्वोपपादनम्। तत्रोपाधौ साधनाव्यापकत्वं 'साधनव्यापकत्वन्तु न सम्भवति संयोगीययावद्विशेषाभाववति वृक्षे तादृशवृत्तिकत्वविशिष्ट(परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्ट)स्य तस्य-(संयोगीययावद्विशेषाभावस्य)असत्त्वाद् देशमात्रस्यैव तत्र परस्परानवच्छेदकतया तदनवच्छिन्नत्वस्य निरवच्छिन्नवृत्तित्व एव सत्त्वादिति (साधनाव्यापकत्वोपपादनं) तत्त्वालोककृतः।

वृक्षे संयोगीययावद्विशेषाभावात्मकसाधनवति देशमात्रस्यैव मूलान्तर्देशतत्तच्छाखादिवृक्षावयवदेशमात्रस्यैव सर्वस्यैव संयोगीयविशेषाभावस्य परस्परानवच्छेदकत्वात् (कपिसंयोगीयविशेषाभावमात्रस्य तथाऽभिघातीयविशेषाभावमात्रस्य च इव मूलान्तर्देशयोः संयोगीयविशेषाभावमात्रस्यावच्छेदकत्वविरहाद् अभिघातीयविशेषाभावमात्रस्यावच्छेदकत्वविरहाद् निरवच्छिन्नवृत्तित्व एव परस्परानवच्छेदकानवच्छिन्नत्वस्य सत्त्वेन वृक्षे संयोगीयविशेषाभावमात्रे निरवच्छिन्नवृत्तित्वविरहादिति तदाशयात्।

अनन्तरं परस्परत्वप्रवेशप्राप्ताननुगमदोषं परस्पराघटिततदर्थगर्भतदीयविशेषाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वविशिष्टाधिकरणत्वस्योपाधित्वप्रदर्शनेन निवारयति। तत्राधिकरणत्वे कूटत्ववैशिष्ट्यं— स्वावच्छिन्न(कूटत्वावच्छिन्नाभाव)निरूपितत्व,-स्वविशिष्टा(कूटत्वविशिष्टा)नवच्छिन्नत्वोभयसम्बन्धेन।

---

१. मूलवृत्तिविशेषाभावो यद्यन्तर्देशे न तिष्ठेदन्तर्देशवृत्तिविशेषाभावश्च यदि मूले न तिष्ठेत् तदैव मूलान्तर्देशयोस्तत्र परस्परानवच्छेदकत्वं भवेत्, तथा नास्ति, अतस्तयोस्तत्र न परस्परानवच्छेदकत्वमित्याशयः।

२. तच्छाखावर्तिनः कपिसंयोगविशेषाभावस्याभिघातविशेषाभावस्य तदितरशाखाऽनवच्छेदिका भवति एवं तच्छाखापि तदितरशाखावृत्तेर्विशेषाभावस्यानवच्छेदिका भवति।

तत्र स्व(कूटत्व)वैशिष्ट्यं— स्वाश्रय(कूटत्वाश्रय)यत्किञ्चिदभावाधिकरणतानवच्छेदकत्वसम्बन्धेन। कपिसंयोगसामान्याभाववत्यभिघातसामान्याभाववति च वृक्षे कपिसंयोगीयविशेषाभावत्वावच्छिन्ना अथवा अभिघातीयविशेषाभावत्वावच्छिन्ना याऽनुयोगिता, तादृशानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वं कपिसंयोगीयविशेषाभावकूटगतं कूटत्वमथवा अभिघातीयविशेषाभावकूटगतं कूटत्वं स्वावच्छिन्ननिरूपितत्व,-स्वविशिष्टानवच्छिन्नत्वोभयसम्बन्धेन, तादृशकूटत्वविशिष्टता तत्तच्छाखाद्यनवच्छिन्नमूलान्तर्देशावच्छिन्नवृत्तिकत्वविशिष्टकपिसंयोगीययावद्विशेषाभावाधिकरणत्वे अथवा अभिघातीययावद्विशेषाभावाधिकरणत्वे उपपद्यते।

तत्र स्वविशिष्टानवच्छिन्नत्वरूपद्वितीयसम्बन्धस्य सद्भावस्तत्तच्छाखां परिगृह्य, तत्तच्छाखायाः स्वाश्रययत्किञ्चिदभावाधिकरणतानवच्छेदकत्वसम्बन्धेन स्वविशिष्टत्वात्तदनवच्छिन्नत्वस्य मूलान्तर्देशावच्छिन्नवृत्तिकत्वविशिष्टकपिसंयोगीययावद्विशेषाभावाधिकरणत्वे अभिघातीयविशेषाभावाधिकरणत्वे च वर्तते। एतावता दर्शितेऽधिकरणत्वरूपोपाधौ कपिसंयोगसामान्याभावाभिघातसामान्याभावात्मकसाध्यव्यापकत्वोपपत्तिरुक्ता। तत्र साधनाव्यापकत्वोपपत्तिश्च संयोगीययावद्विशेषाभाववति वृक्षे देशमात्रस्यैव तत्र परस्परानवच्छेदकत्वेन तदनवच्छिन्नत्वस्य तादृशकूटत्वविशिष्टाधिकरणत्वे विरहाद्बोध्या।

लाघवाद् 'अथवे'त्यादिना कल्पान्तरं दर्शयति— अथवा तादृशाभावत्वविशिष्टतदीयविशेषाभावत्वविशिष्टाधिकरणताकूटवत्त्वमेव तदभिप्रेत उपाधिः। वैशिष्ट्यमत्रापिस्वावच्छिन्न(तादृशाभावत्वावच्छिन्न)निरूपितत्व,-स्वविशिष्टानवच्छिन्नत्वोभयसम्बन्धेन, पूर्ववदेव उभयसम्बन्धघटकद्वितीयसम्बन्धघटकवैशिष्ट्यनियामकस्वाश्रययत्किञ्चिदभावाधिकरणतानवच्छेदकत्वसम्बन्धे यत्किञ्चित्त्वप्रवेशात् संयोगविशेषाभावत्वाश्रयाभावाधिकरणतानवच्छेदकदेशाप्रसिद्ध्या उपाधेरसम्भवो न। तत्र यदि यत्किञ्चित्त्वप्रवेशो न स्यात्तदा संयोगीयविशेषाभावत्वस्य सर्वत्रैव संयोगीयविशेषाभावे सत्त्वेन तदधिकरणतायाः सर्वत्रैव देशे सत्त्वेन तदधिकरणतानवच्छेदको देशो नैव प्रसिद्ध्येत्। स्वाश्रययत्किञ्चिदभावोक्तौ तु नाप्रसिद्धिः, तादृशाभावत्वाश्रयाभावाधिकरणतानवच्छेदकदेशस्याप्रसिद्धावपि तादृशाभावत्वाश्रययत्किञ्चिदभावाधिकरणतानवच्छेदकदेशस्य प्रसिद्धत्वात्। तच्छाखात्मकदेशावच्छिन्नसंयोगविशेषाभावविशेषाधिकरणतानवच्छेदकदेशस्य शाखान्तरस्य प्रसिद्धत्वादित्याशयात्।

परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टत्वरूपं नञ्द्वयघटितमर्थमनुपादाय लाघवान्नञ्द्वयाघटितं परस्परावच्छेदकं यद्यत्तदनच्छिन्नत्वरूपं लघुभूतमर्थं कुतो

नोक्तवानिति नात्र शङ्कितुं शक्यम्, तस्य लघुभूतस्य निरवच्छिन्नत्व एव पर्यवसानेन पूर्वकल्पाविशेषप्रसङ्गात् पूर्वकल्पे दोषस्य दर्शितत्वादिति 'अत्रे'त्यादि'पूर्वकल्पाविशेषादि'त्यन्तवाक्येन तत्त्वालोककृद्भिः सूचितम्।

"केचित्तु— 'एकावच्छेदेने'त्यस्य अवच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यतासम्बन्धेनाभाववत्त्वेनेत्यर्थः, तथा च तद्विशिष्टयावद्विशेषाभाववत्त्वमुपाधिरि"ति[1] जागदीशीपाठो यदधुना तत्त्वालोककृद्भिः परिष्क्रियते— "वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वपक्षेऽवच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतस्यावच्छेद्यतासम्बन्धेनाभाववत्त्वमेकावच्छिन्नत्वं व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणताया अपि सङ्ग्राहकं भविष्यती'त्याशयेन— 'केचित्त्वि'त्यादि 'चिन्त्यमित्युक्तमि"त्यन्तेन, यद्यपि "यत्तु— 'एकावच्छेदेने'त्यस्ये"त्यादि "साध्याव्यापकत्वतादवस्थ्यादिति दिगि"त्यन्त[2]-जागदीशीपाठतः पूर्वमेव, तथापि तत्त्वालोककृतो मध्य एव अर्थाद् 'यत्तु'पक्षोपपादनानन्तरं 'यत्तु' पक्षखण्डनतः पूर्वमेव, दर्शितं 'केचित्त्वि'त्यादिजागदीशीपाठं परिष्कुर्वन्ति। तत्रोच्यते तैर्यद्व्याख्यात 'यत्तु'-पक्षेऽर्थाद् 'एकावच्छेदेने'त्यस्य परस्परानवच्छेदकानवच्छेद्यवृत्तिकत्वविशिष्टेत्यर्थपक्षे व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणतायाः सङ्ग्रहो न भवति, व्याप्यवृत्तिरूपादीनां विशेषाभावस्यावच्छेदकाप्रसिद्ध्या तदनवच्छेदकस्याप्यसम्भवादत्र तु = केचित्पक्षे तु व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणताया नासङ्ग्रहः, किन्तु व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणतायाः कपिसंयोगीयविशेषाभावकूटाधिकरणताया अभिघातीयविशेषाभावकूटाधिकरणतायाश्च सङ्ग्रह इति।

अनन्तरं तत्त्वालोकपङ्क्तिः— "बहुषु पुस्तकेषु तादृशार्थप्रतिपादकः 'केचित्त्वि'-त्यादिग्रन्थभाग एवोपलभ्यते" इति। तत्र 'एव' पदेन 'चिन्त्यमि'त्यस्य व्यवच्छेदोऽभिप्रेतः, मिथिलालिप्यां मत्पितृपितामहभ्रातृहस्तलिखितप्राचीनपुस्तके 'चिन्त्यमि'त्येतद्रहितस्यैव 'केचित्त्वि'त्यादेः 'आहुरि'त्यन्तस्य पाठस्योपलम्भात्। सरला(सुबोधनी) व्याख्याकृतः कृष्णमाधवशर्माणस्तु अत्र लिखितवन्तः "बहुषु पुस्तकेषु तादृशार्थप्रतिपादकः 'केचित्त्वि'त्यादिपाठ एव नोपलभ्यते" इति।[3] 'चिन्त्यमि'त्येतद्रहितप्राचीनहस्तलिखितपुस्तके तत्रास्ति टिप्पणी— 'वृत्त्यनियामकसम्बन्ध-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. तदेव, पृ. ११

३. सिद्धान्तलक्षणसुबोधनी (प्रयागः, १९२२), पृ. ३४९

स्याभावप्रतियोगितावच्छेदकसम्बन्धत्वविरहेणात्रास्वरसः केचित्त्वित्यनेन सूचित' इति।

अनन्तरम् 'अत्रे'त्यादिना तत्त्वालोककृतः कथयन्ति यद् 'अवच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशावच्छेद्यत्वाभाववत्त्वमेकावच्छिन्नत्वमि'त्यनभिधाय 'अवच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वमि'त्यभिधानं लाघवमनुरुध्यैव, अवच्छेद्यत्वस्य प्रतियोगित्वे अर्थात् तदभावावच्छेदकदेशावच्छेद्यत्वाभाववत्त्वस्य निवेशे, तत्र स्वरूपसम्बन्धावच्छिन्नत्वस्य प्रवेश्यत्वेन गौरवं स्यादिति अवच्छेदकत्वसम्बन्धावच्छिन्नाभाववद् = अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद् यद्यत् तन्निष्ठावच्छेदकत्वानिरूपितत्वाभावनिवेशे च = अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद् यद्यत् तन्निष्ठा या अव्याप्यवृत्तितानियामिका अवच्छेदकता, तदनिरूपितत्व = तन्निरूपितत्वाभावरूपाभावनिवेशे च, गगनादीनामपि यत्पदार्थतया व्याप्यवृत्तिरूपादिविशेषाभावकूटस्यावच्छेदकत्वसम्बन्धेन कुत्राप्यसत्त्वेन व्यधिकरणतादृशसम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य गगनादावपि सत्त्वाद्गगनादेर्यत्पदार्थान्तर्गतता, तादृशगगनादिनिष्ठाया अव्याप्यवृत्तितानियामकावच्छेदकताया अप्रसिद्ध्या तदनिरूपितत्वरूपाभावाप्रसिद्ध्या तत्सङ्ग्रहो न स्यादतः अवच्छेदकत्वसम्बन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यत्वसम्बन्धेनाभाववत्त्वमित्येवोक्तमिति तदाशयः।

अनन्तरं तत्त्वालोककृतः कथयन्ति यद् 'वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तत्सम्बन्धावच्छिन्न = वृत्त्यनियामकावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभाव एव प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको निवेश्य इति बोध्यमि'ति।

वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वपक्षेऽवच्छेदकत्वसम्बन्धेन तदभावाधिकरणदेशस्यावच्छेद्यत्वसम्बन्धावच्छिन्नाभाववत्त्वरूपस्यार्थस्य पूर्वोक्तस्य निवेष्टुमशक्यत्वेऽपि तत्स्थाने अवच्छेदकत्वसम्बन्धावच्छिन्नतदभाव(तदीयविशेषाभावकूटाभाव)निष्ठा या प्रकारता, तादृशप्रकारतानिरूपिता या विशेष्यता, तादृशविशेष्यतायाः प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावस्तादृशाभाववद्देशनिष्ठावच्छेद्यत्वसम्बन्धावच्छिन्ना या प्रकारता, तादृशप्रकारतानिरूपिता या विशेष्यता, तादृशविशेष्यताया अभावः प्रमीयविशेष्यत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको निवेष्टुं शक्य एवेति तदाशयः।

सरला (सुबोधनी)व्याख्याकृता 'वृत्त्यनियामकस्य प्रतियोगितावच्छेदकत्वपक्षे अवच्छेदकतासम्बन्धेन तदभावा(यदीयविशेषाभावा)धिकरणीभूतदेशस्यावच्छेद्यता-सम्बन्धेनाभाववत्त्वमेका[न]वच्छिन्नत्वमि'ति व्याख्यातम्[१]।

किन्तु तथासति व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणतायाः सङ्ग्रहः कथं स्यात्? अवच्छेदकतासम्बन्धेन व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणताया अप्रसिद्धेः। तस्मात्तत्रावच्छेदकतासम्बन्धेनेति अवच्छेदकत्वसम्बन्धावच्छिन्नप्रति-योगिताकार्थकम्, तत्र 'तदभावाधिकरणीभूतदेश' इत्येतद्घटक'तत्'पदं तदीयविशेषा-भावकूटपरम्, ततश्च 'तदभाव' इत्यस्य तदीयविशेषाभावकूटाभावोऽर्थः।

गुणात्मकदेशे संयोगीयविशेषाभावकूटस्यावच्छेदकत्वसम्बन्धेनासत्त्वादवच्छे-दकत्वसम्बन्धावच्छिन्नप्रतियोगिताकसंयोगीयविशेषाभावकूटप्रतियोगिकस्य तदभावस्य गुणे सत्त्वाद्गुणात्मकतादृशदेशस्यावच्छेदकत्वसम्बन्धेन तदभाववद्देशस्यावच्छेद्यत्व-सम्बन्धेन संयोगीयविशेषाभावकूटे तादृशकूटाधिकरणत्वे वाऽसत्त्वादवच्छेद्यत्व-सम्बन्धावच्छिन्नप्रतियोगिताकगुणात्मकदेशाभावविशिष्टतायाः संयोगीयविशेषाभावकूटे समुपपत्तिरिति बोध्यम्।

व्याप्यवृत्तिरूपादिविशेषाभावकूटस्य तदधिकरणताया वा अवच्छेदकत्व-सम्बन्धेन अधिकरणस्याप्रसिद्धत्वेऽपि अवच्छेदकत्वरूपतद्वृत्त्यधिकरणसम्बन्धा-वच्छिन्नप्रतियोगिताकरूपादिविशेषाभावकूटप्रतियोगिताकाभावस्य तदनवच्छेदकदेशे सत्त्वात्तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववद्देशस्यावच्छेद्यत्वसम्बन्धावच्छिन्न-प्रतियोगिताकाभावस्य व्याप्यवृत्तौ तादृशविशेषाभावकूटे तादृशकूटाधिकरणत्वे वा समुपपत्तेरित्याशयादिति।

अनन्तरं सिंहावलोकनन्यायेन पूर्वव्याख्यातस्य 'यत्तु' पक्षस्य खण्डनपरक-जागदीशीघटक'तदनवच्छेदकस्ये'ति प्रतीकत्वेन परिगृह्यते— 'व्याप्यवृत्तिरूपादीनां विशेषाभावस्यावच्छेदकाप्रसिद्ध्या तदनवच्छेदकस्याप्यसम्भवेन तत्रैव साध्या-व्यापकत्वतादवस्थ्यादि'ति प्रासङ्गिकी जागदीशी।[२]

तत्र शङ्क्यते 'न च व्याप्यवृत्तिरूपाद्यभावाधिकरणताया अप्यवच्छेदकत्वस्य संसर्गधर्मविशेषादौ प्रसिद्धिसम्भवात्तत्साधारणावच्छेदकत्वोपादाने क्षत्यभावान्न दोष

---

१. सिद्धान्तलक्षणसुबोधनी, पृ. ३४९

२. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

इति वाच्यमि'ति। संसर्गधर्मसाधारणावच्छेदकत्वोपादाने देशकालात्मकावच्छेदकस्य व्याप्यवृत्तिरूपादिविशेषाभावस्याप्रसिद्धावपि संसर्गात्मकधर्मात्मकतदवच्छेदकस्य तत्रापि सद्भावाद्दोषो न स्यादिति तदर्थात्।

अनन्तरं दर्शितशङ्कासमाधानायोच्यते– 'धर्मसंसर्गादिनिष्ठावच्छेदकत्वाव्याप्यवृत्तितानियामकावच्छेदकत्वादिसाधारणावच्छेदकतात्वस्यैकस्याभावादि'ति। प्रासङ्गिकस्याव्याप्यवृत्तितानियामकावच्छेदकत्वस्य धर्मात्मकसंसर्गात्मकावच्छेदकत्वतो भिन्नतया विभिन्नावच्छेदकत्वगतस्यैकस्यांवच्छेदकतात्वस्याभावात्साधारणावच्छेदकत्वोपादानासम्भवाद्दोषस्यापरिहार्यत्वादिति तदाशयात्।

अनन्तरं दर्शितदोषपरिहारोपायो दर्श्यते– 'यद्यवच्छेदकतात्वद्वयमन्यतरत्वेन निवेश्य स्वनिरूपितान्यतरवदभाववत्त्वमेवानवच्छेदकत्वं विवक्षितं तदा न कोऽपि दोष इति तु विभाव्यमि'त्युपन्यासेन। स्व(तदीयविशेषाभावकूटतदीयविशेषाभावकूटाधिकरणत्वम्वा)निरूपितं यद् निवेशितमन्यतर[व]त्= अवच्छेदकतात्वद्वयान्यतर[व]त्, तादृशान्यतरवद् अवच्छेदकताद्वयी, तदभाववत्त्वरूपानवच्छेदकत्वनिवेशे व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणताया 'यत्तु' पक्षेऽपि सङ्ग्रहो भवितुं शक्य एवेति तदाशयात्।[२१३]

तत्त्वालोकः– ''तन्मते संयोगसामान्याभावस्य केवलान्वयितये''ति।[१]

**अथ परमाणुद्वयसंयोगस्याभावो न परमाणौ सम्भवति, तस्यानवयवत्वादिति कथं केवलान्वयित्वम्? तथासति परमाणावेव व्यभिचारवारणाय हेतुविशेषणसार्थक्यसम्भवात्कथं वैयर्थ्यमुक्तम्?**

**भट्टाचार्येण च प्राचीनमतग्रन्थ एव वृक्षत्वावच्छेदेन संयोगसामान्यं व्यवस्थाप्य गगनादौ संयोगाभावसाधनपरतां सामान्यानुमानस्य प्रतिपादितम्, तद्ग्रन्थे सुतरामुक्ता शङ्का।[२]**

**यत्तु— वृक्षत्वावच्छेदेन वृक्ष इव द्रव्यत्वावच्छेदेन परमाणावपि द्रव्ये संयोगसामान्याभावसम्भवेन केवलान्वयित्वसम्भव— इति।**

**तन्न, तथासति द्रव्यत्वावच्छेदेन न कस्यापि गुणस्य सम्भव इति तत्सामान्याभावस्यापि सत्तयोपाधिप्रदर्शनासङ्गतेः। न चादिपदग्राह्यद्रव्यभिन्नत्वस्योपाधितासम्भवस्तस्याऽपि प्रमेयत्वावच्छेदेन द्रव्यवृत्तित्वसम्भवात्।**

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. अनुमानगादाधर्यां सिद्धान्तलक्षणप्रकरणे 'प्रतियोग्यसमानाधिकरण'पदप्रयोजनकथनावसरे।

तस्मात् साधारणधर्ममात्रावच्छेदेनैव स्वस्मिन्नभावसत्त्वमिदानीं प्राचाम्मतेन वाच्यम्, वृक्षत्वावच्छेदेनेत्यादौ वृक्षत्वपदस्य तद्व्यक्तित्वपरत्वमेव बोध्यम्।

एवञ्च वृक्षत्वावच्छेदेन वृक्ष इव परमाणुत्वावच्छेदेनापि न तत्र तत्सत्त्वसम्भव एवं द्रव्यत्वावच्छेदेन परमाणौ द्रव्ये तत्स्वीकारे वृक्षेऽपि तत्र तत्सत्त्वमवारितं स्यादिति भट्टाचार्यस्य वृक्षपक्षकानुमानपरित्यागो निर्बीजस्स्यादिति तद्ग्रन्थासङ्गतिर्दुर्वारिति चेद्।

मैवम्, परमाणावपि दिग्विशेषावच्छेदेन संयोगाभावसत्त्वसम्भवाद्, उक्तञ्च वैशेषिकसूत्रोपस्कारे शङ्करमिश्रपादैः 'परमाणावपि दिग्विशेषस्यावच्छेदकत्वसम्भव इति चिन्त्यमि'ति,[1] चिन्ता च तत्र दिग्विशेषस्यावच्छेदकत्वाननुभव एव।

यद्वा परमाणौ संयोगाभावः प्रलयावच्छेदेन वर्त्तते इति केवलान्वयित्वसम्भवः। न चैवमुत्पत्तिकालावच्छेदेन संयोगसामान्याभावसत्त्वं वृक्षेऽपि स्यादेवेति तत्साधनायासो वृथेति वाच्यम्, समवायेन गुणं प्रति तादात्म्येन द्रव्यत्वेन कारणत्व एवोत्पत्तिकाले संयोगाद्यभावसम्भवस्तत्रैव हि न मानं, लाघवेन तत्तद्गुणविशिष्टावयविनम्प्रति तत्तज्जातीयगुणविशिष्टावयवत्वादिना कारणत्वस्यैव वाच्यत्वादिति चिन्त्यम्।

भट्टाचार्य्यैस्तु वृक्षे संयोगसामान्याभावसाधनपरित्यागस्तु प्रौढिप्रकटनाशया कृतः, तैरपि प्राचाम्मतेन वृक्षे यावत्संयोगाभावोऽभ्युपेय एवेति न संयोगाभावकेवलान्वयित्वप्रतिपादकस्य वैयर्थ्यप्रतिपादकस्य च तद्ग्रन्थस्यासङ्गतिरित्यलम्।[२१४]

*प्रकाशः* – "एतेन 'अयं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादि'ति निरस्तम्, व्यर्थविशेषणत्वाद् अप्रयोजकत्वाद् निर्गुणत्वादेरुपाधित्वाच्चे"ति[2] दीधितिघटक'व्यर्थविशेषणत्वादि'त्येतद्व्याख्यात्मक'संयोगसामान्याभावस्य तन्मते केवलान्वयितया तत्साध्यतायामभाववत्त्वादित्यस्यैव सम्यक्त्वादि'ति[3] जागदीशीघटक'केवलान्वयितये'ति परिगृह्योक्तखण्डेन विविच्यते।

---

१. वैशेषिकसूत्रोपस्कारः, ७.२.९

२. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

३. तत्रैव, जागदीशीमूलम्, पृ. ११

तत्रोच्यते यत्परमाणोः सावयवत्वविरहेण परमाणुद्वयसंयोगाभावस्य परमाणौ सम्भवाभावात् संयोगाभावस्य प्राचाम्मते कथं केवलान्वयित्वमिति शङ्का परमाणौ संयोगसामान्याभावस्यासत्त्वे च तत्र परमाणौ संयोगसामान्याभावात्मकसाध्याभाववति अविशेषिताभाववत्त्वहेतोः सत्त्वेन प्राप्तव्यभिचारवारणाय संयोगयावद्विशेषप्रतियोगि-कत्वरूपहेतुविशेषणस्य सार्थक्यसम्भवेन वैयर्थ्यकथनमयुक्तमिति च शङ्का।

द्रव्ये संयोगसामान्याभावसाधकतया यत्तद्घटितयत्तदघटितप्राचीनसम्मत-सामान्यानुमानग्रन्थस्य वृक्षत्वावच्छेदेन सयोगसामान्यं व्यवस्थाप्य (वृक्षात्मकद्रव्ये वृक्षत्वमवच्छेदकीकृत्यैकं गगनसंयोगमुपपाद्य तत्र गदाधरभट्टाचार्येण संयोगसामान्यं व्यवस्थाप्य) गगनादौ संयोगसामान्याभावसाधनपरता प्रतिपादिता, तद्ग्रन्थे = गदाधर-भट्टाचार्यव्याख्यातप्राचीनमतग्रन्थे सुतरामुक्ता शङ्का = गदाधरभट्टाचार्यविहित-व्याख्यानुसारं प्राचाम्मते वृक्षात्मकद्रव्येऽपि संयोगसामान्याभावात्मकसाध्यस्याभावाद-विशेषिताभाववत्त्वहेतोस्तत्र सत्त्वात्प्राप्तव्यभिचारवारणाय हेतुविशेषणयावत्संयोगप्रति-योगिकत्वसार्थक्यसम्भवात्कथं वैयर्थ्यमित्युक्ता शङ्का सुतराम्परमाणोरनवयवत्वात् तत्र परमाणुद्वयसंयोगसामान्याभावात्मकसाध्यस्याभावमप्रदर्श्यापि।

अत्र प्रसङ्गे आक्षिप्तं संयोगसामान्याभावस्य केवलात्वयित्वं 'यत्तु' समादधाति यत्तर्कालङ्कारव्याख्यातप्राचीनमतग्रन्थे वृक्षात्मकद्रव्ये वृक्षत्वावच्छेदेन संयोगसामान्या-भावो यथा तिष्ठति तथैव परमाण्वात्मकद्रव्येऽपि द्रव्यत्वावच्छेदेन संयोगसामान्याभाव-सम्भवात् संयोगसामान्याभावस्य केवलान्वयित्वं सम्भवत्येवेति।

उपर्युपपादितं 'यत्तु'मतं 'तन्ने'त्यादिना तत्त्वालोककृन्निरस्यति द्रव्यत्वावच्छेदेन परमाणुद्वयसंयोगवति परमाणौ संयोगसामान्याभावस्वीकारे द्रव्यत्वावच्छेदेन कस्मिन्नपि द्रव्ये कस्यापि गुणस्य सम्भवाभावाद् निर्गुणत्वशब्दोक्तगुणसामान्याभावस्यापि द्रव्ये सत्त्वात्तस्य सर्वत्रैव साधनवति सत्त्वात् साधनाव्यापकत्वविरहादुपाधित्वप्रदर्शनासङ्गति-प्रसङ्गात् एवं प्रमेयत्वावच्छेदेन कस्मिन्नपि द्रव्ये द्रव्यत्वासत्त्वेन द्रव्येऽपि प्रमेयत्वा-वच्छेदेन द्रव्यभिन्नत्वस्य सत्त्वसम्भवाद् 'निर्गुणत्वादेरि'त्यत्र 'आदि'पदसङ्ग्राह्य-द्रव्यभिन्नत्वस्यापि सर्वत्रैव साधनवति सत्त्वेन साधनाव्यापकत्वविरहादुपाधित्वा-सम्भवात्तत्प्रदर्शनासङ्गतेश्च।

तस्मात्प्राचाम्मते संयोगवति स्वस्मिन् वृक्षादौ द्रव्ये द्रव्यत्वप्रमेयत्वादि-साधारणधर्ममात्रावच्छेदेन संयोगाभाव(संयोगसामान्याभाव)सत्त्वमिदानीन्न वाच्यम्, वृक्षत्वधर्मस्यापि वृक्षान्तरसाधारणधर्मत्वात्तर्हि वृक्षात्मकद्रव्यविशेषे प्राचां संयोग-सामान्याभावप्रदर्शनपरग्रन्थासङ्गतिस्तु न शङ्कितुं शक्या, वृक्षत्वावच्छेदेनेत्यादौ वृक्ष-

त्वपदस्य तद्व्यक्तित्वरूपतदसाधारणधर्मपरत्वाद् वृक्षगततद्व्यक्तित्वमवच्छेदकीकृत्यैव वृक्षात्मकद्रव्ये संयोगसामान्याभावस्य प्राचामभिमतत्वात्।

एवञ्च साधारणधर्ममात्रावच्छेदेन स्वस्मिन्नभावस्य प्राचाम्मते इदानीमवाच्यत्वे च तथा 'वृक्षत्वावच्छेदेने'त्यादौ 'वृक्षत्व'पदस्यापि तद्व्यक्तित्वपरत्वे च वृक्षत्वावच्छेदेन = वृक्षान्तरसाधारणधर्मवृक्षत्वावच्छेदेन वृक्ष इव (वृक्षविशेष इव) परमाणुत्वरूपसाधारणधर्मावच्छेदेनापि परमाणुद्वयसंयोगवति परमाणुविशेषे संयोगसामान्याभावस्य सम्भवो न एवं परमाणुद्वयसंयोगवति परमाण्वात्मकद्रव्ये द्रव्यत्वात्मकसाधारणधर्मावच्छेदेन संयोगसामान्याभावस्वीकारे वृक्षेऽपि तत्र तत्सत्त्वं द्रव्यत्वावच्छेदेन संयोगसामान्याभावसत्त्वमवारितं स्यात्ततश्च भट्टाचार्यस्य वृक्षपक्षकानुमानपरित्यागो निर्बीजस्स्यात्।

तस्माद्विहितोपपादनेन परमाणुद्वयसंयोगवति परमाणौ परमाणोरनवयवत्वेन संयोगसामान्याभावासम्भवात् संयोगसामान्याभावस्य तन्मते केवलान्वयित्वोक्तिरसङ्गतिर्हेतुविशेषणवैयर्थ्यकथनासङ्गतिश्च सुस्थैवेति चेद्।

अत्र 'मैवमि'त्यादिना समाधीयते, परमाणावपि दिग्विशेषावच्छेदेन संयोगसामान्याभावसम्भवादुक्ताशङ्कानिरासात्, वैशेषिकसूत्रोपस्कारे[1] शङ्करमिश्रपादैः 'परमाणावपि दिग्विशेषस्यावच्छेदकत्वसम्भव' इत्युक्तत्वात्, तैः परमाणावपि दिग्विशेषस्यावच्छेदकः (प्राचाम्मतोपपादकतया) इत्युक्त्वा 'चिन्त्यमि'ति चोक्तम्, चिन्ताबीजन्तत्र दिग्विशेषस्यावच्छेदकत्वाननुभव एव।

प्राचां सम्मतसंयोगसामान्याभावगतकेवलान्वयित्वाक्षेपविषये तत्त्वालोककृद् 'यद्वे'त्यादिना समाधानान्तरं दर्शयति 'यद्वा परमाणौ संयोगाभावः प्रलयावच्छेदेन वर्तते इति केवलान्वयित्वसम्भव' इति। तदर्थः स्पष्ट एव, सकलजन्यानाधारकालस्य प्रलयतया तदा परमाणौ परमाणुद्वयसंयोगस्य जन्यत्वेनाभावात्तत्र संयोगसामान्याभावसम्भवात्।

'नचैवमि'त्यादिना पुनः शङ्कते 'न चैवमुत्पत्तिकालावच्छेदेन संयोगसामान्याभावसत्त्वं वृक्षेऽपि स्यादेवेति तत्साधनाय (वृक्षे संयोगसामान्याभावसाधनाय) आयासो (प्राचामायासो)वृथेति वाच्यमि'त्यन्तेन।

---

१. 'विभूनामप्युपाधिभेद एव प्रदेशस्तदवच्छेदेन वर्त्तमानस्य संयोगस्याव्याप्यवृत्तित्वं परमाणुनिष्ठस्यापि संयोगस्य दिगादयोऽवच्छेदकाश्चिन्तनीयाः। वैशेषिकसूत्रोपस्कारः, ७.२.९

समादधाति पुनः – 'समवायेन गुणं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वे एवोत्पत्तिकाले संयोगाद्यभावसम्भवः (कार्याव्यवहितप्राक्क्षणेऽपेक्षितस्योक्तकारणस्याभावात्), तत्रैव (समवायेन गुणं प्रति तादात्म्येन द्रव्यत्वेन कारणत्व एव) न मानम्, लाघवेन (गुणाधारद्रव्यं प्रति द्रव्याश्रितगुणं प्रति विभिन्नकार्यकारणभावद्वयकल्पनापेक्षया लाघवेन) तत्तद्गुणविशिष्टा(रूपाद्यात्मकगुणविशिष्टा)वयविनं प्रति तत्तज्जातीय(रूपत्वादिजातीय)गुणविशिष्टावयवत्वादिना कारणत्वस्यैव वाच्यत्वेन तत्तद्गुणविशिष्टस्यैवावयविद्रव्यस्योत्पादादुत्पत्तिकाले वृक्षे संयोगसामान्याभावोपपादनासम्भवात्। अतो वृक्षे वृक्षत्वावच्छेदेन संयोगसामान्याभावसाधनायासः प्राचां न वृथेति तदाशयात्।

किन्तु प्राचामुक्तमुपपादनं चिन्त्यम्, चिन्ताबीजन्तत्र तथाकार्यकारणभावाननुभव एव, तत्तदवयविनम्प्रति तत्तदवयव्याश्रितगुणम्प्रति च पृथगेव कार्यकारणभावानुभवाद् अनुभवविरुद्धलाघवस्योपक्षीय[लाघवस्योपेक्ष्य]त्वात्, तस्मात् समवायेन गुणम्प्रति तादात्म्येन द्रव्यत्वेनैव कार्यकारणभावानुभवादुत्पत्तिकाले वृक्षे संयोगसामान्याभावस्तिष्ठेदेव, ततश्च वृक्षे तत्साधनायासः प्राचां वृथैवेति चिन्त्यमित्येतदर्थात्।

तथा चोत्पत्तिकालावच्छेदेन वृक्षे संयोगसामान्याभावस्यासंदिग्धत्वेन स्वप्रौढिप्रकटनाशया एव भट्टाचार्यैरपि प्राचां मतेन वृक्षे संयोगयावद्विशेषाभावस्य (संयोगसामान्याभावसाधकत्वेन प्राचोक्तस्य) अभ्युपेतत्वेन च भट्टाचार्यैः प्राचां ग्रन्थे संयोगसामान्याभावसाधकसामान्यानुमानस्य वृक्षात्मकपक्षे संयोगसामान्याभावसाधनपरतां परित्यज्य गगनादौ द्रव्ये संयोगसामान्याभावसाधनपरता यत्प्रतिपादिता तत्प्रौढिप्रकटनाशया एव, अर्थाद्भट्टाचार्यस्य प्राचोक्तसंयोगसामान्याभावसाधकसामान्यानुमानस्य वृक्षपक्षकसंयोगसामान्याभावसाधनपरतापरित्यागो नोचितः। संयोगसामान्याभावस्य केवलान्वयित्वप्रतिपादकस्य तथा संयोगसामान्याभावसाधकतयोपन्यस्तहेतुविशेषणवैयर्थ्यप्रतिपादकस्य च प्रासङ्गिकजागदीशीग्रन्थस्य नासङ्गतिः, परमाणौ प्रलयावच्छेदेन वृक्षे उत्पत्तिकालावच्छेदेन प्राचां मते वृक्षत्वावच्छेदेन च संयोगसामान्याभावसत्त्वसम्भवादिति प्रकाशः।[२१४]

**तत्त्वालोकः – ननु यद्यपि वृक्षे संयोगसामान्याभावस्य संदिग्धतयोपाधेर्न साध्यव्यापकत्वनिश्चयसम्भवः। न च साध्यव्यापकत्वसंशयादस्तु संदिग्धोपाधितेति वाच्यम्, साध्यवत्तया निश्चिते उपाधिसंशयस्थल एव संदिग्धोपाधेस्स्वीकरणीयत्वादन्यथा पक्षेतरत्वस्य सर्वत्रोपाधिताप्रसङ्गात्। तथापि साध्योपाध्योः साध्यसाधनयोश्च यत्र व्याप्तिग्राहकसाम्यं तत्रैव संदिग्धो-**

पाधेस्स्वीकारेण प्रकृते व्याप्तिग्राहकवैषम्यस्य तर्करूपस्य विरहेण संदिग्धोपाधिस्सम्भवत्येवेति तत्फले व्यभिचारग्रहे एवाशङ्कामाविष्करोति "अत्र यद्यपी"त्यादिना[1]।

वस्तुतस्तु'संयोगत्वं यदि किञ्चिदवच्छिन्नद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकं स्यात्, किञ्चिदवच्छिन्नद्रव्योत्पत्तिकावृत्ति स्यात्कपिसंयोगत्ववदि'ति तर्केण बाधोन्नीतपक्षेतरत्ववन्निश्चितोपाधितैव, वृक्षत्वस्यावच्छेदकत्वशङ्का चाग्रे निराकरिष्यते।

यद्वा संयोगाभावो यदि गुणाभावद्रव्यत्वाद्यभावव्यभिचारी स्याद् गुणादिव्यापकप्रतियोगिको न स्याद् रूपाद्यभाववत्, व्याप्याभावव्याप्यत्वनियमो व्यापकाभावे गृहीतोऽत्र विपक्षबाधकः, यस्य च न यद्व्यापकप्रतियोगिकत्वं न तस्य तदभावव्याप्यत्वम्, यथा वह्न्यभावस्य न धूमाभाव इति व्यतिरेकस्यापि ग्रहः।

न च विपक्षबाधकनियमे व्याप्यवृत्त्यभावत्वमुपाधिः, कथमन्यथा कपिसंयोगाभावस्य नैतद्वृक्षत्वाभावव्याप्यत्वमिति वाच्यम्, संयोगाभावे तत्तद्दिग्देशस्यावच्छेदकत्वविरहाद् वृक्षत्वादीनामवच्छेदकत्वस्य निराकरिष्यमाणत्वादिति निश्चितोपाधिता।

अत एव "तथापी"त्यादि[2]ग्रन्थासङ्गतिरपि न, अन्यथा वृक्षे संयोगसामान्याभावस्य सन्दिग्धत्वेन गुणाद्यभावस्य व्यापकत्वसन्देहे तद्व्याप्यत्वस्यापि सन्दिग्धतया नानुमापकत्वसम्भवः, हेतुमत्त्वनिश्चयस्यैवानुमितिजनकत्वादित्यसङ्गतिस्स्यादिति।

अथवा स्वमतसिद्धव्याप्तिमतो विनानुकूलतर्कं संयोगयावद्विशेषाभावस्य हेतुतया यथोपन्यासस्तथा स्वमतसिद्धगुणाभावव्याप्यत्वस्य हेतुतयोपन्यासस्सम्भवत्येव। व्यभिचारसंशयस्य यथा भवतां न प्रतिबन्धकत्वं तथास्माकमपि, एकतरव्याप्तिग्राहकतर्कावतारे तुल्यबलत्वाभावान्न प्रतिपक्षता। तेन पर्वतो वह्निमान् धूमादित्यत्र वह्निः पर्वतावृत्तिः पर्वतेतरत्वव्याप्यत्वादित्यस्य न प्रतिपक्षतेति हृदयम्।[२१५]

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. तदेव, पृ. ११

*प्रकाशः* – 'अत्र यद्यपि निर्गुणत्वोपाधेर्न स्वाभावेन साध्याभावोन्नायकतया दोषत्वम्, संयोगस्यैव साध्याभावतया वृक्षादौ तस्येष्टत्वात्, नापि व्यभिचारोन्नायकतया तत एव, तथापि स्वव्याप्यत्वेन साध्यस्य पक्षावृत्तित्वोन्नायकतया दूषकत्वं बोध्यम्, संयोगसामान्याभावो न पक्षवृत्तिर्निर्गुणत्वव्याप्यत्वादित्यनुमानेनापि वृक्षः संयोग-सामान्याभाववानित्यनुमितेः प्रतिरोधादि'त्येतज्जागदीश्या[1] अवतरणिकां दातुं 'ननु यद्यपी'त्यादिनोपर्युक्तखण्डेन शङ्कते।

तत्रोच्यते यदत्र 'निर्गुणत्वादेरुपाधित्वाच्चे'त्यनेन[2] दर्शितं निर्गुणत्वं निश्चितो-पाधिर्भवितुन्नार्हति, वृक्षे संयोगसामान्याभावस्येदानीं संदिग्धतया तत्र निर्गुणत्वे संयोगसामान्याभावात्मकसाध्यव्यापकत्वानिश्चयात्। निर्गुणत्वे साध्यव्यापकत्व-संशयेन निर्गुणत्वं संदिग्धोपाधिरपि भवितुन्नार्हति, साध्यवत्तया निश्चिते धर्मिणि उपाधिसंशयस्थल एव संदिग्धोपाधेस्स्वीकारेणात्र वृक्षरूपपक्षात्मकधर्मिणः साध्यवत्तया निश्चितत्वविरहात्, अन्यथा = संदिग्धोपाधेस्स्वीकाराय धर्मिणः साध्यवत्तया निश्चितत्वानपेक्षणे पक्षेतरत्वस्य सर्वत्रैवोपाधित्वापत्तेः, पक्षेतरत्वे संदिग्धसाध्यकपक्ष-मादाय संदिग्धसाध्यव्यापकत्वसाधनाव्यापकत्वयोस्सर्वत्रैव सम्भवात्।

उपर्युपपादितामाशङ्कां 'तथापी'त्यादिना समादधाति— "तथापि साध्यो-पाध्योः (प्रकृते संयोगसामान्याभावात्मकसाध्यनिर्गुणत्वरूपोपाध्योः[3]) साध्यसाधन-योश्च यत्र व्याप्तिग्राहकसाम्यम्, (न तु व्याप्तिग्राहकवैषम्यं) तत्रैव संदिग्धोपाधेस्स्वी-कारेण प्रकृते व्याप्तिग्राहकवैषम्यस्य तर्करूपस्य विरहेण संदिग्धोपाधिस्सम्भवत्येवेति तत्फले व्यभिचारग्रह एवाशङ्कामाविष्करोति 'अत्र यद्यपी'त्यादिना" इत्युपन्यस्य।

वह्निमान् धूमादित्यादौ पक्षेतरत्वस्योपाधित्वाभावे पर्वतस्वरूपपक्षात्मकधर्मिणः साध्यवत्तया निश्चितत्वाभावो न कारणम्, किन्तु साध्योपाध्योः साध्यसाधनयोश्च व्याप्तिग्राहकसाम्यविरह एव कारणम्, तत्र वह्निधूमात्मकसाध्यसाधनयोर्व्याप्तिग्राहकानु-कूलतर्कस्य सत्त्वं साध्योपाध्योर्व्याप्तिग्राहकानुकूलतर्काभाव इति तद्ग्राहकवैषम्यस्यैव तत्र सत्त्वात्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. तत्रैव, दीधितिमूलम्, पृ. ८

३. उपाधौ साध्यव्यापकत्वे सति साध्ये उपाधिव्याप्यताया आयातत्वात्।

प्रकृते साध्योपाध्योः (संयोगसामान्याभावनिर्गुणत्वयोः) साध्यसाधनयोः (संयोगसामान्याभावसंयोगीययावद्विशेषाभावयोः) च व्याप्तिग्राहकवैषम्यस्य तर्कस्य विरहेण (उभयत्र व्याप्तिग्राहकानुकूलतर्कविरहेण) संदिग्धोपाधिर्भवितुं शक्नोत्येवातोऽत्र निर्गुणत्वम् संदिग्धोपाधिः, तदुपाधिफले व्यभिचारग्रहे एवाशङ्कां [आविष्करोति जगदीशः][1] 'नापि व्यभिचारोन्नायकतया तस्य (निर्गुणत्वोपाधेः) दूषकत्वं सम्भवति, तत एव = संयोगस्यैव साध्याभावतया वृक्षादौ तस्येष्टत्वादेवेत्युक्त्यादिने'ति तदाशयात्।

अनन्तरं 'वस्तुतस्तु' इत्युपन्यस्य तत्त्वालोककृत् कथयति यदुक्तसामान्यानुमानस्थले निर्गुणत्वं निश्चितोपाधिरेव, न तु संदिग्धोपाधिरिति, यतो हि 'वह्निरनुष्णः कृतकत्वादि'त्यत्र प्रात्यक्षिबाधोन्नीतं पक्षेतरत्वं यथा निश्चितोपाधिर्भवति तथैव प्रकृतेऽपि 'संयोगत्वं यदि किञ्चिदवच्छिन्नद्रव्यनिष्ठाभाव(वृक्षत्वावच्छेदेन वृक्षसंयोगसामान्याभाव)प्रतियोगितावच्छेदकं स्यात्, किञ्चिदवच्छिन्नद्रव्योत्पत्तिकावृत्ति स्यात्, कपिसंयोगत्ववदि'ति तर्केण वृक्षे संयोगसामान्याभावात्मकसाध्यस्योन्नयनकालेऽर्थादुक्ततर्केण वृक्षात्मकपक्षे साध्याभावग्रहकाले, बाधोन्नीतपक्षेतरत्वमिव निर्गुणत्वं निश्चितोपाधिरेव।

मूलावच्छिन्नवृक्षात्मकद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वेन सुनिश्चिते कपिसंयोगत्वे किञ्चिदवच्छिन्नद्रव्योत्पत्तिकावृत्तित्वदर्शनात् संयोगत्वेऽपि कपिसंयोगत्व इव किञ्चिदवच्छिन्नद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वसद्भावे किञ्चिदवच्छिन्नद्रव्योत्पत्तिकावृत्तित्वापत्तिः, वस्तुतः संयोगत्वं न किञ्चिदवच्छिन्नद्रव्योत्पत्तिकावृत्ति, मूलादितत्तदवयवावच्छिन्नतयैवात्रापि द्रव्ये संयोगोत्पादस्य पूर्वमुपपादितत्वात्, कपिसंयोगोत्पादम्प्रति तथाकार्यकारणभावविरहात्।

अत्र उक्ते बाधोन्नायकतर्कस्थले संयोगत्वे किञ्चिदवच्छिन्नद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वमस्त्येव, वृक्षत्वावच्छेदेन कस्यापि संयोगस्यासत्त्वेन वृक्षत्वस्य संयोगाभावावच्छेदकत्वात्। ततश्च संयोगत्वधर्मिकापादकवत्तानिश्चयविरहादुक्ततर्कासम्भवशङ्कापनोदायोक्तं तत्त्वालोककृद्भि'र्वृक्षत्वस्यावच्छेदकत्वशङ्का चाग्रे निराकरिष्यत' इति, 'न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वम्, गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गादि'त्यग्रिमदीधितिग्रन्थेन[2]

---

१. [ ] कोष्ठकान्तर्गतः पाठो योजनीयो वाक्यार्थसङ्गतय इति विभाव्यते।

२. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

वृक्षत्वे संयोगाभावावच्छेदकत्वस्य निराकरिष्यमाणत्वात्।

अनन्तरं 'यद्वे'त्यादिना तर्कान्तरमुपस्थापयति— 'यद्वा संयोगाभावो यदि गुणाभावद्रव्यत्वाद्यभावव्यभिचारी स्याद्गुणादि(गुणद्रव्यत्व)व्यापकप्रतियोगिको न स्याद्रूपाद्यभाववत्' (रूपाभावो गुणाभावस्य द्रव्यत्वाभावस्य च व्यभिचारी गुणाभाव-द्रव्यत्वाभावरहिते वायौ रूपाभावस्य सत्त्वात्, गुणाभावद्रव्यत्वाभावव्यभिचारी यतो रूपाभावः, अतो गुणद्रव्यत्वव्यापकप्रतियोगिको न, तथैव संयोगाभावोऽपि गुणाभाव-द्रव्यत्वाभावव्यभिचारी यदि स्यात्तदा गुणद्रव्यत्वव्यापक(संयोग)प्रतियोगिको न स्याद्) इति प्रकृते बाधोन्नायको द्वितीयस्तर्कः।

अत्र = द्वितीयतर्कस्थले व्यापकाभावे = धूमादिव्यापकवह्न्याद्यभावे, गृहीतो व्याप्याभावव्याप्यत्वनियमः = धूमाद्यभावव्याप्यत्वनियमः (यत्र यत्र वह्न्य-भावस्तत्र तत्र धूमाभाव इति व्याप्तेः, व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परमित्युक्तत्वात्), विपक्षबाधकः, विपक्षे = संयोगाभावो गुणाभावद्रव्यत्वाद्यभाव-व्यभिचारित्वेऽपि गुणादिव्यापकप्रतियोगिक इत्यत्र, बाधकः। अर्थात् संयोगाभावो गुणाभावद्रव्यत्वाद्यभावव्यभिचारीभूत्वा गुणादिव्यापकप्रतियोगिको भवितुन्नार्हति, गुणादिव्यापकसंयोगाभावरूपव्यापकाभावस्य व्याप्याभाव(गुणाद्यभाव)व्याप्यत्व-नियमात्, यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इतीव यत्र यत्र संयोगाभावस्तत्र तत्र गुणद्रव्यत्वाद्यभाव इति नियमज्ञाने सति संयोगाभावो गुणादिव्यापकप्रतियोगिको गुणाभावद्रव्यत्वाभावव्यभिचारी अपीति भवितुन्नार्हतीत्याशयात्।

उक्तद्वितीयतर्के 'संयोगाभावो यदि गुणाभावद्रव्यत्वाद्यभावव्यभिचारी स्याद् गुणादिव्यापकप्रतियोगिको न स्यादि'त्यत्र साधकतया व्यतिरेकं दर्शयति— 'यस्य च न यद्व्यापकप्रतियोगिकत्वं न तस्य तदभावव्याप्यत्वम्, यथा वह्न्यभावस्य न धूमाभाव इति व्यतिरेकस्यापि ग्रह' इत्युपन्यासेन। 'धूमाभावे वह्निव्यापकप्रतियोगिक-त्वविरहाद् वह्न्यभावव्याप्यत्वस्यापि विरहः' इत्येवं व्यतिरेकग्रह उक्ततर्केऽनुकूलः।

अनन्तरम् अत्र 'नचे'त्यादिना शङ्कते 'न च विपक्षबाधकनियमे = व्यापकाभावे व्याप्याभावव्याप्यत्वनियमे, व्याप्यवृत्त्यभावत्वमुपाधिः कथमन्यथा कपिसंयोगाभावस्य नैतद्वृक्षत्वाभावव्याप्यत्वमिति. वाच्यमि'त्युपन्यसनेन।

कपिसंयोगी एतद्वृक्षत्वादित्यत्र सद्धेतुस्थले कपिसंयोगात्मकं साध्यं व्यापकम्, एतद्वृक्षत्वात्मकं साधनं व्याप्यम्, परन्तु तत्रैतद्वृक्षत्वाभावरूपसाधनाभावे कपिसंयोगा-भावात्मकव्यापकाभावो व्याप्यो न भवति, मूलावच्छेदेन कपिसंयोगाभाववति एतद्वृक्षे

एतद्वृक्षत्वाभावस्यासत्त्वादतो विपक्षबाधकोक्तनियमे व्याप्यवृत्त्यभावत्वमिति शङ्काशयः।

अत्र समादधाति — 'संयोगाभावे तत्तद्दिग्देशस्यावच्छेदकत्वविरहाद्वृक्षत्वादीनामवच्छेदकत्वस्य निराकरिष्यमाणत्वादिति निश्चितोपाधिते'त्यनेन।

वृक्षत्वादीनां संयोगाभावावच्छेदकत्वस्याग्रे निराकरिष्यमाणत्वेन संयोगाभावे तत्तद्दिग्देशस्यावच्छेदकत्वविरहेण विपक्षबाधकतया दर्शितनियमे व्याप्यवृत्त्यभावत्वस्योपाधित्वासम्भवाद्दर्शितदिशा निर्गुणत्वस्य बाधोन्नीतपक्षेतरत्ववदेव निश्चितोपाधित्वादिति समाधानाशयात्।

प्राचाम्मतेन दर्शितवृक्षादौ द्रव्ये संयोगसामान्याभावानुमापकस्थले निर्गुणत्वादेः निश्चितोपाधित्वादेव 'तथापी'त्यादिग्रन्थस्य = 'तथापि साध्यस्य संयोगसामान्याभावस्य पक्षवृत्तित्वाभावोन्नायकतया तस्य निर्गुणत्वोपाधेर्दूषकत्वम्, संयोगसामान्याभावो न वृक्षवृत्तिः, निर्गुणत्वव्याप्यत्वादित्यनुमानेनापि वृक्षः संयोगसामान्याभाववानित्यनुमितेः प्रतिरोधादि'ति ग्रन्थस्य नासङ्गतिः।

अन्यथा = निर्गुणत्वस्य तत्र सन्दिग्धोपाधित्वे, वृक्षे संयोगसामान्याभावस्य संदिग्धत्वेन गुणाभावद्रव्यत्वाभावे संयोगसामान्याभावव्यापकत्वसंशयः स्यात्। गुणाद्यभावे संयोगाभावव्यापकत्वसंशयोत्पत्तौ संयोगाभावे गुणाद्यभावव्याप्यत्वस्यापि संशयः स्यात्। ततश्च तत्र संदिग्धस्य निर्गुणत्वव्याप्यत्वस्य तत्र संयोगाभावे पक्ष(वृक्ष)वृत्तित्वाभावानुमापकत्वं न स्यात्। निर्गुणत्वव्याप्यत्वरूपहेतुमत्त्वनिश्चयविरहाद् हेतुमत्त्वनिश्चयस्यैवानुमितिजनकत्वात् 'तथापी'ति ग्रन्थासङ्गतिः स्यादिति।

'अथवे'त्यादिना 'हृदयमि'त्यन्तेन प्रकृते 'तथापी'त्यादिग्रन्थसङ्गतौ समाधानान्तरमुच्यते यद् अनुकूलतर्कमन्तरैव स्व(प्राचीन)मतसिद्धव्याप्तिमतः (संयोगसामान्याभावनिरूपितव्याप्तिमतः) संयोगयावद्विशेषाभावस्य हेतुतया(वृक्षे संयोगसामान्याभावसाधकतया) यथोपन्यासस्तथा अनुकूलतर्कं विनापि स्वमतसिद्धस्य संयोगसामान्याभावे गुणाभावव्याप्यत्वस्य (निर्गुणत्वव्याप्यत्वस्य) हेतुतया = संयोगसामान्याभावधर्मिकपक्षवृत्तित्वाभावसाधकतया, उपन्यासो भवितुं शक्नोत्येव। व्यभिचारसंशयो यथा भवन्मते (प्राचाम्मते) न प्रतिबन्धकस्तथैव अस्माकम्मतेऽपि व्यभिचारसंशयो न प्रतिबन्धकः, अतो निर्गुणत्वव्याप्यत्वहेतौ पक्ष(वृक्ष)वृत्तित्वाभावरूपसाध्यव्यभिचारसंशयो जातोऽपि प्रतिबन्धको नैव भवेत्।

'वृक्षः. संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादि'त्यत्र यथा कश्चन अनुकूलतर्कस्तथैवानुकूलतर्करहितोऽपि 'संयोगसामान्याभावो वृक्षावृत्तिः निर्गुणत्वव्याप्यत्वादि'ति पूर्वस्य प्रतिपक्षो भवेदेव समानबलत्वात्।

'पर्वतो वह्निमान् धूमादि'त्यत्र 'वह्निः पर्वतावृत्तिः पर्वतेतरत्वव्याप्यत्वादि'ति तु प्रतिपक्षो भवितुन्नैवार्हः, तुल्यबलत्वाभावात्, पूर्वत्र 'पर्वतो वह्निमान् धूमादि'त्यत्रानुकूलतर्कसद्भावादुत्तरत्र 'वह्निः पर्वतावृत्तिः पर्वतेतरत्वव्याप्यत्वादि'त्यत्रानुकूलतर्कविरहात्।

एतदेव "एकतरव्याप्तिग्राहकतर्कावतारे तुल्यबलत्वाभावान्न प्रतिपक्षता, तेन 'पर्वतो वह्निमान् धूमादि'त्यत्र 'वह्निः पर्वतावृत्तिः पर्वतेतरत्वव्याप्यत्वादित्यस्य न प्रतिपक्षतेति हृदयमि"त्युपन्यस्य सूचितमिति प्रकाशः।[२१५]

तत्त्वालोकः – "तथा चे"ति।[१] आपत्तेरापाद्यव्यतिरेकनिश्चयाधीनतया 'प्रसङ्गादि'त्युक्त्या[२] व्यभिचारलाभ इति भावः।

न च वायुत्वादौ रूपाद्यनवच्छेदकतया गृहीते रूपाद्यभावावच्छेदकत्वस्य तत्तन्मूलशाखादौ तत्तत्संयोगानवच्छेदकतया ज्ञाते तत्तदभावावच्छेदकत्वस्य च गृहीततयोक्तसामान्यव्याप्तेरेव प्रमेयत्वेऽपि गुणाद्यभावावच्छेदकत्वं कुतो न सिद्ध्येदिति वाच्यम्, अतिप्रसक्ते स्वरूपसम्बन्धरूपावच्छेदकत्वाभावस्य निर्णीततयोक्तावच्छेदकत्वाभावनिर्णयेन प्रतिबन्धात्, देशकालादावेवोक्तव्याप्तेः प्रामाणिकतया तदितरत्र तन्नियमे मानाभावाच्च। दीधितावापत्तिदानञ्च पराभ्युपगतव्याप्तिमाश्रित्य, तात्पर्यञ्च व्यभिचार एव सर्वत्र व्याप्त्यभ्युपगमापत्तिस्थल इति बोध्यम्।

"पक्षसमत्वादि"ति[३]। इदञ्च साध्याभाववत्त्वांशे निश्चयरूपं शेषांशे संशयसाधारणं व्यभिचारज्ञानं विरोधीति मतेन बोध्यम्।

"घटपूर्ववर्तित्वे"ति[४]। इदञ्च स्वरूपसम्बन्धरूपकारणत्वस्योपलक्षकम्, स्वरूपसम्बन्धरूपतदवच्छेदकत्वस्य नातिप्रसक्ते सम्भवः। एतेन

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ.११

२. तत्रैव, दीधितिमूलम्, पृ. ८

३. तत्रैव जागदीशीमूलम्, पृ. ११

४. तदेव, पृ. ११

नियतपूर्ववर्त्तित्वावच्छेदकत्वस्य कार्यपूर्वकालवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपस्य पारिभाषिकस्यैव व्यवहृतत्वस्वीकारेऽपि न क्षतिः।

"वह्निसामानाधिकरण्यसामान्ये"ति[१]। तथा च स्वरूपसम्बन्धरूपावच्छेदकत्वघटितस्य प्राचीनमतसिद्धसाध्यसामानाधिकरण्यावच्छेदकत्वरूपव्याप्यतावच्छेदकत्वस्य नानुपपत्तिरिति भावः।

अनुकूलतर्कविरहस्थले साध्याभाववत्त्वांशे संशयात्मकव्यभिचारज्ञानमपि प्रतिबन्धकमित्याशयेनाह "केचित्त्वि"ति[२]। 'यथा चे'त्यादि[३] ग्रन्थस्योक्तावच्छेदकत्वसाधकानुमानबाधनिरासपरतां दर्शयति "वृक्षत्वे"त्यादि[४]।[२१६]

*प्रकाशः*—'न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वमि'ति[५] दीधित्याऽऽशङ्कितस्य निरासो 'गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गादि'ति दीधित्या कृतः। तत्र 'गुणाद्यनवच्छेदके'ति प्रतीकमादाय तर्कालङ्कारेण 'तथा च व्यभिचारान्नोक्तव्याप्तिरिति भाव' इति व्याख्यातम्।[६]

तत्र तत्त्वालोककृता 'तथाचे'ति जागदीशीं परिगृह्योच्यते यच्छिरोमणेदीधितिकृतो 'गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गादि'त्युक्त्या व्यभिचारो लभ्यते, यतो हि आपाद्य(प्रमेयत्वादेर्गुणाद्यभावावच्छेदकत्व)व्यतिरेक(अभाव)निश्चयाधीनैव आपत्तिर्दीयते यत्रापाद्यव्यतिरेकनिश्चयो न भवति, तत्रापत्तिर्नैव दीयते, ततश्च प्रकृते प्रमेयत्वादौ गुणाद्यभावावच्छेदकत्वापत्तिदानात् तत्र प्रमेयत्वादौ गुणाद्यभावावच्छेदकत्वाभावरूपापाद्यव्यतिरेकनिश्चयोऽस्तीत्यायातम्। गुणाद्यनवच्छेदके प्रमेयत्वादौ गुणाद्यभावावच्छेदकत्वाभावनिश्चयेन च तदभावाभावावच्छेदकत्वरूपसाध्यसाधकतयोपन्यस्ते प्रतियोग्यनवच्छेदकत्वे साध्याभाववद्वृत्तित्वरूपस्य व्यभिचारस्य लाभः 'प्रसङ्गादित्युक्त्या' इति विवृतम्।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११
२. तदेव, पृ. १२
३. तत्रैव, दीधितिमूलम्, पृ. ८
४. तत्रैव, जागदीशीमूलम्, पृ. १२
५. तत्रैव, दीधितिमूलम्, पृ. ८
६. तत्रैव, जागदीशीमूलम्, पृ. ११

तदनन्तरं 'न चे'त्यादिना 'कुतो न सिद्ध्येदि'त्यन्तेन शङ्क्यते यद् रूपाद्यनवच्छेदकतया गृहीते वायुत्वादौ रूपाद्यभावावच्छेदकत्वस्य ज्ञाततया तथा तत्तत्संयोगानवच्छेदकतया गृहीते तत्तन्मूलशाखादौ वृक्षावयवे तत्तत्संयोगाभावावच्छेदकत्वस्य ज्ञाततया 'यः प्रतियोग्यनवच्छेदकः, स तदभावावच्छेदक' इति सामान्यव्याप्तेरेव प्रमेयत्वे गुणाद्यभावावच्छेदकत्वं कुतो न सिद्ध्येदिति।

प्रमेयत्वे गुणाद्यभावावच्छेदकत्वमाक्षिप्तं समाधीयते 'अतिप्रसक्ते स्वरूपसम्बन्धरूपावच्छेदकत्वाभावस्य निर्णीततयोक्तावच्छेदकत्वाभावनिर्णयेन प्रतिबन्धादि'त्युक्त्या। तदतिरिक्तवृत्तौ धर्मे स्वरूपसम्बन्धरूपावच्छेदकत्वाभावः पूर्वत एव निर्णीतो वर्तते, तेन गुणाद्यभावातिरिक्तवृत्तौ प्रमेयत्वधर्मे गुणाद्यभावावच्छेदकत्वाभावोऽपि पूर्वतो निर्णीतोऽस्ति, ततश्च प्राक्तनेन प्रमेयत्वधर्मिकगुणाद्यभावावच्छेदकत्वाभावनिर्णयेन प्रतिबन्धाद् दर्शितसामान्यव्याप्त्या प्रमेयत्वे गुणाद्यभावावच्छेदकत्वानुमितिर्भवितुन्नार्हतीत्येकं समाधानम्।

द्वितीयञ्च समाधानं 'देशकालादावेवोक्तव्याप्तेः प्रामाणिकतया तदितरत्रोक्तनियमे मानाभावाच्चे'त्युपन्यस्तम्।

'यः प्रतियोग्यनवच्छेदकः स तदभावावच्छेदक' इति नियमो देशकालादावेव प्रामाणिको देशकालादीतरत्र तन्नियमे मानविरहेण देशकालादिभिन्नस्य प्रमेयत्वस्य गुणाभावावच्छेदकत्वन्न सेद्धुमर्हतीति द्वितीयसमाधानस्याशयः।

अनन्तरमुच्यते 'दीधितावापत्तिदानञ्च पराभ्युपगतमाश्रित्य, तात्पर्यञ्च सर्वत्र व्याप्त्यभ्युपगमापत्तिस्थले व्यभिचार एवे'ति। 'गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गादि'ति दीधित्यापत्तिदानं पराभ्युपगतां प्रतियोग्यनवच्छेदकोऽभावावच्छेदक इमां व्याप्तिमाश्रित्यैव, न तु स्वाभिमतां व्याप्तिमाश्रित्य, उक्तापत्तिदानस्य तात्पर्यं तदभावावच्छेदकत्वसाधकतया दर्शिते स्वसाध्यव्यभिचार एव = व्याप्त्यभ्युपगमापत्तिस्थले सर्वत्रापत्तिदानस्य व्यभिचार एव तात्पर्यादिति तदाशयः।

पूर्वापादितदोषमुक्तये 'वृक्षत्वं संयोगसामान्या[भावा]वच्छेदकं संयोगसामान्यस्यानवच्छेदकत्वादि'त्येवं विशिष्यैव व्याप्तिस्वीकारे प्रमेयत्वसत्त्वादेः पक्षसमत्वमुक्तम्। वृक्षात्मकपक्षस्येव प्रमेयत्वसत्त्वादेरपि संदिग्धसाध्यकत्वमेव तस्य पक्षसमत्वकथनेन बोधितम्, तत् स्फुटीक्रियते 'इदञ्च साध्याभाववत्त्वांशे निश्चयरूपं शेषांशे संशयसाधारणं व्यभिचारज्ञानं विरोधीति मतेन' इत्युपन्यासेन। साधनधर्मिकं साध्याभाववद्वृत्तित्वप्रकारकं ज्ञानं यद्व्याप्तिज्ञानग्रहे विरोधि भवति तत् साध्याभाववत्त्वांशे

निश्चयात्मकं सदेव व्याप्तिग्रहे विरोधि, तद्भिन्नांशे तज्ज्ञानं संशयात्मकं भवतु, निश्चयात्मकम्वा, शेषांशे व्याप्तिग्रहविरोधित्वाय, तस्य निश्चयात्मकत्वापेक्षाविरहात्, ततश्च पक्षसमे प्रमेयत्वसत्त्वादौ साध्याभावस्य = संयोगसामान्याभावावच्छेदकत्वाभावरूपस्यं निश्चितत्वविरहात् संदिग्धसाध्याभाववत्तया ज्ञातप्रमेयत्वसत्त्वादिवृत्तित्वस्य संयोगसामान्यानवच्छेदकत्वे व्यभिचारावस्थायामपि दर्शितविशिष्यव्याप्तिग्रहो नैवावरुद्धो भवितुमर्हतीति तत्त्वालोककृदालोकाशयः।

अनन्तरं 'वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यस्यानवच्छेदकत्वादि'ति विशिष्य व्याप्तौ दोषः 'यथा च घटपूर्ववर्तित्वस्य प्रतिदण्डं वह्निसामानाधिकरण्यस्य च प्रतिधूमं भिन्नत्वेऽपि दण्डत्वं धूमत्वं वा तत्सामान्यावच्छेदकं तथैव संयोगसामान्यावच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वाच्चे'[१]त्यनेन दीधितावुक्तस्तत्र 'घटपूर्ववर्तित्वे'ति प्रतीकं परिगृह्य 'इदञ्च स्वरूपसम्बन्धरूपकारणत्वस्योपलक्षकम्, स्वरूपसम्बन्धरूपतदवच्छेदकत्वस्य नातिप्रसक्ते सम्भव' इति विवृतं तत्त्वालोककृता, स्वरूपसम्बन्धावच्छेदकत्वस्यातिप्रसक्तधर्मे सम्भवविरहाद् घटपूर्ववर्तित्वातिप्रसक्तदण्डत्वे घटपूर्ववर्तित्वावच्छेदकत्वदर्शनानौचित्याभावाय 'घटपूर्ववर्तित्वे'ति उपलक्षकतया स्वरूपसम्बन्धरूपकारणत्वपरम्, तथा च स्वरूपसम्बन्धरूपघटकारणत्वस्य प्रतिदण्डं भिन्नत्वेऽपि तादृशकारणताया अवच्छेदकं यथा दण्डत्वमिति तदभिप्रेतार्थः।

एतेन = घटपूर्ववर्तित्वस्य स्वरूपसम्बन्धरूपकारणत्वोपलक्षकत्वे नियतपूर्ववर्तित्वावच्छेदकत्वस्य कार्यपूर्वकालवृत्त्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपस्य पारिभाषिकस्यैव व्यवहृतत्वस्वीकारेऽपि न क्षतिः।

प्रकृते घटपूर्ववर्तित्वस्य (घटनियतपूर्ववर्तित्वस्य) स्वरूपसम्बन्धरूपकारणत्वोपलक्षकत्वविरहे स्वरूपसम्बन्धरूपतदवच्छेदकत्वासम्भवप्रयुक्तानुपपत्तिः, नियतपूर्ववर्तित्वावच्छेदकत्वस्य (घटनियतपूर्ववर्तित्वावच्छेदकत्वस्य) कार्यपूर्वकालवृत्त्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपस्य पारिभाषिकस्यैव व्यवहृतत्वस्वीकारानुपपत्तिश्च स्यात्। तस्य स्वरूपसम्बन्धरूपकारणत्वोपलक्षकत्वे तु नोक्तानुपपत्तिद्वयीति तदाशयः।

---

१. प्रकृतग्रन्थः (प्रथमो भागः), दीधितिमूलम्, पृ. ८

अनन्तरं दीधितिघटकस्य 'तत्सामान्यस्ये'त्यस्य तर्कालङ्कारेण 'घटपूर्ववर्तित्व-सामान्यस्य वह्निसामानाधिकरण्यसामान्यस्य चे'ति या व्याख्या विहिता[1], तद्घटक-'वह्निसामानाधिकरण्यसामान्ये'ति प्रतीकतयाऽऽदायोच्यते तत्त्वालोककृता 'तथा च स्वरूपसम्बन्धावच्छेदकत्वघटितस्य प्राचीनमतसिद्धसाध्यसामानाधिकरण्यावच्छेद-कत्वरूपव्याप्यतावच्छेदकत्वस्य नानुपपत्तिरि'ति। धूमत्वे साध्यसामानाधिकरण्या-वच्छेदकत्वरूपव्याप्यतावच्छेदकत्वस्य वह्निसामानाधिकरण्यस्य प्रतिधूमं भिन्नत्वेऽपि यथा नानुपपत्तिस्तथैव द्रव्यत्वस्य वृक्षत्वादेः संयोगसामान्यावच्छेदकत्वमपि नानुपपन्नं स्यादिति, वृक्षत्वधर्मिकसंयोगसामान्याभावावच्छेदकत्वसाध्यकानुमानखण्डन-खण्डनात्।

'यथा च घटपूर्ववर्तित्वस्य प्रतिदण्डमि'त्यादि 'तथैव संयोगसामान्यस्या-वच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वाच्चे'त्यन्तदीधितिंग्रन्थस्याभिप्रायमित्थं प्रतिपादयन्ति यत् कथितव्याप्तौ वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्य-स्यानवच्छेदकत्वादिति प्राचां सम्मतव्याप्तौ अप्रयोजकत्वमर्थादनुकूलतर्करहितत्वं वर्तते, अन्यथा वृक्षत्वे संयोगसामान्याभावानवच्छेदकत्वहेतुना संयोगसामान्यावच्छेद-कत्वमेव तत्र कुतो न साध्येत, वृक्षत्वावच्छेदेन तत्तत्संयोगव्यक्तीनामसत्त्वेऽपि संयोगसामान्यावच्छेदकत्वस्य वृक्षत्वे सम्भवादित्यत्रैव 'यथा चे'त्यादिग्रन्थस्य तात्पर्यं स्वीकुर्वन्तीति तर्कालङ्कारेण यद्व्याख्यातम्, तत्र तत्त्वालोककृताऽवतरणतयोपन्य-स्यते— यत् "अनुकूलतर्कविरहस्थले साध्याभाववत्त्वांशे संशयात्मकव्यभिचार-ज्ञानमपि प्रतिबन्धकमित्याशयेन 'केचित्त्विती'ति। 'यथा चे'त्यादिग्रन्थस्य उक्ता-वच्छेदकत्वसाधकानुमान(संयोगसामान्याभावानवच्छेदकत्वहेतुना वृक्षत्वधर्मिक-संयोगसामान्यावच्छेदकत्वसाधकानुमान)बाध[बाधत्वं संयोगसामान्यावच्छेदकत्व-रूपसाध्या(भाव)वत्]निरासपरतां दर्शयति 'वृक्षत्वाद्यवच्छेदेन तत्तत्संयोगव्यक्तीनाम-सत्त्वेऽपि संयोगसामान्यस्यावच्छेदकत्वसम्भवादि'ति[2]।

'यथा चे'त्यादिदीधितिग्रन्थस्य प्रथमव्याख्यानावसरे, अर्थाद् वृक्षत्वं संयोग-सामान्याभावावच्छेदकं संयोगसामान्यस्यानवच्छेदकत्वादिति विशिष्य व्याप्तौ स्वीक्रियमाणायां प्रमेयसत्त्वादेः पक्षसमत्वस्वीकारावसरे, 'इदञ्च साध्याभाववत्त्वांशे निश्चयरूपं शेषांशे संशयसाधारणं व्यभिचारज्ञानं विरोधीति मतेन बोध्यमि'त्युक्तमासी-

---

१. प्रकृतग्रन्थः (प्रथमो भागः), जागदीशीमूलम्, पृ. ११

२. तदेव, पृ. १२

तत्त्वालोककृता, इदानीम् 'केचित्तु'रीत्या 'यथा चे'त्यादिदीधितिग्रन्थस्य द्वितीय-व्याख्यावसरे पूर्वोक्तकथनवैपरीत्यमुपन्यस्यते 'अनुकूलतर्करहितस्थले साध्याभाव-वत्त्वांशे संशयात्मकव्यभिचारज्ञानमपि प्रतिबन्धकमित्याशयेन केचित्त्विती'ति।

साध्याभाववत्त्वांशे संशयात्मकव्यभिचारज्ञानस्यापि व्याप्तिधीप्रतिबन्धकत्वे तु पक्षसमे प्रमेयत्वसत्त्वादौ साध्यसाध्याभावयोः संदिग्धत्वेन साध्याभाववत्तया संदिग्धे तत्र धर्मिणि संयोगसामान्यानवच्छेदकत्वस्य वृक्षत्वे संयोगसामान्याभावावच्छेदकत्व-साधकतयोक्तस्य वृत्तित्वेन तत्र व्यभिचारदोषस्य सम्भवात्तत्र स्वरूपासिद्धिदोषदर्शक-'यथा चे'त्यादिग्रन्थपूर्वव्याख्यायाः सङ्गतत्वासम्भवात्तद्ग्रन्थस्य (यथा चेत्यादि-ग्रन्थस्य) अन्यथाव्याख्यानं केचित्तु कुर्वन्ति, अत्र व्याख्याने वृक्षत्वधर्मिकसंयोग-सामान्याभावावच्छेदकत्वसाधकतया पूर्वोक्तानुमानेऽप्रयोजकत्वं व्यभिचारशङ्का-निवर्तक-तर्कराहित्यरूपं यद्दर्श्यते तत् साध्याभाववत्त्वांशे संशयात्मकव्यभिचार-ज्ञानस्यापि प्रतिबन्धकत्वे नो प्रतिकूलमपि तु अनुकूलमेवेति तत्त्वालोक-कृतामाशयः।[२१६] ॥इति॥

**[व्याप्तिसिद्धान्तलक्षणजागदीश्याः गूढार्थतत्त्वालोकस्य श्रोत्रियकुलावतंस-मैथिल-पण्डितखड्गनाथमिश्रविरचितायास्तदन्तेवासि - श्रीकृष्णशर्मसम्पादितायाः 'प्रकाश'-टीकायाः द्वितीयो भागः सम्पूर्णः।]**

---

## About the work

The relation of Vyāpti (universal concomitance or law - like connection) is unique in the family of epistemologically important content-neutral entities. The contributions of Navya-Naiyāyikas to the investigation and precise characterisation of this relation have few parallels in the history of thought. In the Indian Philosophical literature tradition of commentaries & sub-commentaries, Gaṅgeśa's-siddhāntalakṣaṇa-vyāpti was successively commented upon by Raghunātha Jagadīśa & Dharmadatta respectively in Didhīti, Jāgadīsī and Tattvāloka. This last work has been in need of a simple and precise commentary. Pt. Khadganatha Miśra's Prakāśa meets this need. In the first volume of this work relevant texts of Tattvacintāmaṇi, Didhītī, Jāgadīsī were presented in theme-based sections for the convenience of the readers. Tattvāloka and Prakāśa on it, are presented here as in the first volume in theme-based sections.

## About the Author

Pt. Khadaganath Miśra was born in Mithilā and received his training in the school founded by Dharmadatta Jha in the disciplines of Nyāya, Vyākaraṇa and Vedānta. Mahārāṇā & Mahārāja sanskrit colleges of Udaipur and Jaipur were privileged to have him as the Principal. He was the Dean of Sanskrit Studies and served in the Sāstrī position in the Department of Philosophy, University of Rajasthan.

A two volume work by Pt. Miśra on the semantical analysis of natural languages & metaphysical problems is yet to reach the public. The city of Jaipur is fortunate to have Pt. Miśra as a permanent resident.

ISBN 81-86027-05-x (Vol. II)
Price : Rs. 400/-

# दर्शनविभागस्य प्रकाशितग्रन्थानां विवरणम्

राजस्थानविश्वविद्यालयभारतीयदर्शनाध्ययनमाला

1. बौद्धार्थबाह्यार्थपर्यालोचनम् राजेन्द्रप्रसादशर्मा — 225.00
   ISBN 81-86027-02-5
2. सिद्धान्तलक्षणतत्त्वालोकप्रकाशः पं. खड्गनाथमिश्रः, श्रीकृष्णशर्मसम्पादितः (प्रथमो भागः) — 400.00
   ISBN 81-8[illegible]-1
3. न्यायलीलाव[illegible] [illegible]चार्यप्रणीता, प[illegible] कृत शाम्भवी [illegible]व्यनि तथा चन्द्र[illegible] कृत चन्द्रकान्ति [illegible]ख्या सम्वलित, रा[illegible] शर्मा सम्पादित (द्र[illegible] प्रकरणान्त) प्रथम भाग — 400.00
   ISBN 81-8602[illegible]-09-2
4. सिद्धान्तलक्षणतत्त्वालोकप्रकाशः पं. खड्गनाथमिश्रः, श्रीकृष्णशर्मसम्पादितः (द्वितीयो भागः) — 400.00
   ISBN 81-86027-05-x
5. पदार्थतत्त्वनिरूपणम् श्रीरघुनाथशिरोमणिप्रणीतम्, रामभद्रसार्वभौमविरचितपदार्थतत्त्वविवेचनप्रकाशटीका-सम्वलितम्, विश्वम्भर पाहि एवं कुसुम जैन कृत हिन्दी भावानुवाद सम्वलित (यन्त्रस्थ) — 125.00
   ISBN 81-86027-06-8

University of Rajasthan Philosophy Series

1. **The Nietzschean Vision of Man** Shirley Jethmalani — 200.00
   ISBN 81-86027-00-9
2. **The Burden of Poetic Consciousness** Edited by Shirley Jethmalani & P.C. Kar — 125.00
   ISBN 81-86027-07-6

University of Rajasthan Foundational Studies

1. **Studies in Formal Logic** Biswambhar Pahi with a contribution from G.H. Von Wright — 250.00
   ISBN 81-86027-01-7